नष्यते" इति वार्तिकोक्तिः तथा, उपांशुयाजाधिकरणवैश्वानराधिकरणप्रभृतिषूपपादितान्न्यायांश्चानुसंदधतां हृदयेषु कम्पमुत्पादयति ।

एवमेव "अत्ता चराचरग्रहणात्" इति सूत्रे कुत्राप्युदाहरणे अपरिदृश्यमानस्य चराचरग्रहणस्य समर्थनं, देवताधिकरणाद्युपपादितस्य श्रुत्यवान्तरतात्पर्यस्य रेवत्यधिकरणदृष्टान्तेन मीमांसकसम्मतत्वोपादनमित्यादयस्तत्तदाधिकरणेषूपदर्शिता न्यायविमर्शाः चिन्तामणिकल्पाः सन्तः शारीरकोपपादितानां न्यायानां रक्षाकरणेनास्य ग्रन्थस्य न्यायरक्षामणिसंज्ञां सर्वात्मना सार्थकीकुर्वन्तीत्येतदत्यन्तं प्रमोदावहम् ।

एतादृशस्यातिमहतो ग्रन्थस्य प्रसादेन विदुषामुपकृतवद्भ्यः श्रीमदप्पय्यदीक्षितेभ्यः परःसहस्रं प्रणामान्समर्प्य अतिमहतां श्रीमदप्पय्यदीक्षितग्रन्थरत्नानां प्रकाशने प्रोत्साहकाः श्री श्री श्री काञ्चिकामकोटिपीठाधिपाः श्रीचरणाः तथा प्रकाशनापेक्षितद्रव्यश्रमादिप्रदानेनोपकुर्वन्तः सर्वेऽपि महजनाः विशेषतो विदुषां धन्यवादार्हा इति कथयन्मदीयां प्रणामपरम्परां तेभ्यः समर्प्य कृतकृत्यो भवितुमभिलषामि । न्यायरक्षामणिग्रन्थगौरवेण कृतं भाष्यभामत्यादिविमर्शं च तदभिमानिनो विद्वांसस्तत्त्वग्रहणपरास्सन्तः क्षाम्यन्त्विति प्रार्थये ।

**दीक्षितेन्द्रपदद्वंद्वभक्तिप्रेरणसम्भवम् ।**
**विमर्शमेतं विद्वांसः शीलयन्तु विमत्सराः ।**

इति

विरोधिकृज्ज्येष्ठकृष्णैकादशी-स्थिरवासरः
कौता स्वाराज्यभवनम्, सेकन्दराबाद–२५

विद्वदनुचरः, विद्वान्,
**प. प्र. वी. कृ. डोंगरेशास्त्री**



श्रीजगद्गुरुशङ्करभगवत्पादेभ्यो नमः

**श्री प. गणपतिशास्त्रिमहोदयैः रचितः**

पराभवनामसंवत्सरे (1906) कुम्भकोणे इदंप्रथमतया

मुद्रितस्य न्यायरक्षामणेः

# उपोद्घातः

**सदसत्सगुणं विगुणं विग्रहवदविग्रहं महदणिष्ठम् ।**

**इति च विकल्पा यस्मिन् तत् किमपि द्योतते वस्तु ॥**

इह किल मोक्ष एव एको मुख्यः पुरुषार्थ इति मोक्षवादिभिस्सर्वैरपि निर्विवादमभ्युपगतस्सिद्धान्तः। तस्य च साक्षात्परंपरया वा साधनभूतानि त्रीणि—कर्म, उपासनं, ज्ञानं चेति । तेषु च त्रिषु ज्ञानमेकमेव साक्षात्साधनं मोक्षस्य, नेतरदुभयमपि । तथा च श्रुतिः 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति । तथा 'अमृतत्वस्य तु नाशाऽस्ति वित्तेन' 'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति' इति च कर्मणो मोक्षहेतुत्वाभावं प्रदर्शयति । एवं 'योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवं स देवानां' इति उपासननिष्ठस्य पशुभावानिवृत्तिमाचक्षाणा नोपासनं मोक्षसाधनमिति दर्शयति । तथा स्मृतिरपि 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय । बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः' (गी. २. ४९) इत्यादिरुक्तार्थनिरूपणपरा विद्यते । सूत्रकारोऽपि ज्ञानस्य पुरुषार्थहेतुत्वनिरूपणावसरे 'अत एव चाग्नीन्धनाद्यनपेक्षा' (३. ४. २५) इति कर्मानपेक्षत्वं ब्रुवन्नेतदेव दर्शयति । उपासनमपि न ज्ञानेन समानफलमित्यनुपदमेव स्फुटीभविष्यति ।

ज्ञानस्य तु कर्म उपासनञ्चेत्युभयमपि साधनं भवन्न निवारयितुं पार्यते । तथा च उभयत्रापि श्रुतिः 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' इति च । स्मृतिरपि कर्मोपासनयोः ज्ञानं प्रति साधनत्वमुपपादयति 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु । बुद्ध्या युक्तो

कर्मबन्धं प्रहास्यसि' (गी. २. ३९.) इति 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' (गी. १३. १८) इति, तथा 'चतुर्विधा भजन्ते मां' (गी. ७. १३) इत्यत्र 'आर्तो जिज्ञासुः' इति च। सूत्रकारोऽपि 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (३. ४. २६) इति 'कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात्' (४. ३०. १०) इति च कर्मोपासनयोर्ज्ञानद्वारैव मुक्तावुपयोगं निरूपयति। एवं च तत्र तत्र कर्मोपासनयोरपि श्रुतिस्मृत्यादिषु साक्षादिव मोक्षसाधनत्ववादश्श्रूयमाणोऽनेनैव ज्ञानद्वारकसाधनत्वाभिप्रायेण योजयितव्य इति फलितं भवति। तत्र कर्म चित्तशुद्धिमात्रसाधनं सत् बहिरङ्गं साधनं भवति ज्ञानस्य। उपासनं पुनः परमेश्वरस्य श्रवणादि-कालेऽप्यनुवर्तमानं सत् स्वयमन्तरङ्गतमं साधनमित्यनयोर्विशेषः।

तदेवं साक्षात् प्रणाड्या च परमात्मप्राप्तिरूपं मोक्षं प्रति साधनभूतं कर्म उपासनं ज्ञानं इति त्रयमपि यथावन्निरूपयन्त्यनादिसिद्धा आम्नायाः। अत एव कर्मकाण्डादिरूपेण त्रेधाभूतास्सर्वेऽपि वेदाः परमात्मन्येव द्वारभेदेन परिसमाप्तिमुपगच्छन्ति। तदेतत् पठ्यते काठके 'सर्वे वेदा यत् पदमामनन्ति' इति। अत्र कर्मणः परंपरया मोक्षसाधनस्यापि स्वरूपादिनिर्णयो जैमिनिकृतेन पूर्वमीमांसाशास्त्रेणैव यथावदु-पपादित इति न तन्निर्णयाय शास्त्रान्तरमपेक्षणीयम्। अवशिष्टमुपासनं ज्ञानञ्च निरूपयितुमेव भगवान् बादरायणश्चतुर्लक्षण्यात्मकं शारीरकमीमांसानामकं शास्त्रं प्रणिनाय। अस्य च शास्त्रस्य परमं तात्पर्यं ज्ञानविषय एव। उपासने तु तदुपयोगितया परं विचारविषयता न स्वातन्त्र्येण। अत एवैतन्मूलभूतानामुपनिषदामपि परमं तात्पर्यं ज्ञाननिष्ठायामेव। अवान्तरं पुनरुपासननिरूपणं तास्वपीति निश्चीयते।

ननु कः पुनरुपासनस्य ज्ञानस्य च भेदः? यावता ब्रह्मविषयकमेवेदमुभयमपीति शास्त्रमेव प्रतिपादयति। आचार्यदेशीयाश्च केचिदनयोरेकत्वमेव सिद्धान्तमातिष्ठन्ते। सत्यम्। कारणतो विषयतः फलतः स्वरूपतश्च सुदूरमेते विभिद्येते ज्ञानमुपासनञ्च।

तथाहि—ज्ञानं सर्वत्र प्रमाणमात्रादेवोपजायते। जायमानञ्च तत् पुरुषप्रयत्नबलान्न निवारयितुं शक्यं, नाप्यन्यथा कर्तुम्। ध्यानापरपर्यायमुपासनन्तु उक्तविपरीतम्। तथा च श्रुतिः 'तस्मै मृदितकषायाय तमसः पारं दर्शयति सनत्कुमारः' इत्युपदेशसमानकालमेव ज्ञानस्य सिद्धतां दर्शयन्ती प्रमाण-मात्रायत्तं ज्ञानमिति प्रदर्शयति। तथा 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' इति अविद्यातरणोपायभूतां विद्यां वर्तमानां व्यपदिशन् ज्ञानस्य उक्तरूपतां स्फुटमाह। तथा 'तद्धास्य विजज्ञाविति विजज्ञाविति' इत्यादि चोदाहार्यम्। उपासनन्तु उपदिशच्छास्त्रं पुरुषप्रयत्न-

साध्यत्वेनैव कर्मवदुपदिशति 'उपासीत' 'स क्रतुं कुर्वीत' 'अन्वेष्टव्यं' इत्यादि। अपि च उपासनापरवाक्यैर्जायमानं ज्ञानं 'उपासनं कार्यम्' इत्याकारकमुपासनाप्रवृत्तिविषयकमेव जायते, नोपासनारूपम्। न ह्युपासनं कर्तव्यमिति ज्ञानमुपासनं भवति; तस्य तदुत्तरप्रवृत्तिसाध्यत्वात्। उपास्त्यादिशब्दाश्च समानविषयमेवाविच्छिन्नं प्रत्ययप्रवाहमभिदधानाः पुरुषकृतिसाध्यतां स्वार्थस्य स्थिरीकुर्वन्ति। सूत्रकारोऽपि 'शास्त्रयोनित्वात्' 'तत्तु समन्वयात्' इति च सूत्राभ्यां प्रतिज्ञातं ब्रह्मज्ञानं प्रमाणतन्त्रमेव, न चोदनातन्त्रमिति प्रतिष्ठाप्य पुनस्तृतीये 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' इति उपास्त्यपरपर्यायं प्रत्ययं चोदनाविषयं निरूपयन् उपासनज्ञानयोरुक्तं भेदमङ्गीकरोति। तस्मात् ज्ञानं प्रमाणतन्त्रं उपासनं पुरुषकृतिसाध्यमिति कारणतस्तयोर्भेदः।

तथा ज्ञानं यथाभूतमेव वस्तुस्वरूपं गोचरीकुरुते, उपासनन्तु नैवम्। तथा हि—श्रुतिः 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्' इत्यादिना सुषुप्त्यवस्थायां विशेषविज्ञानाभावस्य वस्त्वभावप्रयुक्ततां निरूपयन्ती व्यतिरेकमुखेन ज्ञानस्य यथाभूतवस्तुविषयकतां दृढं व्यवस्थापयति। उपासने तु 'अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति' इत्यादिना तत्क्रतुन्यायोदाहरणपूर्वकं भावनाऽधीनं भाविफलमभिदधाना नोपासनाय वस्तुसद्भावनियम इति दर्शयति। तथा 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति उपासनाविषयस्य ब्रह्मत्वं निराकुर्वाणा भूतवस्तुविषयकत्वाभावमेव उपासनस्य दृढीकरोति। भगवद्गीतायामपि 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति उपासकभावनाऽनुसारित्वमीश्वरस्य स्मर्यमाणं नोपासनस्य यथाभूतवस्तुविषयकत्वे सत्युपपद्यते; पुरुषबुद्धिकल्पनाया निरङ्कुशत्वात्, निर्विकारत्वाच्च परमेश्वरस्य।

ननु ज्ञानस्य भूतवस्तुविषयकत्वनियमे स्वाप्नज्ञानस्यापि तथात्वापत्त्या तत्रापि विषयस्य विद्यमानत्वे सत्यत्वापत्तिरिति चेत्। नैष दोषः। न हि विद्यमानत्वमात्रेण वस्तुनस्सत्यत्वं भवति। केन तर्हि? अबाधितत्वेन। स्वाप्नविषयाश्च प्रबुद्धमात्रस्य बाध्यन्त इति नामी सत्याः। अत एव तदानीमेव भासमानस्याप्यात्मनो नानृतत्वप्रसक्तिः; बाधाभावादेव। तस्मात् ज्ञानं विद्यमानवस्तुविषयकमेव। सूत्रकारोऽपि 'अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवम्' (१. २. ७) इति सूत्रे शाण्डिल्यविद्यायामुपास्यत्वेन श्रुतयोरत्यल्पहृदयस्थानान्तर्गतत्वाणीयस्त्वरूपयोर्गुणयोः व्यापके परमात्मन्यनुपपत्तिरित्याक्षेपस्य 'उपास्यत्वान्नायं दोषः प्रसजति' इति परिहारं ब्रुवन्नुपास्तिविषयस्याविद्यमानत्वं निरूपयति। तथा 'ईक्षति-

कर्मव्यपदेशात्' इत्यधिकरणे अभिध्यानविषयत्वेन निर्दिष्टस्य पुरुषस्य ब्रह्मस्वरूपत्वं साधयितुं ईक्षण-त्रिषयत्वव्यपदेशं हेतुमाचक्षाण आचार्यः ध्यानज्ञानयोर्विषये वैलक्षण्यं स्फुटीकरोति। युक्तश्चोपासनायां प्रकारीभूतस्य धर्मस्याविद्यमानत्वमेव विशेष्ये। न हि शास्त्रविशेषमवलम्ब्य सालग्रावशिलायां स्वबुद्धेर्विष्ण्वाकारतां कथञ्चिदुपासकस्संपादयतीत्येतावता साऽपि तदाकारा भवति। तस्मात् ज्ञानमुपासनञ्च विषयतोऽत्यन्तविभिन्नमेव।

तथा ज्ञानस्य हि सद्य एवाज्ञाननिवृत्त्या तन्मूलकसंसारनिवृत्तौ अत्रैव एकरूपब्रह्मभावः फलम्। उपासनस्य तु कर्मण इव प्रायणोत्तरकालं देशान्तरे संसारान्तर्गत एव तारतम्यापन्नः कश्चिदतिशयः फलम्। तथा हि 'ब्रह्म वेद ब्रह्मैव भवति' 'तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदे' 'विद्वान्नामरूपाद्विमुक्तः' इत्याद्याश्श्रुतयः ब्रह्मज्ञानसमकालमेव ब्रह्मभावं फलं प्रदर्शयन्त्यः ज्ञानस्य सद्य एव फलं प्रदर्शयन्ति। तथा स्मृतिरपि 'तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः। अविद्या सह कार्येण नासीदस्ति भविष्यति' इति। उपासनस्य तु 'एतमितः प्रेत्याभिसम्भवितास्मि' 'सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत' इत्यादिना प्रायणोत्तरकालमेव उपास्याधिगमं फलं प्रदर्शयन्ति। तथा स्मृतिरपि 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय सदा तद्भावभावितः' इति। सूत्रकारोऽपि 'आप्रायणात्तत्रापि हि दृष्टम्' इति मरणान्तमविच्छेदेन उपासनं कार्यं व्यवस्थापयन् तदुत्तरमेव तत्फलप्राप्तिमभिप्रैति।

तथा ज्ञानस्य 'अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' 'न तस्य प्राणा उत्क्रामन्ति अत्रैव समवनीयन्ते' इत्यादिश्रुतिशतप्रतिपन्नमैहिकमेव फलं ब्रह्मभावापत्तिर्नाम न लोकान्तरगमनसापेक्षम्। तथा 'अभयं वै जनक प्राप्तोऽसि' इत्यादौ ज्ञानफलस्यात्रैव सिद्धत्वव्यपदेशो देशान्तरसम्बन्धित्वकल्पनां निवारयति। न च फलावश्यम्भावमूलको व्यपदेश इति युक्तं कल्पयितुम्; 'अत्र ब्रह्म समश्नुते' इत्यादिश्रुत्यन्तरविरोधापत्तेः, विना बाधकप्रमाणमौपचारिकत्वकल्पनस्यायुक्तत्वाच्च। तथा स्मृतिरपि 'इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः। निर्दोषं हि समं ब्रह्म तस्मात् ब्रह्मणि ते स्थिताः' (गी. ५. १९) इति। तथा सूत्रकारोऽपि कलाप्रलयाधिकरणे 'स्पष्टो ह्येकेषाम्' (४. २. ३) इत्यादिना ज्ञानिन उत्क्रान्त्यभावं सिद्धान्तयन् ज्ञानफलस्य देशान्तरसम्बन्धं निवारयति।

उपासनस्य तु 'ये चामी अरण्ये श्रद्धां सत्यमुपासते' इत्यारभ्य अर्चिरादिमार्गेण उपासकसामान्यस्य ब्रह्मलोकगमनं तत्र च फलोपभोगं निरूपयन्त्यश्श्रुतयः कर्मवदेव स्पष्टमामुष्मिकफलकत्वमुद्घोषयन्ति।

प्रायणोत्तरमात्रिफलवचनपराः पूर्वोदाहृताश्श्रुतयोऽप्यमुमेवार्थमुपोद्बलयन्ति । स्मृतिरप्युपासकानामुत्तरेण पथा ब्रह्मलोकगमनमावेदयति 'अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् । तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः' (गी. ८. २४) इति । तथा सूत्रकारोऽपि 'अर्चिरादिना तत्प्रथितेः' (४. ३. १) इति मार्गनिरूपणेन, 'समाना चासृत्युपक्रमात्' (४. २. ७) इति कर्मिवदुपासकानामपि उत्क्रममात्रे साम्यप्रतिपादनेन च उपासनस्य देशान्तरगमनपूर्वकमेव फलोपभोगं व्यवस्थापयति । तस्मात् ज्ञानस्य फलमैहिकम् । उपासनस्य त्वामुष्मिकम् । अत एव देशान्तरफलकस्य मार्गस्य ध्यानज्ञानरूपविषयभेदेन व्यवस्थितं भावाभावरूपं वैकल्पिकत्वं सिद्धान्तयत्याचार्यः 'गतेरर्थवत्त्वमुभयथा' (३. ३. २९) इत्यादिना ।

तथा ज्ञानफले ब्रह्मभावे न कश्चिदवान्तरोऽतिशयश्शक्यः कल्पयितुम्; स्वरूपस्य निर्विशेषत्वात् । तथा च श्रुतिः 'यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथर्षीणां तथा मनुष्याणाम्' इत्यविशेषेण ब्रह्मभावमेकरूपमेव सर्वस्यापि ज्ञानवतः फलमाचष्टे । तथा 'यत्र त्वस्य सर्वमात्मैवाभूत्' इत्यादिश्रुत्यन्तराण्यपि एकरूपमेव ज्ञानफलमात्मभावमुपपादयन्ति । स्मृतिश्च 'नहि गतिरधिकाऽस्ति कस्य चित् सति हि गुणे प्रवदन्त्यतुल्यताम्' इति । उपासनस्य तु यथाप्रकारमेव फलानि विभिद्यन्ते । 'तं यथा यथोपासते तथैतः प्रेत्य भवति' इति श्रुतेः । प्रत्युपासनञ्च प्रकारभेदस्य सुप्रसिद्धत्वात् । तथा 'ते ब्रह्मलोकेषु पराः परावतो वसन्ति' इति बहुवचनान्तेन ब्रह्मलोकं व्यपदिशन्ती ब्रह्मलोकेऽप्यवान्तरं भोगभेदं संसूचयति । भोगभूमिवाचिनो लोकशब्दस्य अत्र प्रयोगोऽप्येवं सत्येव समञ्जसस्संपद्यते । सूत्रकारोऽपि 'विशेषितत्वाच्च' (४. ३. ८) इति सूत्रेण ब्रह्मलोकेऽप्यान्तरालिकं विशेषमुपपादयति । ननु अविशेषमप्याचार्यो निरूपयति 'विकल्पोऽविशिष्टफलत्वात् (३. ३. ५९) इति । सत्यं निरूपयति । एकब्रह्मलोकप्राप्त्यभिप्रायं पुनरेतत्, न तत्रान्तरालिकविशेषनिराकरणपरम् । अवश्यं चैतदेवमभ्युपगन्तव्यम्; अन्यथा हि यथाक्रतुफलवचनविरोधापत्तिः । न चैतन्न्याय्यम् । अन्योपासननिष्ठस्य अन्योपासनाफलप्राप्तौ अतिप्रसङ्गापत्तेः । अपिचोच्चावचभेदभिन्नासूपासनासु आन्तरालिकायासतारतम्यावश्यम्भावेन सर्वासां सर्वथा समानफलकत्वस्यायुक्तत्वाच्च । गुरुतरायाससाध्योपासनानामननुष्ठानापत्तेश्च । तस्मादवान्तरं तारतम्यमवर्जनीयमुपासनाफलेषु सत्यपि सविशेषब्रह्मभावे ।

तस्मात् ज्ञानं फलतोऽप्यत्यन्तविलक्षणमुपासनात इति सिद्धम् । तदेतत् सर्वमभिप्रेत्योक्तं भाष्ये 'तस्मान्मानसत्वेऽपि ज्ञानस्य ध्यानान्महद्वैलक्षण्यम्' इति । तदेवमत्यन्तविविक्तयोरपि ज्ञानोपासनयोस्स्वरूप-

न्यमेव मन्यमानाः केचिदुपासनाफलमेव मोक्षमप्यातिष्ठन्ते । ते च शास्त्रतात्पर्यमुल्लङ्घमानाः न्यायेन विरुध्यन्ते । मोक्षस्यानित्यफलमनिष्टमपि कल्पयन्तीत्यतः विप्रकीर्णमप्युपनिषत्सु उपासनज्ञानकाण्डद्वयं हंस इव क्षीरनीरद्वयं परमहंसपदप्रतिष्ठापनधुरीणास्तत्रभवन्तो महेश्वरांशमहावताराश्श्रीभगवत्पादाचार्याः यथायथं विभज्य असङ्कीर्णमतिस्पष्टमसन्दिग्धं परमार्थिकं मोक्षद्वारमुदजीघटन् परमकारुणिकाः । भगवान् बादरायणोऽपि आदितश्चतुर्भिरधिरणैः ब्रह्मज्ञानमेव मोक्षसाधनं, ब्रह्म चैवंलक्षणं, तत्र च शास्त्रमेव प्रमाणं, न च शास्त्रस्याऽन्यथा तात्पर्यवर्णनं शक्यं, इत्येवमर्थजातं प्रतिष्ठाप्य पुनः पञ्चमेन पक्षान्तरनिराकरणव्याजेन सर्वेषां वेदान्तानां ब्रह्मणि गतिसामान्यं प्रतिष्ठापयन् वक्तव्यान्तराभावेऽपि अध्यायशेषमिदंपरतयैवारभते इदं प्रकरणमुपास्यपरमिदं ज्ञेयपरमिति विभज्य प्रदर्शयितुं । स्पष्टश्चेदमानन्दमयाधिकरणावतरणिकाभाष्ये । तस्मादुपासनविलक्षणमेव ज्ञानं मोक्षसाधनमित्युपनिषदां सूत्रभाष्यकृताञ्च ऐकमत्यमतिदृढं न कथञ्चिदपि विभेत्तुं शक्यं युक्तं वा ।

तच्च ज्ञानं ब्रह्मण्यात्माभेदविषयकमेव । उपासनन्तु ब्रह्मणि नानात्वांशमुपजीव्य प्रवर्तते । अत एवोपासनज्ञानयोरुपपादितं त्रिविधमपि भेदमन्तरनुसन्धायैव तस्करदृष्टान्तेन बन्धमोक्षयोरधिकारिणौ निरूपयति श्रुतिः 'अनृताभिसन्धो बध्यते सत्याभिसन्धस्तु मुच्यते' इति । अत्र किंलक्षणमिदमनृतं, तच्च प्रकृते किंरूपं, तदभिसन्धस्य च बन्धो नाम क इति विमर्शे श्रुत्यन्तरमेव स्वयं विवृणोति 'मनसैवेदमाप्तव्यं नेह नानाऽस्ति किञ्चन । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' इति । इह परमात्मनि नाना किञ्चन काश्चिदपि भेदो नास्ति । एवं परमार्थतो निर्भेदे इह ब्रह्मणि यः नानेव पश्यति, इवशब्देन नानात्वस्य अनृतत्वं स्वाभिमतमभिव्यनक्ति, सः पौनःपुनिकमरणसन्तानमाप्नोतीत्यर्थः । एतदुक्तं भवति—वस्तुतस्तदभावस्थले प्रतीयमानत्वमेवानृतस्य लक्षणम् । तथा प्रतीयमानञ्च ब्रह्मणि नानात्वमनृतम् । तदभिसन्ध एव अनृताभिसन्धः । तस्य च बन्धः पौनःपुनिकमरणरूप इति । एतेन सत्याभिसन्धमोक्षौ व्याख्यातौ । निर्भेदं ब्रह्मैव सत्यं, तद्दर्शी च सत्याभिसन्धः आत्यन्तिको जननमरणप्रवाहविच्छेद एव च मोक्ष इति । एतेन नानात्वांशमूलकोपासनविलक्षणं परमार्थविषयकं प्रमाणतन्त्रमभेदज्ञानमेव मोक्षहेतुरिति स्फुटं श्रुतिहृदयम् ।

तच्चेदं ज्ञानमपरोक्षानुभवरूपतामापद्यमानमेव पुरुषार्थसाधनं भवति, नान्यथा । तद्धेतुभूताश्च उपनिषद्भागा द्विविधाः पदार्थनिष्ठा वाक्यार्थनिष्ठाश्चेति । पदार्थस्य च जीवब्रह्मोभयरूपत्वेन तन्निष्ठानि वाक्यानि द्विविधानि त्वंपदार्थनिष्ठानि तत्पदार्थनिष्ठानि चेति । उभयविधान्यप्यमूनि वाक्यानि जीवब्रह्मणोः पारमार्थिकस्वरूपैक्यरूपं वाक्यार्थमनुभावयतो महावाक्यस्य तदैक्यानुभवोपयोगिपदार्थज्ञानसमर्पणद्वारा स्वयमुपकारकाणि

भवन्ति । अन्यथा हि प्रत्यक्षतस्त्वंपदार्थस्य कर्तृत्वभोक्तृत्वकिञ्चिद्ज्ञत्वपरिच्छिन्नत्वादिधर्मकलुषितत्वेन प्रतीतस्य, तथा उपासनपरश्रुतिवाक्यैस्तत्पदार्थस्य सर्वज्ञत्वजगत्कारणत्ववामनीत्वभामनीत्वसर्वकामगन्धरसत्वादि-धर्मवत्तया प्रतीतस्य च ऐक्यं वाक्यसहस्रेणाप्युच्यमानं नानुभवगोचरीकर्तुं शक्यम्; ऐक्यानुभवविपरीतस्य आत्मनि कर्तृत्वाद्यनुभवस्य तथा ब्रह्मणि धर्मान्तरवत्ताज्ञानस्य च सत्त्वात् । अतस्तत्रोभयत्रापि प्रसक्तविपरी-तानुभवनिराकरणेन हि ऐक्योपयोगिस्वरूपज्ञानमुत्पादयन्ति प्रथमं पदार्थनिष्ठा उपनिषद्भागाः । तत्र जीवात्मनि प्रमाणाभासप्रत्यक्षप्रतीतं कर्तृत्वादिधर्मजातमनृतमिति परस्परव्यभिचार्यवस्थात्रयोपन्यासादिना निराकृत्य तस्याखण्डचिदेकरसस्वरूपत्वमुपपादयन्ति त्वंपदार्थनिष्ठानि 'स यत्तत्र किञ्चित् पश्यति अनन्वा-गतस्तेन भवति असङ्गो ह्ययं पुरुषः' इत्यादीनि वाक्यानि ।

एवमेवान्यपरश्रुतिवाक्यैरवगम्यमानं ब्रह्मणस्सविशेषत्वं न पारमार्थिकमिति तत्र विशेषनिराकरण-पूर्वकमखण्डानन्दस्वरूपत्वमनुभावयन्ति 'स एष नेति नेत्यात्मा' 'अथात आदेशो नेति नेति' इत्याद्या-स्तत्पदार्थनिष्ठा उपनिषद्भागाः । एवमुभयोरपि पदार्थयोः यथार्थस्वरूपमुक्तोपनिषद्भागैः प्रथममसन्दिग्धमनु-भवत एव पुरुषधौरेयस्य महावाक्यश्रवणमैक्यसाक्षात्कारमुत्पादयितुं प्रगल्भते, नान्यस्य । अत एव महावाक्य-श्रवणेन वाक्यार्थानुभवमपेक्षमाणैरधिकारिभिः प्रथमं तदुपयोगितया पदार्थश्रवणं कार्यं भवति । एवञ्च श्रवणमपि द्विविधं संपन्नं पदार्थश्रवणं वाक्यार्थश्रवणमिति । तत्र प्रथमं कृतेऽपि पदार्थश्रवणे प्रत्यक्षादि-सिद्धविपरीतानुभवप्राबल्येन येषां यथाश्रुतं तत्त्वंपदार्थयोस्स्वरूपानुभवो नोत्पद्यते, प्रत्युत श्रुतिप्रदर्शितस्वरूप एवानुपपन्नत्वशङ्का तद्विपरीतानुभवश्च प्रसरति, तेषामुक्तदोषद्वयनिराकरणाय पदार्थश्रवणानंतरं तत्रैव साधनद्वयं विदधाति श्रुतिः मननं निदिध्यासनञ्चेति । अत्र श्रुतस्यार्थस्य युक्तिभिरनुचिन्तनरूपं मननं अनुपपन्नत्वशङ्का-रूपमाद्यं दोषं निवर्तयति । शोधकवाक्योक्ताकर्त्रसङ्गादिप्रकारेण आत्मनस्संततभावनारूपं निदिध्यासनं तु तद्विपरीतकर्तृत्वादिभावनारूपं द्वितीयं दोषमुन्मूलयति ।

अत एव मनननिदिध्यासने साधने कियन्तं कालमनुष्ठेये इति शङ्काया अपि नावकाशः । यस्य पुरुषस्य यावता कालेनानयोरन्यतरस्मिन्ननुष्ठीयमाने तत्साध्या उक्तदोषयोरन्यतरस्य निवृत्तिस्स्वयमनुभूयते तस्य तावंतं कालं तत्साधनमनुष्ठेयमिति शास्त्रतात्पर्यात् । यस्य तु महात्मनो निरतिशयपुण्यवशेन उक्तदोष-द्वयस्याप्यनुत्पत्तौ श्रवणमात्रेणासंदिग्धोऽविपर्यस्तश्च तत्त्वंपदार्थयोः यथावत्स्वरूपानुभवस्संपद्यते तं प्रति मनननिदिध्यासनयोरनावश्यकत्वमिष्टमेव । तदुक्तमद्वैतविद्याचक्रवर्तिभिराचार्यमहाराजैरावृत्त्यधिकरणे भाष्ये

'तत्र येषामेतौ पदार्थौ अज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां 'तत्त्वमसि' इत्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति; पदार्थपूर्वकत्वात् वाक्यार्थस्येत्यतस्तान् प्रत्येष्टव्यः पदार्थविवेकप्रयोजनश्शास्त्रयुक्त्यभ्यासः। येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति तान् प्रत्यावृत्त्यानर्थक्यमिष्टमेव' इति।

नन्वेवंसति पदार्थभावनान्तरं किमर्थो वाक्यार्थानुभवः पृथक्कश्चिदभ्युपगम्यते? यावता पदार्थानुभव एव शुद्धात्मविषयो भवति। सत्यम्। न हि तावताऽपि जीवपरमात्मनोर्भेदभ्रमस्यानादिसिद्धस्य निवृत्तिरस्ति। न च तन्निवृत्तिमन्तरेण 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यादिश्रुतिसिद्धरूपा मुक्तिदशा भवितुमर्हति। नो खलु महावाक्यजन्यमपरोक्षरूपमात्मैकत्वानुभवमन्तरेण तन्निवृत्तावुपायान्तरं सम्भवतीत्यतः पुरुषार्थपर्यवसानं वाक्यार्थानुभवस्यैवेति तदुपयोगितयैव पदार्थानुभवापेक्षाऽपि। तस्मात् स्थितमेतत् निष्कामकर्मानुष्ठाननिर्मलीकृतस्वांतस्य भगवदुपासनासिद्धनिरवग्रहतदनुग्रहभाजनभावं भजतः भाग्यवतः पुरुषस्य अनायासेनासन्दिग्धतत्त्वंपदार्थतत्त्वधीपूर्वकं तदैक्यसाक्षात्काररूपमहावाक्यार्थानुभवसिद्धौ अखिलानर्थबीजभूताज्ञाननिवृत्त्या निरतिशयानन्दमात्रस्वरूपब्रह्मभावो मोक्षः कृतकृत्यता चेति।

तदेवमाद्यर्थजातं श्रेयस्साधनभूतं सर्वमपि सम्भाव्यमानसकलसंशयनिराकरणक्षमयुक्तिगाढं यथावदुपपादितं भाष्ये। तथाप्यापातदर्शिनामस्मादृशां न तत्तत्वं यथावदाविर्भवतीति प्राचीना महाप्रज्ञास्तदर्थप्रकाशनपटीयसो बहून् ग्रन्थान् विरचयाञ्चक्रुः। तेषु च ग्रन्थेषु प्रथमगणनीयोऽयं श्रीमदप्पय्यदीक्षितेन्द्रविरचितः न्यायरक्षामणिर्नाम। किञ्च भाष्यं हि अतिललितसन्दर्भममृतरसप्रवाहसहोदरमतिप्रसादभरितमपि परमगम्भीरभावगर्भितमिति सर्वथा तत्र न कस्यचिन्नाम न प्रवेशस्तलस्पर्शिता वा। अत एवानवगतभाष्यग्रन्थयाथार्थ्यानामापातदर्शनमात्रेण केषाञ्चित् क्वचिदन्यथाबुद्धिरप्युपजायते। तथा हि—अन्यार्थपराणीव भासमानानि सूत्राण्यपि आचार्या बलादिव स्वाभिमतार्थानुगुण्येन नयंतीति हंत केचिदुत्तानदृष्टयोऽतिशङ्कंते। अस्याश्चातिशङ्कायाः प्रथममुदाहरणस्थानमानंदमयाधिकरणम्। तद्धि आनंदमयब्रह्मवाद एव स्वारसिकमिव भासते। भाष्यकृद्भिश्च पुच्छब्रह्मवादपरतया कथञ्चिन्नीतमिति। एवमन्यत्रापि बहुस्थलेषु। एतादृशं च दुश्शङ्काप्रसरं तत्र यथावत्सूत्रस्वारस्यप्रकटनेन समूलमुन्मूलयितुं अयं न्यायरक्षामणिरिव न कोऽपि ग्रंथो भूतो भावी वा। अत्रापि विषये प्रथमोदाहरणस्थानमानंदमयाधिकरणमेवेत्यतिस्पष्टं भवेत् ग्रंथमिममवलोकयतामेव।

अपि च सुनिपुणमालोचनायामपि अयमेक एव दोषोऽस्मिन्ग्रन्थे निरूपयितुं शक्यो नान्यः,

यदयं प्रथमाध्यायमात्र एव परिसमाप्तिमुपनीतोऽभूदिति। वस्तुतस्तु नायमपि दोषः। यत एतावानप्ययं ग्रन्थस्साधुपरिशील्यमानस्स्वयमेव शास्त्रशेषेऽपि यथावदर्थपरिष्करणक्षमां निर्मलां ज्ञानशक्तिमवलोकयतामुत्पादयितुमीष्टे। तदेवंविधं ग्रन्थरत्नमनायासेन निर्मितवतां तत्रभवतां श्रीमदप्पय्यदीक्षितानां ज्ञानातिशयः कथमिव परिच्छेद्यकोटिमानीयेत। ईदृशश्च किमयमेक एव ग्रन्थस्तद्विरचितः अहो नु परश्शताः। सर्वथाऽप्येते नूनमवतारविशेष एव कश्चित् पारमेश्वर इति युक्तमिदं 'दीक्षितोऽपि भवेत् कश्चित् शैवश्छन्दोगवंशजः' इति शिवरहस्यवचनम्।

किञ्च दीक्षितवर्याणां चरितमधिकृत्य तैरेव भूयोऽवतीर्णैरिव स्थितैः तद्वंशमुक्तामणिभिः मदीयमनोमुकुरनिर्मलीकरणचणनिजचरणरेणुकणैः श्रीत्यागराजदीक्षितैः (श्रीराजुशास्त्रिभिः) विरचितस्सह टीकया 'श्रीदीक्षितनवरत्नमालिका' इति संक्षिप्तः कश्चन ग्रन्थः। स चायं क्रमादनेनैव ग्रन्थेन सह मुद्रयित्वा प्रकाशयिष्यते। तत एव च तेषां चरितमपि व्यक्तं विज्ञायेतेति नेह विस्तीर्यते। ग्रन्थः पुनरयमत्यद्भुतोऽप्यतिदुर्लभो वर्तते इति बहूनां स्वत एव सद्व्यवसायतत्पराणामभिप्रायमनुसृत्यायमहमप्यत्र प्रावर्तिषि। प्रवृत्तेन च मया तदर्थं तत इतो विचित्य षट् पुस्तकानि कथञ्चित् संपादितानि। यद्यपि ग्रन्थस्यास्याधुनाऽवधि प्रचारवैरल्यात् पुस्तकेषु परस्परलेखविसंवादो हन्त भूयानेव, तथापि सर्वाणि च तानि यथाबुद्धि समीकृत्य यावच्छक्ति शोधयित्वा च मुद्रणार्थमेष विन्ययूयुजम्। तदिह मानुष्यकसुलभात् प्रमादात् यत्र क्वचित् सम्भावितमपि स्खालित्यं श्रमविदः पण्डिताः क्षममाणास्स्वयमभिनन्दन्तो निर्व्याजमेव मामिमं मत्प्रोत्साहकांश्च पुरुषधौरेयाननुगृह्णन्तु।

इति प्राञ्जलिः पण्डितकुलं प्रार्थयमानः,

**प. गणपतिशास्त्री.**

महामहोपाध्याय श्रीराजुशास्त्रिणां शिष्यः.

श्रीः

# संक्षेपतः एतद्ग्रन्थस्थानां विषयाणामनुक्रमणिका

---

# श्रीमदप्पय्यदीक्षितेन्द्रनवरत्नमालिका

## श्रीमहामहोपाध्यायश्रीत्यागराजमखीन्द्रकृता



असद्वंशावतंसाध्वरिवरविरचिता ये प्रबन्धा प्रथन्ते
देशे देशे विदुष्मत्यपि मुषितबृहन्मोहसन्दोहवृन्दाः ।
तेषामर्थं यथावत्कतिचन कृतिनस्सर्वतन्त्रैकवेद्यं
धन्याःसंविद्रते तान्शरणयतु जनो घोरसंसारभीरुः ॥ १

मूर्धन्यत्वेन मीमांसकवरनिकरे ये स्तुताःकौस्तुभेऽपि
श्रीमन्तो यत्प्रबन्धाश्शतमिह विदुषां वृन्दमानन्दयन्ति ।
अन्यानाघ्रातयुक्तिप्रचयघटनया ध्वंसितं मध्वतन्त्रं
नानोदाहारयुक्तास्त्रिविधविधिभिदा यैः स्फुटं ज्ञापिता नः ॥ २

आत्मज्ञानं विमुक्तेर्गमकमिति तदभ्यर्थिनां सद्यतीनां
सद्यो मुक्तेरवाप्त्यै व्यरचि परिमलो न्यायरक्षामणिश्च ।
केषाञ्चित्प्रेम लक्ष्मीपतिसदनगतौ वीक्ष्य तल्लक्ष्मणार्या-
द्याकूतव्यञ्जिका साऽप्यकथि नयमयूखादिमाला विशाला ॥ ३

माध्वे तन्त्रेऽपि तिष्ठन्मधुमथनसदाराधनोद्भूतपुण्यैः
शुद्धात्मा श्रद्दधीत श्रुतिमुकुटगते ब्रह्मणि त्वात्मभूते ।
इत्यालोच्य स्वयं तद्विहतमपि मतं रक्षितुं ग्रन्थभेदे
माध्वानां यैः प्रणीता परमहितकरी न्यायमुक्तावली सा ॥ ४

तेषां पादाब्जरेणुस्मरणमलमघौघस्य विध्वस्तये नः
पुण्यौघस्योपचित्यै न तदुभयजुषां किञ्चिदन्यद्व्यपेक्ष्यम् ।
प्रायो लोकोपकारप्रवणितमनसः स्वान्वये जन्मभाजं
ते मां रक्षन्तु भीतं भवदवदहनात्संप्रसादाऽम्बिकेशम् ॥ ५

यत्प्रोचे शंभुभक्तिं विघटयितुमलं तत्त्वमुक्ताकलापे
प्रत्यूचे तच्छ्रुतीनां नययुतविवृतेः शैवकर्णामृतादौ ।
श्रीकण्ठार्योक्तिमूलं परमतमपि नोन्मूलितं तत्र भावा-
त्कोऽन्यश्शक्तो भुवि स्यान्मखिकुलतिलकात्सर्वलोकोपकृत्यै ॥ ६

सार्वज्ञ्यं वीक्ष्य येषां प्रथितकविवरैस्सार्वभौमैश्शशंसे
येषामाशीर्गिराऽभूदखिलकुशलभाङ्नीलकण्ठाध्वरीन्द्रः ।
येषां तादात्विकेभ्यः किल सकलकलावल्लभत्वं बुधेभ्यः
सर्वेभ्योऽभ्यर्थितं द्रागभवदिति समाकर्णये वर्णये किम् ॥ ७

प्रबन्धशतनिर्मितिः प्रथितमग्निहोत्रादिकं
श्रुतप्रवचनादयः श्रितजनावनार्थं प्रभोः ।
सभां प्रति गतागतं समुदितं मखीन्द्रेषु नः
कियत्यलसता सतामपि ततः परेषां भुवि ॥ ८

शङ्करभगवत्पादाचार्यास्त्वद्वैतमार्गमिव ।
ये प्रत्यतिष्ठिपन्भुवि शिवभक्तिपथं कथं न ते वन्द्याः ॥ ९

नवरत्नमालिकैषा मखिराजचरित्रमञ्जुमञ्जूषा ।
दुरितौघतिमिरचूषा योषार्द्धतनोस्तनोतु परितोषम् ॥ १०

इति महामहोपाध्यायश्रीत्यागराजमखीन्द्र (मन्नार्गुडि राजुशास्त्री)
कृतश्रीमदप्पय्यदीक्षितेन्द्रनवरत्नमालिकास्तोत्रं

सम्पूर्णम्

शिवं भूयात्

ॐ

श्रीमदप्पयदीक्षितेन्द्रविरचितः

# न्यायरक्षामणिः

उद्घाट्य योगकलया हृदयाब्जकोशं
धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः
श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥ १ ॥

यस्याहुरागमविदः परिपूर्णशक्ते-
रंशे कियत्यपि निविष्टममुं प्रपञ्चम् ।
तस्मै तमालरुचिभासुरकन्धराय
नारायणीसहचराय नमः शिवाय ॥ २ ॥

आसेतुबन्धतटमा च तुषारशैला-
दाचार्यदीक्षित इति प्रथिताभिधानम् ।
अद्वैतचित्सुखमहाम्बुधिमग्नभाव-
मस्मत्पितामहमशेषगुरुं प्रपद्ये ॥ ३ ॥

यं ब्रह्म निश्चितधियः प्रवदन्ति साक्षात्
तद्दर्शनादखिलदर्शनपारभाजः ।
तं सर्ववेद[1]समशेषबुधाधिराजं
श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि ॥ ४ ॥

1. येन सर्वस्वदक्षिणो याग इष्टः स सर्ववेदाः - तम् ।

वेदविभागविधात्रे विमलाय ब्रह्मणे नमो विश्वदृशे ।
सकलधृतिहेतुसा[1]धनसूत्रसृजे सत्यवत्यभिव्यक्तिमते ॥ ५ ॥

यो [2]नानाभाष्यशाखोदितफलविततिः[3] प्रौढैर्नानारसाढ्यो[4]
यस्मिन् मूले निरूढं फलमधिकतरं[5] स्वादुनारुह्य लभ्यम् ।
यस्य प्रेक्षैव देहद्वयतदनुगतप्रत्यगर्थौ विविक्तौ
सूत्रात्मा पारिजातः सकलमभिमतं मह्यमर्थं स दद्यात् ॥ ६ ॥

नानाभाष्यादृता सा सगुणफलगतिर्वैधविद्याविशेषैः
तत्तद्देशाभिरम्या सरिदिव सकला यत्र यात्यंशभूयम् ।
तस्मिन्नानन्दसिन्धावतिमहति फले भावविश्रान्तिमुद्रा
शास्त्रस्योद्घाटिता यैः प्रणमत हृदि तान् नित्यमाचार्यपादान् ॥ ७ ॥

अधिगतभिदा पूर्वाचार्यानुपेत्य सहस्रधा
सरिदिव महीभागान् संप्राप्य शौरिपदोद्गता ।
जयति भगवत्पादश्रीमन्मुखाम्बुजनिर्गता
जननहरणी सूक्तिर्ब्रह्माद्वयैकपरायणा ॥ ८ ॥

एनां पुराणपदवीमनुसृत्य सत्यां
अत्यादरेण [6]महतीमनुपाल्यमानाम् ।
शारीरकाभरणभावजुषां नयानां
रक्षाकरं मणिमनाविलमुल्लिखामि ॥ ९ ॥

अमुं शारीरकन्यायकलापपरिकर्मितम् ।
[7]अदृष्टिदोषहरणं कण्ठे कुरुत सन्मणिम् ॥ १० ॥

---

1. पावन० – इति पाठान्तरम् 2. यन्नानाभाष्य० 3. विततिः० 4. रसाढ्या० 5. रसं०
6. महितैरनु 7. अदृष्टिः – असौम्यं आक्षि । कुदृष्टिदोषहरणं – इति पाठान्तरम् ।

## अथातो ब्रह्मजिज्ञासा । १ ।

अत्र शास्त्रारम्भोपयोगिब्रह्मात्मैक्यलक्षणविषयप्रयोजनविरोधिनः कर्तृत्वादिबन्धस्य अध्यासात्मकत्वप्रदर्शनेन तदुभयोपपादनद्वारा शास्त्रारम्भः समर्थ्यते ।

ननु बन्धो न ब्रह्मात्मैक्यविरोधी, वस्तुतो बद्धस्यैव जीवस्य बन्धरहितेन ब्रह्मणा ऐक्यस्य श्रुतिप्रामाण्यादङ्गीकर्तुं शक्यत्वात् । न च विरुद्धधर्माक्रान्तयोर्भेदनियमस्य दृष्टत्वेन दृष्टनियमविरोधात् श्रुतिरपि तदभेदं बोधयितुं न शक्नोतीति वाच्यम् । बन्धमिथ्यात्वार्थमपि प्रत्यक्षादिभ्यः श्रुतेः प्राबल्यस्य सिद्धान्ते व्युत्पाद्यतया तत एव उदाहृतलोकदृष्टनियमस्यापि आभासीकरणसम्भवात् इति चेत्, सत्यम् ; तथापि प्रत्यग्ब्रह्मैक्ये महावाक्यस्यैव बन्धमिथ्यात्वे त्वंपदार्थशोधकवाक्यानां तदनुग्राहकन्यायानां च विद्यमानतया तत्प्रदर्शनद्वारेण शुद्धस्य जीवस्य ब्रह्मणा ऐक्यमिति वस्तुगतिमनुरुध्यैव वादकथारूपेऽत्र[1] शास्त्रे पूर्वपक्षः परिहरणीयः । न हि – हिंसाविधितन्निषेधविषयभेदन्याया[2]नभिज्ञेन वादकथायां 'श्येनेन यजेत' इतिवाक्यमयुक्तार्थं, श्येनपक्षिणः पुरोडाशादिवद्यागीयद्रव्यत्वे अहिंसाशास्त्रविरोधात् इति शङ्किते, श्येनाङ्गपशुष्वावश्यकेनापि विषयभेदन्यायोपन्यासेन तत्समाधानं उचितम् ; किन्तु वस्तुस्थितिमनुसरता वाक्यशेषमुदाहृत्य कर्मनामधेयत्वोपन्यासेनैव तत् समाधातव्यं इत्यभिप्रेत्य बन्धस्याध्यासात्मकत्वमत्र प्रदर्श्यते ।

ननु तथापि नात्र तत् प्रदर्शनीयम्, तदनन्यत्वाधिकरणे सर्वस्य च प्रपञ्चस्य ब्रह्मण्यध्यस्ततायाः प्रसाधयिष्यमाणत्वेन तत एव जीवधर्माणामप्यध्यस्ततासिद्धेः । विशिष्य च 'तद्गुणसारत्वात् ........' (ब्र. सू. २. ३. २९) इति सूत्रे तेषामध्यस्ततायाः प्रदर्शयिष्यमाणत्वात् । तत्रापि कर्तृत्वस्याध्यस्ततायाः 'यथा च तक्षोभयथा' (ब्र. सू. २. ३. ४०) इत्यधिकरणे प्रतिष्ठापयिष्यमाणत्वात् । ब्रह्मात्मैक्यमपि नेहोपपादनीयम्, 'अंशो नानाव्यपदेशात् ....' (ब्र. सू. २. ३. ४३), 'आत्मेति तूपगच्छन्ति ....' (ब्र. सू. ४. १. ३.) इत्यधिकरणयोरुपपादयिष्यमाणत्वात् - इति चेत् – सत्यम् ।

---

1. वादेति – प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः, यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः, स एव स्वपक्षस्थापनाहीनो वितण्डा, इति त्रिविधा कथा । तत्र इदं शास्त्रं वादकथारूपम् । अर्थनिर्णयप्रधानत्वात् । उक्तश्चैतत् विवरणे । 2. उत्सर्गापवादन्यायः

उत्तरत्र साधयिष्यमाणस्यैवार्थस्य शास्त्रारम्भोपयोगितया स्मरणार्थमिदमाद्याधिकरणस्य प्रथमवर्णकम्[1]। यथा पूर्वतन्त्रे 'अथातो धर्मजिज्ञासा' (जै. सू. १. १. १.) इत्याद्याधिकरणं 'कर्म वा विधिलक्षणम्' (जै. सू. ९. २. ३.) इति नावमिकाधिकरणसिद्धस्यैव स्वाध्यायस्यार्थज्ञानपर्यन्तत्वस्य शास्त्रारम्भोपयोगितया स्मरणार्थम्। यथा वा तत्र 'यज्ञकर्म प्रधानं तद्धि चोदनाभूतम्' (जै. सू. ९. १. १.) इति नवमाध्याद्याद्याधिकरणप्रथमवर्णकं ऊहविचारारम्भोपयोगितया सप्तमाद्यव्युत्पादितस्य धर्माणामपूर्वार्थत्वस्य स्मरणार्थम्। यथावा तत्रैव 'सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम्' (जै. सू. ९. २. १.) इति नवमद्वितीयपादाद्याधिकरणप्रथमवर्णकं सामोहविचारारम्भोपयोगितया सप्तमद्वितीयपादे व्युत्पादितस्य रथन्तरादिशब्दानां गीतिविशेषमात्रवाचकत्वस्य स्मरणार्थम्। एवं स्मरणार्थेऽप्यस्मिन् वर्णके श्रोतॄणां सुखप्रतिपत्त्यर्थं उपोद्घातप्रक्रियायां[2] प्रवृत्तो भगवान् भाष्यकृत् आक्षेपसमाधानाभ्यां बन्धमिथ्यात्वं व्युदपीपददिति न किञ्चिदवद्यम्।

यद्वा[3] उदाहृताधिकरणानामस्य च मुखभेदेन प्रवृत्तेः औदुम्बराधिकरणन्यायेन पर्णमय्यधिकरणन्यायेन च न पौनरुक्त्यम्। तथाहि-वियत्पादीयान्यधिकरणानि जीवगताणुत्वोत्क्रान्तिगत्यागतिकर्तृत्वजीवभेदश्रुतिविरोधसमाधानेन जीवब्रह्माभेदोपपादनार्थानि, न तु क्वचिदपि विषये प्रत्यक्षविरोधसमाधानेन। 'आत्मेति तूपगच्छन्ति ....' (ब्र. सू. ४. १. ३२.) इत्यधिकरणमपि जीवस्य ब्रह्मभावोऽस्ति चेत् संसारदशायामपि प्रकाशेत, अविद्याऽऽवृतत्वे जीवभावोऽपि न प्रकाशेत, तस्मिन् निर्विशेषे च नांशभेदकल्पना प्रमाणवती, इति प्रकाशाप्रकाशविरोधसमाधानेन तदुपपादनार्थम्। तदनन्यत्वाधिकरणं यद्यपि विश्वमिथ्यात्वे प्रत्यक्षादिविरोधसमाधानार्थं भवति, तथापि तत्र अद्वैतश्रुतीनां प्रत्यक्षादिभ्यः प्राबल्यसमर्थनेन तद्विरोधः समाधास्यते।

---

1. जिज्ञासाधिकरणे चत्वारि वर्णकानि–बन्धस्य अध्यासात्मकत्वं आक्षिप्य तत्समाधानेन विषयप्रयोजनवत्त्वोपपादनेन शास्त्रारम्भसमर्थनपरं प्रथमं वर्णकम्। पूर्वमीमांसाशास्त्रेण गतार्थतामाशङ्क्य तन्निराकरणेन शास्त्रारम्भसमर्थनपरं द्वितीयं वर्णकम्। अधिकार्यभावं आशङ्क्य तन्निराकरणेन शास्त्रारम्भसमर्थनपरं तृतीयं वर्णकम्। विषयप्रयोजनादिकं साक्षादाक्षिप्य तत्समाधानेन शास्त्रारम्भसमर्थनपरं चतुर्थं वर्णकम्। स्पष्टश्चायं विभागः पञ्चपादिकाविवरणे।

2. अनेन सूत्रकृत् प्रतिपादनप्रक्रियायां प्रवृत्तः इति ज्ञापितं भवति। प्रतिपाद्यमर्थं बुद्धौ सङ्गृह्य प्रागेव तदर्थं अर्थान्तरवर्णनं उपोद्घातः, प्रतिपाद्यं बहिरेव प्रतिज्ञाय पश्चात् तत्सिद्धिहेतूपवर्णनं प्रतिपादनम्, इति विभागः। उक्तश्चायमर्थः पञ्चपादिकाविवरणे।

3. पञ्चपादिकोक्तरीत्या समाहितम्। भामत्याशयमनुसृत्य आह–यद्वेति। यद्यपि भामत्यां अस्मिन् अधिकरणे प्रत्यक्षादिभ्यः श्रुतीनां प्राबल्यं उपपादितम्, तथापि तत् श्रोतृबुद्धिसौकर्यार्थं अनुवादमात्रम् न तु तत्परतया। उक्तञ्चैतत् परिमळे।

अस्मिंस्त्वधिकरणे प्रत्यक्षादिभ्यः श्रुतीनां स्वतस्सिद्धं प्रसिद्धं प्राबल्यं[1] अनुद्भाव्यैव जीवगतब्रह्मात्मैक्यविरोधिकर्तृत्वादिग्राहिप्रत्यक्षस्य गौरोऽहमित्यादिप्रत्यक्षभ्रमतुल्याकारत्वेनाप्रामाण्यशङ्काकलुषिततया न श्रुतिबाधनक्षमत्वमिति विरोधः समाधीयते -- इति सर्वमनाकुलम् ॥

अत्र शारीरकमीमांसाशास्त्रमिदमारम्भणीयं न वा इति विषयप्रयोजनसम्भवासम्भवाभ्यां संशये **पूर्वपक्षः**— नारम्भणीयमिदं शास्त्रं विषयप्रयोजनासम्भवात् । ब्रह्मात्मैक्यं ह्यस्य विषयः प्रयोजनं च इत्यभिमतम् । न च कर्तृत्वभोक्तृत्वादिमतो जीवस्य तद्विपरीतस्वरूपेण ब्रह्मणा ऐक्यं सम्भवति । न च तत्त्वमस्यादिवाक्यैस्तदैक्यसिद्धिः, विरुद्धधर्मवतोर्भेदस्यावश्यंभावित्वेन तादृग्वाक्यसहस्रेणापि तदैक्यासिद्धेः । न च वाच्यं कर्तृत्वभोक्तृत्वादिकं अन्तःकरणस्य तत्संवलितस्य वाऽहङ्कारस्य धर्मः, निष्कृष्टरूपो जीवस्त्वसङ्ग एव, 'कामस्सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत् सर्वं मन एव' (बृ. १. ५. ३.), 'विज्ञानं यज्ञं तनुते' (तै. २. ५. १.), 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (काठ. १. ३. ४.) 'असङ्गो ह्ययं पुरुषः' (बृ. ४. ३. १५.), 'असङ्गो न हि सज्जते' (बृ. ३. ९. २६.) इत्यादिश्रुतिभ्यः इति । अहं कर्ता भोक्तेत्यादिप्रत्यक्षेण अहमनुभवे प्रकाशमानस्य जीवस्य कर्तृत्वादिमत्त्वेन गृह्यमाणतया तत्र असङ्गश्रुत्या तदभावबोधनायोगात् । तदन्यस्य जविस्य सिद्धान्तेऽप्यनङ्गीकृतत्वात् ।

स्यादेतत्-स्थूलोऽहं कृशोऽहं अन्धोऽहं बधिरोऽहं कर्ता भोक्ता सुखी दुःखी इत्याकारोऽहंप्रत्ययः स्थूलत्वादिषु बह्वंशेषु देहेन्द्रियतादात्म्यतद्धर्माध्यासरूपतया दृष्टविसंवादः कर्तृत्वाद्यंशेऽप्यप्रामाण्यशङ्काकलुषिततया प्रतीतकौटसाक्ष्यपुरुषकल्पो न श्रुतिबाधनक्षमः इति चेत्, न; मम देहः मम चक्षुः मम श्रोत्रं मम मनः इत्यादिरूपेण जीवात् परस्परं च विभक्तत्वेन भासमानानां देहेन्द्रियादीनां युगपदेकजीवैक्याध्यासायोगेन स्थूलोऽहमित्यादिसामानाधिकरण्यस्य [2]अहमेव चैत्रः, सिंहो देवदत्तः इत्यादिनिश्चितभेदधर्मिद्वयसामानाधिकरण्यवत् गौणत्वात् । नचैवं अहंकर्तेत्याद्यंशेऽपि गौणत्वं शङ्काऽऽस्पदम्[3]; कदाचित् ममशरीरंस्थूलमित्यादिव्यवहारवत् कदाऽपि ममंमनःकर्तृ इत्यादिव्यवहारस्यादर्शनेन तत्र गौणत्वकल्पनाऽयोगात् । तस्मात् अप्रामाण्यशङ्काऽनास्पदप्रबलप्रत्यक्षविरोधेन श्रुतयोऽन्यथा व्याख्येयाः इति विषयप्रयोजनराहितमिदं शास्त्रं नारम्भणीयमिति ॥

अत्र **सिद्धान्तः**— स्थूलोऽहमित्यादिः अध्यास एव न गौणः, गौणत्वे कदाचित् नाहं चैत्रः न देवदत्तः सिंहः इतिवत् कदाचित् नाहं स्थूलः इत्यादिरूपस्य भेदव्यवहारस्य लौकिकसाधारण्येन उत्पत्तिप्रसङ्गात् ।

---

1. जात्या प्राबल्यम् । 2. स्वामित्रे चैत्रे - इत्यादिः । 3. अहंप्रत्ययस्य इति शेषः ।

मम देहः मम चक्षुः इत्यादिभेदव्यवहारो दृश्यते इति चेत्, न; षष्ठ्याः सम्बन्धार्थकत्वेन ततो भेदालाभात्। सम्बन्धस्य च अपवादकभेदप्रत्ययरहितसामानाधिकरण्यानुरोधेन भेदाविरोधेनैव कल्पनोपपत्तेः। कार्यकारणाभेदवादिनां ब्रह्मप्रकृत्यादिकार्यं जगत् तदभिन्नम्, सौवर्णं कुण्डलम्, इत्यादौ, सर्वेषामपि सदा कालोऽस्ति, सर्वत्र देशोऽस्ति, इत्यादौ च भेदेऽपि कार्यकारणभावादिसम्बन्धस्य संप्रतिपन्नत्वात्।

एतेन- "योऽहं बाल्ये पितरावन्वभूवं सोऽहं स्थाविरे प्रणप्तॄन् पश्यामि", 'योऽहं स्वप्ने व्याघ्रदेहः सोऽहमिदानीं मनुष्यदेहः' इति देहात्मभेदानुभवौ दृश्येते इति-निरस्तम्।

अनयोरपि देहात्मसम्बन्धानुभववदेव भेदास्पर्शित्वात्। तथाऽपि व्यावृत्तदेहभेदकात्मानुवृत्तिविषयाविमौ देहात्माभेदे सम्बन्धप्रत्ययवन्न शक्योपपादनौ इति चेत्-न, आद्यस्य 'योऽयं बाल्ये मम देहः तथा पुष्ट आसीत् स एवाद्य वार्धके कृशीयान् जातः' इत्यनुभववत् वस्तुतो बालस्थविरदेहैक्येन तदैक्याध्यासेन वा उपपत्तेः। द्वितीयस्य कल्पिताकल्पितव्याघ्रत्वमनुष्यत्वगोचरस्य 'योऽयं स्थाणुः अयं पुमान्' इति कल्पिताकल्पितस्थाणुत्वपुरुषत्वगोचरानुभवस्य पुरुषे इदमर्थाभेदे इव मनुष्यदेहात्माभेदेऽप्युपपत्तेः। अस्तु वा 'ममदेहः' 'योऽहं स्वप्ने व्याघ्रदेहः' इत्येदेर्देहात्मभेदगोचरत्वं; तथाऽपि न स्थूलोऽहमित्याद्यध्यासानुपपत्तिः। केनचिद्रूपेण भेदप्रत्ययस्य तदन्येन रूपेण अध्यासाविरोधित्वात्। 'स्फटिकोऽयं न जपाकुसुमम्' इति प्रत्यक्षनिश्चयवतोऽपि स्फटिके लोहितात्मना जपाकुसुमाध्यासदर्शनात्। देवदत्तसमीपगतयोरधीयानानधीयानयोः पुरुषत्वसामान्येन गृह्यमाणयोश्चैत्रमैत्रयोः देवदत्तपिण्डात् परस्परस्माच्च भेदेन गृह्यमाणयोरपि देवदत्ते 'मैत्रोऽयमधीयानस्तिष्ठति' इति चैत्रमैत्रोभयाध्यासदर्शनाच्च। एतेन—परस्परं भेदेन गृह्यमाणयोर्देहेन्द्रिययोरेकस्मिन्नात्मन्यध्यासोऽनुपपन्नः इत्यपि शङ्का निरस्ता।

तस्मात् 'स्थूलोऽहं अन्धोऽहं' इत्यादिसामानाधिकरण्यमध्यासनिबन्धनमेवेति बहुष्वंशेषु दृष्टविसंवादतया पूतिकूष्माण्डायमानोऽहंप्रत्ययः कर्तृत्वाद्यंशेऽपि न श्रुतिबाधनक्षमः।

अतो देहेन्द्रियान्तःकरणात्मसु ऐक्येन भासमानेषु तद्गततया प्रतीयमानानां धर्माणां मध्ये स्थूलत्वादयो देहधर्माः अन्धत्वादय इन्द्रियधर्माः कामसङ्कल्पादयोऽन्तःकरणधर्माः आनन्दादयः प्रत्यग्धर्माः इति श्रुतिप्राप्ता व्यवस्था स्वीकर्तुं युक्ता। सा च मम देहःस्थूलः मम चक्षुरन्धं मम मनःकामयते मम मनस्सङ्कल्पयते इत्याद्यनुभवेनाप्यनुमोदिता। दृश्यते च पृथिवीजलादिषु सङ्कीर्णतया प्रतीयमानानां गन्धादीनां 'उपलभ्याप्सुचेद्गन्धं केचिद्ब्रूयुर-

नैपुणाः । पृथिव्यामेव तं विद्यादपो वायुश्च संश्रितम् ' इत्याद्यागमेन व्यवस्था । न ह्याजानसिद्धजलोपष्टम्भकादिगतं गन्धादि ' पृथिवीगुण एव गन्धो न जलगुणः ' इत्यादिरूपेण अस्मदादिभिः प्रत्यक्षेण शक्यं विवेचयितुम् ।

पृथिव्यादीनां प्रायः परस्परसंसृष्टतया अन्यगुणस्याप्यन्यत्रावभासस्सम्भवतीतिशङ्कितदोषं प्रत्यक्षं तत्र आगमेन शिक्ष्यते इति चेत्

तर्हीहापि आत्मानात्मनोराध्यासिकतादात्म्यापत्त्या अन्यधर्मस्याप्यन्यत्रावभासस्सम्भवतीति शङ्कितदोषं प्रत्यक्षं श्रुत्या शिक्ष्यते इति तुल्यम् ।

ननु जलाद्युपष्टम्भकपृथिव्यादिसंप्रतिपत्तिवत् आत्मन्याध्यासिकतादात्म्यापन्नकामसंकल्पादिमदनात्मसंप्रतिपत्तिर्नास्तीति चेत्

न- निर्मलेष्वपि जलादिषु उपष्टम्भकपृथिव्यादिसद्भावे इव आत्मन्याध्यासिकतादात्म्यापन्नानात्मांशसद्भावेऽपि आगमस्याविशिष्टत्वे असंप्रतिपत्तेर्निर्मूलत्वात् । न हि निर्मलजलादिषु उपष्टम्भकपृथिव्यादिसद्भावे आगमादन्यत् शरणमस्ति । गन्धादिनैव तदनुमाने, गन्धादिगुणव्यवस्थासिद्धौ तदनुमानं तदनुमानेन तद्व्यवस्थासिद्धिः इत्यन्योन्याश्रयात् ।

तस्मात् यथा ' पृथिव्यामेव तं विद्यात् ' इत्यागमेनैव जलादिषु उपष्टम्भकसद्भावः गन्धादीनां तद्धर्मत्वनियमश्च अवगन्तव्यः तथा 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानस्सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव ' (बृ. ४. ४. २२) इत्यादिश्रुत्या ' विज्ञानमय ' इति जीवस्य संसरणे बुद्धिप्रधानत्वं, ' ससमान ' इति सामान्यतस्तत्सामान्यापत्तिं, ' ध्यायतीव लेलायतीव ' इति ध्यायन्त्यां बुद्धौ ध्यायतीव चलन्त्यां चलतीव नायं स्वतो ध्यायति चलति वा इति तद्विशेषविवरणं च कुर्वत्या, अन्याभिश्च एतादृशीभिश्श्रुतिभिः विवरणादिप्रदर्शिताहमर्थानात्मत्वसमर्थनोपपत्त्युपबृंहिताभिः आत्मन्याध्यासिकतादात्म्यापन्नानात्मांशसद्भावः कामसङ्कल्पादीनां तद्धर्मत्वनियमश्च अवगन्तव्य इति न कश्चिद्विशेषः ।

तस्मात् बन्धग्राहिप्रत्यक्षाबाध्यैः त्वंपदार्थशोधकवाक्यैः शुद्धतयाऽवगतस्य जीवस्य ब्रह्मैक्यसम्भवन विषयप्रयोजनवत्त्वात् इदं शास्त्रमारम्भणीयमिति सिद्धम् । [1] वर्णकान्तराणां तु प्रपञ्चनं [2] ग्रन्थान्तरेषु द्रष्टव्यम् ॥

---

1 वर्णकान्तराणां स्वरूपं चतुर्थे पुटे उक्तं टिप्पण्याम् । 2 तेषां प्रपञ्चनं पञ्चपादिकादिषु स्वीयेषु च ग्रन्थान्तरेषु द्रष्टव्यं इत्यर्थः ।

सूत्रस्य नित्यानित्यवस्तुविवेकादिमुमुक्षुत्वान्तसाधनचतुष्टयसंपत्त्यनन्तरं तत्संपत्तेरेव हेतोः मोक्षसाधन-प्रत्यगभिन्ननिर्विशेषब्रह्मज्ञानाय वेदान्तविचारः कर्तव्यः इत्यर्थः।

कथमेतावानर्थोऽस्मात् सूत्रात् लब्धः इति चेत् —

उच्यते — अथशब्दस्तावदानन्तर्यार्थः, न च ब्रह्मविचारे पुष्कलकारणानन्तर्यमपहाय यत्किञ्चिदानन्तर्य-स्याभिधानं फलवत्, न च साधनचतुष्ट्यादन्यत् कर्मकाण्डविचारादि तत्र पुष्कलकारणं भवितुमर्हति, इति साधनचतुष्टयसंपत्त्यनन्तरमित्ययमर्थः अथशब्देन लब्धः ।

अत एव तत्संपत्तेरेव हेतोरित्ययमर्थः प्रकृतस्य हेतुत्वाभिधायिना अतश्शब्देन वक्तुं शक्यः । यद्यपि आनन्तर्याभिधानमुखेन साधनचतुष्टयस्य हेतुत्वं अथशब्देनैव लब्धम्, तथाऽपि अतश्शब्देन हेतुत्वस्यैव पुनःपरामर्शरूपाद्यत्नान्तरात् नित्यानित्यविवेकाद्यसम्भवशङ्कानिरासमूचनेन तद्धेतुत्वमेव प्रतिष्ठाप्यते । इह हि इत्थं शङ्काऽवतरति - ब्रह्मैव नित्यं तदन्यत् अनित्यं इति विवेको न सम्भवति, 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति' इत्यादिश्रुत्या कर्मफलस्यापि नित्यत्वावगमादिति । 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते, (छा. ८. १. ६.) इत्यादिस्वदर्शितानुमानोपोद्बलितश्रुतिप्राबल्येन च तन्निरासः।

ब्रह्म प्रत्यगभिन्नं निर्विशेषं इति प्रकरणोपपदादिसङ्कोचकराहित्येन निरतिशयबृहत्त्ववाचिना ब्रह्मशब्देनैव च लब्धम् । जिज्ञासेत्यनेन ब्रह्मज्ञानायेत्ययमर्थो लब्धः। इष्यमाणतया ज्ञानस्य 'विविदि-षन्ति' इत्यादाविव फलत्वप्रतीतेः। न च ब्रह्मज्ञानं मोक्षसाधनत्वाभावे मुमुक्षोः फलं भवितुमर्हति इति मोक्ष-साधनत्वविशेषणमपि तत्र अर्थाल्लब्धम् । सूत्रवाक्यस्येव विश्वतोमुखत्वेन सूत्रपदानामपि अनेकार्थत्वस्य अलङ्का-रतया विवक्षावशेन श्लेषे इव वृत्तिद्वयविरोधस्यादूषणत्वात्, जिज्ञासापदेनैव अन्तर्नीतो विचारो लक्ष्यते, योग्यतया च वेदान्तविचार इति लभ्यते तदेकगम्यत्वाद्ब्रह्मणः । तत्रैव विचारे सूत्रस्यानुवादमात्ररूपत्वपरिहाराय 'तद्विजिज्ञासस्व' (तै. ३. १. १.) इति मूलश्रुत्यनुरोधसिद्धये च अध्याहृतस्य कर्तव्येतिपदस्य अन्वयः इति ।

यद्वा ब्रह्मजिज्ञासा कर्तव्येत्यस्य ब्रह्मविचारः कर्तव्य इत्यर्थः, न तु ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति । 'तद्विजिज्ञासस्व' इति मूलश्रुतौ ब्रह्मणो विचारकर्मत्वश्रवणात्, भाष्येऽपि ब्रह्मविचारे प्रति-ज्ञाते ब्रह्मप्रमाणादिविचारप्रतिज्ञानमर्थाल्लभ्यते इत्युक्तत्वात् । ब्रह्मज्ञानं तु विचारेण विचाराधिकारिविशेष-णेच्छाविषये मोक्षे साधनीये 'साम्ना स्तुवीत' इति श्रुतौ गीतिक्रियारूपेण साम्ना गुणाभिधानात्मके स्तोत्रे साधनीये

ऋक्पदाभिव्यक्तिवत् द्वारतया फले सिद्ध्यति । ब्रह्मविचारस्य ब्रह्मावगतिफलकस्य साक्षान्मोक्षसाधनत्वायोगात् । मोक्षस्यापि अध्यस्तकर्तृत्वादिनिवृत्त्या ब्रह्मभावाविर्भावरूपत्वेन ब्रह्मावगतिसाध्यस्य साक्षाद्विचारसाध्यत्वायोगाच्च ।

ननु नित्यानित्यवस्तुविवेकाद्यनन्तरं ब्रह्ममीमांसारूपो विचारः कर्तव्यः इति सूत्रार्थवर्णनमयुक्तम् , नित्यानित्यवस्तुविवेकस्य निरुक्तविचारनिष्पाद्यत्वेन अन्योन्याश्रयप्रसङ्गात् । न हि ब्रह्मैव नित्यं अन्यद-नित्यं इति निर्णयरूपः सिद्धान्ताभिमतो नित्यानित्यवस्तुविवेकः प्रारिप्सितब्रह्ममीमांसाशास्त्रविचारं विना केनचिच्छास्त्रान्तरश्रवणादिना सम्भवति । सम्भवे वा ततो लब्धनित्यानित्यवस्तुविवेक एवाधिकारी एतच्छास्त्रविचारे प्रवर्तते इति अस्मिञ्छास्त्रे 'असम्भवस्तु सतोऽनुपपत्तेः' (ब्र. सू. २.३.९.) इत्यधिकरणे ब्रह्मनित्यत्वप्रतिष्ठापनं वैराग्यपादे कर्मफलानित्यत्वप्रदर्शनं वियदधिकरणादिषु वियदाद्यनित्यत्वप्रतिष्ठापनं च नाकरिष्यत इति चेत्

उच्यते साङ्गसशिरस्कवेदाध्ययनजन्यापातप्रतीतिरूपो नित्यानित्यवस्तुविवेक इह परिगृह्यते । स यद्यपि वैराग्यं निष्पादयन् तत् द्रढयितुं न शक्नोति, ब्रह्मवत् कर्मफलेऽपि नित्यत्वप्रतिपादकानामक्षय्यादि-वाक्यानां दर्शनात् , तथापि कर्मफलानित्यत्वप्रतिपादकानां वाक्यानां 'तद्यथेह कर्मचितः' (छा. ८. १. ६.) इत्यादिश्रुतिप्रदर्शितयुक्त्युपोद्बलिततया प्राबल्यं इति न्यायसूचकेन एतत्सूत्रगतातश्शब्देन निरस्त-शैथिल्यः स शक्नोति वैराग्यं द्रढयितुम् । न चैवमपि 'असम्भवस्तु सतः' इत्याद्यधिकरणपूर्वप-क्षोपन्यसनीयशङ्कोन्मेषेण तच्छैथिल्यं स्यादिति वाच्यम् ; तत्तच्छङ्कानिरासा अग्रे करिष्यन्ते इति हितैषिवचन-विश्वासेन तया शैथिल्याप्रसङ्गात् । सर्वेष्वपि हि शास्त्रेषु विषयप्रयोजनविषये एकैकस्यामसिद्धिशङ्कायां आदौ निरस्तायां तदसिद्धिपर्यवसायिशङ्कान्तरनिरासास्तन्त्रमध्ये एव क्रियमाणा दृश्यन्ते । न चैतावता अधिकारिणां आनिर्णीतविषयप्रयोजनत्वेन तत्तच्छास्त्रविचारेष्वप्रवृत्तिरापद्यते । तस्मात् यथोक्त एव सूत्रार्थः ॥ १. १. १.॥

इति जिज्ञासाधिकरणम् ।१।

---

1. यत् परैः "नित्यानित्यवस्तुविवेकस्तावत् कथम्भूतः ?" इत्यारभ्य "तथा च वृथा वेदान्तवाक्यविचारः" इत्यन्तेन सन्दर्भेण दूषणजातं साधनचतुष्टयपूर्ववृत्तत्वभङ्गवादे उद्भावितं तत्र भूयांसं अनुक्तोपालम्भं विहाय यत् अवशिष्यते तत् अनेन परिहृतं वेदितव्यम् ।

( २ अधिकरणम् )

**जन्माद्यस्य यतः । २ ।**

अथ एवमुपपादितारम्भो विचारः प्रस्तूयते ।

तत्र यद्यपि ब्रह्मविचारप्रतिज्ञया तत्प्रमाणयुक्तिसाधनफलविचारोऽप्यर्थात् प्रतिज्ञातः, तथाऽपि ब्रह्मप्रमाणं ब्रह्मयुक्तिः इत्यादिविशिष्टविषयविचाराणां विशेषणब्रह्मस्वरूपप्रतिपत्त्यपेक्षत्वात् प्राधान्याच्च तदेव लक्षणमुखेन प्रथमं इहाधिकरणे निर्णीयते ।

'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्व, तद्ब्रह्मेति' (तैत्ति. ३-१) इति श्रुत्युक्तं ब्रह्मणो जगत्कारणत्वं लक्षणं युक्तमयुक्तं वेति सन्देहे सति अयुक्तमिति **पूर्वः पक्षः** ।

तथाहि — प्रश्नोपनिषदि षोडशकलं पुरुषं प्रकृत्य 'तं त्वा पृच्छामि क्वासौ पुरुषः' (प्र० ६-१) इति भारद्वाजप्रश्ने, 'तस्मै स होवाच इहैवान्तश्शरीरे सोम्य स पुरुषः यस्मिन्नेताः षोडशकलाः प्रभवन्ति इति स ईक्षाञ्चक्रे कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्राः कर्म लोका लोकेषु च नाम च' (प्र. ६. २–४.) इति जीवस्यैव प्राणादिनामान्तषोडशकलास्रष्टृत्वं श्रूयते । तत् यद्यप्यस्मदादेरनुपपन्नं, तथापि प्रथमजस्य हिरण्यगर्भस्य उपपद्यत एव ।

ननु तस्यापि नोपपद्यते-भूतस्रष्टृत्वनिर्वाहकयोश्चिकीर्षाकृत्योर्देहेन्द्रियाद्यपेक्षत्वात् देहेन्द्रियाणाञ्च भौतिकानां भूतसृष्ट्यनन्तरभावित्वात् इति चेत्

तर्हि परब्रह्मणोऽपि देहेन्द्रियान्तःकरणरहितस्य चिकीर्षाकृत्यसम्भवेन भूतस्रष्टृत्वं न स्यात् । यदि तस्य चिकीर्षाकृत्यभावेऽपि भूतस्रष्टृत्वं, तदा हिरण्यगर्भस्यापि तथैव स्यात् । यदि तस्य मायामाश्रित्यैव चिकीर्षाकृतिनिर्वाहः, तदा हिरण्यगर्भस्य सर्गादौ सूक्ष्मावस्थमन्तःकरणमस्तीति सुतरां तद्भूत्त्वमुपपद्यते ।

अपि च बृहदारण्यके 'आत्मैवेदमग्र असीत् पुरुषविधः' (बृ. १. ४. १.) इति हिरण्यगर्भं प्रस्तुत्य 'ततो मनुष्या अजायन्त' (बृ. १. ४. ३.) इत्यादिना 'यदिदं किञ्च मिथुनं आपिपीलि-

काम्यः तत्सर्वमसृजत ' (बृ. १. ४. ४.) इत्यन्तेन तस्य मनुष्यादिस्रष्टृत्वमुक्त्वा तदनन्तरमग्न्यादिस्रष्टृत्वमप्युक्तम् । न च 'आत्मैवेदमग्र आसीत्' इति परब्रह्मणः प्रस्ताव इति शङ्कनीयम् । 'स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुषः' (बृ. १. ४. १.) इत्यतः पाप्मसंसर्गप्रतीत्या 'सोऽबिभेत् .... स वै नैव रेमे' (बृ. १. ४. २–३.) इति भयारतिश्रवणेन च तस्य संसारित्वावगमात् । ननु तथाऽपि बृहदारण्यके हिरण्यगर्भस्य वियदादिभूतस्रष्टृत्वं न श्रुतमिति चेत्, सत्यं; देवमनुष्यादिसकलप्राणिजातस्रष्टृत्वं श्रुतमेव । तदेवात्र लक्षणम्, न तु वियदादिस्रष्टृत्वम् । लक्षणवाक्ये भूतशब्दस्य 'येन जातानि जीवन्ति' इति लिङ्गेन प्राणिपरत्वात् । जीवनहेतुत्वं भूतानां अध्यात्मं प्राणाभिमानितयाऽवतिष्ठमाने हिरण्यगर्भेऽप्यस्ति । भूतलयाधारत्वमपि 'एकार्णवे च त्रैलोक्ये ब्रह्मा नारायणात्मकः । भोगिशय्यागतः शेते त्रैलोक्यग्रासबृंहितः । जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसम्भवः' इत्यादिपुराणेतिहासधर्मशास्त्रेषु तस्य प्रसिद्धम् । ननु सकलभूतस्रष्टृत्वादिरूपं तन्निमित्तत्वमिह न लक्षणं किन्तु तदुपादानत्वम्, इति चेत् – तदुपादानत्वं हि तज्जीवाभेदेनाध्यस्तान् देहेन्द्रियान्तःकरणादीन् प्रत्युपादानत्वमेव वाच्यं, नित्यानां जीवानां स्वतः कार्यत्वाभावात् । देहाद्युपादानत्वं तु तत्तज्जीवानामेव, तेषां जीवतादात्म्यप्रतीत्या जीवानां तदधिष्ठानत्वात्, सिद्धान्ते अध्यासाधिष्ठानत्वातिरिक्तस्योपादानत्वस्याभावात् ।

अस्तु वा परं ब्रह्म भूतानां स्रष्टृ उपादानञ्च । तथाऽपि मायाशबलं सविशेषमेव तथा वाच्यं, निर्विशेषस्य कूटस्थस्य मायाशाबल्यं विना सृष्टिक्रियाविशिष्टत्वस्य तत्तत्कार्याकारेण विवर्तमानत्वस्य च असम्भवात् । न च सविशेषं ब्रह्म इह लिलक्षयिषितं, किन्तु जिज्ञास्यत्वेन प्रतिज्ञातं शुद्धमेव । न च मायाशबलसगुणब्रह्मगतमेव कारणत्वं तटस्थतया शुद्धस्योपलक्षणं शाखाग्रमिव चन्द्रस्य, तस्य प्रकृष्टप्रकाशत्वमिव सत्यज्ञानानन्तानन्दात्मस्वरूपत्वं 'आनन्दादयः प्रधानस्य' (३. ३. ६) इत्यधिकरणे शुद्धब्रह्मप्रतिपत्तिपरवाक्येषु सर्वेषूपसंहरणीयत्वेन वर्णयिष्यमाणं अस्य स्वरूपलक्षणं इति वाच्यम् । तथा सति स्वरूपलक्षणेनैव विशिष्यावगत्यर्थमवश्यापेक्षितेन सर्वतो व्यावृत्तस्य लक्ष्यस्य अवगतिः सम्भवतीति एतल्लक्षणवैयर्थ्यात् । चन्द्रस्य तु तटस्थलक्षणं उक्तेऽपि स्वरूपलक्षणे तद्दिदृक्षया चन्द्रबुभुत्सोः गगने सर्वतश्चक्षुर्विक्षेपक्लेशः स्यात् स मा भूदिति देशविशेषे चक्षुर्नियमनार्थतया उपयुज्यते । न चात्राप्यग्निसूर्येन्द्रादिमहिमप्रतिपादकेषु मन्त्रार्थवादेषु ब्रह्म बुभुत्सोः भ्रमणक्लेशः स्यात् स मा भूदिति कारणवाक्यजाते तद्दृष्टिनियमनार्थतया तटस्थलक्षणमुपयुज्यते इति वाच्यम् । कारणत्वासंस्पर्शिनामपि सर्वान्तरत्वादिद्वारा ब्रह्मप्रतिपत्तिपरवाक्यानां सत्त्वेन ब्रह्मप्रतिपित्सोः अद्वैतपरवाक्येषु सर्वेष्ववतरणीयतया कारणवाक्यमात्रे तद्दृष्टिनियमनायोगात् । स्वरूपलक्षणान्तर्गतेन आत्मशब्दोक्तेन प्रत्यक्त्वेन पराग्रूपदेवतान्तरमहिमवर्णनपरमन्त्रार्थवादेभ्यो व्यावर्तनस्य अद्वैतपरवाक्येष्ववतरणस्य

च सिद्धेश्च । किञ्च जगत्कारणत्वं सत्यञ्चेत् द्वित्वेन एकमिव तेन अद्वितीयं ब्रह्म लक्षयितुमशक्यं; विरोधात् । मिथ्या चेदपि कनकत्वेन नित्यमिव न तेन सत्यं तत् लक्षयितुं शक्यं, विरोधादेव । तस्मादयुक्तमिदं लक्षणं इत्येवं प्राप्ते

राद्धान्तः—

भूतानि भौतिकञ्चाण्डं निर्मायेदमनन्तरम् । हिरण्यगर्भं तन्मध्ये निर्ममे परमेश्वरः ।

इत्यर्थे सकलश्रुत्याद्यैककण्ठ्यस्य दर्शनात् । स षोडशकलास्रष्टा पुरुषः पर एव नः ।

प्राणोत्क्रान्तिप्रतिष्ठाभ्यां स्वस्य तद्वत्त्ववीक्षणम् । जीवस्य तद्वतस्ताभ्यां स्वात्मत्वेनावलोकनात् ।

तेजोऽबन्नप्रवेशो हि जीवकर्तृक एव सन् । जीवस्य स्वात्मतादृष्ट्या तेन स्वीयतयेरितः ।

परमेश्वरः प्रथमं वियदादीनि भूतानि सृष्ट्वा तत्त्रिवृत्करणानन्तरं तैरण्डं निर्माय तन्मध्ये हिरण्यगर्भं निर्ममे इत्यर्थे हिरण्यगर्भोत्पत्तिप्रतिपादकसकलश्रुतिस्मृतिपुराणेतिहासानामैककण्ठ्यात् तदनुरोधेन प्रश्नोपनिषदुक्तषोडशकलास्रष्टा पुरुषः पर एव; षोडशकलामध्ये वियदादीनामप्यनुप्रवेशात्, षोडशकलपुरुषोपदेशानन्तरं 'तान् होवाच एतावदेवाहमेतत् परं ब्रह्म वेद नातः परमस्तीति' (प्र. ६. ७.) इति पिप्पलादवचनदर्शनाच्च । यत्तु प्राणोत्क्रान्तिप्रतिष्ठाभ्यां स्वस्य उत्क्रान्तिप्रतिष्ठावत्त्ववीक्षणं जीवलिङ्गं, तत् ताभ्यामुत्क्रान्तिप्रतिष्ठावतो जीवस्य स्वात्मरूपत्वावलोकनात् । श्रूयते हि छान्दोग्ये तेजोऽबन्नानुप्रवेशो जीवकर्तृक एव सन् ईश्वरेण जीवस्य स्वरूपत्वदृष्ट्या स्वात्मीयतया विवक्षित इति । तत्र हि 'हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा. ६. ३. २.) इत्यत्र जीवकर्तृकोऽनुप्रवेशः स्वकर्तृकतया परमेश्वरेण विवक्षित इति व्याकरणसमानकर्तृत्ववाचिना क्त्वाप्रत्ययेन दर्शितम्; एवमिदमप्युपपद्यते ।

यत्तु बृहदारण्यके हिरण्यगर्भस्य देवमनुष्यादिभूतजातस्रष्टृत्वमुक्तमित्युक्तं तत्तथैव । न तावता तस्य सकलभूतस्रष्टृत्वं लक्षणे विवक्षितं सिद्ध्यति । स्वस्य अतीतानागतकल्पसम्भवदेवमनुष्यादीनाञ्च अन्यसृष्टत्वात् ।

परमेश्वरस्य तु सर्वकल्पानुयायिनो हिरण्यगर्भस्यापि स्रष्टुः सर्वभूतस्रष्टृत्वमुपपद्यते। हिरण्यगर्भसृष्टेषु देवमनुष्यादिषु कुलालादिसृष्टेषु घटादिष्विव तस्यापि स्रष्टृत्वात्, तदभावेऽपि हिरण्यगर्भसृष्टिद्वारा तस्य कारणत्वानपायाच्च ।

यत्तु देहेन्द्रियादिषु तत्तज्जीवानामुपादानत्वात् ब्रह्मण उपादानत्वं न सम्भवतीत्युक्तं, तन्न – शुक्त्यादितादात्म्येनाध्यस्यमानेषु रजतादिषु शुक्तयाद्यवच्छिन्नस्येव जीवतादात्म्येनाध्यस्यमानेषु देहादिषु जीवावच्छिन्नस्य ब्रह्मणोऽधिष्ठानतया उपादानत्वोपपत्तेः । सर्वतः प्रसृतस्य ब्रह्मचैतन्यस्य शुक्त्यादिभिरिव स्वप्रतिबिम्बरूपजीवैरप्यवच्छेदानिवारणात्, 'य आत्मनि तिष्ठन्' इत्यादिश्रुतेश्च । 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधाःसोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मुण्ड. २. १. १.) इति ब्रह्मणश्चेतनत्वेन सरूपान् जीवान् प्रत्युपादानत्वश्रुतेः तदुपाधिदेहेन्द्रियान्तःकरणाद्युपादानत्वपरतया देहादीनां ब्रह्मोपादानकत्वस्यावश्याङ्गीकर्तव्यत्वात् ।

यच्च जन्मादिकारणत्वस्य तटस्थलक्षणत्वे तद्वैयर्थ्यमुक्तं, तदपि न – अत्र सूत्रे पूर्वसूत्राल्लक्ष्यसमर्पकं ब्रह्मपदमनुवर्तते । तत् प्रत्यगभिन्ननिष्प्रपञ्चवस्तुपरम्, प्रकरणोपपदादिसङ्कोचकराहित्येन तस्य त्रिविधपरिच्छेदपरिपन्थिनिरतिशयबृहत्त्ववाचित्वात् । बृहत्त्वमात्रवाचित्वेऽपि वैपुल्यापरपर्यायस्य बहुत्वस्य 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' (छा.७.२४. १.) इति श्रुत्या वस्तुपरिच्छेदपरिपन्थिनो लक्षणस्य दर्शितत्वाच्च । न हीदं लक्षणं ब्रह्मणः प्रत्यग्भिन्नत्वे प्रपञ्चस्य सत्यत्वे वा घटते । तथा सति तत्कारणत्वाधारत्वनियन्तृत्वादिधर्माणां ब्रह्मणि सत्यतापत्त्या 'यत्र नान्यत् पश्यति' इत्याद्यनुपपत्तेः । एवञ्च [1]लक्ष्यपरब्रह्मशब्दार्थतया प्राप्तस्य निष्प्रपञ्चत्वस्य यद्रजतमभात् सा शुक्तिरितिवत् अध्यारोपापवादन्यायेन सिद्ध्यर्थं तटस्थलक्षणम्, स्वरूपविशेषप्रतिपत्त्यर्थं स्वरूपलक्षणम्, इति न कस्यापि वैयर्थ्यम् । एतेन–मिथ्याभूतेन सत्यं लक्षयितुं न शक्यं विरोधात्, इति निरस्तम् ; शुक्त्या रजतोपलक्षणदर्शनात् ॥

---

1. लक्ष्यानुसारेण लक्षणकथनं, न तु लक्षणानुसारेण लक्ष्यस्वरूपनिर्णयः । तथा सति अव्याप्तिदोषकथाया एव उच्छेदापत्तेः । लक्ष्यपरः निरतिशयबृहत्त्ववाची ब्रह्मशब्दः निष्प्रपञ्चमेव ब्रह्म उपस्थापयति । तदनुसारेण कारणत्वादिकं आरोपितमेव सत् तटस्थलक्षणं भवति । एतेन — कारणत्वादिधर्मलक्षणोक्तेः सप्रपञ्चमेव ब्रह्म जिज्ञास्यं सूत्रकृदभिमतं इति परेषां आशङ्का परिहृता ।

सूत्रे जन्मादीति जन्मस्थितिभङ्गमुच्यते । एकवचनं सृष्टिस्थितिभङ्गानां समुदायो लक्षणं नत्वेकैकं इति ज्ञापनार्थम् । यद्यप्येकैकमपि लक्षणं भवितुमर्हति; अनतिप्रसङ्गात्, 'अत्ता चराचरग्रहणात्' (ब्र. सू. १. २. ९.) इत्यधिकरणे सर्वसंहर्तृत्वमात्रस्य ब्रह्मलिङ्गतया उपन्यासाच्च; तथापि जन्मस्थितिभङ्गानामन्यतमकारणत्वस्य लक्षणतया उक्तौ तदितरकारणवस्त्वन्तरसत्त्वशङ्कया वस्तुपरिच्छेदात् लक्षणीयब्रह्मणो निरतिशयबृहत्त्वं न सिद्ध्येत् । अतो निरतिशयबृहत्त्वरूपलक्ष्याकारविपरीतबृहत्त्वशङ्काव्यवच्छेदेन सप्रयोजनं समुदायस्य लक्षणत्वम् । अस्येति कार्यस्य जगत इदन्तया निर्देशः मूलश्रुत्यनुसारेण परिदृश्यमानविविधवैचित्र्यज्ञापनार्थः । मूलश्रुतावपि भूतानीत्यनेनैव कार्यवर्गे अभिहिते तदर्थज्ञापनायैव 'इमानि' इति पदम् । तद्ज्ञापनन्तु ईदृशस्य कार्यवर्गस्य ब्रह्मणोऽन्यस्मादल्पज्ञानादल्पशक्तेः संसारिण उत्पत्तिः सम्भावयितुं न शक्यते इति सूचनार्थम् । अत एवाग्रे सूत्रकृता प्रधानादिकारणत्वशङ्कावत् जीवकारणत्वशङ्काया निरासो न करिष्यते । लोके कुलालकुविन्दादिजीवकर्तृकत्वे सत्येव अतिवैपुल्यवैचित्र्यादर्शनेन भूभूधरादियुक्तस्य जगतोऽस्मदादिकर्तृकत्वासम्भवेऽपि कर्त्रनपेक्षप्रधानपरिणामत्वादिकमस्त्विति शङ्काया एव उन्मज्जनयोग्यत्वात् । यत्त्वत्र 'न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वा अन्यतः प्रधानादचेतनादणुभ्योऽभावात् संसारिणो वा उत्पत्त्यादि सम्भावयितुं शक्यम्' इति भाष्यवचनं तत्र संसारिमात्रस्यात्र निरसनीयत्वेऽपि उपरिनिरसनीयस्य प्रधानादेर्ग्रहणं दृष्टान्तार्थम् । श्रुतौ इमानीति बहुवचने सत्यपि अस्येत्येकवचनं कृत्स्नस्य कार्यवर्गस्य एककार्यवदनायासेन एकेन कर्त्रा सङ्कल्पमात्रेण निर्मितत्वज्ञापनार्थम् । तद्ज्ञापनस्यापि अल्पशक्तिसंसारिव्यावृत्तिसूचनमेव फलम् । यत इति यच्छब्दः 'यस्सर्वज्ञस्सर्ववित् यस्य ज्ञानमयं तपः । तस्मादेतत् ब्रह्मनामरूपमन्नं च जायते' (मुण्ड. १. १. ९.) इति 'तदैक्षत बहु स्यां प्रजायेय' (छा. ६. २. ३.) इति 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' (छा. ६. ८. ४.) इत्यादिश्रुतिप्रतिपन्नजगन्निमित्तोपादानभावसर्वज्ञत्वसत्यसङ्कल्पत्वादिविशिष्टपरमेश्वररूपमायाशबलितब्रह्मपरः । श्रुतावपि यत इति प्रसिद्धवन्निर्देशस्य 'यस्सर्वज्ञः' इत्यादिपुरोवादप्राप्तसर्वज्ञत्वादिवैशिष्ट्यप्रतिपादनपरत्वं संसारिभ्यो व्यावर्तितस्य जगत्कारणत्वस्य परमेश्वरे सम्भावनार्थम् । यत इति हेतुपञ्चमी निमित्तोपादानसाधारणी प्रकृत्यधिकरणे स्थापयिष्यमाणं ब्रह्मणः उभयविधकारणत्वमनुवदति । यद्यपि उपादानत्वमात्रमपि लक्षणमनतिप्रसक्तं, सर्वोपादानत्वप्रयुक्तसार्वात्म्यस्य अग्रिमाधिकरणेषु ब्रह्मलिङ्गतया उपन्यासदर्शनात्, तथापि निमित्तमन्यदिति वस्तुपरिच्छेदशङ्का स्यात्, सा मा भूदिति उभयविधकारणत्वस्य हेतुपञ्चम्युपात्तस्य लक्षणीकरणम् । नचेयमुपादानपञ्चमीति वक्तुं शक्यम्, 'येन' 'यत्' इति मूलश्रुति-

गततृतीयाद्वितीयाविभक्त्यर्थयोरपि अनया सङ्ग्राह्यत्वात् । तत्सङ्ग्राहिकायास्तस्या उपादानमात्रविषयत्वायोगाच्च । 'तत् ब्रह्म' इति सूत्रवाक्यशेषः ।

केचित् आद्यस्य हिरण्यगर्भस्य जन्म यत इति सूत्रं योजयन्ति । सोऽप्यर्थः सूत्रमूलभूतं लक्षणवाक्यं हिरण्यगर्भपरं इति शङ्कानिरासार्थत्वेन सूत्रावृत्त्या विवक्षितुं शक्यते इति नोपेक्षणीयः ॥ १. १. २. ॥

इति जन्माद्यधिकरणम् । २ ।



( ३ अधिकरणम् )

## शास्त्रयोनित्वात् । ३ ।

इह लक्षणीकृतजगत्कारणत्वाक्षिप्तं सर्वज्ञत्वं वेदकारणत्वेन दृढीकुर्वता भगवता सूत्रकारेण वेदस्य नित्यत्वात् ब्रह्मणस्सर्वकारणत्वमनुपपन्नं इति शङ्काऽपि निराक्रियते ।

ननु निर्विशेषवस्तुनि तात्पर्यविषये सति ताटस्थ्येन तदुपलक्षकस्य मायाशबलितस्य जगत्कारणस्य सर्वज्ञत्वसमर्थनं क्वोपयुज्यते ।

पूर्वसूत्रे 'अस्य' इति पदेन सूचितस्य सूत्रावृत्त्या च विवक्षितस्य जीवव्यावर्तनस्य स्थिरीकरणे । हिरण्यगर्भस्य सार्वज्ञ्यं ईश्वराद्वेदग्रहणाधीनं न तु स्वतस्सिद्धं इति देवताधिकरणे वक्ष्यते ।

ननु जगत्करणत्वाक्षिप्तस्य सर्वशक्तित्वस्य केनचिद्धेतुना दृढीकरणेऽपि जीवव्यावर्तनं स्थिरीभवति, किं वेदकारणत्वहेतुना सर्वज्ञत्वदृढीकरणे पक्षपातनिमित्तम् ।

वेदनित्यत्वमूलकसर्वकारणत्वासम्भवाशङ्कानिरासस्यानुषङ्गतो लाभः । अत एव - वेदानित्यत्वव्यवस्थापनं वियत्पादे सङ्गतं नात्र कर्तुं युक्तं इत्यपि शङ्का निरस्ता । अनुषङ्गलभ्येऽर्थे पृथक् सङ्गत्यनपेक्षणात् ।

'अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदस्सामवेदः' (बृ. २. ४. १०.) इत्यादिवाक्यं ब्रह्मणो वेदकारणत्वेन सर्वज्ञत्वं साधयति न वा इति सन्देहे — न तावद्वेदकर्तृत्वेन तस्य तत् साधयति,

वेदस्य पौरुषेयत्वापातात्, नापि वेदोपादानत्वेन, कार्योपादानयोरेकशक्तिकत्वनियमस्य मृत्पिण्डघटादिषु तत्कार्यान्तरेषु च बहुशो व्यभिचारदर्शनेन अप्रामाणिकतया वेदस्य सर्वार्थप्रकाशनशक्तिमत्तामात्रेण ब्रह्मणि तदसिद्धेः तत्सिद्धौ वा वेदः स्वयमज्ञ एव जीवानां तत्तदर्थगोचरप्रकाशजनक इति ब्रह्मणोऽप्यज्ञस्यैव प्रकाशकत्वापत्तेश्च; एवमपि ब्रह्मणो वेदाविषयनदीवालुकादिसंख्यादिप्रकाशकत्वालाभाच्च इति **पूर्वःपक्षः** ॥

**राद्धान्तस्तु** – वेदकर्तृत्वेन तस्य तत् साधयत्येव । कर्तृत्वमिह न अर्थमुपलभ्य रचयितृत्वं, येन सापेक्षत्वलक्षणं पौरुषेयत्वमापद्येत । नाप्युच्चारयितृत्वमात्रं, अध्यापकसाधारण्येन तावतापि वेदे ब्रह्मकर्तृत्व-विशेषासिद्धेः । सर्ववेदोच्चारणेन महोपाध्यायतामात्रं हि तदा ब्रह्मणः स्यात् । नापि पूर्वपूर्वक्रमानपेक्षया स्वतन्त्रक्रमेण उच्चारयितृत्वं; क्रमान्यत्वे वागवज्रत्वेन प्राणिनां दुरितप्रसङ्गात् । किन्तु ब्रह्म स्वतन्त्रमपि अध्येतॄणां पुरुषार्थसिद्धये नियतक्रमस्वराद्यपेक्षमाणं पूर्वपूर्वकल्पेषु स्वकृतेनैव नियतेन क्रमादिना विशिष्टान् वर्णान् करोति । 'सर्गादौ भगवान् धाता यथापूर्वमकल्पयत्' इति स्मृतेः । एतदेव च अध्यापकविलक्षणं ब्रह्मणो वेदकर्तृत्वं यत् अन्यदीयक्रमाद्यनपेक्षणेन पूर्वमपि स्वकृतेनैव नियतेन क्रमादिना विशिष्टेषु वैदिकवर्णेषु कर्तृत्वम् । तथाचातीतानन्तकल्पस्थवैदिकक्रमस्वरादिप्रतिसन्धानं अनन्तवैदिकवर्णपदवाक्यप्रतिसन्धानञ्च ब्रह्मणो वक्तव्यम्, अन्यथा तत्कर्तृत्वायोगात् । तस्य सकलस्य प्रतिसन्धानञ्च ब्रह्मणो न मानान्तरात्, तस्यान्तःकरणादि-सम्बन्धाभावेन मानान्तराप्रवृत्तेः, किं तु अनावृतस्वरूपचैतन्यबलात् इति सङ्कोचकाभावात् यावत्स्वसं-सृष्टप्रकाशवत् सर्वज्ञं ब्रह्म सिद्ध्यति । आनुमानिकेश्वरवादिनामपि ईश्वरस्य सर्वज्ञत्वसिद्धिरेवमेव, [1] सर्वस्या पक्षत्वेन हेतुतया सर्वगोचरज्ञानासिद्धेः ।

वेदोपादानत्वेन वा तस्य तत् साधयति; दीपगतायाः प्रकाशशक्तेः तदुपादाने वह्नावपि दृश्यमानतया कार्यकारणयोरेकशक्तिकत्वस्यौत्सर्गिकत्वेन वेदगतायाः सर्वार्थप्रकाशनशक्तेः बाधकाभावेन तदुपादाने ब्रह्मण्यपि प्राप्तेः । न हि घटगतोदकाहरणशक्तेर्मृत्पिण्डे इव, अन्धकारगतावरणशक्तेः प्रकाशरूपत्वेन श्रुतिसिद्धे ब्रह्मणीव, वेदगतसर्वार्थप्रकाशनशक्तेस्तं प्रति परिणामितया उपादाने 'नीहारेण प्रावृताः' इत्यादिश्रुति-भिरावरणत्वेन सिद्धे अज्ञाने इव च वेदगतसर्वार्थप्रकाशनशक्तेः ब्रह्मणि बाधोऽस्ति ।

---

1. परकीयेश्वरानुमाने सर्वस्य पक्षत्वे कार्यत्वरूपहेतोः भागासिद्धिप्रसङ्गः । ततश्च जन्यसामान्यस्यैव पक्षत्वेन तत्र कर्तृजन्यत्वे साधिते तत्कर्तृतया सिद्ध्यन् ईश्वरः जन्यसामान्यकर्तृत्वौपयिकज्ञानादिमानेव सिद्ध्येत् । तावदंशे एव अनुकूलतर्कसम्भवात् । अतः सङ्कोचकाभावसहकृतलाघवप्रतिसन्धानेनैव तर्केण सर्वगोचरज्ञानासिद्धिः । तद्वत् प्रकृतेऽपि इति भावः ।

यद्वा वेदगतसर्वार्थप्रकाशनशक्तिः तदुपादानगता कार्यगतप्रकाशशक्तित्वात् दीपगतप्रकाशशक्तिवत् इति विशिष्य अनुमीयते । अतः उदकाहरणादिशक्तौ न व्यभिचारः । प्रकाशशक्तिश्च अविद्यावरण-निवृत्त्यनुकूला शक्तिर्विवक्षिता । सा च परम्परया तदनुकूले वेदे दीपे चास्तीति नाश्रयासिद्धिः न वा दृष्टान्तासिद्धिः । अविद्यायामपि निवृत्तेः प्रतियोगिभूतायां तदनुकूला शक्तिः अस्तीति न तस्या अविद्यागत-त्वाभावेन बाधः ।

यद्वा तदुपादानगतत्वमात्रं साध्यम् , न तु यावत्तदुपादानगतत्वम् ; तच्च अबाधितं ब्रह्मतत्त्वमात्रमादाय सिध्यति इति न कश्चिद्दोषः । न च वेदवद्दीपादिवच्च ब्रह्मणोऽपि जीवविज्ञानहेतुत्वेनैव साध्यं पर्यवस्येदिति न सर्वज्ञत्वसिद्धिरिति शंक्यम् । स्वप्रकाशसर्वव्याप्तचैतन्यरूपत्वेन श्रुतिसिद्धे ब्रह्मणि आवरणनिवृत्त्यनुकूलायाः शक्तेः [1]पक्षधर्मताबलात् साक्षात्तदनुकूलत्वेनैव सिद्धेः । न हि कुलालादिज्ञानं इच्छादिद्वारैव कार्यानुकूलं दृष्टमिति क्षित्यादिषु कार्यानुकूलतया अनुमीयमानमपि ज्ञानं इच्छादिद्वारैव तदनुकूलं अनुमानत्वादिभिरनुमी-यते । एवमपि वेदाविषयार्थगोचरज्ञानालाभेन सार्वज्ञ्यासिद्धिरिति शङ्का तु [2]पूर्वन्यायेनैव परिहरणीया ।

---

1. पक्षधर्मताबलादिति । पक्षधर्मता-पक्षसम्बन्धः । स च साध्यस्य हेतोर्वा प्रकरणानुसारात् निर्णेयः । प्रकृते च साध्यस्य पक्षासम्बन्धो विवक्षितः । पक्षधर्मताबलात् साध्ये विशेषासिद्धेः अभिधानात् । पञ्चपादिकाविवरणाभिप्रेतं-विमतं ब्रह्म वेदगतसर्वविषयप्रकाशनशक्त्याधारः । वेदोपादानत्वात् । यथा दीपगतप्रकाशनशक्त्याधारः दीपोपादानभूतोऽग्निः, इत्यनुमानप्रयोगमभिप्रेत्य इदं पक्षधर्मताबलात् साध्ये विशेषसिद्ध्यभिधानम् । पक्षधर्मतायाः बलं अन्यथाऽनुपपत्तिः । अयमर्थः-धूमलिङ्गेन पर्वते सामान्यतः सिद्ध्यन्नपि वह्निः पर्वतीयवह्निरूप एव सिद्ध्यति, अन्यस्य असम्भवात् । एवं स्वप्रकाशसर्वव्याप्तचैतन्यरूपत्वेन श्रुतिसिद्धे ब्रह्मणि प्रकाशनशक्तिरूपा आवरणनिवृत्त्यनुकूलशक्तिः साक्षात् तदनुकूलैव सिद्ध्यति । उक्तरूपे ब्रह्मणि अन्यादृश्याः असम्भवात्- इति । तथा हि विवरणम्—

शब्दोपादानभावात् ध्वनिगतविषयद्योतनाः शक्तयोऽमूर्ब्रह्मण्येव स्युरग्नेर्विषयविषयिणी दीपशक्तिः खलूच्चैः । द्रष्टुश्च ज्ञानशक्तिर्ननु न करणता किन्तु दीपप्रभावत् संयुक्तद्योतनैवेत्यपरमिह पुनः साध्यते सर्ववित्त्वम् ॥ इति ॥ उक्तरूपब्रह्मपक्षप्रयोगेण समानसंवित्संवेद्यतया प्रतीयमानमर्थमभिप्रेत्य पूर्वं शक्तिपक्षकः प्रयोगः अस्मिन् ग्रन्थे कृतः,

अतो न सन्दर्भाशुद्धिः, इत्यनुसन्धेयम् ।

2. स्वप्रकाशसर्वव्याप्तचैतन्यरूपस्य ब्रह्मणः, सङ्कोचकाभावेन यावत्स्वसंसृष्टप्रकाशकत्वं-इति पूर्वोक्तयुक्त्या ॥

अत एव वेदबाह्यागमानामपि ब्रह्मोपादानकतया तदर्थज्ञत्वेन ब्रह्मणोऽपि भ्रान्तत्वप्रसङ्ग इत्यपि चोद्यं निरस्तम् । तदर्थस्य असत्त्वेन स्वसंसर्गियावदर्थप्रकाशरूपस्य ब्रह्मचैतन्यस्य तद्विषयत्वाप्रसङ्गात् ।

ननु ब्रह्मणःस्वसंसर्गियावदर्थप्रकाशत्वे अतीतानागतवस्तुज्ञानासिद्धेः कथं सार्वज्ञ्यसिद्धिः ।

उच्यते-उक्तरीत्या ब्रह्मणो विद्यमाननिखिलप्रपञ्चसाक्षात्कारसिद्धिः तज्जनितसंस्कारवत्तया च स्मरणोपपत्तेरतीतसकलवस्त्ववभाससिद्धिः । न च ज्ञानसूक्ष्मावस्थारूपसंस्कारो नित्यचैतन्ये न भवेदिति शंक्यम् । तस्य स्वरूपेणाकार्यत्वेऽपि दृश्यावच्छिन्नरूपेण कार्यत्वोपपत्तेः । सृष्टेः प्राक् मायायाः सृज्यमाननिखिलपदार्थस्फुरणरूपेण जीवादृष्टानुरोधेन विवर्त्तमानत्वात् तत्साक्षितया तदुपाधिकस्य ब्रह्मणोऽपि तत्साधकत्वं इत्यनागतवस्तुविज्ञानसिद्धिः इत्येवं ब्रह्मचैतन्यस्य कालत्रयवृत्तिवस्तुविषयत्वसिद्धिः इति केचिदाहुः ।

अन्ये तु वदन्ति-स्वरूपज्ञानेनैव ब्रह्मणः स्वसंसृष्टसर्वावभासकत्वात् सर्वज्ञत्वं अतीतानागतयोरविद्याचित्रभित्तौ विमृष्टानुन्मीलितचित्रवत् संस्कारात्मना सत्त्वेन तत्संसर्गस्याप्युपपत्तेः । न तु वृत्तिज्ञानैस्तस्य सर्वज्ञत्वम्, 'तमेव भान्तमनुभाति सर्वम्' इति (श्वेता. ६. १४) सावधारणश्रुतिविरोधात् । सृष्टेः प्राक् 'एकमेवाद्वितीयम्' (छा. ६. २. १.) इत्यवधारणानुरोधेन महाभूतानामिव वृत्तिज्ञानानामपि प्रलयस्य वक्तव्यतया ब्रह्मणः तदा सर्वज्ञत्वाभावापत्त्या प्राथमिकमायाविवर्तरूपे ईक्षणे तत्पूर्वके महाभूतादौ च स्रष्टृत्वाभावप्रसङ्गाच्च इति ॥

यत्त्वत्र भाष्ये वर्णकान्तरं प्रदर्शितं तादित्थम्—पूर्वसूत्रे जीवेषु जगत्कारणत्वस्यासम्भावना ब्रह्माणि तत्सम्भावना च 'अस्य' 'यतः' इति पदाभ्यां दर्शिता । ततो नैयायिकाद्यभिमतं ईश्वरानुमानमेव उपन्यस्तं इति स्याद्भ्रमः । तन्मूलपूर्वपक्षनिराकरणार्थमिदं वर्णकम् ।

'तं त्वौपनिषदं पुरुषं पृच्छामि' (बृ. ३. ९. २६) इत्यादिश्रुतिः ब्रह्मणः उपनिषदेकगम्यत्वं प्रतिपादयितुं शक्नोति न वा इति विचारः ।

न शक्नोति, नैयायिकोक्तकार्यत्वादिलिङ्गकानुमानगम्यत्वात् ब्रह्मणः । न च अस्य कार्याप्रयोजका अपि बहवो गुणाः श्रुतिसिद्धाः स्वीक्रियन्ते ते लिङ्गैर्न सिध्यन्ति इति वाच्यम् । तावता कल्पितस्य सगुणेश्वरस्य औपनिषदत्वासिद्धावपि जिज्ञास्यस्य निर्विशेषप्रत्यक्चैतन्यरूपस्य ब्रह्मणः तदसिद्धेः । प्रतीचः प्रत्यक्षसिद्धत्वात्,

तत्र सकलविशेषाभावस्य प्रपञ्चमिथ्यात्वानुमानतस्सिद्धेः । तस्य सच्चिदानन्दरूपतायाश्च 'अहमस्मि' 'अहमुपलभे' इत्यनुभवाभ्यां निरुपाधिकप्रेमास्पदत्वेन च सिद्धेः । सर्वशरीरेषु तदैक्यस्य च सर्वेषु कर्णपुटेषु श्रोत्रैक्यस्येव लाघवात् सिद्धेः इति **पूर्वः पक्षः** ॥

**सिद्धान्तस्तु**—उदाहृतश्रुतिः उपनिषदेकगम्यत्वं ब्रह्मणः प्रतिपादयितुं शक्नोति । प्रपञ्चमिथ्यात्वानुमानस्य लाघवतर्कस्य च तेन तेन प्रत्यनुमानेन प्रतितर्केण च पराहततया श्रुत्यननुगृहीतान्मानान्तरात् निर्विशेषनिर्द्वन्द्ववस्त्वसिद्धेः, निरतिशयानन्दे कथञ्चिदपि मानान्तरानवताराच्च इति ।

आद्यवर्णके—ब्रह्म सर्वज्ञं इति साध्ये अध्याहृते शास्त्रस्य वेदस्य योनित्वात्—कर्तृत्वादुपादानत्वाच्च इति सौत्रहेतोरन्वयः ।

द्वितीयवर्णके-ब्रह्म वेदान्तप्रतिपाद्यं इत्यस्मिन् साध्ये शास्त्रं योनिः - कारणं-प्रमाणं अस्य इति शास्त्रयोनित्वात्—शास्त्रप्रमाणकत्वात् इति सौत्रहेतोरन्वयः ।

नच आद्यवर्णके शास्त्रग्रहणं व्यर्थं लौकिकवैदिकसाधारणशब्दयोनित्वमात्रेण सर्वज्ञत्वसिद्धेः इति वाच्यम् । आनुषङ्गिकवेदनित्यत्वमूलकसर्वकारणत्वासम्भवशङ्कानिराकरणार्थं द्वितीयवर्णकोपयोगसौकर्यार्थं च शब्दमात्रोपलक्षणतया शास्त्रग्रहणोपपत्तेः ।

नच द्वितीयवर्णके हेतोरसाध्यवैशिष्ट्यम् । तत्र हेतोरब्भक्षादिवदवधारणगर्भतया शास्त्रैकप्रमाणकत्वादित्यर्थकस्य प्रमाणान्तरागम्यत्वादित्यर्थे पर्यवसानात् । १ । १ । ३ ।

इति शास्त्रयोनित्वाधिकरणम् । ३ ।



**(४ अधिकरणम्)** **तत्तु समन्वयात्** । ४ ।

निरूपितं ब्रह्मणश्शास्त्रयोनित्वं आक्षिप्य समाधीयते ।

ब्रह्म न वेदान्तप्रतिपाद्यं सिद्धवस्तुबोधने प्रवृत्तिनिवृत्त्यभावेन फलाभावात्, अतो वेदान्ताः कर्मविध्यपेक्षितकर्तृप्रतिपादनपरा मोक्षार्थोपासनाविधिपरा वा इति प्राप्ते—

ब्रह्म वेदान्तप्रतिपाद्यमेव, तत्र वेदान्तानां सर्वेषां सम्यक् उपक्रमाद्यवगतेन तात्पर्येण अन्वयात्। न च सिद्धवस्तुबोधने प्रयोजनाभावः। ग्रामपश्वाद्यप्राप्तसिद्धवस्तुबोधनस्य प्रवृत्त्यपर्यन्तस्य निष्फलत्वेऽपि प्राप्तस्य भ्रमवशादप्राप्तत्वेनावभासमानस्य सिद्धस्य कण्ठगतचामीकरादेर्बोधनं प्रवृत्त्यपर्यन्तमेव सफलं इति दृष्टत्वात् तन्न्यायविषयत्वात् सिद्धरूपनित्यप्राप्तब्रह्मात्मैक्यबोधनस्य इति सिद्धान्तः। यद्यपि प्रयोजन-समर्थनं प्रथमसूत्रे कृतं, तथाऽपि मुखान्तरेण तदाक्षेपसमाधानार्थमिदमधिकरणम्।

यत्तु कण्ठगतचामीकरोपदेशस्य न प्राप्तचामीकरप्राप्तिः फलं, किन्तु तत्प्राप्तिज्ञानजन्यसुखस्य वस्तुतः प्रागप्राप्तस्य प्राप्तिः, प्राप्तचामीकराप्राप्तिभ्रमजन्यदुःखस्य च वस्तुतः प्रागनिवृत्तस्य निवृत्तिर्वा। न चेह तथा प्रागप्राप्तं सुखदुःखप्राप्तिनिवृत्त्योरन्यतरत् प्राप्यमस्तीति दृष्टान्तवैषम्योद्घाटनम्—

तत्तुच्छम्। सिद्धवस्तुबोधनस्य पुरुषार्थपर्यवसायित्वमात्रे हि स दृष्टान्तः न तु बोध्यमानस्यैव स्वतः पुरुषार्थत्वे। तत्र प्रागनभिव्यक्तं चामीकरं उपदेशेनाभिव्यक्तमपि न स्वतःपुरुषार्थ इति पुरुषार्थान्तरपर्यवसा-नान्वेषणम्। इह तु 'तत्त्वमसि' इत्युपदेशेन 'राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते। यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यतः' इति वार्त्तिकोक्तन्यायेन अध्यस्तसर्वानर्थमूलहृदयग्रन्थिनिवृत्तिपूर्वकानिरतिशयानन्दरूप-ब्रह्मात्मभावाभिव्यक्तौ तावतैव कृतार्थतेति न पुरुषार्थान्तरपर्यवसानान्वेषणमिति विशेषः। अयन्तु विशेषः-परंपरया पुरुषार्थपर्यवसायिनोऽपि सप्रयोजनत्वे साक्षादेव पुरुषार्थपर्यवसायिनः सप्रयोजनत्वं किमु वक्तव्यमिति कैमुतिकन्यायहेतुतयाऽलङ्कार एव, न बाधकः॥

अत्रैव वर्णकान्तरं प्रदर्श्यते---

पूर्ववर्णके सिद्धार्थेऽपि पौरुषेयवाक्यानां प्रामाण्यमङ्गीकृत्य वेदान्तेषु पुरुषार्थपर्यवसानं कार्यविषयता-मन्तरेण न लभ्यत इति पूर्वपक्षो ब्रह्मात्मैक्यावगममात्रायत्तपरमपुरुषार्थलाभसमर्थनेन निरस्तः। इदानीं शब्दानां सिद्धे अर्थे व्युत्पत्त्यभावात् ब्रह्मात्मभावोपदेशमात्रेण मोक्षादर्शनाच्च उपासनाविधिपरा एव वेदान्ताः, मोक्षोऽपि तत्फलत्वेनैवाभ्युपगन्तव्यः इति पूर्वपक्षो निरस्यते।

स्पष्टं तावच्छब्दानां प्राथमिकव्युत्पत्तिग्रहः कार्यपरेष्वेव शब्देषु उत्तममध्यमवृद्धव्यवहाराभ्यां इत्यतः तत्र कार्यपरत्वे शब्दानां निर्णीते तदनन्तरप्रवृत्तप्रसिद्धपदसमभिव्याहाराद्यधीनव्युत्पत्तिग्रहोऽपि कार्यविषय एवेति युक्तम्। न च पितृमातृप्रभृतिभिः अम्बा तातः मातुलः इत्यादिशब्देषु तत्तदर्थानंगुल्या निर्दिश्य बहुशः प्रयुक्तेषु सत्सु बालानामंगुलिनिर्देशशब्दप्रयोगसाहचर्यदर्शनजनितवासनाबाहुल्यात्तत्तच्छ्रवणानन्तरं तत्तदर्थ-

विषयबुद्ध्युदयेन सिद्धरूपेषु तेषु तेष्वर्थेषु प्राथमिकव्युत्पत्तिग्रहः सम्भवतीति वाच्यम् । अर्थविषयांगुलिनिर्देश-शब्दप्रयोगसाहचर्यरूपसम्बन्धान्तराधीनेन शब्दतोऽर्थप्रत्ययेन हेतुना तदुपपादकतया शक्तिरूपसम्ब-धान्तर-कल्पनस्य व्यधिकरणत्वात् । नच-यत्र केनचित् पुरुषेण हस्तचेष्टादिना 'पिता ते सुखमास्ते इति देवदत्ताय ज्ञापय' इति प्रेषितोऽन्यः तद्ज्ञापनाय देवदत्तमुपसृत्य 'पिता ते सुखमास्ते' इति शब्दं प्रयुङ्क्ते, तत्र पार्श्वस्थोऽपि व्युत्पित्सुः चेष्टादर्शितपितृसुखावस्थानज्ञापने प्रवृत्तममुं ज्ञात्वाऽनुगतः तद्ज्ञापनाय प्रयुक्तं शब्दं श्रुत्वा शब्दोऽयं तदर्थबुद्धिहेतुरिति बुध्यते इति सिद्धार्थेऽपि प्राथमिकव्युत्पत्तिग्रहो दृष्ट इति वाच्यम् । चेष्टाविशेषाणां तत्तदर्थबोधकशब्दोन्नायकत्वेन तत्तद्गमकत्वे उदाहृतस्थलस्य प्राथमिकव्युत्पत्तिग्रहस्थानत्वासिद्धेः । तेषां तत्तदर्थलिङ्गतया तत्तद्गमकत्वे चेष्टाविशेषाणां तत्तदर्थव्याप्तिग्रहणस्य प्रथमं सङ्केतयितृपुरुषोपदेशाधीनत्वेन तथात्वासिद्धेः । यदि च सिद्धवस्तुरूपब्रह्मात्मोपदेशमात्रान्मोक्षस्स्यात् तदा सकृच्छ्रवणमात्रेण मोक्षो दृश्येत । न च तथा दृश्यते । श्रुतब्रह्मणामपि यथापूर्वं संसारदर्शनात्, श्रवणानन्तरमपि मनननिदिध्यासनयोर्विधानाच्च । तस्मात् वेदान्तानामुपासनाविधिपरत्वमभ्युपगम्य तद्विषयतयैव ब्रह्मसिद्धिः तत्फलतयैव मोक्षसिद्धिश्च एष्टव्या । यदि च अन्यशेषेभ्यः कर्मविध्यपेक्षितदेवतादिवत् मानान्तरविरुद्धं ब्रह्मात्मैक्यं न सिध्येत्, मोक्षश्चोपासनाफलत्वे साधनतारतम्यायत्ततारतम्यशालित्वावश्यम्भावेन नित्यनिरतिशयपुरुषार्थरूपो न सिध्येत्, मा सैत्सीत्तदुभयम् । नैतावता व्युत्पत्तिग्रहविरुद्धं फलातिप्रसङ्गपराहतं च वेदान्तानां मोक्षफलकसिद्धवस्तूपदेशपरत्वमभ्युपगन्तुं युक्तं इति **पूर्वपक्षः** ॥

**सिद्धान्तस्तु** -- 'पुत्रस्ते जातः' इत्यादिसिद्धार्थपरवाक्येष्वपि प्राथमिकव्युत्पत्तिग्रहदर्शनात्, कार्यपरवाक्येष्वेव प्राथमिकव्युत्पत्तिग्रहनियमेऽपि कार्यविशेषमिव कार्यसामान्यमप्यनन्तर्भाव्य इतरान्वितस्वार्थमात्रे तत्तदर्थमात्रे वा पदानां शक्तिग्रहसम्भवात्, कार्यमन्तर्भाव्य प्राथमिकव्युत्पत्तिग्रहेऽपि अग्रे सिद्धार्थप्रयोगदर्शनेन गुरुमते प्रथमगृहीतलौकिककार्यपरत्वस्येव कार्यसामान्यपरत्वस्यापि त्यागसम्भवाच्च न वेदान्तानामुपक्रमाद्यवगतब्रह्मात्मैक्यपरत्वं परित्यज्य कार्यपरत्वं कल्पनीयम् ।

**नचैवं सति तदुपदेशमात्रेण मोक्षप्रसङ्गः ।**

मनननिदिध्यासननिवर्त्यासम्भावनादिप्रतिबद्धस्य आपातरूपस्य श्रवणसाध्यज्ञानस्य अविद्यानिवर्तनाक्षमत्वात् । न च ज्ञानस्य प्रागभावनिवृत्ताविव अविद्यानिवृत्तावपि प्रतिबन्धासम्भव इति वाच्यं । ज्ञानस्यैव प्रागभावनिवृत्तित्वेन ज्ञानोदये सति तस्यां प्रतिबन्धासम्भवेऽपि अविद्यानिवृत्तेर्ज्ञानसाध्यत्वेन इच्छादिप्रागभाव-

निवृत्ताविव तत्र प्रतिबन्धसम्भवात् । नच विद्याविद्ययोरत्यन्तविरोधित्वात् विद्योदये सति अविद्याऽनुवृत्त्यसम्भवः । विशेषदर्शनभ्रमयोरत्यन्तविरोधित्वेऽपि उपाधिना प्रतिबन्धात् सत्यपि विशेषदर्शने प्रतिबिम्बभ्रमो न निवर्तत इति तदनुवृत्तिवत् अविद्याऽनुवृत्त्युपपत्तेः । न च अविद्यावत् तत्कार्याणामपि ज्ञाननिवर्त्यत्वात् ज्ञानोदये सति अवस्थानं न सम्भवतीति प्रतिबन्धकत्वायोग इति वाच्यम् । श्रवणानन्तरं मननाविधानेन श्रुतब्रह्मणां संसारानुवृत्तिदर्शनेन च फलबलात् अनादिकालप्रवृत्तदृढतरभेदादिवासनातत्कार्यासम्भावनाविपरीतभावनानां मनननिदिध्यासननिवर्तनीयानां विद्योदये सत्यप्यवस्थानस्य अविद्यानिवृत्तिप्रतिबन्धकत्वस्य च कल्पनात् ।

यद्वा सत्ताऽवधारणरूपमेव ज्ञानं अविद्यानिवर्तकं, न ज्ञानमात्रं, संशयस्यापि तन्निवर्तकत्वप्रसङ्गात् । श्रवणजन्यज्ञानं च सत्तानवधारणरूपमिति कारणाभावादेवानिवृत्तिरविद्यायाः, न तु प्रतिबन्धात् । न च न्यायोपबृंहितवेदान्तश्रवणेन निर्णयकारणेन जायमानमेकाकारज्ञानं कथं सत्तानवधारणं स्यादिति वाच्यम् । तथाभूतकारणजन्यस्यापि भेदवासनाऽऽदिदोषात् सत्ताऽनवधारणत्वसम्भवात् । चक्षुरादिनिर्णयकारणजन्यस्यैकाकारस्याप्यनभ्यासदशापन्नजलादिज्ञानस्य अनभ्यासदशादोषात् सत्तानवधारणत्वदर्शनात् । अन्यथा तत्र जलादिसंशयो न स्यात् । न च तत्र ज्ञानप्रामाण्यसंशयात् संशयो न स्वत इति वाच्यम् । जलज्ञानप्रामाण्यसंशयस्यापि पुरोवर्तिनि जलत्ववैशिष्ट्यसंशयपर्यवसायितया जलनिश्चये सति तस्याप्यसम्भवात् । न हि पुरोवर्तिनि जलत्ववैशिष्ट्यं विना जलज्ञानप्रामाण्यघटके पुरोवृत्तिविशेष्यकत्वे जलत्वप्रकारकत्वे वा संशयकोटितापर्यवसानं सम्भवति । तस्य अप्रामाण्यकोट्यन्तरसाधारण्यात् । न च प्रामाण्यसंशयात् पूर्वं धर्मिज्ञानेन व्यवसायस्य नष्टत्वात् न तदनुपपत्तिरिति वाच्यम् । अनुव्यवसायवादेऽपि अनुव्यवसायस्य विषये प्रकारवैशिष्ट्यांशेऽपि सत्तानिश्चयरूपत्वस्य वक्तव्यत्वात् । अन्यथा इष्टत्वादिज्ञानानामन्वयव्यतिरेकाभ्यां सुखादिहेतुत्वं न गृह्येत । इष्टतावच्छेदकवैशिष्ट्यांशेऽनुव्यवसायस्य सत्ताऽनिश्चयरूपत्वे इष्टज्ञानत्वानिश्चयात् । तस्मात् व्यवसायस्यानुव्यवसायस्य वा प्रायः सत्तानिश्चयरूपत्वेऽपि क्वचिदनभ्यासदशादिदोषात् सत्तानवधारणरूपत्वेनैव प्रामाण्यसंशय उपपादनीयः । एवं ब्रह्मज्ञानमपि प्रथमजं भेदवासनादिदोषात् सत्तानवधारणरूपमिति न फलातिप्रसक्तिः । ततश्च वेदान्ताः सिद्धरूप एव ब्रह्मात्मवस्तुनि प्रमाणम् । तज्जन्यादेव ब्रह्मसाक्षात्कारात् मोक्षः । अत एव मोक्षस्य श्रुत्यवगतनित्यत्वमपि न बाधितं भवति । अन्यथा ह्युपासनाफलत्वे तत् बाधितं स्यादिति ।

सूत्रे तदिति पक्षनिर्देशो ब्रह्मपरः । पूर्वसूत्रेऽप्येतदेव पक्षनिर्देशकमपेक्षणीयम् । वेदान्तप्रतिपाद्यमिति पूर्वाधिकरणद्वितीयवर्णकवत् साध्यमध्याहरणीयम् । तुशब्दः प्रसक्तपूर्वपक्षनिवृत्त्यर्थः । समन्वयात्-उपक्रमाद्यवगतवेदान्ततात्पर्यगोचरत्वादित्यर्थः । १. १. ४ ।

इति समन्वयाधिकरणम् ॥ ४ ॥

## ईक्षतेर्नाशब्दम् । ५ ।

(५ अधिकरणम्)

प्रथमसूत्रेण शास्त्रारम्भे समर्थिते जन्मादिसूत्रप्रभृति शास्त्रं प्रवृत्तम् । तत्र जन्मादिसूत्रेण लक्षणमुखेन ब्रह्मस्वरूपं निरूप्य, तृतीयसूत्रेण तस्य अनुमानगम्यत्वनिरासेन तत्र वेदान्तानां प्रामाण्यमुपक्षिप्य, चतुर्थसूत्रेण प्रवृत्तिपरवाक्यानामेव सफलत्वमित्यादिजैमिनिमतोपजीविशङ्कानिराकरणेन तत् प्रामाण्यं प्रतिष्ठापितम् ।

इह पुनः जगत्कारणवादिनो वेदान्ता आनुमानिकप्रधानानुवादका इति सांख्यपक्षप्रतिक्षेपेण ब्रह्मणि दर्शितयोर्लक्षणप्रमाणयोः प्रतिष्ठापना क्रियते ॥

**पूर्वपक्षस्तु** 'सदेव सोम्येदमग्र आसीत्' (छा. ६. २. १.) इत्यादिसृष्टिवाक्यजातं 'विमतमचेतन-प्रकृतिकं कार्यत्वात् घटवत्' इति सांख्यानुमानसिद्धं प्रधानमनुवदतीति युक्तम् । वृद्धव्यवहारेण सिद्धार्थे व्युत्पत्तौ पूर्वाधिकरणे स्थितायामपि मानान्तरगोचर एवार्थे तत्सम्भवात् तदगोचरे ब्रह्मणि सद्ब्रह्मादिशब्दानां व्युत्पत्तिग्रहासम्भवात् 'तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ'। (छा. ६. ८. ४) इति श्रुत्यैव शुङ्गशब्दोक्त-कार्यलिङ्गकानुमानसिद्धकारणानुवादकत्वस्फुटीकरणाच्च । न च त्वन्मते अस्त्यनुमानगम्यत्वं ब्रह्मणः । अनुमानमपेक्ष्य ब्रह्मबोधकत्वे च वेदान्तानां तत्र निरपेक्षत्वलक्षणप्रामाण्यं न सिध्येत् ।

न च 'तदैक्षत बहु स्यां प्रजायेय' (छा. ६. २. ३.) इति 'यस्सर्वज्ञस्सर्ववित्' (मु. १. १. ९.) इति ईक्षितृत्वसर्वज्ञत्वश्रवणं प्रधाने न युक्तमिति वाच्यम् ।

ब्रह्मणो नित्यसर्वविषयज्ञानतयाऽङ्गीकृतस्य तत्कर्तृत्वाभावेन तत्रापि तदयोगात् । न च प्राक्सिद्ध-प्रकाशेऽपि सवितरि सविता प्रकाशयतीति प्रकाश्यसंयोगोपाधिकप्रकाशकर्तृत्वव्यपदेशवत् नित्यज्ञानरूपे ब्रह्मणि दृश्यावच्छेदोपाधिकज्ञानकर्तृत्वव्यपदेशो गौणोऽस्त्विति वाच्यम् । सवितृप्रकाशे प्रकाश्यसंयोगवत्

ब्रह्मज्ञाने इच्छावच्छेदस्य आगन्तुकत्वानङ्गीकारात् । अन्यथा ब्रह्मणः कदाचिदसर्वज्ञत्वापत्तेः । 'सर्वज्ञानशक्ति-[1]मत्त्वमेव ब्रह्मणस्सर्वज्ञत्वमिति चेत्' तर्हीदं प्रधानेऽपि संभवति । तस्य ज्ञानहेतुसत्त्वगुणशालित्वात् । 'ऐक्षत' इत्येतदपि तत्र संभवति । ब्रह्मणि प्रत्ययार्थवत् प्रधाने प्रकृत्यर्थः कूलं पिपतिषतीत्यादाविव कार्योन्मुख्यरूपो गौणः इत्युपपत्तेः । ईक्षणं गौणं तत्कर्तृत्वं वा इत्यत्र नास्ति नियामकमिति चेत् 'तत्तेज ऐक्षत' (छा. ६. २. ३) "ता आप ऐक्षन्त" (छा. ६. २. ४) इति गौणेक्षणप्रायपाठस्य नियामकस्य सत्वादिति ॥

**राद्धान्तस्तु**—प्रधानं न जगत्कारणत्वेन सृष्टिवाक्यजातबोध्यम् । तत्र ईक्षणश्रवणेन तस्य जगत्कारण-परसद्ब्रह्मादिशब्दाविषयत्वात् । न च तेषां शब्दानां ब्रह्मपरत्वे व्युत्पत्तिग्रहासम्भवो दोषः । तेषां यौगिकत्वेन पृथग्व्युत्पत्तिग्रहानपेक्षणात् । यूपाहवनीयादिन्यायेन तद्ग्रहोपपत्तेश्च ।

न च 'तेजसा सोम्य शुङ्गेन (छा. ६. ८. ४) इति कार्यलिङ्गकानुमानोपन्यासस्य ब्रह्मण्यसङ्गतिः ।

ब्रह्मण्यपि श्रुत्यनुग्राहकानुमानप्रवृत्त्यविरोधात् । श्वेताश्वतरे 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् । संयोग एषां न त्वात्मभावादात्माऽप्यनीशस्सुखदुःखहेतोः' (श्वे. १. २) इति मन्त्रेण कालस्वभावकर्ममहाभूतप्रकृतिपुरुषातिरिक्ते ब्रह्मण्येव कार्यलिङ्गकानुमानोपन्यासदर्शनाच्च । नचैवं श्रुतेर्निरपेक्षत्वहानिः । श्रुतितात्पर्यनिर्णयाय मीमांसाशास्त्रग्रथितन्यायकलापापेक्षावत् श्रुतिदर्शितस्यानुग्राहकानुमाना-पेक्षायामपि निर्णीते संवादाय तदनपेक्षणात् । उपक्रमोपसंहाराद्यन्तर्गतोपपत्तिरूपतया अनुमानस्य तात्पर्य-निर्णयार्थमपेक्षायास्सम्प्रतिपन्नत्वात् । न चासम्भवशङ्काव्यावृत्त्यर्थं मृत्पिण्डादिदृष्टान्त एव तत्रोपपत्तिः नानु-मानमिति वाच्यम् 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्' (बृ. ४. ३. २३) इत्यादौ अनुमानरूपाया अप्युपपत्तेर्दर्शनेन तदसङ्ग्रहायोगात् । नन्वेवं सति किमर्थं हेतुवन्निगदाधिकरणे 'शूर्पेण जुहोति' इत्यत्र 'तेन ह्यन्नं क्रियते' इत्यस्य हेतुत्वान्वयनिरासः कृतः । हेतुत्वान्वये, येन येन अन्नं क्रियते तेन सर्वेणापि होतव्यमिति व्याप्त्याक्षेपेण दर्वीपिठरादीनामपि होमसाधनत्वानुमानात् आनुमानि-कैस्तैः प्रत्यक्षश्रुतस्य शूर्पस्यान्याय्यो विकल्पः स्यादिति तन्निरासार्थम्, न तु हेतुत्वान्वये तत्सापेक्षत्व-

१. सर्वज्ञा शक्तीति—तथा च सर्वज्ञत्वं गौणं इति भावः

लक्षणमप्रामाण्यं स्यादिति तन्निवर्तनार्थम् । अत एव तत्रैवाधिकरणे न्यायसुधायां आतिथ्येष्टौ अतिदेशप्राप्तौपभृताष्टगृहीतानिवर्तनपरे 'चतुर्गृहीतान्याज्यानि भवन्ति' इत्यत्र 'न ह्यत्रानूयाजा इज्यन्ते' इति वाक्यशेषस्य हेतुसमर्पकत्वमभ्युपगतम् । यत्र यत्रानूयाजानामभावः तत्र तत्राष्टगृहीताभावः इति व्याप्त्याक्षेपस्य निर्दोषत्वात् । अप्रामाण्यनिरासार्थं हेतुत्वान्वयनिरासः इति निबन्धनकारनिर्बन्धमात्रम् ॥

सर्वज्ञत्वं ब्रह्मणो न सर्वविषयज्ञानकर्तृत्वम् । किन्तु विषयोपरागेण कल्पितभेदं सर्वविषयज्ञानरूपं चित्प्रकाशं प्रत्याश्रयत्वम् । 'सविता प्रकाशते', 'चैत्रो जानाति इच्छति यतते स्वपिति' इत्यादिषु धात्वर्थं प्रत्याश्रयत्वस्यापि कर्त्रर्थप्रत्ययाभिधेयत्वदर्शनात् ।

एवञ्च 'तदैक्षत' इत्येतदपि ब्रह्मण्युपपद्यते । स्रष्टव्यालोचनरूपमायावृत्तिप्रतिबिम्बितचित्प्रकाशरूपे ईक्षणे ब्रह्मणः तदवच्छेदकमायावृत्तिकर्तृत्वस्योपचारसम्भवाच्च ॥

यद्यप्येवं धात्वर्थाश्रयत्वं तत्कर्तृत्वं चेत्युभयमप्यौपचारिकमेव, तथापि प्रधानपक्षे निरपेक्षप्रकृत्यर्थस्यामुख्यत्वं स्यात्, ततो[1] वरं सापेक्षप्रत्ययार्थस्यामुख्यत्वप्रकल्पनं इति सर्वमनाकुलम् ।

इदन्तु चोद्यमवशिष्टम्—प्रकृत्यर्थस्यामुख्यत्वहेतुर्गौणेक्षणप्रायपाठो वर्तते—इति तत् उत्तरसूत्रेणानुभाष्य निराकरिष्यते ।

सूत्रे[2] प्रधानं जगत्कारणवाचिवेदान्तप्रतिपाद्यं इति धर्मिनिषेध्ययोरध्याहारेण पक्षसाध्यनिर्देशः । तत्र हेतुः अशब्दं—सदादिशब्दाबोध्यं हि तदिति । 'नन्वसिद्धो हेतुः प्रधानेऽपि सत्ताऽऽदियोगेन सदादिशब्द-

---

१ उक्तश्चायं न्यायः शारीरकन्यायसंग्रहे विवरणाचार्यैः ।

२ अत्र—अद्वैतिनां सूत्रयोजना नोचिता; प्रतिज्ञावाक्ये धर्म्युपस्थापकशब्दस्य अध्याहार्यत्वात्, अशब्दं हि तत् इत्युक्तेऽपि हेत्वन्तरसाकाङ्क्षत्वाच्च। "आनुमानिकमप्येकेषाम्" (ब्र. सू. १.४.२) इत्यादिसूत्रेषु आनुमानिकादिशब्दवत् अशब्दशब्दस्यापि अवयवार्थमुखेन धर्म्युपस्थापनक्षमतया अध्याहारनिरपेक्षत्वात् अनयवशवत्त्यैव अनुमानावगमरूपपूर्वपक्षबीजस्य सूत्रेणैव द्योत्यमानत्वसंभवाच्च-इति श्रुतप्रकाशिकोक्तदूषणं सूत्रं व्याचक्षाण एव परिहर्तुमारभते-सूत्रे इत्यादिना । ननु प्रधानपक्षकानुमानप्रयोगोऽयुक्तः - प्रधानस्य सिद्धौ बाधः, तत्र जगत्कारणत्वस्यापि धर्मिग्राहकमानेन सिद्धेः । प्रधानस्य असिद्धौ

प्रवृत्त्युपपत्तेः' इति शङ्कानिराकरणेन तदुपपादनार्थो हेतुः ईक्षतेः इति। नन्वेवं हेतुहेतुत्वेनावश्यापेक्षितेक्षतिहेतोरेव साक्षात् साध्ये हेतु'त्वसम्भवे किमन्तर्गडुना अशब्दत्वहेतुना इति चेत्, तर्हि ईक्षतिहेतोरपि गौणत्वशङ्कानिराकरणायावश्यकस्य 'आत्मशब्दात्' इति उत्तरसूत्रहेतोरेव साक्षात् साध्ये हेतुत्वसम्भवात् ईक्षतिरप्यन्तर्गडुरिह नोपादेयः स्यात्। नन्वीक्षतिहेतूपादानं गौणत्वशङ्कोद्भावनद्वारतया गौणेक्षणप्रायपाठरूपपूर्वपक्षबीजसूचनार्थं स्यादिति चेत्; तर्हि अशब्दत्वहेतुरपि ब्रह्मणस्सदादिशब्दबोध्यत्वसम्भवज्ञापनद्वारतया तदसम्भवपूर्वपक्षसूचनार्थः

---

आश्रयाऽसिद्धिः। अत एव ब्रह्मसिद्धौ-"प्रधानं नास्तीति जगत्कारणे सुखदुःखमोहात्मनाविभक्तकार्यत्वादीनि निवार्यन्ते" इत्युक्तम्। पञ्चपादिकायामपि 'प्रधानादिष्वपि, जगत्कारणे त्रिगुणत्वादिबाधः आधिगतावधिरेव' इति। प्रधाननिषेधे प्रधानधर्मिकनिषेधे च बाधकन्यायस्तुल्य इति चेत्, सत्यम्, तथापि प्रधानस्य स्वमते अप्रसिद्धावपि प्रधानत्वेन पराभ्युपगतं प्रसिद्धमेव। तथाच प्रधानत्वेन पराभ्युपगतं पक्षः। तत्र च नाऽऽश्रयाऽसिद्धिः। पक्षतावच्छेदकेन पराभ्युपगतत्वेन रूपेण स्वस्याऽपि तत्प्रसिद्धेः इत्याशयेन अयं प्रयोगः इति न कोऽपि दोषः।

१. नन्विदमयुक्तम्—न हि ईक्षणं पक्षे प्रधाने साक्षात् साध्यसाधकम्; विरुद्धत्वात् अपक्षानिष्ठत्वाच्च। न च सत्पदबोध्ये श्रूयमाणं चेतनाऽसाधारणं मुख्यमीक्षणं अचेतनस्य प्रधानस्य सत्पदबोध्यत्वे नोपपद्यते इति तर्कविधया साधकत्वं संभवतीति वाच्यम्। तथाऽपि साक्षात् साध्यसाधकत्वोक्तिः हेतुत्वोक्तिश्च असङ्गतैव इति चेत्, उच्यते—न हि साक्षात् पक्षवृत्तिहेतुरेव सूत्रेषु व्यपदिश्यते। तथा सति "ईक्षतेर्नाशब्दम्" इति सूत्रमेव असङ्गतं स्यात्। किन्तु यथाकथंचित् पक्षवृत्तिहेतोरुपनायकोऽपि हेतुतया निर्दिष्टो दृश्यते। यथा "ज्योतिश्चरणाऽभिधानात्" (ब्र. सू. १-१-२४) "न प्रयोजनवत्वात्" (ब्र. सू. २-१-३२) "उपसंहारदर्शनान्न" (ब्र. सू. २-१-२४) इत्यादिषु। न केवलं ब्रह्मसूत्रेष्वेव इयं रीतिः; अन्यैरपि सूत्रकारैः इयं रीतिः आदृता दृश्यते। यथा पाणिनीये 'तदशिष्यं संज्ञाप्रमाणत्वात्' (पा. सू. १-२-५३) 'लुब्योगाऽप्रख्यानात्' (पा. सू. १-२-५४) इत्यादिषु। जैमिनीये "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" (जै. सू. १-२-१) 'धर्मस्य शब्दमूलत्वात् अशब्दमनपेक्षं स्यात्' (जै. सू. १-३-१) इत्यादिषु। गौतमीये-'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' (न्या. सू. २-१-६९) 'न चतुष्ट्वं ऐतिह्यार्थापत्तिसंभवाऽभावप्रामाण्यात्' (न्या. सू. २-२-१) इत्यादिषु। तथाच हेतुविषये उक्तस्य न्यायस्य साध्येऽपि विषये तुल्यत्वात् साध्योपनायकसाधकोऽपि हेतुः साध्यसाधकत्वेन व्यपदेष्टुमुचितः। एवञ्च प्रधानं जगत्कारणवाचिवेदान्ताऽप्रतिपाद्यं इत्युक्ते समानसंवित्संवेद्यतया उपनीते जगत्कारणवाचिवेदान्तप्रतिपाद्ये न प्रधानं इत्यत्र ईक्षणं हेतुर्भवतीति न दोषः। एवं प्रधानरूपपक्षवृत्तेः सच्छब्दाऽविषयत्वरूपहेतोः उपनायके सच्छब्दविषयगते प्रधानभेदे हेतुभूतं ईक्षणं उपनीतेऽपि हेतुर्भवति इति हेतुहेतुत्वोक्तिरपि निर्दुष्टा इत्यनुसन्धेयम्। स्पष्टश्चायमाशयः शिवार्कमणिदीपिकायाम्। न्यायमञ्जर्यां तु 'क्वचित्पुनः व्यधिकरणाऽसिद्धोऽपि भवति गमक इत्येके' इति पक्षाऽवृत्तिहेतोरपि साधकत्वमुक्तम्।

स्यादिति तस्य नास्ति वैयर्थ्यमिति गृहाण । ननु[1] च आनुमानिककारणतावगमपूर्वपक्षोऽपि त्वया दर्शितः, तत्सूचनार्थं अशब्दम्-शब्देतरानुमानप्रमाणवत् इति मत्वर्थीयाच्प्रत्ययान्तत्वेन 'आनुमानिकमप्येकेषाम्' (ब्र. सू. १. ४. १.) इति सूत्रप्रयुक्तानुमानिकपदवत् प्रधानपरमपि किं न स्यात्, सौत्रपदानामावृत्तेरलङ्कारत्वात् इति चेत्, न; पूर्वाधिकरणे उपक्रमादिलिङ्गावगमिततात्पर्यवता वेदान्तबृन्देन सह ब्रह्मणः प्रतिपाद्यतया अन्वयपरेण 'समन्वयात्' इति पदेनैव उपक्रमाद्यन्तर्गतानुमानरूपोपपत्तिविषयत्वस्य ब्रह्मणि सिद्धत्वेन अनुमानविषयतामात्रस्य पूर्वपक्षबीजत्वाभावात् । भाष्ये 'सर्वेष्वेव वेदान्तवाक्येषु सृष्टिविषयेष्वनुमानेनैव कार्येण कारणं लिलक्षयिषितम्' इति पूर्वपक्षिमतवर्णनस्य ब्रह्मणोऽनुमानगम्यत्वसम्भवप्रपंचनार्थत्वेन तस्य अनन्यथासिद्धपूर्वपक्षबीजत्वे तात्पर्याभावात् । 'परिनिष्ठितं वस्तु प्रमाणान्तरगम्यमेव' इति भाष्यदर्शितस्य मानान्तरागम्ये ब्रह्मणि व्युत्पत्तिग्रहासम्भवस्य प्रायपाठनियमितप्रकृत्यर्थगौणत्वस्य चेति द्वयोरेवात्र वस्तुतः पूर्वपक्षबीजत्वात् । १ । १ ।५ ।

स्यादेतत्—छान्दोग्ये तावत् गौणेक्षणप्रायपाठात् गौणमीक्षणं युक्तम्; तत्समानार्थत्वात् 'स ईक्षाञ्चक्रे (प्र. ३. ६. ३.) इत्यादिश्रुत्यन्तरेष्वपि तत् गौणं भविष्यति । न च सन्निधिरूपेण प्रायपाठेन ईक्षणश्रुतिबाधो न युक्त इति शंक्यम् । तत्र तत्र प्रत्ययश्रुतीनां प्रायपाठस्य च इत्यनेकानुग्रहाय एकस्याः ईक्षणश्रुतेःगौणत्वाभ्युपगमसम्भवात् इत्याशङ्का निराक्रियते—

## गौणश्चेन्ना[2]त्मशब्दात् ।६।

न ईक्षतिः प्रधाने गौण इति युक्तम्; 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा. ६. ३. २) इति सच्छब्दाभिहितं जगत्कारणं प्रति जीवस्य स्वरूपत्वप्रतिपादकात् 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' (छा. ६. ८. ७) इति श्वेतकेतुं प्रति सच्छब्दाभिहितस्य स्वरूपत्वप्रतिपादकाच्च शब्दात् । 'तत्सत्यं स आत्मा' इत्यात्मशब्दाच्च । न ह्यचेतनस्य चेतनं चेतनस्य वा अचेतनं स्वरूपं भवितुमर्हति । न वा चेतनवाची आत्मशब्दः अचेतने युज्यते । न च—ममात्मा भद्रसेन इतिवत् औपचारिकोऽयमुपकार्योपकारकयोर्जीवप्रधानयोरभेदः स्यात्, आत्मशब्दश्च स्वरूपपरस्स्यादिति शङ्क्यम् । 'तत्त्वमसि' इति नवकृत्वोऽभ्या-

१ 'अशब्दं-शब्दमालाऽगम्यं-शब्देतरगम्यं-आनुमानिकं प्रधानं इत्यर्थः' इति परेषां व्याख्यानं आशङ्क्य निराकरोति नन्वित्यादिना ।

२. अत्र सूत्रकृता 'तदैक्षत' इत्यादौ श्रूयमाणं ईक्षणं मुख्यं, न गौणं इत्येवोक्तम् । न एतावता ईक्षणस्य पारमार्थिकत्वं लब्धम् । गौणत्वं आहार्यत्वं, मुख्यत्वं अनाहार्यत्वम् । मुख्यत्वं कल्पिताकल्पितोदासीनम् ।

सेन अभेदे तात्पर्यावगमात् । 'स आत्मा' इत्यात्मशब्दस्य निरपेक्षचेतनपरत्वे सम्भवति सापेक्षस्वरूपपरत्व-कल्पनाऽयोगाच्च । अनेकार्थत्वस्यान्याय्यत्वेन प्रसिद्धिबाहुल्याच्चेतनवाचिनस्तस्य स्वरूपपरत्वे लक्षणाकल्पनापत्तेश्च । बहुप्रमाणबाधस्यान्याय्यत्वाच्च । तस्मात् प्रधानं न सच्छब्दवाच्यम् ॥

सूत्रे[1] आत्मशब्दादित्यत्र आत्मपदं स्वरूपपरं धर्मप्रधानं, तस्य शब्दात्—स्वरूपत्वप्रतिपादकशब्दादित्यर्थः । तेन च सच्छब्दवाच्यं प्रति जीवस्य स्वरूपत्वप्रतिपादकश्शब्दो जीवं प्रति सच्छब्दवाच्यस्य स्वरूपत्वप्रतिपादकश्शब्दश्चेत्युभयमपि संगृहीतम् । अयमेकोऽर्थः । स आत्मेत्यात्मशब्दादित्यन्योऽर्थः । उभयमपि विवक्षितं प्रमाणबाहुल्यसूचनार्थम् । १ । १ । ६ ।

## तन्निष्ठस्य मोक्षोपदेशात् ।७।

श्वेतकेतोः 'तत्त्वमसि' इति सदात्मत्वमुपदिश्य 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्ये' (छा. ६. १४. २.) इति सदात्मत्वसाक्षात्कारवतो मोक्षोपदेशादपि न सच्छब्दं प्रधानम् । पूर्वसूत्रगतस्य[2] आत्मशब्दादित्यस्य आद्येऽर्थे आत्मपदेन प्रकृतं[3] जीवं प्रति सच्छब्दवाच्यस्य स्वरूपत्वं सूत्रगतेन तत्पदेन परामृश्यते । महावाक्यार्थभूततत्साक्षात्कारादेव मोक्ष इत्युपगमात् (१. १. ७. ।)

---

एवंच- 'अत्र अधिकरणे ईक्षणादीनां गुणानां तत्पारमार्थिकत्वस्य च सूत्रकृतैव उक्तत्वात् निर्विशेषब्रह्मवादः सूत्रकृतैव निरस्तः' इति परेषां दूषणोक्तिः निर्मूला-इति वेदितव्यम् ।

यत्तु कल्पितं ईक्षणं प्रधानेऽपि सम्भवति इति कथं तन्निरासः इति तन्न, कल्पितत्वेऽपि गौणमुख्ययोः मुख्यस्यैव ग्रहणं युक्तं न तु गौणं प्रधाने तु गौणं इति तन्निरासोपपत्तेः ॥

१. आत्मशब्दस्य स्वरूपपरत्वे सूत्रास्वारस्यं श्रुतप्रकाशिकोक्तं परिहरन् सूत्रं व्याचष्टे सूत्रे इत्यादिना ।

२. 'तन्निष्ठस्य मोक्षोपदेशात्' (ब्र. सू. १-१-७) इति सूत्रस्य भाष्यकृतां व्याख्यानं अयुक्तं इति श्रुतप्रकाशिकोक्तं निराकर्तुं सूत्रगततत्पदस्य अर्थं वर्णयति पूर्वसूत्रेत्यादिना । अव्यवहितपूर्वपरामर्शितच्छब्दप्रयोगस्वारस्यात् भाष्यकृतां व्याख्यानमेव युक्तं इति भावः ।

३. प्रकृतं इति-सच्छब्दवाच्यस्य स्वरूपत्वं इत्यनेन संबद्ध्यते । 'आत्मपदं स्वरूपपरं धर्मप्रधानं' इति पूर्वमुक्तत्वात् स्वरूपत्वं प्रकृतम् ।

## हेयत्वावचनाच्च । ८ ।

ननु 'तत्त्वमसि' इति न तत्त्वदृष्ट्या सदात्मत्वोपदेशः, किन्तु स्थूलारुन्धतीन्यायेन, ततश्च प्रधानस्य सच्छब्दार्थत्वेऽपि सदात्मत्वोपदेशो न विरुध्यते इति न शङ्क्यम् । तदा मोक्षयितव्यश्श्वेतकेतुस्तन्निष्ठो माभूदिति मुख्यमात्मानमुपदिदिक्षुणा आरुणिना स्थूलतारायामरुन्धतीतादात्म्यस्येव इह सदात्मत्वस्य हेयताया वक्तव्यतापत्तेः । तस्य अवचनात् सदात्मत्व एव उपदेशपरिसमाप्तिदर्शनात् ।

पूर्वसूत्रे तच्छब्दः समस्तोऽपि अपेक्षावशादिहानुषक्तः षष्ठ्यन्तो विपरिणम्यते । तस्य—सदात्मत्वस्य हेयत्वावचनात् इति सूत्रार्थः । चकारेण प्रतिज्ञाविरोधादिति हेतुः अभ्युच्चीयते । 'येनाश्रुतं श्रुतं भवति' (छा. ६. १. १ .) इत्यादेः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः प्रधाने विरोधादपि न सच्छब्दादिवाच्यं प्रधानम् । सा हि धर्म्यैक्यात् एकाकारान्वयात् वस्त्वन्तराणामेकस्मिन्नध्यस्तत्वाद्वा निर्वहति । तत्र न तावत्, ब्रह्मवादे सर्वेषां ब्रह्मण्यध्यस्तत्वादध्यस्तानामधिष्ठानमेव वस्तुसत्स्वरूपमिति तद्ज्ञानेन ज्ञाततानिर्वाहवत् प्रधानवादे निर्वाहः सम्भवति; प्रपञ्चसत्यत्वाभ्युपगमात् । नापि ज्योतिष्टोमविकृतीनां गवादीनां तत्समानाकारत्वात् तद्ज्ञानेन ज्ञाततेतिवन्निर्वाहो वा, एकमृत्पिण्डारब्धानां घटशरावादीनां तस्मादनतिरिक्तद्रव्यतया धर्म्यैक्यात्तद्ज्ञानेन ज्ञाततेतिवन्निर्वाहो वा अत्र सम्भवति । प्रधानविज्ञानेन तत्परिणामभोग्यवर्गविज्ञानसम्भवेऽपि भोक्तृवर्गविज्ञानासम्भवात् । १ । १ । ८ ।

## स्वाप्ययात् । ९ ।

'यत्रैतत् पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति (छा. ६. ८. १) इति प्रकृतं सत् स्वशब्देनोक्त्वा तत्र जीवस्याप्ययप्रतिपादनादपि न सच्छब्दवाच्यं प्रधानम् । यद्यपि स्वशब्दः स्वीयपरत्वेन तत्राप्युपपद्यते, तथापि तत्र अप्ययशब्दितो जीवस्य लयो न सम्भवति । ननु ब्रह्मण्यपि जीवस्य मुख्यो लयो न सम्भवति नित्यत्वात्, औपचारिकस्तु लयः प्रधानेऽपि तस्य व्यपदेष्टुं शक्यः इति चेत् । न । अध्यस्ताकारनिवृत्तौ तदनुवृत्ताधिष्ठानरूपस्य अध्यस्तोपाधिकृतभेदनिवृत्त्या तदभेदप्राप्तिः अप्ययशब्दितो लयः, अस्ति च सुषुप्तौ ब्रह्माध्यस्तस्थूलसूक्ष्मदेहद्वयोपाधिकाकारनिवृत्तौ सत्यां तदनुवृत्ताधिष्ठानरूपजीवस्य तत्कृतभेदनिवृत्त्या ब्रह्माभेदप्राप्तिः इति मुख्यलय-

सम्भवात् । यद्यपि सुषुप्तावव्याविद्योपाधिकृतोऽतिसूक्ष्मान्तःकरणोपाधिकृतश्च आमुक्त्यनुवृत्तो जीवस्यास्त्येव ब्रह्मणो भेदः । तथाऽपि अत्यन्तभेदकस्थूलसूक्ष्मोपाधिसत्त्वे यथा भेदो न तथा भेदोऽस्ति तन्निवृत्ताविति कथञ्चिदभेदप्राप्तिरपि युज्यते । भाष्ये 'सुषुप्तावस्थायामुपाधिकृतविशेषाभावात् स्वात्मनि प्रलीन इव' इति इवकारो मुक्ताविव सुषुप्तौ सर्वात्मना न अभेदप्राप्तिरूपो विलयः इत्याशयेन । १ । १ । ९ ।

**गतिसामान्यात् । १० ।**

सर्वेषु वेदान्तेषु चेतनकारणत्वावगतिसामान्यादपि न सच्छब्दवाच्यं प्रधानम्, किंतु ब्रह्मैव । ।१।१।१०

**श्रुतत्वाच्च । ११ ।**

श्वेताश्वतरोपनिषदि 'स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः (श्वे ६. ९) इति चक्षुरादिकरणाधिपानां जीवानामधिपस्य ब्रह्मणः साक्षादेव कारणत्वश्रवणाच्च ।

पूर्वसूत्रे[१] सर्वेषां वेदान्तानां चेतनकारणत्वमात्रे श्रुतिलिङ्गादिकमभिप्रेतम्, न तु परमेश्वरस्यैव कारणत्व-मित्यत्र तदभिधानश्रुतिराभिप्रेता; 'आत्मन आकाशस्सम्भूतः' (तै. २. १) इत्यादितद्विषयवाक्यगतानामात्मा-दिशब्दानां चेतनमात्रवाचित्वात्, इह तु परमेश्वरस्यैव कारणत्वं तदभिधानश्रुत्या समर्पितमित्युच्यते इति भेदः । अत एवास्मिन् सूत्रे भाष्यं 'स्वशब्देनैव च सर्वज्ञ ईश्वरो जगतः कारणमिति श्रूयते' इति । स्वशब्दश्चात्र 'स कारणम्' इति मन्त्रात् प्राचीनेषु 'तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति । संयुक्तमेतत् क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः' इत्यादिमन्त्रेषु श्रुतः ईशानादिशब्दः । तत्समर्पितो ह्यर्थः सकारणमि-ति मन्त्रे तच्छब्देन परामर्शनीयः । न च ईशानादिशब्दस्य तदभिधानश्रुतित्वे विवदितव्यम् । अङ्गुष्ठाधिकरणे (१. ३. ७) ईशानशब्दस्य ब्रह्माभिधानश्रुतित्वे सूत्रभाष्यसंप्रतिपत्तिदर्शनेन तत्तुल्यार्थस्येशादिशब्दस्यापि तथात्वसिद्धेः ।

एवं श्वेताश्वतरोपनिषद्गतानां परमेश्वराभिधानश्रुतीनां गतिसामान्यसूत्रगृहीतेभ्यः पृथक्कृत्य दर्शनञ्च

---

१. सर्ववेदान्तानां ऐककण्ठ्यं दर्शयता गतिसामान्यसूत्रेणैव श्वेताश्वतरवाक्यस्यापि क्रोडीकृतत्वात् श्वेता-श्वतरवाक्यस्य 'श्रुतत्वाच्च' इति सूत्रविषयत्वाश्रयणमयुक्तम्—इति श्रुतप्रकाशिकोक्तं दूषणं उद्धरति पूर्वसूत्रे इत्यादिना ।

प्रधानव्यावर्तनीभिरेव ताभिः जीवव्यावर्तनमपि लम्भयितुम् । तेन जन्मादिसूत्रे न्यायतो निरस्ता जीवकारणत्वशङ्का श्रुतितोऽपि निरस्ता भवति । स्फुटो हि तत्र क्षरादिशब्दितात् प्रधानादिव अक्षरकरणाधिपादिशब्दाज्जीवादपि तन्नियन्तृत्वेन विलक्षणः परमेश्वर एव कारणमिति सिध्यतीति प्रधानकारणवादनिरासेनैव जीवकारणत्ववादनिरासः। । १ । १ । ११ ।

इति ईक्षत्यधिकरणम् ।५।



(६ आनन्दमयाधिकरणम्) आनन्दमयोऽभ्यासात् ।१२।

एवं जडजीवविलक्षणस्य मायाशबलितस्य ब्रह्मणो जगत्कारणत्वप्रसाधनेन तदुपलक्षिते शुद्धब्रह्मणि वेदान्तानां समन्वयः सामान्यतो निर्व्यूढोऽपि केषुचिद्वेदान्तवाक्येष्वन्यपरत्वशङ्कया शिथिलीभवतीति तेषां तत्तच्छ्रुतिलिङ्गादिप्रापितान्यपरत्वशङ्कानिराकरणेन तत्र समन्वयः प्रतिष्ठापनीयः । अन्यथा तत्तत्प्रकरणदर्शितापायमुखेन शुद्धब्रह्मप्रतिपत्त्यसिद्धेः । उपासनावाक्येषु च केषुचित् उपास्यमब्रह्मेति शङ्कानिराकरणेन ब्रह्मेति प्रतिपादनीयम् । यथा कर्मकाण्डे दर्शपूर्णमासाद्यर्थमप्प्रणयनादिकमाश्रित्य दर्शपूर्णमासादिप्रकरणे विहितानां गोदोहनादीनां कल्पसूत्रेऽपि तत्तत्प्रकरणे एव विवेचनम्, तथा ब्रह्मकाण्डे अध्यारोपापवादन्यायेन शुद्धब्रह्मप्रतिपत्त्यर्थमुपदिष्टं ब्रह्मणस्सप्रपञ्चत्वमाश्रित्य विहितानामुपासनानामपि ब्रह्मकाण्डार्थनिर्णायके एव शास्त्रे निर्णयस्योचितत्वात्[1] । तद्वदिहाधिकृताधिकाराभावेऽपि चित्तवशीकरणसम्पादनादिद्वारा उपासनानां शुद्धब्रह्मप्रतिपत्त्युपायतया तद्वाक्यार्थनिर्णायकन्यायानामविचारितशुद्धब्रह्मपरवाक्यार्थनिर्णयोपयोगितया च तद्विचाराणामप्यत्र संगतेः । अतः तदर्थमध्यायशेष आरभ्यते ।

तत्र तावदानन्दवल्या जीवपरत्वनिरासेन ब्रह्मपरत्वमस्मिन्नधिकरणे समर्थ्यते ।

तत्र हि 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्माऽऽनन्दमयः' (तै. २-५-१) इत्यारभ्य 'तस्य प्रियमेव शिरः, मोदो दक्षिणः पक्षः, प्रमोद उत्तरः पक्षः, आनन्द आत्मा, ब्रह्म पुच्छं प्रतिष्ठा' (तै. २-५-१) इति श्रूयते ।

अत्र आनन्दमयो जीव इति पूर्वपक्षे ब्रह्मेति सिद्धान्तः इत्यधिकरणशरीरं वृत्तिकृता सूत्रार्जवं मन्यमानेन वर्णितम् ।

---

१. 'मोक्षसाधनीभूताद्वैतब्रह्मज्ञानाय प्रवृत्ते ब्रह्मसूत्रात्मके वेदान्तमीमांसाशास्त्रे उपासनावाक्यविचारस्य असङ्गतत्वात् ब्रह्मसूत्राणां न अद्वैतसिद्धान्तानुकूलता इति परेषां आशङ्का अनेन परिहृता । 'आपादचूडं ब्रह्मसूत्रेषु निर्विशेषं ब्रह्मैव अर्थः' इति परकीयः अद्वैतसिद्धान्तानुवादः अद्वैतसिद्धान्तापरिज्ञानमूलकः इत्यपि अनेन प्रकटीकृतम् ।

श्रुतिविरोधात्तदयुक्तमिति[1] भगवता भाष्यकारेण पूर्वपक्षे सिद्धान्ते चानन्दमयस्य जीवत्वमुररीकृत्य प्रकारान्तरेण अधिकरणशरीरं वर्णितम्। तत् प्रदर्शयामः।

किमिह प्रियमोदादिरूपकल्पितशिरःपक्षाद्यवयवयुक्ततया उपास्य आनन्दमयो जीवः प्राधान्येन प्रतिपाद्यः ब्रह्म तु पुच्छरूपतदवयवतया निर्दिश्यते, उत शुद्धं ब्रह्मैव पुच्छशब्देन आनन्दमयस्याप्याधारतया स्वप्राधान्येन प्रतिपाद्यते अनन्दमयस्तु अन्नमयादिवत्तत्प्रतिपत्त्युपायनामात्रेण निरूप्यते इति संशयः।

तत्र ईक्षतिमुख्यत्वानुरोधाज्जगत्कारणस्य चेतनत्ववत् पुच्छशब्दमुख्यत्वानुरोधाद् ब्रह्मणोऽवयवत्वमिति प्रथमकोटिः प्राप्ता। पुच्छशब्दस्याधारलक्षणाऽपि न युक्ता; प्रतिष्ठापदेनैवाधारत्वलाभात्। न च वाच्यम्—यथा 'कान्तिमन्मुखं चन्द्रः' इत्यत्र स्वशब्देनैव कान्तिमत्त्वे लब्धेऽपि मुखे गौणं चन्द्रपदमपि दृश्यते, तथेह प्रतिष्ठापदेन आधारत्वे लब्धेऽपि तल्लम्भकपुच्छशब्दोऽपि स्यादिति। वैषम्यात्। तत्र हि चन्द्रस्य यावती कान्तिः तावती मुखे स्तुत्यर्थं प्रतिपिपादयिषिता। न च तावती कान्तिमच्छब्देन लभ्यते। तस्य मानान्तरसिद्धमुखगताल्पकान्तिमात्रविषयत्वेन चारितार्थ्यात्। अतश्चन्द्रतुल्यकान्तिमत्त्वलाभाय चन्द्रपदं उपात्तम्। इह तु ब्रह्मणि प्रतिष्ठात्वसङ्कोचकमानान्तराभावात् तस्य निरपेक्षसर्वप्रतिष्ठात्वप्रतिपादकश्रुत्यन्तरानुरोधाच्च निरतिशयमाधारत्वं प्रतिष्ठापदेन लभ्यत इति किमत्र पुच्छपदेन क्रियते। प्रत्युत पुच्छतुल्याधारत्वलक्षणायां पुच्छस्याधारत्वं भूतलास्तीर्णे तृणराशौ सञ्चरतः पुरुषान् प्रति तृणराशेरिव आधारान्तरसापेक्षं सातिशयमिति ब्रह्मणस्तथाभूतमाधारत्वं लक्षयत् पुच्छपदं अनिष्टार्थमेव स्यात्। तस्मात् पक्षिरूपेण परिकल्प्य उपासनीयं आनन्दमयं जीवं प्रति परस्य ब्रह्मणः कल्पनीयं पुच्छत्वं पुच्छपदेनोच्यते। प्रतिष्ठापदेन च पुच्छत्वकल्पनानिमित्तं सारूप्यमुच्यते। पक्षिणो हि पुच्छभागमाधारीकृत्य निषीदन्ति इति। पक्षिणां पुच्छं प्रतिष्ठा।

---

१. तत्—वृत्तिकृतां सूत्रार्थवर्णनम्। तदनेन भाष्यकृतां अधिकरणरचनायामेव सूत्राणामार्जवं इति—सूचितम्। स्पष्टयिष्यति चेदं अनुपदं सूत्राक्षरार्थवर्णनेन।

ननु श्रुत्यर्थनिर्णयायैव प्रवृत्तानि ब्रह्मसूत्राणि न्यायप्रदर्शनेन, तथा च सूत्राक्षरार्थानुगुणमेव श्रुत्यर्थवर्णनं युक्तम्; सत्यम्, तथाऽपि सूत्राक्षराणि भाष्यकृतां अधिकरणशरीरस्यैव अनुकूलानि इत्यभिप्रायः। अत एव 'सूत्रार्जवं मन्यमानेन' इति वृत्तिकृतां अभिमानमात्रं इत्युक्तम्। किञ्च-अयमेव सूत्रार्थः इति कथं निर्णीयेत। ततश्च सूत्रार्थवर्णने विप्रतिपत्तौ असन्दिग्धार्थकश्रुत्या तदर्थनिर्णयो युक्त एव। श्रुत्यविरुद्धोऽर्थः वर्णनीयः। तद्विरुद्धश्च हेयः। न हि श्रुतिसूत्रयोर्विरोधो युक्तः। ततश्च श्रुतिविरोधात् तदयुक्तम् इत्यपि समञ्जसम्।

अत एव ऐतरेयारण्यके श्रूयते 'तस्मात् सर्वाणि वयांसि पुच्छेन प्रतितिष्ठन्ति पुच्छेनैव प्रतिष्ठायोत्पतन्ति प्रतिष्ठा हि पुच्छम्' इति । ब्रह्मानन्दोऽपि 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृं. ४.३.३२) इति श्रुत्यनुसारेण कृत्स्नस्यापि लौकिकानन्दराशीकरजातस्य समुद्रस्थानीय इति प्रियमोदाद्यवयवयुक्तस्यानन्दमयस्य प्रतिष्ठा । अतः सारूप्यात् ब्रह्मणः पुच्छत्वकल्पना युक्तेति । अन्यत्रापि तादात्म्यकल्पनानिमित्तसारूप्यवर्णनं दृश्यते, यथा 'तस्य भूरिति शिरः एकं हि शिरः एकमेतदक्षरम्' (बृ. ५. ५. ३) इति । अत्र भूरित्यक्षरे प्रजापतिशिरस्त्वकल्पनानिमित्तमेकत्वं सारूप्यमुक्तम् । न च प्रधानाप्रधानयोर्ब्रह्मजीवयोर्वैपरीत्यकल्पनाऽनुपपत्तिः । 'मनो ब्रह्मेत्युपासीत' (छा. ३. १८. १) इत्यादौ तद्दर्शनात् ।

ननु 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र निर्दिष्टस्य ब्रह्मण एव प्राधान्येन वाक्यप्रतिपाद्यत्वं युक्तम्; 'असन्नेव स भवति असद् ब्रह्मेति वेद चेत् अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुरिति' (तै.२.६.१) इति निगमनश्लोके ब्रह्मशब्दाभ्यासेन लिंगेन वाक्यस्य तत्र तात्पर्यावगमात् इति चेत्—

तर्हि 'यदेष आकाश आनन्दो न स्यात्' (तै. २. ७. १) "सैषाऽऽनन्दस्य मीमांसा भवति" (तै. २. ८. १) इत्याद्यानन्दशब्दाभ्यासेन 'आनन्द आत्मा' इति मध्यावयवत्वेन कल्पितानन्दोऽपि वाक्यप्रतिपाद्यः स्यात् ।

यदि तु एकस्मिन् वाक्ये द्वयोर्ब्रह्मानन्दयोः प्राधान्येन प्रतिपाद्यत्वायोगादन्यतरप्राधान्ये वक्तव्ये प्रथमश्रुतब्रह्मशब्दाभ्यासानुरोधेन ब्रह्मण एव प्राधान्यव्यवस्थितौ चरमश्रुतानन्दशब्दाभ्यासोऽपि ब्रह्मविषयः कल्प्येत, तदा ब्रह्मणः पुच्छत्वकल्पनस्य श्लोकादपि प्रथमश्रुतत्वेन शिरःपक्षमध्यपुच्छावयवयुक्तस्यानन्दमयस्य प्राधान्यावगमात् ब्रह्मशब्दाभ्यासवान् निगमनश्लोकोऽप्यानन्दमयविषयः इति कल्प्यताम् । तस्मात् आनन्दमय एव प्राधान्येन प्रतिपाद्यः इति **पूर्वःपक्षः** ॥

एवं प्राप्ते **सिद्धान्त** उच्यते **'आनन्दमयोऽभ्यासात्'** इति । आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म स्वप्राधान्येन वाक्यप्रतिपाद्यम्; 'असन्नेव स भवति' (तै. २.६.१.) इति निगमनश्लोकस्थब्रह्मशब्दाभ्यासविषयत्वात् । नन्वसिद्धोऽयं हेतुः आनन्दमय एव निगमनश्लोकविषयोऽस्तु इत्युक्तत्वात्–इति शङ्कायामप्येतदेवोत्तरम् 'आनन्दमयोभ्यासात्'इति । आनन्दमयःन निगमनश्लोकप्रतिपाद्यः;तत्र ब्रह्मशब्दाभ्यासदर्शनात् । अभ्यस्यमानं ब्रह्मशब्दं प्रत्यान-

न्दमयस्य मुख्यार्थत्वाभावात् । एकं पुच्छपदमनुरुध्य अनेकस्य ब्रह्मशब्दस्य आनन्दमये जघन्यवृत्तिकल्पनानुपपत्तेः । एकबाधात् अनेकबाधस्यान्याय्यत्वेन उपक्रमादप्यभ्यासस्य प्रबलत्वात्[1] । अस्य सूत्रस्य सिद्धान्तसाधकत्वेन योजनायां आनन्दमयपदेन आनन्दमयवाक्ये श्रुतं पुच्छब्रह्म लक्षणीयम्[2] । सिद्धान्तसाधकहेत्वसिद्धिनिरासकत्वेन योजनायां ईक्षतिसूत्रान्नञमनुवृत्य निषेध्याध्याहारेण साध्यं पूरणीयम् । 'ब्रह्म पुच्छमभ्यासात्' इत्यार्जवेन सूत्रे कर्तव्ये 'आनन्दमयोऽभ्यासात्' इति सूत्रकरणस्य एतत् प्रयोजनं--यत् ईक्षतिसूत्रान्नञनुवर्तनेन तद्वन्निषेध्याध्याहारेण च आनन्दमयो न निगमनश्लोकप्रतिपाद्यः इति हेत्वसिद्धिशङ्कानिरासकहेतुसाध्यमपि लभ्यते इति । प्रयोजनान्तरञ्च व्यवहितानन्तरसूत्रे[3] दर्शयिष्यामः ।१२।

स्यादेतत्---पुच्छशब्दस्य अभ्यस्यमानब्रह्मशब्दमुख्यताऽनुरोधेन मुख्यार्थत्यागे, तस्याधारलक्षणाऽनुपपत्तेरित्युक्तत्वादानर्थक्यमेव प्राप्नुयात् । ततश्च 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन अभ्यस्तब्रह्मशब्दादपि पुच्छशब्द एव बलीयान् इत्याशयवतीमाशङ्कां अनुभाष्य निराकरोति---

## विकारशब्दान्नेति चेन्न प्राचुर्यात् ।१३।

विकारशब्देन अवयवो लक्ष्यते, तद्वाची पुच्छशब्दो विकारशब्दः । स एव विकारः---विगतकार्यः अनर्थकशब्दः । 'अकर्तरि च कारके संज्ञायाम्' (पा. सू. ३.३.१९) इति कर्मणि घञन्तः कारशब्दः कार्यवाची । एवमर्थान्तरस्यापि गर्भीकरणाय 'अवयवशब्दात्' इति वक्तव्ये 'विकारशब्दात्' इत्युक्तम् । तथाच पुच्छावयववाचिनः तदर्थपरित्यागे लक्षणीयार्थाभावेन प्रसक्तानर्थक्यात् पुच्छशब्दाद्धेतोः न ब्रह्म प्राधान्येन प्रतिपाद्यं इति चोदिति शङ्काऽर्थः । 'प्राचुर्यात्' इति तन्निराकरणांशस्यायमर्थः---प्राचुर्यात्-अवयवप्राये वचनात्

---

१. पुच्छशब्दापेक्षया ब्रह्मशब्दे ईदृशं प्राबल्यं द्योतयितुमेव अभ्यासपर्यन्तहेतूक्तिः ।

२. किमत्र लक्षणाबीजम् ? उच्यते-सूत्रतात्पर्यानुपपत्तेरेव बीजत्वात् । सूत्रस्य तात्पर्यविशेषे किं लिङ्गम्? इति चेत्-अभ्यासपर्यन्तहेतूक्तेरेव लिङ्गत्वात् । तथाहि---यदि ब्रह्मत्वं साध्यं तर्हि तद्विषयश्रुत्यादिमात्रं हेतूकर्तव्यम् । इह तु अभ्यासपर्यन्तं हेतूकृतम् । तेन ज्ञायते स्वप्राधान्येन प्रतिपाद्यत्वपर्यतं तात्पर्यविषयत्वं साध्यमिति । तच्च प्राधान्यं पुच्छशब्दनिर्देशात् ब्रह्मणि सन्दिग्धम् । न त्वानन्दमये; संशायकाभावात् । तथाच सन्दिग्धसाध्यकत्वात् पुच्छब्रह्मैव पक्षः इति पक्षनिर्देशकेन आनन्दमयपदेन पुच्छब्रह्मलक्षणा इति युक्तैव । अनेन एतत्सूत्राक्षराणामार्जवं पुच्छब्रह्मवादे एव-इत्यपि उपपादितं भवति ।

३. तद्धेतुव्यपदेशाच्च-इति सूत्रे ।

पुच्छशब्दोपपत्तिरिति। इदमुक्तं भवति—अन्नमयादीनां शिरआदिषु पुच्छान्तेष्ववयवेषूक्तेषु आनन्दमयस्यापि शिरःपक्षाद्यवयवान्तरोक्त्यनन्तरं प्रायपाठानुसारेण पुच्छपदे कस्मिंश्चिदर्थे निर्देष्टव्ये आनन्दमयं प्रत्याधारत्वेन ब्रह्मणि च प्रतिपादनीये तदुभयानुग्रहलाभाय 'ब्रह्म पुच्छं प्रतिष्ठा' इत्याह श्रुतिः, न अवयवविवक्षयेति। नन्ववयवविवक्षाऽभावे कथमवयववाचिपुच्छपदप्रायपाठानुग्रह इति चेत्। न। तथापि पुच्छपदमात्रप्रायपाठानुग्रहलाभात्। बृहदारण्यके पञ्चाग्निविद्यायां 'असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समित् रश्मयो धूमाः' (बृ. ६. २. ९) इत्यादिषु पञ्चसु पर्यायेषु 'अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित् समित् धूमो धूमः (बृ. ६. २. १४) इत्यादिषष्ठपर्याये च साम्पादिकाग्निसमिद्धूमादिविषयत्वेन मुख्याग्निसमिद्धूमादिविषयत्वेन च भेदे सत्यपि अग्निसमिद्धूमादिशब्दप्रयोगैकरूप्यवत् इहापि पुच्छपदप्रयोगैकरूप्यस्य अवैकल्यात्। ननु तथाप्याधारत्वमात्रं प्रतिष्ठापदेन लब्धम्, पुच्छवत्सापेक्षाधारत्वं तु ब्रह्मणोऽनिष्टमिति पुच्छपदस्य लक्षणीयाभावेन प्रसक्तमानर्थक्यमपरिहृतमेव। उच्यते—आधारत्वसामान्यमेव पुच्छवद्भावविशेषिततया तेन लक्षणीयं श्रोतृबुद्ध्यवतरणाय। पक्षिणां पुच्छमाधार इति दृष्टम्। एवं पक्षितया निरूपितस्याऽऽनन्दमयस्य ब्रह्म पुच्छवदाधार इत्युक्ते दृष्टान्तमुखेन संप्रतिपत्तिर्भवति। ब्रह्मणि क्रमेण श्रोतृबुद्ध्यवतरणाय हि श्रुत्या अन्नमयादिक्रम आश्रितः। तत्र आनन्दमयं प्रत्याधारत्वेन ब्रह्मणि विवेक्तव्ये पक्षित्वेन निरूपितस्य तस्य आधारसद्भावः पुच्छपदप्रयोगमुखेन दृष्टान्तमुद्घाट्य व्यञ्जितः श्रोतृबुद्ध्यवतरणायेति किमनुपपन्नम्। लोकेऽपि प्रातिस्विकशब्ददर्शितार्थमात्र एव दृष्टान्तोपन्यासः प्रचुरो दृश्यते। यथा 'यो यो धूमवान् सोऽग्निमान् यथा महानसः' इति। यथा वा 'एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः' (कु. सं. १. ३) इति। न च दृष्टान्तोपन्यासे सर्वात्मना तदीयधर्मसदृश एव धर्मस्सिध्यतीति नियमः, येन पुच्छपदेन पुच्छवदाधारत्वलक्षणायां सापेक्षाधारत्वमनिष्टं प्राप्नुयादिति शंक्येत; 'आकाशवत्सर्वगतश्च नित्यः' (गौड. का. ३. ३) इत्यादीनां प्राचुर्येण दर्शनात्। न हि ब्रह्मणस्सर्वगतत्वे नित्यत्वे च प्रतिपादनीये श्रोतृबुद्ध्यवतरणाय आकाशदृष्टान्तोपन्यासेन ब्रह्मणोऽप्याकाशवदापेक्षिकमेव सर्वगतत्वं नित्यत्वञ्च प्राप्यते। सूत्रे 'प्रायपाठात्' इति स्पष्टं वक्तव्ये 'प्राचुर्यात्' इति वचनं प्रागन्नमयादिपर्यायेषु प्रतिपर्यायं पुच्छशब्दसद्भावेन तत्प्राचुर्यरूपं प्रायपाठम्, अन्यत्रापि श्रोतृबुद्ध्यवतरणाय दृष्टान्तोपन्यासप्राचुर्यम्, तदर्थदृष्टान्तोपन्यासस्थलेषु प्रतिपिपादयिषिते[1] दृष्टान्तदृष्टहीनधर्मानापत्युदाहरण[2]प्राचुर्यञ्च संग्रहीतुमिति सर्वमनवद्यम्। १. १. १३।

१. सप्तम्यन्तपदस्यास्य अर्थः अनापत्तौ अन्वेति।

२. धर्माणामप्राप्त्युदाहरण-इति पाठान्तरम्।

स्यादेतत्—न केवलमेकस्य पुच्छशब्दस्य स्वारस्यमनुरुध्य निगमनश्लोकस्यानन्दमयविषयत्वं कल्प्यते, येन तस्य अभ्यासादुर्बलत्वेन आधारलक्षकत्वं समर्थ्येत, किन्तु कृत्स्नस्याऽऽनन्दमयवाक्यस्य स्वारस्यमनुरुध्य। कृत्स्नेनापि ह्यानन्दमयवाक्येन 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यन्तेन अवयव्यानन्दमयः पूर्वपर्यायेष्वन्नमयादिवत् शिरःप्रभृतिपुच्छान्तसकलावयवापेक्षया प्राधान्येन प्रतिपाद्यः प्रतीयते। अतः प्रथमश्रुतानेकावान्तरवाक्यघटित-महावाक्यविरोधात् अभ्यस्तस्यापि ब्रह्मशब्दस्य आनन्दमये जघन्यवृत्तिकल्पनं युक्तमिति असाधकास्सिद्धान्त-हेतुः, तदसिद्धिनिरासकहेतुश्च इत्याशंक्य आह—

## तद्धेतुव्यपदेशाच्च । १४ ।

'इदं सर्वमसृजत यदिदं किञ्च' (बृ. १. २. ५) इति सानन्दमयं विकारजातं प्रति ब्रह्मणस्स्रष्टृत्वोपदेशादपि ब्रह्म स्वप्राधान्येनैव प्रतिपाद्यम्। ननु सोऽप्यसञ्जातविरोध्यानन्दमयवाक्यानुसारेण कथञ्चिददृष्टद्वारा स्रष्टर्यानन्दमयेऽप्यवतिष्ठतामिति चेत्। मैवम्। 'सोऽकामयत' (तै. २. ६) इत्यारभ्य कामनापूर्वकसर्वप्रपञ्चस्रष्टृत्वप्रतिपादनात्, तस्य च तत्रान्वेतुमयोग्यत्वात्। इदञ्च तत्रान्वेतुमयोग्यत्वं सूत्रे 'व्यपदेशात्' इति व्युपसर्गेण लभ्यते। विशिष्टो ह्यपदेशो व्यपदेशः। स च जीवेऽन्वेतुमयोग्यः कामनापूर्वकत्वेन विशिष्टः स्रष्टृत्वनिर्देशः। चकारेण निगमनश्लोकस्यापि तत्रान्वेतुमयोग्यत्वं समुच्चीयते। न ह्यानन्दमये प्रियमोदादियुक्ततया लोकप्रसिद्धे निगमनश्लोकोक्तसत्त्वासत्त्वशङ्का अन्वेति। चकारेण 'को ह्येवान्यात् कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाति' (तै. २. ७) 'भीषाऽस्माद्वातः पवते' (तै. २ ८.) इत्याद्युत्तरसन्दर्भगतसर्वप्राणिप्राणयितृत्वानन्दयितृत्वप्रशासितृत्वोपदेशा अपि समुच्चीयन्ते। एतेऽपि हि जीवेऽन्वेतुमयोग्याः। अतो बहुबाधस्यान्याय्यत्वात् आनन्दमयवाक्यस्यैव पुच्छपदमात्रलक्षणासाध्यं ब्रह्मप्राधान्यमभ्युपगन्तुं युक्तम्। वरं ह्यनेकवाक्यवैयर्थ्यात् प्रथमश्रुतस्यापि वाक्यस्य एकपदमात्रलक्षणा-साध्यमन्यथाकरणम्। अत एव पूर्वतन्त्रे तत्सिध्यधिकरणे[1] (जै.सू. १. ४) सृष्टिलिङ्गकमन्त्रोपधेयेष्टका-वाचिनः सृष्टिशब्दस्य, सृष्ट्यसृष्टिलिङ्गकमन्त्रोपधेयानां सप्तदशानामिष्टकानां प्रत्येकं स्तुतिः 'यत् सप्तदशे-

---

१. तत्सिद्धिपेटिकाऽधिकरणे—तत्सिद्धिपेटिकान्तर्गते भूमाधिकरणे—इत्यर्थः।

ष्का उपदधाति' इत्युपसंहारः इति बहुवाक्यशेषानुसारेण तासु सर्वास्विष्टकासु लक्षणा स्वीकृता । नन्वस्तु सदसत्त्वसन्देहयोग्यत्वकामनापूर्वकसानन्दमयसकलप्रपञ्चस्रष्टृत्वसर्वप्राणिप्राणयितृत्वादिलिङ्गैः उत्तरसन्दर्भस्सर्वोऽपि ब्रह्मपरः, तत्प्रतिपाद्यस्य तथाभूतस्यैव ब्रह्मणः स्वसृज्यत्वस्वप्राणनीयत्वादिविशिष्टमानन्दमयं प्रति काल्पनिकमवयवत्वमस्तु, न हि मुख्यमवयवत्वमिहोच्यते; जीवस्य वस्तुतो निरवयवत्वात् इति चेत् । भ्रान्तोऽसि । न हि वयमिह वस्तुविरोधं ब्रूमः येनोपासनार्थावयवत्वकल्पनोपदेशपरतया तत्समाधानं क्रियेत, किंतु उत्तरसन्दर्भपर्यालोचनया प्राधान्येन ब्रह्मप्रतिपादकतयाऽवगतं यत् प्रकरणं तदेव अन्योपसर्जनतया तत् प्रतिपादयितुं न शक्नोतीति शब्दसामर्थ्यं ब्रूमः ।

सूत्रे तच्छब्दः आनन्दमयपरः । आनन्दमयसूत्रे पुच्छब्रह्मलक्षकस्याप्यानन्दमयपदस्य मुख्यार्थतया तस्य शब्दसन्निधापितत्वात् । न च पूर्ववाक्यगतशब्दसन्निधापितस्यापि पूर्ववाक्यार्थान्वयिन एव सर्वनाम्ना परामर्श इति नियमोऽस्ति । 'त्रेधा तण्डुलान् विभजेत्' (तै. सं. २.) इत्यत्र दार्शिकहविर्मात्रोपलक्षकस्य तण्डुलपदस्य वाच्यार्थानां तण्डुलत्वविशिष्टानां तद्वाक्यार्थानन्वयिनामपि 'ये मध्यमाः' इत्याद्युत्तरवाक्येषु यत्पदैः परामर्शदर्शनात् ।

[2]"नालीकासनमीश्वरश्शिखरिणां तत्कन्धरोत्थायिनो
गन्धर्वाः पुनरेतदध्वचरिते चक्रे तदुद्धारकः ।
पत्री तत्प्रभुवैरिणां परिबृढो जीवा च यस्याभवत्
जीवान्तेवसतां रिपुक्षयविधौ देवाय तस्मै नमः" ।।

इति श्लोके पूर्ववाक्यार्थानन्वयिनामपि तदेतत्पदैः परामर्शदर्शनाच्च[3] । तथानियमाभ्युपगमेऽपि नानु-

२. अस्यायमर्थः — जीवस्य-बृहस्पतेः अन्तेवसतां-शिष्याणां देवानां, रिपोः — त्रिपुरस्य क्षयविधौ— संहारकरणे, यस्य, शिखरिणां-पर्वतानां ईश्वरः मेरुः नालीकानां-शराणां आसनं-धनुः अभवत्, तस्य नालीकासनस्य— नालीकं पद्मं आसनं यस्य तस्य ब्रह्मणः कन्धरायां—ग्रीवायां उत्थानशीलाः वेदाः गन्धर्वाः हयाः यस्य अभवन्, एतेषां-गन्धर्वाणां-देवजातिविशेषाणां अध्वा-आकाशः तत्र चरितं-गमनं ययोः तौ सूर्यचन्द्रौ चक्रे रथचक्रे यस्य अभूतां, तस्य चक्रस्य सुदर्शनाख्यस्य उद्धारकः विष्णुः पत्री-शरः यस्य अभवत्, तेषां-पत्रिणां पक्षिणां प्रभोः गरुडस्य वैरिणां नागानां परिवृढः —स्वामी वासुकिः जीवा-ज्या च यस्य अभवत्, तस्मै देवाय त्रिपुरसंहारकरणोन्मुखाय शिवाय नमः।

३. अत्र नालीकासनादिशब्दैः उपस्थितः पूर्वपूर्ववाक्यार्थान्वयी अन्य एवार्थः, तत्कन्धरोत्थायिनः इत्यादौ सर्वनामपरामर्शनीयश्च अन्यः ।

पपत्तिः; आनन्दमयसूत्रस्य द्वितीययोजनायामानन्दमयस्य वाक्यार्थान्वयित्वात्। इदमपि 'ब्रह्म पुच्छमभ्यासात्' इति सूत्रे कर्तव्ये 'आनन्दमयोऽभ्यासात्' इति सूत्रकरणस्य प्रयोजनं यत् आनन्दमयस्यात्र सर्वनाम्ना परामर्शेन सूत्रलाघवलाभः। यद्यपि 'इदं सर्वमसृजत' इत्यत्र न आनन्दमयं प्रत्येव हेतुत्वव्यपदेशः, किंतु चेतनाचेतनात्मकसकलप्रपञ्चं प्रति, न चाचेतनशरीरोपाध्यपेक्षां विना चेतनं प्रति साक्षात्स्रष्टृत्वमपि सम्भवति, तथाऽपि अचेतनोपाधिकमेव चेतनं प्रति स्रष्टृत्वं प्रदर्शयितुं तच्छब्देनाऽऽनन्दमयपरामर्शः कृतः। तत्प्रदर्शनं च सृष्टिवाक्यस्य जीवपरत्वशङ्कां अत्यन्तविरोधेन निरसितुं इत्यलं विस्तरेण। १. १. १४।

एवमुपसंहारगतबहुप्रमाणानुरोधेन प्रथमश्रुतस्याप्यानन्दमयवाक्यस्य ब्रह्मप्राधान्यं समर्थितम्। केचिद्वावदूकाः प्राथम्यस्य प्राबल्यहेतोर्न जघन्यबहुत्वेन उपमर्दोऽस्तीत्यपि प्रतिपन्नाः। अत एव पूर्वतन्त्रे 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मकत्वम्' (जै. सू. १२. २. २४) 'मुख्यं वा पूर्वचोदनाल्लोकवत्' (जै. १२. २. २५) इति सूत्रयोः पूर्वपक्षसिद्धान्तसूत्रतया ऐकाधिकरण्यं केचन कल्पयन्ति। तान् प्रति 'तुष्यतु दुर्जनः' इति न्यायेन अत्र परमोपक्रमानुसारेणापि आनन्दमयवाक्यस्य ब्रह्मप्राधान्यं सिध्यतीत्याह—

**मान्त्रवर्णिकमेव च गीयते ।१५।**

यत् 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २. २) इति मन्त्रवर्णे स्वप्रधानतया प्रकृतं ब्रह्म, यच्च 'तस्माद्वा एतस्मादात्मन आकाशस्संभूतः' (तै. २. २) इत्यादितदुत्तरसन्दर्भे 'तस्मात्' इति प्रकृतवाचिना तच्छब्देनानुकृष्य आकाशादिसकलप्रपञ्चकारणत्वेन उपवर्णितम्, तदेव इह 'ब्रह्म पुच्छं प्रतिष्ठा' इति ब्रह्मपदेन गीयत इति तस्यैव स्वप्राधान्यं युक्तम्; स्वप्रधानमान्त्रवर्णिकब्रह्मोपस्थापकप्रथमश्रुतब्रह्मपदानुसारेण चरमश्रुतस्यानन्दमयवाक्यस्य नेयत्वात्। ननु मन्त्रवर्णे ब्रह्मण इव 'आत्मन आकाशस्संभूतः' इत्यत्र आत्मनः प्राधान्यावगमात् आत्मशब्दानिर्दिष्ट आनन्दमयः प्रधानं कुतो न स्यात् इति शङ्कानिरासार्थमेवकारः सूत्रे प्रयुक्तः। मान्त्रवर्णिकस्य ब्रह्मण एव प्राधान्यमनुसरणीयम्; उपक्रमगतत्वात्, न तु तदनन्तरश्रुतस्यात्मनः इति भावः।

यद्यपि 'अभ्यासात्' इति हेतुनैव मन्त्रागतमपि ब्रह्मपदं क्रोडीकर्तुं शक्यम्, तथाऽपि 'ब्रह्मविदाप्नोति परम्' इत्येतदनन्तरं किं तत् ब्रह्मेति जिज्ञासायां लक्षणमुखेन तन्निर्धारणाय प्रवृत्तो मन्त्रस्तावत् ब्रह्मप्रधानः। तदेव च ब्रह्म 'तस्माद्वा एतस्मात्' इत्यनन्तरसन्दर्भे सर्वनाम्नाऽनुकृष्टं सत् इहापि 'ब्रह्म पुच्छं प्रतिष्ठा' इति स्वशब्देन निर्दिश्यत इति पूर्वसन्दर्भप्रवृत्तिपर्यालोचनया प्रकरणस्य ब्रह्मप्राधान्यस्फुटीकरणाय मान्त्रवर्णिकसूत्रम्। ।१. १. १५।

स्यादेतत्—'ब्रह्मविदाप्नोति परम्'(तै. २.१.१) इत्यादिपूर्वसन्दर्भस्य 'असन्नेव स भवति' (तै. २.६.१) इत्याद्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्येऽपि आनन्दमयवाक्यस्य आनन्दमयप्राधान्यं तत्र ब्रह्मणः कल्पितपुच्छभावेन उपसर्जनत्वं चास्तु । शालावत्यप्रश्ने 'अस्य लोकस्य का गतिरिति आकाश इति होवाच' (छा. १. ९. १.) इत्यादिपूर्वसन्दर्भस्य 'स एषोऽनन्तः' (छा. १. ९. २.) इत्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्येऽपि 'स एष परोवरी-यानुद्गीथः' इति मध्यगते वाक्ये उद्गीथस्योपास्यस्य प्राधान्यं तत्र ब्रह्मणो दृष्टिविशेषणतया उपसर्जनत्वमिति दर्शनात् । तद्वदिहापि ब्रह्मपरयोः पूर्वापरसन्दर्भयोरुपास्योपसर्जनब्रह्मगतजगत्कारणत्वादिगुणसमर्पकतया वाक्यैकवाक्यतोपपत्तेः इत्याशंक्याह—

## नेतरोऽनुपपत्तेः ।१६।

इतर आनन्दमयः न प्राधान्येन प्रतिपाद्यः । उद्गीथविद्यायां 'ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानं, खल्वेतस्यैवाक्षरस्य उपव्याख्यानम्' (छा. १. १. १.) इत्यादिमहाप्रकरणानु-सारेण 'त्रयो होद्गीथे कुशला बभूवुः' (छा. १. ८. १) इत्यवान्तरप्रक्रमानुसारेण च अवगतोद्गीथ-प्राधान्यनिर्वाहाय आकाशवाक्यस्य उपास्योद्गीथविशेषणब्रह्मब्रह्मगुणसमर्पणार्थत्वोपपत्तावपि अत्र उपक्रमो-पसंहारावगतब्रह्मप्राधान्यविरोधेन उपास्यानन्दमयविशेषणगतगुणसमर्पणार्थत्वकल्पनाऽनुपपत्तेः । १. १. १६ ।

अथापि स्यात्—छान्दोग्ये 'गायत्री वा इदं सर्वं भूतम्' (छा. ३. १२. १) इत्यारभ्य 'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु' (छा. ३. १३. ७) इत्यन्तस्य पूर्वसन्दर्भस्य 'सर्वं खल्विदं ब्रह्म' (छा. ३. १४. १) इत्याद्युत्तरसन्दर्भस्य च ब्रह्मप्राधान्येऽपि मध्ये 'इदं वाव तत् यदिदमस्मिन्नन्तः पुरुषे ज्योतिः'(छा.३.१३.७)इत्यादिवाक्ये कौक्षेयज्योतिष उपास्यस्य प्राधान्यम्, तत्र ब्रह्मणो दृष्टिविशेषणतयोपसर्जनत्वं च दृष्टम् । तद्वदिहापि पूर्वापरसन्दर्भयोर्ब्रह्मप्रधान्येऽप्यानन्दमयवाक्ये ब्रह्मणः पुच्छभावेन उपसर्जनत्वमस्तु; क्वचिद्वाक्ये उपसर्जनत्वस्य अन्यत्र प्राधान्याविरोधित्वात् इत्याशंक्य, गायत्रीवाक्ये प्रकृतस्य सगुणब्रह्मणः कौक्षेयज्योतीरूपोपास्यं प्रति विशेषणत्वसम्भवेऽपि 'ब्रह्मविदाप्नोति परम्' (तै. २. १) इत्यस्मिन् प्रकरणे प्रतिपाद्यस्य ज्ञेयस्य शुद्धब्रह्मणः उपास्यमानन्दमयं प्रति विशेषणत्वं न सम्भवतीति विशेषमभिप्रेत्याह —

## भेदव्यपदेशाच्च । १७ ।

भेदविरोधी अपदेशो भेदव्यपदेशः भेदप्रपञ्चमिथ्यात्वपर्यवसायी 'यतो वाचो निवर्तन्ते अप्राप्य

मनसा सह आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' (तै. २. ४. १) इत्युपदेशः, तद्विरोधात् प्रियाद्यवयवयुक्तस्सविशेष आनन्दमय उपास्यो न प्रतिपाद्यः; निर्विशेषस्य मुमुक्षुज्ञेयस्य कल्पितपुच्छभावेन उपास्यं सविशेषं प्रति विशेषणत्वायोगात्, किंतु ज्ञेयं निर्विशेषं पुच्छब्रह्मैव प्रतिपाद्यम् ।

ननु 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्याद्युपदेशः कथं प्रपञ्चमिथ्यात्वपर्यवसायी ।

उच्यते—इदं हि प्रकरणमध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मस्वरूपनिष्कर्षार्थम् । तथाहि—उपक्रमे तावत् 'ब्रह्मविदाप्नोति परम् (तै. २. १) इति ब्रह्मविदः तद्भावापत्तिलक्षणा मुक्तिरुक्ता, न तु तत्प्राप्तिलक्षणा । बृहदारण्यके 'स यदाह असतो मा सद्गमयेति, मृत्युर्वा असत् सदमृतं, मृत्योर्माऽमृतं गमय, अमृतं मा कुर्वित्येवैतदाह' (बृ.१.३.२८) इति सच्छब्दोक्तामृतावाप्त्यर्थकश्रुतेः अमृताभेदाभिव्यक्त्यर्थतया व्याख्यातत्वेन मुक्तिफलप्रतिपादकेषु वाक्येषु ब्रह्मावाप्तिश्रवणानां तद्भावापत्तिपरत्वावगमात् । ततश्च किं तत् ब्रह्म कीदृशं तद्वेदनं कीदृशी च तद्भावापत्तेः पुरुषार्थरूपता इत्याकाङ्क्षायां, 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै. २. १. १ ) इति स्वरूपलक्षणेन ब्रह्मस्वरूपं निर्द्धार्य, 'यो वेद निहितं गुहायाम्' (तै. २. १. १) इति तत् ब्रह्म जीवस्वरूपेण हृदयगुहायां निवेशितं जीवाभिन्नं यो वेद इति तद्वेदनं जीवाभेदविषयमिति प्रदर्श्य, तत्फलभूतायास्तद्भावापत्तेर्निरतिशयपुरुषार्थरूपत्वं 'सोऽश्नुते' (तै. २. १. १) इत्यादिना प्रतिपादितम् । तत्र 'ब्रह्मणा' इति इत्थम्भूतलक्षणे तृतीया । तथाच ब्रह्मणा रूपेण सर्वान् कामान् सह—युगपत् अश्नुते । सर्वेषामैहिकामुष्मिकाणां काम्यानां क्रमिकेणोपभोगेन यावत्सुखमभिव्यंग्यं तत् सर्वं ब्रह्मसुखाम्बुधिकणिकायमानामिति धियाऽभिव्यक्तं निरतिशयं ब्रह्मसुखाम्बुधिमनुभवतीत्यर्थः, न तु ब्रह्मणा सह सर्वान्विषयभोगानश्नुते इत्यर्थः । ब्रह्मणा सहेत्यन्वयस्य 'सोऽश्नुते सर्वान्कामान् सह' (तै. २. १. १) इत्यत्राध्ययनसंप्रदायप्राप्तवाक्यविच्छेदाननुगुणत्वात् । सहार्थतृतीयया ब्रह्मणः कर्मसाहित्ये कर्तृसाहित्ये वा विवक्षिते भोग्यविषयापेक्षया भोक्तृजीवापेक्षया वा अप्राधान्यप्रसङ्गेन ब्रह्मणो निरतिशयपुरुषार्थत्वस्य निरतिशयैश्वर्यस्य वा हानिप्रसङ्गाच्च । न च 'सर्वान् कामान्' इत्यस्य स्वारस्यहानिः, न ह्यस्मन्मते कामशब्दः स्रक्चन्दनादिविषयवाची, किंतु तत्सम्बन्धाभिव्यंग्यसुखवाची; तेषामेव निरुपाधिककामनाविषयत्वात् । ततश्च, त्रैकालिकानि सर्वजीवानुभाव्यानि सर्वाण्यपि सुखानि 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' (बृ. ४. ३. ३२) इति श्रुतेर्ब्रह्मानन्दसिन्धोर्बिन्दुकणिका इति ब्रह्मरूपेण स्वाभिन्नमखण्डानन्दमनुभवता सर्वाण्यपि सुखान्यनुभूयन्त एव, यथा सर्वेषु जीवेषु भूगोलकादेरेकैकं भागं पश्यत्सु सर्वदृग्विषया भागास्सर्वज्ञेनानुभूयन्त इति, न कापि स्वारस्यहानिः । प्रत्युत 'सर्वान् कामान्' इत्यस्यासङ्कोचलाभादत्रैव स्वारस्यम् । तस्मात् 'सोऽश्नुते' इत्यादेर्यथोक्त एवार्थः । अत एवोपबृंहितं ब्रह्मगीतासु—

"सोऽश्नुते सकलान् कामानक्रमेण सुरर्षभाः। विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः" इति।

ततश्च ब्रह्मणो लक्षणे आनन्त्यान्तर्गतं वस्तुपरिच्छेदराहित्यं प्रपञ्चस्य प्रतिपन्नोपाधिगतनिषेध-प्रतियोगित्वलक्षणमिथ्यात्वेनोपपादयितुं 'आत्मन आकाशः' (तै. २. १. १ इत्यादिना ब्रह्मणो जगदु-पादानत्वप्रतिपादनेन तत्र प्रपञ्चाध्यारोपः कृतः। ब्रह्मण उपादानत्वेऽपि सृष्टिनियमनादिषु निमित्तान्तर-सद्भावे वस्तुपरिच्छेदस्स्यादिति शङ्कानिरासार्थं 'सोऽकामयत' (तै. २. ६. १) इति सृष्टौ 'भीषाऽस्माद्वातः पवते' (तै. २. ८. १) इति नियमनेऽपि निमित्तत्वं दर्शितम्।

एवमारोपितस्य प्रपञ्चस्य 'यतो वाचो निवर्तन्ते' (तै. २. ४. १) इत्यत्र अपवाद उपदिश्यते। अस्य हि मन्त्रस्यायमर्थः—यथा शुक्तिकायामध्यस्तरजततादात्म्योल्लेखितया प्रवृत्तेन मनसा सह 'रजतमिदम्' इति व्यवहारः शुक्तित्वपर्यन्तमप्राप्य 'नेदं रजतम्' इति बाधे सति निवर्तते, एवं ब्रह्मण्यध्यस्तप्रपञ्चतादा-त्म्योल्लेखितया 'सन् घटः', 'सन् पटः' इत्यादिप्रकारेण प्रवृत्तेनान्तःकरणेन सह तत्र प्रवृत्ता घटपटादिशब्दा अप्यखण्डाकारपर्यन्तमप्राप्य 'अथात आदेशो नेति नेति' (बृ. २. ३. ६) इत्यादिश्रौतबाधे सति निवर्तन्ते इति।

[1]नन्वस्य मन्त्रस्य एवंभूतवाङ्मनसनिवृत्तिरर्थ इति कुतो निश्चीयते। आनन्दोत्कर्षवर्णनस्य पूर्वं 'सैषाऽऽनन्दस्य मीमांसा' (तै. २. ८. १) इत्यारभ्य प्रस्तुतत्वादानन्देयत्ताविषयवाङ्मनसनिवृत्तिरर्थः किं न स्यात्।

न स्यात्—इह हि प्रवृत्तयोर्वाङ्मनसयोर्निवृत्तिः प्रतिपाद्यते, न त्वेतयोरप्रवृत्तिरेव। 'अप्राप्य निवर्तन्ते' इति वचनात्। न च ब्रह्मानन्देयत्तापरिच्छेदविषयं लौकिकं वैदिकं वा वचः प्रवृत्तमस्ति, यस्य अर्द्धपथे निवृत्तिरुच्येत। यत्तु शतगुणोत्तरत्वप्रतिपादकं वचः तत् प्रवृत्तमेवेति न तस्य कदाऽपि निवृत्तिः। न च 'घटस्सन्' इत्यादिव्यवहारोऽपि यः प्रवृत्तः न तस्य निवृत्तिरस्तीति समानमिति शंक्यम्। प्रवृत्तव्यक्तिविशेषाणां निवृत्त्यभावेऽपि आसंसारमावर्तमानस्य व्यवहारप्रवाहस्य श्रौतबाधे सति निवृत्ति-

---

१. 'यतो वाचो निवर्तन्ते' इत्यादेः आनन्दमयब्रह्मवाद्यभिप्रेतं व्याख्यानं आशङ्क्य निराकरोति—नन्वित्यादिना।

सम्भवात् । किञ्च 'वाचः' इत्यस्य आनन्देयत्ताविषयवाङ्मात्रार्थत्वे अतिसङ्कुचितवृत्तित्वं स्यात् । तदपि ब्रह्मणि द्वैतवस्तुमुखेन प्रवृत्ता यावत्यो वाचः तावद्विषयत्वेनासङ्कोचसम्भवात् न युक्तम् ।

तस्मात् 'यतो वाचः' इति मन्त्रस्य यथोक्त एवार्थ इति तद्विरोधान्नानन्दमयः प्रतिपाद्यः ।

सूत्रे चकारः मुमुक्षुज्ञेयब्रह्मोपक्रमविरोधसमुच्चयार्थः।

ननु 'भेदव्यपदेशात्' इति सूत्रस्य भेदविरुद्धार्थप्रतिपादनादित्यर्थकल्पनमयुक्तम्; व्यपदेशशब्दस्य तादृशार्थे प्रयोगाभावात् ।

उच्यते—पूर्वतन्त्रे 'तद्व्यपदेशं च' (जै. सू. १. ४. ५) इति सूत्रे व्यपदेशशब्दस्यैव तादृशेऽर्थे प्रयोगो दृष्टः । तत्र हि तच्छब्दो विधेयत्वाभिमतगुणपरः; 'यस्मिन् गुणोपदेश' (जै. सू. १. ४. ३) इति चित्राधिकरणे प्रकृतत्वात् 'तत्प्रख्यं चान्यशास्त्रम्' (जै. सू. १. ४.४) इति पूर्वाधिकरणे परामृष्टत्वाच्च । तद्व्यपदेशशब्दस्य च विधेयत्वाभिमतगुणत्वविरोधिसादृश्यप्रतिपादनपरत्वं 'यथा वै श्येनो निपत्यादत्ते' इत्यादिविषयवाक्यानुसारेण वक्तव्यम् । तच्च व्युपसर्गेणैव लभ्यम् । तथैव च समर्थितं न्यायसुधादिषु । । १. १. १७ ।

ननु भृगुवल्ल्यां अन्नप्राणमनोविज्ञानक्रमेण पञ्चमपर्यायाम्नातस्यानन्दस्य प्राधान्यदर्शनात् आनन्दवल्ल्या-मप्यन्नमयादिक्रमेण पञ्चमपर्यायाम्नातस्यानन्दमयस्य प्राधान्येन प्रतिपाद्यत्वं स्थानसाम्यादनुमीयते । न च 'ब्रह्म-विदाप्नोति परम्' ( तै. २. १. १. ) इति मुमुक्षुज्ञेयब्रह्मोपक्रमस्य 'यतो वाचः' ( तै. २. ४. १) इति निर्विशेषोपसंहारस्य च विरोधः । ताभ्यां प्रकरणस्य शुद्धब्रह्मपरत्वेऽपि मध्ये कल्पितपुच्छभावसविशेष-ब्रह्मोपसर्जनकस्योपास्यस्यानन्दमयस्य प्रतिपादनसम्भवात् । भूमविद्यायां 'तरति शोकमात्मवित्' (छा. ७. १. ३.) इति मुमुक्षुज्ञेयब्रह्मोपक्रमेऽपि 'यत्र नान्यत्पश्यति' (छा. ७. २४. १) इति निर्विशेषो-पसंहारेऽपि मध्ये सगुणब्रह्मदृष्टिविशेषितनामाद्युपास्यस्य प्रतिपादनदर्शनात् इत्याशंक्याह —

**कामाच्च नानुमानापेक्षा । १८ ।**

काम्यत इति कामः भृगुवल्ल्याम्नात आनन्दः । तद्दृष्टान्तमवलम्ब्यानन्दमयस्य प्राधान्यानुमानेऽपि प्रत्याशा न कार्या । तत्र श्रुत्यैव अनन्दस्य उपक्रान्तब्रह्मरूपतायाः 'आनन्दो ब्रह्मेति व्यजानात्' (तै. ३. ६)

इति साक्षात् , 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते' (तै. ३. ६) इति लक्षणमुखेन च पर्यवसान-प्रतिपादनात्, तदनन्तरमन्यस्य प्रतिपादनाभावात् । इह तु आनन्दमयप्रतिपादनानन्तरं ब्रह्मप्रतिपादनात् तत्रैव पूर्वोत्तरसन्दर्भसमन्वय इति वैषम्यसद्भावात् । भूमविद्यायां 'स यो नाम ब्रह्मेत्युपास्ते' (छा. १. ६. ५) इत्यादिस्फुटतरोपासनाविधिसत्त्वेन निर्विशेषप्रकरणमध्ये उपास्यप्रतिपादनाभ्युपगमेऽपि अत्र उपासनाविध्यश्रवणेन अत्र तदभ्युपगमायोगात् । सूत्रगतेन चकारेण अन्नमयादिभ्यः प्राणमयादीनामिव आनन्दमयादान्तरत्वेन ब्रह्मणोऽनुपदेशमवलम्ब्यापि आनन्दमयस्य प्राधान्यानुमाने प्रत्याशा न कार्या इति समुच्चीयते । भूमविद्यायां नामादिभ्यो वागादीनामिव प्राणात् सत्यस्य भूयस्त्वेनानुपदेशेऽपि भूयस्त्वसिद्धिवत् आनन्दमयादान्तरत्वेन पुच्छब्रह्मणोऽनुपदेशेऽपि सामर्थ्यात्तदान्तरत्वसिद्ध्या तस्यैव प्राधान्यात् । स्पष्टयिष्यते चैतदग्रे[1] । यद्यपि सूत्रे 'कामात्' इति स्थाने स्पष्टार्थं 'आनन्दात्' इति वक्तुमुचितम्, तथाऽप्यनेनैव सूत्रेण आनन्दमयाधारत्वेन निर्दिष्टं पुच्छब्रह्म आनुमानिकं प्रधानमिति सांख्येन प्रत्याशा न कार्या; 'सोऽकामयत' (तै. २. ६. १) इति श्रुतात् कामात् आनन्दरूपत्वात् प्रशासितृत्वाच्चेति पूर्वाधिकरणोपात्तगतिसामान्यप्रपञ्चनार्थमर्थान्तरमपि क्रोडीकर्तुं 'कामात्' इत्युक्तम् । १. १. १८ ।

स्यादेतत्— निर्विशेषप्रकरणमध्येऽपि सविशेषब्रह्मोपसर्जनकान्योपासनविधाने भूमविद्यान्यायेन सम्भाविते सति आनन्दमयवाक्ये विध्यश्रवणेऽप्यपूर्वत्वात् 'इदं वाव तज्ज्योतिः' (छा. ३. १३. ७) इत्यादाविव उपासनाविधिकल्पनमुपपद्यत इत्यानन्दमयवाक्यं तत्प्रधानमस्त्वित्याशंक्याह —

**अस्मिन्नस्य च तद्योगं शास्ति । १९ ।**

अस्मिन्नेव प्रकरणे 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवति' (तै. २. ७) इति शास्त्रं 'रसो वै सः' इति पुच्छब्रह्मणो निरतिशयानन्दरूपत्वं प्रतिज्ञाय तत्र हेतुत्वेन 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति (बृ. ४. ३. ३२) इति श्रुत्यन्तरसिद्धं, आनन्दमयः तत्तद्विषयानुभवजन्यसुखवृत्तिषु प्रतिबिम्बितं ब्रह्मानन्दलेशं लब्ध्वा निर्वृतो भवतीत्यमुमर्थं शास्ति, अतस्तत्रानन्दमयपरामर्शस्य निरतिशयानन्द-रूपपुच्छब्रह्मप्रतिपत्तिशेषत्वं क्लृप्तमित्यानन्दमयवाक्येऽपि तदुपन्यासस्य पुच्छब्रह्मप्रतिपत्तिशेषत्वमेव युक्तं न

१. अत्रैव अधिकरणे श्रुतप्रकाशिकोक्तानां आनन्दमयब्रह्मत्वसाधकयुक्तीनां निराकरणावसरे । (पुट ५०)

तूपासनाविधानार्थत्वम् । न च 'रसो वै सः' ( तै. २. ७. ) इत्यादौ तदिदंपदयोः पुच्छब्रह्मानन्दमयपरत्वे विवादः कार्यः । तयोर्ब्रह्मजीवपरत्वे पुच्छब्रह्मानन्दमययोर्ब्रह्मजीवरूपत्वे च निर्विवादे तत्र विवादस्यानवकाशपराहतत्वात् । सूत्रे 'अस्मिन्नस्य' इति सर्वनाम्नी पुच्छब्रह्मानन्दमयपरे; तयोरानन्दमयसूत्रे आनन्दमयपदेन लक्षणामुख्यवृत्तिभ्यामुपस्थापितत्वात् । 'तद्योगम्' इत्यत्र तच्छब्दः पूर्वसूत्रगतकामशब्दोक्तानन्दपरामर्शी । ततश्च अस्मिन् पुच्छब्रह्मणि सत्येव अस्य आनन्दमयस्यानन्दयोगं 'रसं ह्येवायम्' ( तै. २. ७ ) इत्यादि शास्त्रं शास्तीति सूत्राक्षरार्थः । तेन अस्यार्थस्य 'रसो वै सः' इति प्रतिज्ञायां हेतुत्वेन शास्त्रोक्तत्वात् तस्मिन् शास्त्रे आनन्दमयपरामर्शस्य पुच्छब्रह्मप्रतिपत्तिशेषत्वं क्रममित्यानन्दमयवाक्येऽपि तथैव सिद्ध्यतीति फलितार्थः । चकारेण अन्यत्र क्रममनपेक्ष्य 'सम्भवत्येकवाक्यत्वे' इति न्यायेनापि आनन्दमयवाक्ये तदुपन्यासस्य ब्रह्मप्रतिपत्तिशेषत्वं सिध्यतीत्ययमर्थस्समुच्चीयते । १. १. १९ ।

ननु यथावृत्ति आनन्दमयब्रह्मवादो भाष्यकृता किमिति नाङ्गीकृत इति चेत्, अत्राहुः—आनन्दमयो ब्रह्मेति न युज्यते । अन्नमयादिगतविकारार्थमयट्प्रायपठितेन मयटा तस्य विकारत्वावगमात्, शिरःपक्षाद्यवयवयोगात्, पुच्छत्वेन निर्दिष्टाद्ब्रह्मणस्तस्य व्यतिरेकप्रतीतेः, अन्नमयादिपर्यायेषु प्रधानानां तत्तत्पर्यायगतश्लोकविषयत्वदर्शनेन स्वपर्यायगतश्लोकाविषयस्य तस्याप्राधान्यात्, 'तस्यैष एव शारीर आत्मा यः पूर्वस्य' ( तै. २. ६ ) इति अन्नमयादीनामिव तस्याप्यात्मान्तरश्रवणात्, 'अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया मे शुध्यन्ताम् ( तै. ४. ८४. १५ ) इति शोध्यत्वश्रवणाच्च इति ।

[1]अत्रापरे प्रत्यवतिष्ठन्ते—अत्र तावद्विकारत्वावगमोऽसिद्धः; विकारार्थकल्पकत्वेनाभिमतस्य प्रायपाठस्याभावात् । यद्यप्यन्नमये विकारार्थ उपक्रान्तः, तथाऽपि तावता नानन्दमयेऽपि स एवार्थ इत्यायाति;

---

१. आनन्दमयाब्रह्मवादः पुच्छब्रह्मवादश्च भाष्योक्तः श्रुतप्रकाशिकायां सोपपादनं पद्येन अनूदितः — "षष्ठ्यान्यत्वमवेदि नैनमवदत् श्लोको न चाज्ञातता ज्ञातस्यास्य तथाऽपि नावयविता तस्यान्य आत्मा श्रुतः । शोध्यत्वञ्च विकारवाचकवचः तत् ब्रह्मपुच्छं भवेत् न त्वानन्दमयः स चान्नमयवत् कोशो बहिः कथ्यते" इति । इत्थमनूदितस्य पुच्छब्रह्मवादस्य निराकरणयुक्तयः आनन्दमयब्रह्मवादसाधकयुक्तयश्च सङ्गृहीताः समनन्तरपद्येन—'पुल्लिङ्गान्तप्रधानप्रकृतपरवचोरूपणञ्चाप्यनन्यैःश्लोकाःपुच्छं न चाहुः स्वरसमपि हि नः सूत्रं अन्योऽन्तरो न । षष्ठ्यादिश्चांशभावात् निरतिशयतया रूपणात् आनुरूप्यात् पर्यायत्वात् अनन्यात्मकवचनतया पुच्छहेतुः परास्तः' इति । ताः 'अत्रोच्यते' (पुट-४६)इत्यादिना निराकर्तुं अनुवदति—अत्रापरे इत्यादिना ।

प्राणमयादिषु तत्परित्यागात् । प्राणनवृत्तिप्राचुर्येण हि पञ्चवृत्तिर्वायुः 'प्राणमयः' इति व्यपदिष्टः, न तु प्राणकार्थत्वेन । एवमन्तःकरणजीवावपि मननविज्ञानप्राचुर्येण 'मनोमयः' इति 'विज्ञानमयः' इति निर्दिष्टौ । ततश्च आनन्दमयेऽपि प्राचुर्यमेव मयडर्थः । न च—आनन्दप्राचुर्यमपि ब्रह्मणि न सम्भवति; प्राचुर्यस्य स्वसमानाधिकरणविजातीयाल्पत्वप्रतियोगिकतायाः 'ब्राह्मणप्रचुरो ग्रामः' इत्यादौ दृष्टत्वेन आनन्दप्राचुर्यार्थस्वाभाव्यादीषद्दुःखसम्भिन्नत्वावश्यंभावादिति वाच्यम् । 'प्रचुरप्रकाशस्सविता' इत्यादौ व्यधिकरणसजातीयाल्पत्वप्रतियोगिकताया अपि दृष्टत्वेन ब्रह्मणि जीवगतानन्दाल्पत्वमपेक्ष्य तत्प्राचुर्यसम्भवात् । इह च वाक्यशेषे 'सैषाऽऽनन्दस्य मीमांसा' इत्यारभ्य व्यधिकरणजीवानन्दाल्पत्वमपेक्ष्यैव ब्रह्मानन्दस्य प्राचुर्यप्रदर्शनात् ।

शिरःपक्षादिरूपेण कल्पितमवयवित्वं तु न ब्रह्मत्वविरोधि । अन्यथा ब्रह्मणोऽवयवित्ववदवयवत्वमपि नास्तीति पुच्छब्रह्मणोऽप्यब्रह्मत्वप्रसङ्गात् ।

आनन्दमयस्य पुच्छं ब्रह्म इति निर्देशोऽपि नानन्दमयस्य ब्रह्मत्वविरोधी । अन्नमयस्य स्वस्मादनतिरिक्तैस्स्वावयवैरेव 'तस्येदमेव शिरः'(तै. २. १. १) इत्यादिना शिरःपक्षपुच्छादिमत्त्वकल्पनादर्शनात् । अनतिरिक्तैः पक्षपुच्छादिमत्त्वकल्पनाप्रायपाठानुगुण्येन ब्रह्मानन्दमययोरभिन्नयोरेव पुच्छतद्वद्भावनिर्देशे तात्पर्यकल्पनस्योचिततया ततो व्यतिरेकाप्रतीतेः ।

आनन्दमयस्य स्वपर्यायगतश्लोकाविषयत्वमप्यसिद्धम्; अन्नमयादिपर्यायश्लोकानां पुच्छमात्रविषयत्वाभावेनास्यापि तद्वदेव पुच्छवद्विषयत्वौचित्यात् । न च पुच्छवति प्रयुक्तस्य आनन्दमयपदस्य श्लोके श्रवणाभावात् पुच्छे प्रयुक्तस्य ब्रह्मशब्दस्यैव श्रवणात् पुच्छविषय एवासौ न पुच्छवद्विषय इति शंक्यम् । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै. २. १. १) 'तस्माद्वा एतस्मादात्मनः' (तै. २. १. १) इत्युपक्रान्तस्यैवानन्दमयवाक्ये प्रतिपादनेन ब्रह्मात्मानन्दमयशब्दानामैकार्थ्यस्यावधृततया तेष्वन्यतमनिर्देशमात्रेण श्लोकस्यानन्दमयविषयत्वसिद्धेः । न च प्रियमोदादिमत्तया प्रसिद्धे आनन्दमये श्लोकदर्शिता सत्त्वासत्त्वशङ्का नान्वेतीति वाच्यम् । जीवस्य तथा लोके प्रसिद्धत्वेऽपि ब्रह्मणोऽप्रसिद्धत्वात् ।

'तस्यैष एव' इत्यादावानन्दमयस्यात्मान्तरश्रवणमप्यसिद्धम्; तस्य पूर्वस्य विज्ञानमयस्य एष एव शारीर आत्मा य एष आनन्दमयः इत्यर्थाङ्गीकारात् । तस्य आनन्दमयस्य एष एव शारीर आत्मा यः पूर्वस्य विज्ञानमयस्य इत्यर्थाङ्गीकारेऽपि विज्ञानमयस्य य आकाशादिस्रष्टा वक्ष्यमाणन्यायसिद्धपरमात्मभावः

आनन्दमयः शारीर आत्मा स एव स्वस्यापि स्वयमेवात्मेति पर्यवसानेन 'पतिं विश्वस्यात्मेश्वरम्' (तै. ४. २९. ५) इत्यात्मेश्वरत्वोक्त्या ईश्वरान्तरस्येवात्मान्तरस्य निराकृतेरेव सिद्धेः ।

शोध्यत्वं न ब्रह्मत्वविरोधि; सर्वत्र शुद्धिस्तत्तदर्थानुगुणेति ब्रह्मण्यप्यनादिभवसञ्चितानेकजीवापराधकलुषिते मुक्त्यर्थं प्रसाद्यत्वरूपस्य शोध्यत्वस्य सम्भवात् ।

तस्मात् पुच्छब्रह्मवाद्युक्तयुक्तीनामसाधकत्वात् पुच्छवदानन्दमयोऽपि ब्रह्मैव । प्रकरणस्य स्वस्मादनतिरिक्तैस्स्वावयवैः पक्षपुच्छादिरूपणपरत्वेन तस्य पुच्छब्रह्माभेदप्रतीतेः, प्रकरणगतश्लोकानां पुच्छवद्विषयत्वेन तत्रैव श्लोकगतस्य ब्रह्मशब्दाभ्यासस्य सत्त्वासत्त्वशङ्कालिङ्गस्य च पर्यवसानात्, 'सत्यं ज्ञानम्' इति प्रकृतं ब्रह्म 'तस्माद्वा एतस्मादात्मनः' इत्यात्मशब्देन निर्दिश्य तस्य आकाशादिकारणत्वप्रतिपादनानन्तरं सर्वान्तरत्वेन तस्यात्मत्वविवरणार्थं प्रवृत्तस्य सन्दर्भस्य तत्रैव परिसमापनेन तदनन्तरं 'तस्माद्वा एतस्मादानन्दमयात् अन्योऽन्तर आत्मा ब्रह्म' इति तदान्तरस्य ब्रह्मणो निरूपणाभावात्, 'सोऽकामयत' इत्यनन्तरवाक्यगतेन स इति पुल्लिङ्गान्तेन अव्यवहितप्रधानप्रकृतार्थपरामर्शिना परामृष्टुं योग्यत्वात् , भृगुवल्ल्यां 'एतं विज्ञानमयमात्मानमुपसंक्रम्य, एतमानन्दमयमात्मानमुपसंक्रम्य' (तै. ३. १०) इत्यत्र आनन्दमयशब्दस्य 'विज्ञानं ब्रह्मेति व्यजानात्' (तै. ३. ५) 'आनन्दो ब्रह्मेति व्यजानात्' (तै ३. ६) इति तत्रत्यसंप्रतिपन्नब्रह्मपरभावेनानन्दशब्देन सह स्थानसाम्येन ब्रह्मपरत्वनिश्चयात्, 'आनन्दमयोऽभ्यासात्' इति सूत्रस्वारस्याच्च इति ।

अत्रोच्यते—यत्तावदुक्तमानन्दमयस्य विकारत्वावगतिर्नास्तीति—तन्न । विकारार्थमयट्प्रायपाठेन तत्रापि मयटो विकारार्थत्वात् । तथाहि—'स वा एष पुरुषोऽन्नरसमयः' ( तै.२. १ ) इति न देह एवोच्यते; तस्य अन्नपरिणामत्ववाचिना अन्नरसशब्देन अन्नविकारत्ववाचिना अन्नमयशब्देन चोक्तिसम्भवे 'अन्नरसमयः' इत्यस्य वैयर्थ्यात्, पुरुषशब्दस्य च चेतनवाचित्वात्, 'अन्नात् पुरुषः' (तै. २. १) इत्यव्यवहितपुरुषपरामर्शस्य 'एष' इत्यनेन सिद्धतया 'स' इत्यस्य व्यवहिताकाशादिकारणात्मपरामर्शार्थत्वाच्च । किंतु, सः प्रागाकाशादिकारणत्वेन निरूपितः एषः अनुपदमन्नकार्यत्वेन निरूपितश्च पुरुषः अन्नरसमयः अन्नरसं देहमनुप्रविश्य तदवच्छिन्नतया तत्कार्य इत्युच्यते । तथा च 'अन्नात् पुरुषः' इति निर्दिष्टं आकाशादिकारणरूपस्य पुरुषस्यान्नकार्यत्वं अन्नकार्यदेहावच्छेदलब्धपरिच्छिन्नाकारतयेति विवृतं भवति । एवं प्राणमयो मनोमयो विज्ञानमयश्च प्राणमनोबुद्ध्यवच्छिन्नतया तद्विकारभूतो जीव एवेति युक्तम् । न च स्वतः कार्ये एव

विकारार्थप्रत्ययः न त्वौपाधिककार्यताभाजि इति व्युत्पत्तिकल्पना प्रमाणवती । किञ्च, मयटः प्राचुर्यार्थत्वं वदतस्तवापि मते जीव एव आनन्दमय इति सिद्ध्यति । आनन्दप्राचुर्यस्य प्रतियोगिदुःखाल्पत्वगर्भत्वात् । प्राचुर्यस्य विशेषणत्वे व्यधिकरणसजातीयाल्पत्वस्य निरूपकत्वेऽपि विशेष्यत्वे समानाधिकरणविजातीयाल्पत्वमेव निरूपकं इति हि व्युत्पत्तिसिद्धम् । अत एव 'प्रचुरब्राह्मणो ग्रामः' इत्यत्र प्राचुर्यस्य ग्रामान्तरगतब्राह्मणाल्पत्वापेक्षत्वेऽपि 'ब्राह्मणप्रचुरो ग्रामः' इत्यत्र तद्ग्रामगतशूद्राल्पत्वापेक्षमेव प्राचुर्यं प्रतीयते । न च—'प्रचुरप्रकाशस्सविता' इतिवत् 'प्रकाशप्रचुरस्सविता' इति प्रयोगेऽपि नक्षत्रादिगतप्रकाशाल्पत्वापेक्षमेव प्राचुर्यमवगम्यते, न तु सवितृगततमोऽल्पत्वापेक्षम्; तत्र तमसो बाधितत्वात् इति-शंक्यम् । तत्रापि घनतुहिनसैंहिकेयाच्छादनारोपिततमोऽल्पत्वमपेक्ष्यैव घनाद्यपसरणसमये तथा प्रयोगात् । तदभावे तथा व्युत्पन्नप्रयोगाभावात् । ननु 'बलवत्तरश्चैत्रः' इत्यादौ तरबाद्यर्थस्य प्राचुर्यस्य विशेष्यत्वेऽपि मैत्रादिगतबलाद्यल्पताऽपेक्षत्वं दृष्टमिति चेत् । न । तत्र 'द्विवचनविभज्योपपदे तरबीयसुनौ (पा. सू. ५. ३. ५७) इति द्विवचनादिविशेषणवशादातिशायनिकप्रत्ययेषु व्युत्पत्त्यन्तरकल्पनेऽपि मयटि तत्कल्पकाभावेन औत्सर्गिकव्युत्पत्तिलङ्घनायोगात् । न च 'प्रज्ञानघन एवानन्दमयः' (माण्डू. ५) इति ब्रह्मण्यानन्दमयशब्दप्रयोगदर्शनात् मयट्यपि व्युत्पत्त्यन्तरं कल्प्यमिति वाच्यम् । तस्य 'सुषुप्तस्थान एकीभूतः' (माण्डू ५) इति विशेषणानुसारेण प्राज्ञशब्दितसुषुप्तजीवविषयत्वात् । वाक्यशेषे 'एष सर्वेश्वर एष सर्वज्ञः' (माण्डू. ६) इत्यादिपरमेश्वरधर्मकथनस्य आध्यात्मिकाधिदैविकतृतीयपादरूपप्राज्ञेश्वरैक्याभिप्रायत्वात् । अपि च अन्यत्र व्यधिकरणसजातीयाल्पत्वमपेक्ष्य मयटः प्रयोगसम्भवेऽपि प्रकृते त्वदभिमतप्रायपाठानुसारेण समानाधिकरणविजातीयाल्पत्वमपेक्ष्यैव तत्प्रयोगो निर्वाह्यः । तथाहि—प्राणमये तावत् पञ्चवृत्तिवायुगतमेव व्यानादिवृत्त्यल्पत्वमपेक्ष्य तत्र प्राणनवृत्तिप्राचुर्यं न तु तदन्यगतप्राणनवृत्त्यल्पत्वमपेक्ष्य । ततोऽन्यत्र प्राणनवृत्तीनामभावात् । एवं मनोमयेऽपि करणभावेन मननवृत्तिसम्बन्धिनोऽपि मनसः तत्प्राचुर्यं तद्गतवृत्त्यन्तराल्पत्वमपेक्ष्यैव । विज्ञानमयेऽपि जीवे ज्ञानवृत्तिप्राचुर्यं तद्गतज्ञानानात्मकसंस्कारादिरूपवृत्त्यन्तराल्पत्वमपेक्ष्यैव पर्यवस्यति । किं बहुना, एवं त्रिषु प्राचुर्यार्थमुपगतवतोऽन्नरसमयेऽपि देहे अवयवान्तराल्पत्वमपेक्ष्यान्नपरिणामरूपावयवप्राचुर्यमेव मयडर्थ इति वैरूप्यपरिहारार्थं बलादायाति । एवञ्च आनन्दमयेऽपि समानाधिकरणदुःखाल्पत्वापेक्षमानन्दप्राचुर्यं मयडर्थ इत्यापतितं दुःखमिश्रत्वं केन वार्यते । न च—तथाऽपि समानाधिकरणयत्किञ्चिद्विजातीयाल्पत्वमपेक्ष्यानन्दप्राचुर्यनिर्वाहसम्भवेऽपि कुतो दुःखमिश्रत्वापादनमिति वाच्यम् । सुखप्राचुर्यस्य तद्विरोधिदुःखाल्पताऽपेक्षायामेव प्रथमं बुद्ध्यवतरणेन तदुल्लङ्घनायोगात् । न चैवं स आनन्दमयो जीवोऽपि न स्यात्

तत्र दुःखाल्पत्वस्य सुखबाहुल्यस्य चाभावादिति शंक्यम्। जीवस्य मुक्तौ भोग्यात् निरतिशयोत्कर्षादुत्तराव-धिरहितात् 'श्रोत्रियस्य चाकामहतस्य' (तै. २. ८. १) इति श्रुतिदर्शितात् सुखात् सर्वमपि सांसारिकं दुःखं अल्पमिति सम्भवात्। नन्वानन्दमये मयट् प्राचुर्यार्थोऽपि माभूत् स्वार्थिकोऽस्त्विति चेत्, न। प्रायपाठप्राप्तेऽतिरिक्तार्थे सम्भवति स्वार्थिकत्वेन वैयर्थ्यकल्पनाऽयोगात्। तस्मात् आनन्दमयस्य मयटा जीवत्वावगतिस्तावन्निष्प्रत्यूहा।

यदुक्तं ब्रह्मणोऽवयवित्वं अवयवत्ववत् कल्पनया सम्भवतीति—तन्न। अस्माभिः पुच्छपदस्याधारलक्ष-कत्वस्य उक्तनयाऽवयवत्वकल्पनानङ्गीकारेण दृष्टान्तासम्प्रतिपत्तेः। अध्यारोपापवादाभ्यां निष्प्रपञ्चब्रह्मप्रतिपत्ति-प्रकरणे प्रियमोदादिरूपशिरःपक्षाद्यवयवकल्पनाया विरोधेनानुपयुक्तत्वेन च अयुक्तत्वाच्च। प्रकरणस्य निष्प्रपञ्चपरत्वं च 'भेदव्यपदेशाच्च' इति सूत्रविवरणे समर्थितम्।

स्यादेतत्—'यतो वाचो निवर्तन्ते' इति मन्त्रो ब्रह्मणि द्वैतवस्तुमुखेन प्रवृत्तानां लौकिकीनां वैदिकीनाञ्च सर्वासां वाचां निवृत्तिं वदति इत्यमुमर्थमवलम्ब्य हि तत्र तत्समर्थनं कृतम्, न तद्युक्तम्; एकस्य 'वाचः' इत्यस्य 'निवर्तन्ते' इत्यस्य च स्वारस्यमनुरुध्य बहूनां सप्रपञ्चवाक्यानां स्वार्थे प्रामाण्यात् प्रच्यावनस्य न्यायविरुद्धत्वात् इति चेत्—

उच्यते—विज्ञानमयं न ब्रह्मेति प्रतिक्षिप्य आनन्दमयं ब्रह्मेति व्यवस्थापयति त्वय्यपि तुल्योऽयमाक्षेपः। तथाहि—विज्ञानमयस्य 'विज्ञानमयः' इत्येतावतैव तावत् परब्रह्मत्वं प्रतीयते। तत्र मयट्प्रत्ययस्यानन्दमयैक-रूप्याय त्वया व्यधिकरणसजातीयाल्पत्वापेक्षप्राचुर्यार्थत्वस्याभ्युपगन्तुं युक्ततया जीवादन्यस्य संकुचितज्ञानस्य अभावात् जीवगतज्ञानाल्पत्वापेक्षज्ञानप्राचुर्य एव तत्पर्यवसानात्। मन्त्रवर्णोपात्तविपश्चित्त्वप्रत्यभिज्ञानाच्च। तथा 'विज्ञानं देवास्सर्वे ब्रह्म ज्येष्ठमुपासते' (तै. २. ५. १) इत्यत्र मान्त्रवर्णिकब्रह्मशब्देन 'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ. ४. ४. १६) इति श्रुत्यन्तरसिद्धदेवोपास्यत्वप्रत्यभिज्ञानेन 'विज्ञानं ब्रह्म चेद्वेद तस्माच्चेन्न प्रमाद्यति। शरीरे पाप्मनो हित्वा सर्वान् कामान्समश्नुते' (तै. २. ५.) इति तदनन्तरश्लो-केऽपि ब्रह्मशब्देन मान्त्रवर्णिकब्रह्मविद्याफलप्रत्यभिज्ञानेन च तस्य ब्रह्मत्वं प्रतीयते। 'विज्ञानं यज्ञं तनुते' (तै. २. ५. १.) इति तु ब्रह्मण्यप्युपपद्यते; यज्ञादेर्हेतुकर्तरि तस्मिन्नपि स्वव्यापारद्वारा प्रयोज्यव्यापार-कर्तृत्वसत्त्वात्। हेतुकर्तृत्वविवक्षायां णिजन्तप्रयोगानियमेऽपि स्वव्यापारद्वारा प्रयोज्यव्यापारकर्तृत्वविवक्षायां

अणिजन्तप्रयोगस्याविरुद्धत्वात् । साक्षाद्विलेखनमकुर्वति संविधानसम्पादनेन कर्षणप्रयोजके स्वामिन्यपि 'षड्भिर्हलैः कर्षति' इति प्रयोगदर्शनात्, 'यज्ञकृद्यज्ञभृद्यज्ञी' इति ब्रह्मण्येव प्रयोगदर्शनाच्च । एवमपि विज्ञानमयस्य यदब्रह्मत्वमुच्यते तत् 'तस्माद्वा एतस्माद्विज्ञानमयात् अन्योऽन्तर आत्मा' (तै.२.५.) इति तमतिक्रम्य तदन्यस्य तदान्तरस्यात्मनः प्रतिपादनमात्रादेव । आनन्दमयत्वस्य प्रियाद्यवयवयोगस्य च विज्ञानमयेऽप्यविरोधात् । ततश्च यथा विज्ञानमयादन्यस्य तदान्तरस्य परमात्मनः प्रतिपादनदर्शनाद्विज्ञानमयपर्यायगतवाक्यजातं स्थूलारुन्धतीन्यायेन आरोपितपरमात्मभावतद्धर्मवैशिष्ट्यविषयमिति त्वयाऽभ्युपगम्यते एवं प्राणमयादिपर्यायगतात्मत्वप्रतिपादनमपि, तथा 'यतो वाचो निवर्तन्ते' (तै. २. ४. १) इत्यपवाददर्शनात् आरोपितप्रपञ्चवैशिष्ट्यविषयं सप्रपञ्चवाक्यजातमिति कुतोऽभ्युपगन्तुं न युज्यते । ननु युक्तं 'विज्ञानमयादन्योऽन्तर आत्मा' (तै. २. ५. १) इत्येतावताऽपि विज्ञानमयविषयवाक्यजातस्यारोपितविषयत्वोपपादनं, 'तस्माद्वा एतस्मात्' इत्यत्रोपक्रान्तमात्मत्वं सर्वान्तरत्वेनोपपादयितुं प्रवृत्ते 'स वा एष पुरुषोऽन्नरसमयः' (तै. २. १. १) इत्येतस्मिन् प्रकरणे विज्ञानमयादान्तरत्वस्यैव सर्वान्तरत्वरूपत्वेन तस्य उपक्रान्तात्मत्वोपपादकतया तात्पर्यवत्त्वेन बलवत्त्वात्, अन्यथा पदमात्रेण चरमपठितेन प्रथमपठितानेकवाक्यान्यथाभावापादनाऽयोगात् इति चेत्; तर्हि अस्मन्मतेऽपि 'यतो वाचो निवर्तन्ते' इत्यस्य परमोपक्रमगतानन्तत्वोपपादनार्थत्वेन तात्पर्यवत्त्वं समानमिति पश्य । 'यतो वाच' इत्यस्य स्वप्रकरणगतेन 'अदृश्येऽनात्म्येऽनिरुक्ते' (तै.२.७.१) इति विशेषणेन प्रकरणान्तरगतैर्ब्रह्मणो निष्प्रपञ्चत्वादिप्रतिपादकैश्च उपष्टम्भोऽप्यस्तीति विशेषः । तस्मात् निर्विशेषब्रह्मप्रकरणे प्रियाद्यवयवयोगात् सविशेष आनन्दमयो न प्रतिपाद्यं ब्रह्म भवितुमर्हतीति युक्तमेव ।

यच्चोक्तम्—तस्य 'ब्रह्म पुच्छं प्रतिष्ठा' इति निर्देशेन व्यतिरेकप्रतीतिरसिद्धा; प्रकरणस्य स्वस्मादनतिरिक्तैः शिरःपक्षादिमत्त्वनिरूपणपरत्वादिति, तदयुक्तम्; शिरःप्रभृतीनां अन्नमयादिशब्दोदितचेतनातिरिक्तत्वात् । अन्नमयादिशब्दानां चेतनपर्यन्तत्वानङ्गीकारेऽपि मनोमयपक्षशिरःपुच्छानां ऋक्सामयजुरथर्वाङ्गिरसां तदतिरिक्तत्वेन अन्नमयादिष्वप्यवयवावयविभावादिकृतभेदसद्भावेन च तथा प्रकरणासिद्धेः स्वरसतः प्रतीयमानस्य व्यतिरेकस्य त्यागायोगात् ।

यत्तु—आनन्दमयस्य श्लोकाप्रतिपाद्यत्वमसिद्धम्; श्लोकानां पुच्छवद्विषयत्वनियमदर्शनात् इत्युक्तम्, तदप्ययुक्तम् । 'यतो वाचो निवर्तन्ते' इति मनोमयपर्यायश्लोकस्य ब्रह्मविषयस्य पुच्छवद्विषयत्वाभावात्, 'अप्राप्य मनसा सह' इति श्रवणात् । तत्रापि यथाकथञ्चित् पुच्छवद्विषयत्वमस्तीति चेत्, तर्हि 'असन्नेव स भवति' इत्यत्र स इत्यस्य प्रकृतानन्दमयपरत्वात् तस्यापि यथाकथंचित् पुच्छवद्विषयत्वं संपन्नमिति संतुष्यतु भवान् ।

अयुक्तं च श्लोके 'स' इति पुँल्लिङ्गेन प्रकृतपरामर्शिना तत्पदेन अवश्यं परामर्शनीयस्य आनन्दमयस्य श्लोकगतब्रह्मशब्दाभ्याससत्त्वासत्त्वशङ्कालिङ्गविषयत्वम् ।

यत्तु—'तस्यैष एव शारीर आत्मा' इत्यत्र आत्मान्तरश्रवणं नास्ति अनन्यात्मत्वपरत्वात् इत्युक्तम्, तदप्ययुक्तम्; पूर्वपर्यायस्थानामिव आनन्दमयपर्यायस्थस्यापि तस्य वाक्यस्य पुच्छब्रह्मरूपात्मान्तरपरत्वोपपत्तौ प्रक्रमविरुद्धार्थकल्पनाऽयोगात् ।

यच्च प्रसाद्यत्वरूपं शोध्यत्वं ब्रह्मणोऽपि सम्भवतीत्युक्तम्, तत्तुच्छम् । प्रागशुद्धिमतो हि शुद्धिराधेया । न च जीवापराधानुसारेण तेषु ब्रह्मणोऽप्रसादः कथमप्यशुद्धिशब्दमर्हति । तथा सति ब्रह्मणो नित्यशुद्धत्वश्रुतीनां सङ्कुचितार्थत्वप्रसङ्गात् । लोकेऽपि अपराधानुगुण्येन भृत्यादिषु राजादीनामुचितस्याप्रसादस्य अशुद्धिशब्देन व्यवहाराभावाच्च । तस्मात् पुच्छब्रह्मवादोक्तयुक्तीनां निराकरणमनुपपन्नम् ।

यस्त्वानन्दमयब्रह्मवादे युक्तिषट्कोपन्यासः तत्र अवयवानतिरेकः निगमनश्लोकानां पुच्छवत्परत्वनियमश्च प्रागेव निराकृतः ।

यत्तु 'तस्माद्वा एतस्मात्' इति शैल्या आनन्दमये परिसमापनात् स एव ब्रह्मेत्युक्तम्, तदप्ययुक्तम् । यथा 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' (छा. ७.१.३) इत्यात्मजिज्ञासया उपसेदुषे नारदाय नामादिषूत्तरोत्तरमर्थान्तरोपदेशे 'अस्ति भगवो नाम्नो भूयः' (छा ७. १. ५) इति 'वाग्वाव नाम्नो भूयसी' (छा. ७. २. १) इत्यादिप्रश्नप्रतिवचनाभ्यामेवेति शैल्याः प्राण एव समापनेऽपि, विनैव तादृशे प्रश्नप्रतिवचने प्रवृत्तस्य 'एष तु वा अतिवदति यस्सत्येनातिवदति' (छा. ७. १६. १) इत्यादेः तुशब्दश्रुत्या 'आत्मतः प्राणः' (छा. ७. २६. १) इति ततः प्राणोत्पत्तिलिङ्गेन च प्राणादर्थान्तरोपदेशपरत्वमिति तत्रैव आत्मोपदेशपर्यवसानमभ्युपगम्यते न तु प्राचीने प्राणे, एवमिहापि पूर्वोपन्यस्तप्रमाणैः प्रधानतयाऽवगते पुच्छब्रह्मण्येव उपक्रान्तोपदेशपर्यवसानस्य अभ्युपगन्तुं युक्तत्वात् । ननु भूमविद्यायां प्राणोपदेशे नामादिष्वनुक्तस्यातिवादित्वस्योक्त्या तत्पर्यन्त एवात्मोपदेश इति मत्वा शिष्ये भूयः प्रश्नमकुर्वति स्वयमेव आचार्यः ततोऽर्थान्तरं सत्यं उपचिक्षेप इति श्लिष्यते । इह तु उत्तरात्मोपदेशे दृष्टायाः 'तस्माद्वा' इत्यादिशैल्याः ब्रह्मणि परित्यागे नास्ति कारणं इति चेत्, मैवम् । अन्नमयादिपर्यायेष्विव आनन्दमयपर्यायेऽपि कचिद्वस्तुनि प्रयोक्तव्यस्य पुच्छपदस्य तदाधारे ब्रह्मणि प्रयोगे तदेव उपक्रान्तब्रह्मोपदेशात्मकं निष्पद्यत

इति पर्यायान्तरानारम्भोपपत्तेः। नन्वेवमपि सर्वान्तरत्वेनात्मत्वविवरणमुपक्रान्तं आन्तरत्वेनात्मत्वे चोपदिष्टे आनन्दमये पर्यवस्यतीति युक्तम्, न तु तथाऽनुपदिष्टे पुच्छब्रह्मणि इति चेत्। एवं तर्हि भूमविद्यायामपि 'तरति शोकमात्मवित्' (छा. ७. १. ३) इत्युपक्रान्तस्यात्मोपदेशस्य 'अथात आत्मादेशः' (छा. ७. २५. २) इत्याद्युपरिभागे एव पर्यवसानं स्यात्, 'एष तु वा अतिवदति' (छा. ७. १६.१) इत्यारभ्य अहङ्कारोपदेशपर्यन्तं आत्मप्रसङ्गरहितं प्राणोपदेशशेषं स्यात्। यदि तु तुशब्दश्रुत्या प्राणविच्छेदावगमात् सत्योपदेश एवोपक्रान्त आत्मोपदेशस्स्यादिति मतम्, तर्ह्युक्तप्रमाणैः पुच्छब्रह्मोपदेश एव आनन्दमयादप्यान्तरस्यात्मन उपदेशः स्यात् इति तुल्यम्। तस्य 'स यश्चायं पुरुषे (तै. ३.१०.४) इति जीवान्तरत्वस्य अग्रे स्फुटत्वात्। तस्मात् पुच्छब्रह्मणि 'तस्माद्वा एतस्मात्' इत्यादिरूपा पूर्वच्छाया नास्तीति नायं दोषः। किन्तु अमुख्यात्मप्रायपाठेनामुख्यत्वशङ्कावहत्वात् स एव दोषः।

यत्तु—आनन्दमय एव 'सोऽकामयत' इत्यादिसन्दर्भस्य पर्यवसानं युक्तं पुल्लिङ्गानुरोधात् इत्युक्तम्, तदप्ययुक्तम्। पुच्छब्रह्मणि अव्यवहितप्रकृतब्रह्मशब्दापेक्षया पुल्लिङ्गानुपपत्तावपि व्यवहितप्रकृतात्मशब्दापेक्षया तदुपपत्तेः। 'तस्य द्वादशशतं दक्षिणा' इत्यत्र अव्यवहितपरामर्शासम्भवे व्यवहितपरामर्शस्य दृष्टत्वात्, 'तस्यैष एव शारीर आत्मा' इति आनन्दमयादपि सन्निहितमात्मशब्दं अपेक्ष्य पुल्लिङ्गोपपत्तेश्च। न च तस्य सर्वपर्यायसाधारणत्वात् प्रधानप्रतिपाद्यपरत्वं नास्तीति वाच्यम्। साधारण्येऽपि प्रधानपरत्वानपायात्। आनन्दमयशब्दस्यासाधारण्येऽप्यात्मगतकेवलयौगिकार्थोपस्थापकतया तद्विशेष्यपरस्यात्मशब्दस्यैव सर्वपर्यायसाधारणस्य आनन्दमयवाक्येऽपि प्रधानोपस्थापकत्वाच्च।

यत्तु—भृगुवल्ल्यामानन्दमयो ब्रह्मेति निर्णीतमित्युक्तम्—तद्यधिकरणम्। तावता विप्रतिपन्नस्यानन्दमयशब्दस्य ब्रह्मपरत्वासिद्धेः। न हि 'आकाश इति होवाच' (छा.१.९.१) इत्यत्र आकाशशब्दस्य ब्रह्मपरत्वनिर्णयमात्रेण 'य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' (बृ. २. १. १७) इत्यत्रापि तस्य ब्रह्मपरत्वं सिद्ध्यति। भृगुवल्ल्याम्नात आनन्दमयोऽपि 'एतमानन्दमयमात्मानमुपसंक्रामति' इति आनन्दवल्ल्याम्नातानन्दमयश्रुतोपसंक्रमितव्यत्वलिङ्गप्रत्यभिज्ञानेन तद्वत् अब्रह्मेत्येव अङ्गीकाराच्च। भृगुवल्ल्याम्नातानन्दस्थानसाम्यादपि अन्नमयादिषु पञ्चस्वपि मयट्प्रत्ययसारूप्येण आनन्दमयस्थानसाम्यस्यैव प्रबलतया ततोऽपि भृगुवल्ल्याम्नातानन्दमयस्य अब्रह्मत्वस्यैव सिद्धेश्च। एतेन—भृगुवल्ल्याम्नातानन्दमयेन सह विषयवाक्यश्रुतानन्दमयस्य स्थानसाम्येन ब्रह्मत्वसाधनमपि निरस्तम्; प्रथमपर्यायाम्नातयोरन्नान्नमययोरिव त्वया विकारिविकारभावस्यैव अभ्युपगन्तुं युक्तत्वात्।

यत्तु आनन्दमयब्रह्मवादे सूत्रस्वारस्यमुक्तम्, तदपि न युक्तम्; पुच्छब्रह्मवाद एव सूत्राणां स्वारस्यस्य समर्थितत्वात् । तस्मादानन्दमयो जीव एवेति युक्तं पुच्छब्रह्मविषयतया अधिकरणोपवर्णनम् ।

इत्यानन्दमयाधिकरणम् । ६ ।



(७ अधिकरणम् ।)

## अन्तस्तद्धर्मोपदेशात् । २० ।

इदमामनन्ति च्छन्दोगाः 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आ प्रणखात् सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम, स एष सर्वेभ्यः पाप्मभ्य उदितः, उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद । तस्य ऋक् च साम च गेष्णौ, तस्मादुद्गीथः तस्मात्त्वेवोद्गाता, एतस्य हि गाता । स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां च इत्यधिदैवतम्' ( छा.१.६.६,७ ) इति । तथा 'अथाध्यात्मम्' इत्युपक्रम्य समामनन्ति 'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तदुक्थं तत्साम तद्यजुः तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपम्, यावमुष्य गेष्णौ तौ गेष्णौ, यन्नाम तन्नाम । स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च'' ( छा. १. ७. ५ ) 'तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः' (छा. १. ७. ६) इत्यादि ।

तत्र अन्तरादित्ये अन्तरक्षणि चोपास्यः पुरुषः किमादित्यजीवरूपस्संसारी किं वा परमेश्वरः इति संशये, प्राप्तं तावत् रूपवत्त्वादिभिस्संसारीति । न हि परमेश्वरस्य हिरण्यश्मश्रुत्वादिविशिष्टं रूपम्, 'अन्तरादित्ये' 'अन्तराक्षिणि' इति निर्दिष्टमधिकरणम्, 'ये चामुष्मात्' 'ये चैतस्मात्' इत्युक्तैश्वर्यमर्यादा च उपपद्यते । 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत्' (क. १. ३. १५) 'अचक्षुःश्रोत्रं तदपाणिपादम् (मु. १. १. ६.) 'स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि' (छा. ७. २४. १) 'एष सर्वेश्वरः' (बृ. ४. ४. २२) इत्यादिश्रुतिविरोधात् ।

स्यादेतत्—परमेश्वरस्य रूपादिमत्त्वेऽपि श्रुतयो दृश्यन्ते । यथा तलवकारिणामुपनिषदि यक्षरूपेण प्रादुर्भूतः परमेश्वरो देवैर्दृष्ट इति श्रूयते । यथा वा कौषीतकिनामुपनिषदि पर्यङ्कविद्यायामर्चिरादिमार्गगम्ये ब्रह्मलोके अमितौजसि पर्यङ्के स्थितः परमेश्वरः स्वोपासकैरर्चिरादिमार्गेण प्राप्तैस्सह

सङ्कल्पतीति श्रूयते । तेषां चोपासकानां परमेश्वरदिव्यगन्धादिप्राप्तिश्च श्रूयते । एवमन्यत्रापि तत्र तत्र परमेश्वरस्यापि रूपवत्त्वं स्थानवत्वं च बहुलमुपलभ्यते । एकदेशैश्वर्यश्रवणं तु न सर्वैश्वर्यविरोधि; सर्वेश्वरे एकदेशैश्वर्यस्यापि सत्वात्, अन्यथा सर्वेश्वरत्वस्यैवाभावप्रसङ्गात् इति चेत्—उच्यते—

रूपादिरहितं ब्रह्म रूपितं श्रुतिमौलिषु । कथं रूपादिमादिति श्रद्दधीमहि कल्पनाम् ॥
कर्मणां च फलत्वेन रूपादिकमधीमहे । कर्मलेशविहीनस्य कथं तदुपपद्यते ॥
यदि रूपादि मिथ्यैतदविरोधाय कल्प्यते । कथं तद्बोधयन्तीनां प्रामाण्यं घटते गिराम् ॥
अतोऽन्यत्रापि रूपादिप्रतिपादनमस्ति यत् । योऽयं हिरण्यगर्भादिसंसारिपरमेव तत् ॥
अथवा ब्रह्मणि परे स्तावकत्वेन केवलम् । योजनीयं यथा मोक्षे जक्षणाद्युपवर्णनम् ॥

न तावत् रूपादिरहिततया वेदान्तेषु तात्पर्येण निरूपितं यत् ब्रह्म तदेव रूपादिमदिति वचः श्रद्धेयम्; विरोधात् । सगुणं ब्रह्म रूपादिमत् निर्गुणं तद्रहितमिति चेत्, तत् किं सगुणं निर्गुणादन्यत् तदेव वा । आद्ये अपसिद्धान्तः, द्वितीये विरोधतादवस्थ्यम् । किञ्च, देवमनुष्यादिरूपं इन्द्रचन्द्रादित्यादिस्थानं ऐश्वर्यतारतम्यं च कर्मफलत्वेन श्रुतिस्मृतिपुराणेषु प्रसिद्धम् । तत् कथं कर्मलेशेनापि रहितस्योपपद्यते । अथ एतद्विरोधसमाधानाय ब्रह्मणो रूपादिकं मिथ्येति कल्प्यते, न हि तदानीमपि नीरूपत्वनिष्कर्मत्वश्रुतिविरोधोऽस्ति; शुक्तौ मिथ्यारजतसत्त्वेऽपि तदभावस्य ऐन्द्रजालिकदर्शितव्याघ्रदेहे व्याघ्रत्वप्रापककर्मानपेक्षत्वस्य च दर्शनात् इति चेत्—तर्हि 'इदं रजतम्' 'अयं व्याघ्रः' इत्यादिव्यवहाराणामिव ब्रह्मणि रूपादिबोधकश्रुतीनामप्रामाण्यप्रसङ्गः । तस्मादन्यत्रापि रूपवत्त्वादिश्रुतयो यथासम्भवं हिरण्यगर्भादिसंसारिविषयत्वेन योजनीयाः । परब्रह्मप्रकरणत्वनिर्णये तु परममुक्तिप्रकरणेषु 'स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' (छा. ८. १२. ३) 'स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा' (छा. ७. २६. २) इति च उपासनाफलश्रवणवत् केवलं स्तावकत्वेन योजनीयाः । कतिपयैश्वर्यश्रवणमात्रं यद्यपि तदधिकैश्वर्याविरोधि; सर्वभूमण्डलाधिपतावयोध्यापतिरिति व्यवहारात्, तथाऽपि 'स कलिंगाधिपतिः' 'अयमङ्गाधिपतिः' इति व्यवहारवत् 'आदित्यपुरुषः केषाञ्चिदीष्टे', 'अक्षिपुरुषः केषाञ्चित्' इति श्रवणं परस्परव्यवच्छेदकत्वात् सर्वैश्वर्यविरोध्येव । तस्मात् रूपादिमानिह संसारीति युक्तम् ॥

कथं संसारिणि सर्वपाप्मोदितत्वम्, 'तदुक्थं तद्यजुः' इत्यादिनोक्तं सार्वात्म्यं च

घटतामिति चेत्, माघटिष्ट । उपक्रमादिबहुप्रमाणबलात् पूर्वाधिकरणे पुच्छशब्दस्येव रूपादित्रितयबलात्तयोः कथंचिद्योजनं भविष्यति ।

तत्र सर्वपाप्मोदितत्वश्रवणं देवतापदप्राप्तस्यादित्यस्य कर्मानधिकारमात्रेण यद्यप्युपपादयितुमशक्यम्ः तदानीं कर्मानधिकारेण पापानामजननेऽपि अनादिभवसञ्चितानां प्रसुप्तपापानां सम्भवात्, तथाऽपि पापाल्पत्वाभिप्रायं योज्यम् । ननु मोक्षशास्त्रे पाप्मशब्दः पुण्यस्यापि सङ्ग्राहकः; मुमुक्षुं प्रति तस्याप्यनिष्टफलत्वात्, 'न सुकृतं न दुष्कृतम् (छा. ८. ४. १) इत्युपक्रम्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' (छा. ८. ४. १) इत्युभयत्रापि तत्प्रयोगाच्च । न च पुण्याल्पत्वमादित्येऽस्ति । अतो नैवं योजनं सङ्गतं इति चेत्, न । पाप्मशब्दस्यानिष्टफलत्वेन रूपेण क्वचिदजहल्लक्षणया पुण्यसाधारण्येऽपि पापमात्रे गृहीतशक्तिकस्य तस्य मोक्षशास्त्रेऽपि सर्वत्र तत्साधारण्यनियमाभावात् । अन्यथा 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' (छा. ८. ४. १) इति प्रकृतेष्वहोरात्रजरामृत्युशोकसुकृतदुष्कृतेषु अविशेषेण पाप्मशब्दस्य प्रयुक्ततया अन्यत्रापि तावत्साधारण्यप्रसङ्गात् । न चेष्टापत्तिः; तस्मिन्नेव प्रकरणे 'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकः' (छा. ८. १. ५) इति सत्यपि पाप्मशब्दे जरामृत्युशोकानां पृथक् ग्रहणदर्शनात् । अस्तु वा मोक्षशास्त्रे सर्वत्र पाप्मशब्दः पुण्यसाधारणः, तथाऽप्यत्र न दोषः; आदित्ये यमशक्रादिवत् साक्षात्कृतब्रह्मणि 'अथ तत ऊर्ध्वमुदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता' (छा. ३. ११.१) इत्येतत्कल्पाधिकारसमाप्त्यनन्तरं मोक्षमासादयिष्यमाणत्वेन श्रुते ब्रह्मसाक्षात्कारनिर्धूतसकलपुण्यपापपञ्जरे प्रारब्धमात्रानुवृत्तिमति पापवत् पुण्यस्याप्यल्पत्वात् ।

वस्तुतस्तु—सर्वपाप्मोदितत्वं सर्वेश्वर एव न सङ्गच्छते ।

सर्वपाप्मोदितत्वं हि प्राक् तदाच्छादिते भवेत् । कदाचिदपि न ब्रह्म पापाच्छादितमिष्यते ॥

अतो ब्रह्मापरोक्ष्येण ध्वस्तसर्वाघपञ्जरे । आदित्य एव तस्यापि स्वारस्यं कल्पयामहे ॥

पापापादानकमुद्गमनं हि प्राक् तदाच्छादितस्य घटते मेघमण्डलापादानकमुद्गमनमिव प्राक् मेघमण्डलाच्छादितस्य चन्द्रस्य । न च कदाचिदपि ब्रह्म पापाच्छादितमिष्यते । अतो रूपवत्त्वादेरिव सर्वपाप्मोदितत्वस्यापि प्राक् पापाच्छादनपिहितस्वरूपे ब्रह्मसाक्षात्कारनिर्धूतसकलतदाच्छादने भगवत्यादित्य एव स्वारस्यं प्रतिपद्यामहे ।

अस्तु वा परमेश्वर एव तस्य स्वारस्यम् । तथापि तदिह नादरणीयम् । कथम् ?—

नामैव किल नान्वेति कूटस्थे परमात्मनि । तत्र नामनिरुक्त्यर्थस्वारस्यं किं करिष्यति ॥
न हि यस्यार्थवादस्य विधिना येन नान्वयः । स्वारस्यं तत्स्तुतौ तस्य सदप्याद्रियते बुधैः ॥

सर्वपाप्मोदितत्वं हि न स्वातन्त्र्येण कीर्तितम्, किंतु 'तस्योदिति नाम' इति निर्दिष्टनामार्थतया निरुक्तम् । तच्च तत्रैवान्वेतुं योग्यं यत्र नामान्वेति । न च परमेश्वरे किञ्चिदपि नाम अन्वेति; 'आकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तत् ब्रह्म' (छा. ८. १४. १) इति तस्य नामरूपास्पृष्टत्व-प्रतिपादनात् । अतो यथा 'अवकाभिरग्निं विकर्षति' इति विधिशेषस्य 'आपो वै शान्ताः' इत्यर्थवादस्य 'दधि मधु घृतमापो धाना भवन्ति' इत्यादौ श्रुतेनापां विधिनाऽन्वयरहितस्य अपामेव स्तुतौ स्वारस्यं सदपि नाद्रियते, किंतु कथञ्चित् [1]अवकास्तुतौ पर्यवसानमभ्युपगम्यते, एवं नामान्वयायोग्ये परमेश्वरे नामनिरुक्त्यर्थस्वारस्यमकिञ्चित्करमिति आदित्य एव नामान्वययोग्ये तस्य पर्यवसानमभ्युपगन्तुं युक्तम् । अतः पापाल्पत्वपरमेव सर्वपाप्मोदितत्वश्रवणम्, देवत्वेन जीवन्मुक्तत्वेन च सर्वकर्मानधिकारपरं वा ।

एवमृक्सामाद्यात्मत्वश्रवणमपि आदित्य एव कथञ्चिद्योजनीयम् । तथाहि—

ऋक्सामाद्यात्मताऽस्योक्ता स्तुतये दृष्टयेऽपि वा । ऋक्सामयोर्यथाऽत्रैव पृथिव्यग्न्यादिरूपता ॥

अत्रैव प्रकरणे 'इयमेव ऋक् अग्निस्साम' इत्यादिना आधिदैवतमृचः पृथिव्यन्तरिक्षद्युनक्षत्रादित्यगतशुक्ल-भारूपत्वं साम्नश्चाग्निवाय्वादित्यचन्द्रादित्यगतातिकृष्णभारूपत्वं 'वागेव ऋक् प्राणस्साम' इत्यादिना अध्यात्म-मृचो वाक्चक्षुःश्रोत्राक्षिगतशुक्लभारूपत्वं साम्नश्च प्राणच्छायात्मनोऽक्षिगतातिकृष्णभारूपत्वमुक्तम् । तत् केवलस्तुत्यर्थमुपासार्थं वेति सङ्गमयितव्यम् । एवमेव तथाभूतऋक्सामाद्यात्मकत्वमादित्यस्य किं न सङ्गच्छते । किञ्च —

ऋक्सामाद्यैरभेदस्तु ब्रह्मण्यप्यविकारिणि । सिद्धान्ते नाभ्युपगतः कल्प्यः सूर्येऽपि सङ्गतः ॥

सत्ये निर्विकारे ब्रह्मणि मिथ्याभूतऋक्सामादिप्रपञ्चाभेदो नेष्यत एव सिद्धान्ते । प्रपञ्चस्य

---

१. अवका :—शैवालानि तानि अपां सारः मण्डमिव दध्नः । तथा च 'आपो वै शान्ताः' इति अभिजनस्तुति-द्वारेण अवकानामेव स्तुतिः ।

ब्रह्मानन्यत्वं ब्रह्मव्यतिरेकेणाभावमात्रम्, न तु तदभेद इति हि सिद्धान्तः। अतः काल्पनिकाभेदमाश्रित्यैव ब्रह्मण्यपि 'सैवर्क् तत् साम' इत्यादि समर्थनीयम्। तथा समर्थनमादित्येऽपि सङ्गच्छते।

एवमादित्यपुरुषे उद्गातृकर्तृकगानविषयत्वोक्तिः अक्षिपुरुषे लौकिकवीणागानविषयत्वोक्तिश्च आदित्य एव कथञ्चिद्योजनीया। न हि मुख्यं तदुभयविषयत्वं ब्रह्मण्यपि सम्भवति; उद्गातृगानस्य तत्तदिन्द्रादिदेवताविषयत्वात् लौकिकगानस्य राजादिविषयत्वात्। न च ब्रह्मणस्सर्वजीवाभिन्नत्वात् तदुपपत्तिः। आदित्यस्यापि ब्रह्मसाक्षात्कारदग्धाज्ञानस्य जीवन्मुक्तस्य वामदेववत् सर्वात्मभावापन्नत्वात्। 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेः। 'सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैस्सन्तं गायन्ति' (छा. १.११.७) इति श्रुत्यन्तरे तस्य सर्वभूतकर्तृकगानविषयत्वप्रसिद्धेश्च। तस्मात् आदित्य एवात्र हिरण्मयः पुरुष इति युक्तम्।

सहस्रकिरणस्यास्य हिरण्मयमिवोज्ज्वलम्। प्रसिद्धं हि पुराणेषु रूपं तैजसमण्डले ॥
यथा भवति पाथोजं कप्यासमिव कान्तिमत्। तथैव कुरुतश्चास्य प्रभूते प्रातरक्षिणी ॥
प्रातःकालकृतः पद्मविकासः किरणैरिव। दृष्टिपातैर्भवन् भानोर्वर्ण्यमानो न दुष्यति ॥
कप्यासवाक्येऽप्युचितक्रियाऽध्याहारकल्पनम्। यश्च निम्बं परशुनेत्यादिकेष्विव युज्यते ॥
ऋक्सामाद्यात्मतोक्तिश्च रवेः सङ्गच्छतेतराम्। प्रायस्त्रयीमयत्वं हि प्रसिद्धं तस्य वर्ण्यते ॥इति **पूर्वपक्षः**॥

**सिद्धान्तस्तु** —[1]सफलानन्यथासिद्धसर्वपाप्मोदयाहतम्। अतादृग्रूपवत्त्वादि न संसारित्वसाधकम् ॥

सफलं तावत् सर्वपाप्मोदितत्वलिङ्गं 'उदेति ह वै सर्वेभ्यः पाप्मभ्यः' इति श्रुतेन फलेन। फलं च तात्पर्यलिङ्गम्। अतः एकमपि तल्लिङ्गं निश्चिततात्पर्यं अतादृशादनेकस्मादपि रूपवत्त्वादिलिङ्गाद्बलवत्; तात्पर्यानुसारित्वादागमप्रामाण्यस्य। तच्च सर्वपाप्मोदितत्वं असङ्कुचितसर्वपापविरहरूपमेव; फलवचनानुगुण्यात्। फलवचने हि न सर्वकर्मानधिकारमात्रमुच्यत इति वक्तुं युक्तम्; तिर्यगादिसाधारणस्य तस्य अपुरुषार्थत्वात्। नापि सङ्कुचितसर्वपापविरहवत्त्वम्; 'सर्वे पाप्मानः प्रदूयन्ते' (छा. ५. २४. ३) इति

---

१. —"अत्र (अधिकरणे)–प्रथमश्रुतादपि लिंगादविवक्षितात् चरमश्रुतमपि प्रयोजनवल्लिङ्गं बलीयः; तात्पर्याधीनत्वात् प्रामाण्यस्य–इति न्यायेन प्रयोजनवत्सर्वपाप्मोदयस्य ब्रह्माविनाभाविलिंगस्य अनुसारेण सामान्यप्रवृत्तां कर्मनिमित्तशरीरग्रहणश्रुतिं ईश्वरविषये अपवाध्य कर्माभावेऽपि रूपवत्वं ब्रह्मपरतया नीतम्" इति शारीरकन्यायसंग्रहे विवरणकारोक्तं मनसि निधाय सिद्धान्तयति–सफलेत्यादिना।

श्रुत्यन्तरे तस्य[1] विद्याफलत्वेन प्रसिद्धेः। सर्वत्वस्य असङ्कोचसम्भवे सङ्कोचकल्पनाऽयोगाच्च। ततश्चासङ्कुचित-सर्वपापविरहे फलवचनार्थे स्थिते उपास्यगुणवचनार्थोऽपि स एवेति युक्तम्। अक्षरैकरूप्यस्वारस्येन तत्क्रतु-न्यायेन च तयोरेकार्थपरत्वस्य वक्तव्यत्वात्।

तथाऽपि न पापविरहस्तदर्थः, किन्तु पापापादानकमुद्गमनमेव, तत्तु प्राक् पापाच्छादिते जीवे सम्भवति न ब्रह्मणि इत्युक्तमिति चेत्—मैवम्।

जीवस्यापि न युक्तैव वाच्या ह्युद्गमनक्रिया। पापापादानिका त्वेषा नैव युक्ता कथञ्चन॥
न हि नीडे स्थिते तस्माच्छकुन्त इव सक्रियः। उद्गच्छत्यक्रियो जीवः पापपञ्जरतः स्थितात्॥

अतो यथा कुतश्चिदपादानादुद्गतः सर्वात्मना तत्सम्बन्धरहितो भवति एवमयं सर्वात्मना पापसम्बन्धरहितः इत्ययमर्थो लक्षणया प्रतिपाद्य इति सर्वपाप्मरहितत्वमेव तदर्थः। तत्तु आदित्यजीवे न सम्भवतीति व्यक्तमेव।

एतेन—क्रियमाणेऽपि पापहेतुकर्मणि पापाश्लेषो गुणफलवाक्ययोरर्थोऽस्तु; 'एवमेवंविदि पापं कर्म न श्लिष्यते' (छा. ४. १४. ३) इति श्रुतौ तस्यापि विद्याफलत्वप्रसिद्धेः। 'न ह वै देवान् पापं गच्छति, पुण्यमेवामुं गच्छति' (बृ १. ५. २०) इति श्रुतौ तस्य देवत्वप्रापकपुण्यफलत्वप्रसिद्धेश्च। देवत्वदशायां प्राग्भवसञ्चितपापानां फलानारम्भकत्वं 'न ह वै देवान्' इति श्रुतेरर्थ इति चेत्, तर्हि स एव सर्वपाप्मोदय-वाक्ययोरालम्बनमस्तु इत्यपि शङ्का—निरस्ता। पक्षद्वयेऽपि प्राग्भवसञ्चितानां पापानां सत्त्वात्, तत्सत्त्वे च सर्वपाप्मापादानकोद्गमनप्रतिपादकशब्दस्वारस्यालाभात्। तस्मात् सर्वपापराहित्यमेव तदर्थः, तत्तु आदित्यस्य न सम्भवतीत्युक्तम्।

[2]रूपवत्त्वञ्च ब्रह्मणोऽपि सम्भवति ; सत्यस्य रूपस्य नीरूपशास्त्रविरोधित्वेऽपि मायामयस्य

---

१. असङ्कुचितसर्वपापविरहवचनस्य।

२. 'अन्तस्तद्धर्मोपदेशात्' इत्यादिषु ब्रह्मणः तद्धर्मविशेषैः वैशिष्ट्यं प्रतिपाद्यते...........अतो विशिष्टपराणि ब्रह्मसूत्राणि' इति परमते सूत्रस्वारस्यभङ्गवादे परैः उक्तं निर्विशेषब्रह्मवादे सूत्रास्वारस्यं परिहरन् पूर्वपक्षोक्तयुक्तीर्निराकरोति—रूपवत्त्वञ्चेत्यादिना।

तदविरोधित्वात् । ब्रह्मणि च रूपस्य 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद' इति वचनानुसारेण मायामयस्यैवाङ्गीकारात् । न च तद्बोधकवचनानामप्रामाण्यप्रसङ्गः; मायाविदार्शितमायादृष्ट्यनुवादवत् प्रामाण्योपपत्तेः । इह च 'हिरण्मयः पुरुषो दृश्यते' 'यन्मां पश्यसि' इत्यादौ तथैव दृष्ट्यनुवाददर्शनाच्च[1] । आरम्भणाधिकरणे व्युत्पादयिष्यमाणेन न्यायेन शरीरेऽपि व्यावहारिकप्रामाण्योपपत्तेश्च । न च शरीरं कर्मजन्यमेवेति नियमः; इह अनन्यथासिद्धलिङ्गावगमितस्य परमेश्वरस्य शरीरसिद्धौ 'रमणीयचरणा रमणीयां योनिमापद्येरन्' 'कपूयचरणाः कपूयां योनिमापद्येरन्' (छा. ५. १०. ७) इत्यादिश्रुतीनामनीश्वरशरीरविषयत्वकल्पनोपपत्तेः । न च सर्वपाप्मोदयश्रुतौ फलमिव, शरीरं कर्मजन्यमिति श्रुतावपि शरीरत्वावच्छेदेन कर्मजन्यत्वे लाघवमित्युपपत्तिस्तात्पर्यलिङ्गमस्तीति तदनुरोधेनैतत्सङ्कोचकल्पनं न युक्तमिति वाच्यम् । श्रुतिदर्शितफलात् पुरुषबुद्धिकल्प्योपपत्तेर्दुर्बलत्वात् । एतेन—परमेश्वरस्य शरीराङ्गीकारे दुःखमपि स्यात्; 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति' (छा. ८. १२. १) इति श्रुतेः—इति निरस्तम् । पुण्यपापफलोपभोगार्थकर्मसंपादितस्यैव शरीरस्य तया श्रुत्या दुःखाविनाभावप्रतिपादनात् । परमेश्वरेणोपासकानुग्रहार्थमिच्छापरिगृहीते शरीरे तदप्रसक्तेः ।

एवंच स्वतो नामास्पृष्टस्य निराधारस्यापि ब्रह्मणो रूपोपाधिकं नामवत्त्वं आधारवत्त्वं च युज्यते । श्रूयते च तत्तद्रूपविशेषोपहितस्य परमेश्वरस्य तत्तन्नामभाक्त्वं तत्र तत्रासीनत्वं च 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते' (उत्तरनारा) इति । एतेन—नामरहिते ब्रह्मणि नामनिरुक्त्यर्थो नान्वेतीति शङ्काऽपि निरस्ता ।

( *ऐश्वर्यमर्यादाश्रवणं तु उभयत्राऽपि उभयविधैश्वर्यसद्भावेऽपि अधिदैवतमेतावदेवोपास्यं

---

१. एतेन—'दृश्यते' इति वर्तमानव्यपदेशाच्च उपासनाय आरोपितत्वं (रूपवत्त्वस्य) अयुक्तं इत्यादि 'न ह्यारोपितं 'दृश्यते' इति श्रूयते' इत्यन्तं श्रुतप्रकाशिकोक्तं निरस्तं वेदितव्यम् ।

(*ऐश्वर्यमर्यादा तु उपासनार्थं श्रुता न सर्वैश्वर्यविरोधिनी । न हि सर्वेश्वरस्यापि परस्य ब्रह्मणः सवितृमण्डलस्थस्योपासनायामेतावदैश्वर्यमुपास्यं अक्षिस्थस्योपासनायामेतावदेवेति तत्तदुपासनफलानुसारेण सतोऽप्यधिकैश्वर्यस्योपास्यत्वव्यवच्छेदे कश्चन विरोधोऽस्ति । श्रूयते च 'सोऽमुनैव ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च' इति आदित्याक्षिपुरुषोपासनयोरुपास्यैश्वर्यविशेषानुसारिफलविशेषः । वक्ष्यते च 'जगद्व्यापारवर्जम्' (४. ४. १७) इत्यस्मिन्नधिकरणे अहंग्रहोपासनाभिः परमेश्वरसाम्यं प्राप्तानामपि जगत्सृष्ट्यादिविषयं न निरवग्रहमैश्वर्यम्, किन्तु स्वदेहान्तःकरणभोगोपकरणमात्रविषयं इति प्राप्यफलानुसारेण परमेश्वरेऽप्यैश्वर्यमात्रमुपासनीयम्, न निरवग्रहविशिष्टमिति । एतेन-ऐश्वर्यमर्यादालिङ्गमपि फलरूपतात्पर्यलिङ्गवत्वात् बलवदिति शङ्काऽपि—निरस्ता । तदयोपास्ये सर्वेश्वरे सत्यपि फलानुसारेणाल्पमैश्वर्यमुपास्यमित्यत्रैव पर्यवसानात् । पूर्वपक्षिणाऽपि तथैवाभ्युपगन्तव्यत्वाच्च । तथाहि )..........,

इति पाठान्तरम् ।

अध्यात्ममेतावदेव इत्युपासनापेक्षं नेतव्यम् । नन्वैश्वर्यमर्यादालिङ्गमपि फलरूपतात्पर्यलिङ्गवत्त्वात् बलवत् । श्रूयते हि 'सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकाः तांश्चाप्नोति देवकामांश्च अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च' (छा. १.७.७,८) इत्याधिदैविकाध्यात्मिकपुरुषगतयोरैश्वर्यमर्यादागुणयोः पृथक्पृथक् तदनुगुणं फलं इति चेत्, न । तथाऽपि प्रथमश्रुतस्य तात्पर्यलिङ्गवतो लिङ्गस्य बलवत्त्वात् । अक्षिपुरुषे सर्वपापविरहालिङ्गस्याश्रुतत्वेऽपि 'यन्नाम तन्नाम' इति प्राक्कृतनिर्वचनस्य नाम्नोऽतिदिष्टत्वेन नामनिरुक्त्यर्थतया तस्यापि फलवचनसहितस्यातिदेशतः प्राप्तेः । परब्रह्मणस्सर्वत्र सर्वैश्वर्ये सत्यपि विध्यनुसारेण विभज्यैश्वर्योपासनायां न असदुपासनं प्रसज्यते; सर्वजगदीश्वरे तदेकदेशैश्वर्यस्यापि सत्त्वात् । जीवे विध्यनुसारेण सर्वपापराहित्योपासने तु असदुपासनं प्रसज्यते इत्यनेनापि विशेषणानन्यथासिद्धतया सर्वपापराहित्यस्य बलवत्त्वाच्च । वस्तुतस्तु ऐश्वर्यमर्यादायां तदनुरूपफलवचनं नास्त्येव । उद्गीथे आदित्यमण्डलस्थपुरुषानुचिन्तनस्याक्षिमण्डलस्थपुरुषानुचिन्तनस्य च एकविद्यात्वस्य 'सम्बन्धादेवमन्यत्रापि' (३. ३. ११) इत्यधिकरणे प्रदर्शयिष्यमाणत्वात् । एकविद्यात्वे च सति तत्प्रकरणगतयावदनुवादश्रुतिफलकामस्य[1] तस्यां विद्यायां संवलिताधिकारस्य सत्यविद्याधिकरण (३ । ३ । ३८) न्यायेन[2] कल्पनीयतया पराचीनार्वाचीनलोकप्राप्तेर्देवमनुष्यकामप्राप्तेश्च सम्भूयविद्याफलत्वपर्यवसानात् । एवं संवलिताधिकारेऽपि 'यदष्टाकपालो भवति' इत्यादिजातेष्ट्यर्थवादे अष्टसंख्याद्यनुरोधिफलैकदेशकीर्तनवत् इहापि तत्तदुपास्यगुणानुरोधिफलैकदेशानुकीर्तनोपपत्तेः । अपिचात्र सर्वलोककामेश्वरस्यैव सतः ऐश्वर्यमर्यादाश्रवणं विभज्योपासनार्थं इत्येव पूर्वपक्षिणा वक्तव्यम् । तथाहि*) पूर्वपक्षेऽपि अक्ष्यादित्यमण्डलयोः एक एवादित्यजीव उपास्यो वक्तव्यः; अक्षण्यप्यादित्यस्यैवाधिष्ठातृत्वेन प्रवेशश्रवणात्, देवतान्तरस्याक्षिस्थत्वप्रसिध्यभावाच्च । एकस्य चादित्यजीवस्य आधारभेदेऽपि परमेश्वरवदेव व्यवस्थितमैश्वर्यमविरुद्धम् । अतः पूर्वपक्षिणाऽपि आदित्यजीवस्य पराचीनार्वाचीनलोकदेवमनुष्यकामेशितृत्वे सत्यपि उपासनाविशेषापेक्षया तत्तदैश्वर्यविशेषो

---

१. श्रुत्यनूदितयावत्फलकामस्य इत्यर्थः ।

२. यत्र विध्युद्देशः फलवान् तत्र अङ्गानां प्रधानान्वयद्वारेण फलसंबंधसिद्धेः अर्थवादगतानि गुणफलानि उपेक्ष्यन्ते । यत्र तु प्रधानतदङ्गानां अर्थवादात् फलं रात्रिसत्रन्यायेन कल्प्यते तत्र विहितानां फलाकाङ्क्षाऽविशेषात् अर्थवादात् फलकल्पनाविशेषाच्च यत्किञ्चित् अर्थवादगतं फलं तत् सर्वं एकीकृत्य गुणविशिष्टस्य गुणिनः फलत्वेन कल्पनीयम्–इति न्यायः । उक्तश्चायं शारीरकन्यायसङ्ग्रहे विवरणाचार्यैः ।

निर्दिश्यते इत्येव समर्थनीयमिति न विशेषः। निरवग्रहं सर्वलोककामेश्वरत्वमादित्यस्य नास्तीति, पूर्वपक्षे तल्लिङ्गानुपपत्तिदूषणं परमधिकमापतति। एतदभिप्रायेणोक्तं भाष्ये 'लोककामेशितृत्वमपि निरङ्कुशं श्रूयमाणं परमेश्वरं गमयति' इति। निरंकुशं—उक्तप्रकारेणासंकुचितमित्यर्थः। अपि च 'निरंकुशं' इत्यनेन अनन्याधीनत्वमप्युच्यते। इह लोककामेशितृत्वं श्रूयमाणं अन्तर्याम्यधिकरण (१. २. १८) न्यायेन अनन्याधीनमेव ग्राह्यम्। तच्च परमेश्वरस्यैव सम्भवति, न त्वादित्यादीनाम् 'भीषास्माद्वातः पवते भीषोदेति सूर्यः' (तै. २. ८. १) इत्यादिश्रुतेः इत्यपि भाष्यवाक्यस्यार्थः।

तस्मात् आदित्येऽक्षिणि च उपासनासिद्धैर्दृश्य उद्गीथे संपाद्यः पुरुषः परमेश्वर एव; सफलानन्यथासिद्धसर्वपापविरहलिङ्गबलेन अतादृशान्यथासिद्धरूपवत्त्वादिलिङ्गान्यथाकरणसम्भवात् इति सिद्धम्।

'अदृश्यत्वादिगुणको धर्मोक्तेः' (१. २. २१) इतिवत् सूत्रे 'धर्मोपदेशात्' इत्येतावति वक्तव्ये तत्पदं तस्यैव धर्म इति अब्भक्षादिवत् अवधारणगर्भतया फलवचनाद्यनुसारेण सर्वपापविरहरूपतया पर्यवसितस्य सर्वपापोदितत्वस्य आदित्यजीवे सम्भवाभावरूपमनन्यथासिद्धत्वं तद्विचारद्वारा तत्प्रतिभटस्य रूपवत्त्वादेर्ब्रह्मण्यपि सम्भवरूपमन्यथासिद्धत्वं च सिद्धान्तबीजं ज्ञापयितुम्। तेन ब्रह्मण्यपि सम्भाविततया अन्यथासिद्धादेकदेशैश्वर्यात् अस्य बलवत्त्वं लभ्यते। 'आकाशस्तल्लिङ्गात्' (१. १. २२) इतिवत् 'तद्धर्मात्' इत्येतावति वक्तव्ये उपदेशग्रहणं तद्धर्मस्यैवोपदेशात्—फलवचनावगतेन तात्पर्येण प्रतिपादनात् इत्यर्थकतया सफलत्वरूपतात्पर्यलिङ्गवत्त्वं तत्प्रतिभटतया रूपवत्त्वतद्गतादित्यमण्डलादिनिष्ठत्वयोरैन्द्रजालिकदर्शिताद्भुतरूपविशेषतद्गतगोपुरारूढत्वयोरिव दर्शनविषयतया अनुवाद्यत्वेन ऐश्वर्यमर्यादायाः श्रुत्यन्तरसिद्धे सर्वैश्वर्ये उपास्यतया अवयुत्यानुवाद्यत्वेन च पूर्वपक्ष्यापादितरूपादिवचनाप्रामाण्यपरिहारं च ज्ञापयितुम्। तेन तद्राहितात् रूपवत्त्वादाधारवत्त्वाच्च बलवत्त्वमस्य लभ्यते। न च अनन्यथासिद्धत्वेन, फलरूपतात्पर्यलिङ्गवत्त्वेन वा एकेनैव बलेन रूपादित्रयात् बलवत्त्वं लभ्यते, किमुभयज्ञापनेन इति वाच्यम्। रूपवत्त्वमपि ब्रह्मण्यसम्भावित-तयाऽनन्यथासिद्धम्; ब्रह्मणो रूपवत्त्वे श्रुतिसिद्धतद्धेतुकर्मणः श्रुतिसिद्धतत्कार्यदुःखस्य च तत्र प्रसक्तेः, अत एव रूपोपाधिकमाधारवत्त्वमपि ब्रह्मण्यसम्भाविततयाऽनन्यथासिद्धं इत्याशङ्काग्रस्तत्वात्, तस्याश्शङ्कायाः फलरूप-तात्पर्यलिङ्गवत्ताबलमुपजीव्य प्रदर्शितेन प्रकारेण निरसनीयत्वात्। फलरूपतात्पर्यलिङ्गस्य एकदेशैश्वर्यमपि फलवत् इति मन्दशङ्काग्रस्तत्वात् तस्याश्च अनन्यथासिद्धिबलमुपजीव्य निरसनीयत्वात्। तथैव प्राक् फलवचन-सद्भावमभ्युपेत्य निरस्तत्वात्। किञ्च तद्धर्मयोः उपदेशात् इति द्विवचनान्तसमासेन ब्रह्मैकधर्मस्य सार्वात्म्यस्य

प्रतिपादनात् इत्यपि हेतोरर्थः। यद्यपि सार्वात्म्यं न वास्तवं ब्रह्मणोऽपि, काल्पनिकं तु जीवस्यापि, तथापि 'सन् घटः' इत्यादिव्यवहारालम्बनं व्यावहारिकप्रमाणगम्यमस्त्येव तत् सर्वोपादानस्य ब्रह्मणः, न तादृशमादित्यजीवस्य इति वैषम्यम्। अयं त्वभ्युच्चयः; रूपवत्त्वमपि ब्रह्मणि न सम्भवतीति शङ्काकरम्बितत्वात्। तस्याश्च फलवत्सर्वपापविरहलिङ्गबलेन निराकरणीयत्वात्। आदित्यस्य त्रयीमयत्वसार्वात्म्यश्रवणं तु तत्र परमेश्वराभिव्यक्तिविशेषकृतं तत्पर्यवसायि इत्येव समर्थनीयं तेजस्वित्वानुभववत्। 'येन सूर्यस्तपति तेजसेद्धः' (तै. ब्रा. ३. १२. ९) इति हि मन्त्रवर्णः। १. १. २०।

स्यादेतत्—'य एषोऽन्तरादित्ये' इत्यादिस्तावदुपास्यनिर्देशः। ततश्चोपास्योद्देशेन उपासनाविधानार्थं विधीयमानक्रियार्थकर्मकारकस्य सति सम्भवे व्रीह्यादिवदन्यतस्सिद्धिरेष्टव्या। न चान्तरादित्येऽन्तरक्षणि च तदधिष्ठातृदेवतारूपाज्जीवादन्य ईश्वरस्तिष्ठतीति अन्यतस्सिद्धिरस्ति। अतोऽन्यतस्सिद्ध्यपेक्षाबलात् अक्ष्यादित्यवर्तित्वेन प्रसिद्धः सूर्य एव उपास्य इह निर्दिश्यते इत्यकामेनापि स्वीकर्तव्यं इत्याशङ्कामपनुदन्नेव रूपवत्त्वश्रवणस्य गत्यन्तरमपि दर्शयति—

**भेदव्यपदेशाच्चान्यः। २१।**

अस्त्यक्ष्यादित्यमण्डलाधिष्ठातृजीवादन्य ईश्वरः तत्र तिष्ठतीति श्रुत्यन्तरसिद्धः; 'य आदित्ये तिष्ठन्नादित्यादन्तरः यमादित्यो न वेद यस्यादित्यश्शरीरं य आदित्यमन्तरो यमयति' (बृ. ३. ७. ९) इति, 'यश्चक्षुषि तिष्ठंश्चक्षुषोऽन्तरः यं चक्षुर्न वेद यस्य चक्षुश्शरीरं यश्चक्षुरन्तरो यमयति' (बृ.३.७.१८) इति च बृहदारण्यके भेदव्यपदेशात्। तत्र हि 'यमादित्यो न वेद' 'यं चक्षुर्न वेद' इति वेदितुस्तदुभयाधिष्ठातृजीवात् अन्य ईश्वरः प्रतिपाद्यते इति स्पष्टम्। स एव आदित्याद्यान्तरत्वश्रुतिसामान्येन प्रत्यभिज्ञायमानः इह उपास्यत्वेन निर्दिश्यते। चकारात् अस्यां श्रुतौ आदित्यजीवासम्भावितसर्वपाप्मास्पर्शादि[1]विशिष्टपुरुषप्रतिपादनादपि अक्ष्यादित्यमण्डलाद्यधिष्ठातृजीवान्यतदन्तर्वर्तिपरमेश्वरस्सिध्यतीति समुच्चीयते। न हि सर्वासूपासनासु यावदुपदिष्टगुणविशिष्टस्योपास्यस्य अन्यतस्सिद्धिर्लभ्यते। तदिहाप्यक्ष्यादित्योपास्यनिरूपणादपि तत्सिद्धिस्सम्भवतीति। एवंच भेदव्यपदेशिवाक्ययोः अन्तर्यामिणो 'यस्यादित्यश्शरीरम्' 'यस्य चक्षुश्शरीरम्' इति स्वाधिष्ठेयदेवताशरीरेणैव शरीरवत्त्वप्रतिपादनात् इहाप्यादित्यशरीरेणैव परमेश्वरस्य शरीरवत्त्वप्रतिपादनमुपपन्नं इत्यपि तस्यान्यथासिद्धत्वं दर्शितं भवति। १. १. २१।

इत्यन्तरधिकरणम्। ७।



१. आदिना सार्वात्म्यपरिग्रहः।

(८ अधिकरणम् )

आकाशस्तल्लिङ्गात् । २२ ।

छन्दोगास्समामनन्ति—'अस्य लोकस्य का गतिरिति, आकाश इति होवाच, सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्, स एष परोवरीयानुद्गीथः स एषोऽनन्तः, परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् परोवरीयांसमुद्गीथमुपास्ते' (छा. १. ९. १) इति । तत्र उद्गीथे संपाद्योपास्यः किं भूताकाशः परमेश्वरो वेति आकाशश्रुतिब्रह्मलिङ्गाभ्यां संशये, **पूर्वः पक्षः**—पूर्वं अनन्यथासिद्धेन लिंगेनान्यथासिद्धं लिंगं नीतम्, इह तु लिंगेन श्रुतिर्नान्यथयितव्येति आकाशश्रुतिबलात् भूताकाश एवोपास्यः, तत्रैव वाय्वादिकारणत्वपरतया वाक्यशेषो योजनीयः[1] ।

ननु 'अस्य लोकस्य का गतिः' इति प्रश्नवाक्यस्थं सर्वलोकगतित्वं लिंगं सदपि उपक्रमस्थत्वात् आकाशश्रुत्यपेक्षया बलवत् इति चेत् ।

न। प्रश्नस्य पृथिवीलोकगतिमात्रविषयत्वेन सर्वलोकगतिविषयत्वासिद्धेः । तथाहि—शालावत्यदाल्भ्यजैवलिभिस्त्रिभिरारब्धायां कथायां प्रथमं शालावत्यदाल्भ्ययोः प्रश्नोत्तरपरंपरा प्रस्तुता 'का साम्नो गतिरिति, स्वर इति होवाच, स्वरस्य का गतिरिति, प्राण इति होवाच, प्राणस्य का गतिरिति, अन्नमिति होवाच, अन्नस्य का गतिरिति, आप इति होवाच, अपां का गतिरिति, असौ लोक इति होवाच, अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच' (छा. १. ८. ४) इति । एवं दाल्भ्येन स्वर्गलोके सामकारणपरंपराविश्रान्तिभूमित्वेन स्थापिते तस्य पक्षः शालावत्येन दूषितः 'अप्रतिष्ठितं वै किल ते दाल्भ्य साम' (छा. १. ८. ६) इति । स्वर्गस्य मनुष्यकृतयज्ञाद्यधीनस्थितिकत्वात् सामगतिपरंपरा प्रतिष्ठारूपे कारणे न समापिता इति अप्रतिष्ठितं साम स्यादित्यर्थः । एवं दूषितस्वपक्षतया शिष्यभावं प्राप्तस्य दाल्भ्यस्य शालावत्यस्य च प्रश्नद्वयमुत्तरद्वयं च प्रवृत्तं 'अमुष्य लोकस्य का गतिरिति, अयं लोक इति होवाच, अस्य लोकस्य का गतिरिति, न प्रतिष्ठां लोकमतिनयेदिति होवाच' (छा. १.९.१) इति । ततः

---

१. इतीति शेष', तस्य 'पूर्वः पक्षः' इति पूर्वेण सम्बन्धः ।

शालावत्यपक्षो जैवलिना दूषितः 'अन्तवद्वै किल ते शालावत्य साम' इति । एवं सामकारणपरम्पराविश्रान्तिस्थानत्वेन स्वाभिमते पृथिवीलोके अन्तवत्त्वेन दूषिते, पृथिवीलोकस्यापि कारणमनन्तं किञ्चिदस्तीत्यवगत्य खल्वयं जैवलिर्मत्पक्षमदूदुषत् तत् किमिति जिज्ञासोर्जैवलिशिष्यभावं प्राप्तस्य शालावत्यस्य तं प्रति अयं प्रश्नः 'अस्य लोकस्य का गतिः' इति । अत्र प्रस्तावानुसारेण 'अस्य लोकस्य' इत्यस्य अतिस्फुटे पृथिवीलोकविषयत्वे कः प्रसङ्गः सर्वलोकविषयत्वस्य । न च पृथिवीमात्रकारणस्यापां प्रसिद्धत्वेन प्रश्नवैयर्थ्यात् 'अस्य' इति सर्वनामश्रुतेः प्रकरणात् बलीयस्याः सर्वकार्यविषयत्वौचित्याच्च अयं प्रश्नस्सर्वलोकगतिविषय एवेति वाच्यम् । अपां कारणस्य तेजसः प्रसिद्धत्वेऽपि 'अपां का गतिः' इति प्रश्नदर्शनात्, 'अस्य लोकस्य का गतिः' इति दाल्भ्यकृतस्य प्रश्नस्य पृथिवीकारणविषयत्वसम्प्रतिपत्तेश्च । अन्तवत्त्वदूषणमुक्तवतस्ते प्रसिद्धविलक्षणमनन्तं कारणमभिमतम्, तत् किं इति प्रश्नोपपत्तेश्च । अस्येति पदस्य श्रुतित्वेऽपि सर्वनामस्वाभाव्यात् 'यदेव विद्यया' इतिवत् प्रकृतमात्रे संकुचितवृत्तित्वोपपत्तेश्च । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' ( छा. १. १. १० ) इत्यस्य हि यत्पदरूपसर्वनामस्वाभाव्यादेव प्रकृतोद्गीथविद्याविषयत्वमङ्गीकृतम् । न च वाच्यं विद्याशब्दस्य प्रकृतपरत्वबलात् तस्य तावन्मात्रविषयत्वमिति । 'विद्यया' इति श्रुतेः प्रकरणाद्बलीयस्याः सर्वविद्याविषयत्वोपपत्तेः । अतो 'यदेव विद्यया करोति' इति यत्पदार्थान्वयबलादेव विद्याशब्दस्यापि प्रकृतविद्यामात्रपरत्वमुपपादनीयम् । एवं स्वसम्बन्धिशब्दान्तरस्यापि प्रकृतमात्रपरत्वमापादयत् सर्वनाम कथं स्वयं प्रकृतातिलङ्घि स्यात् ।

अथापि स्यात्—अभिधत्तां नामायं 'अस्य' इति शब्दः पृथिवीमेव, तथाप्यन्तवत्त्वदोषापनिनीषया प्रश्नप्रवृत्तेः पृथिवीमात्रकारणनिरूपणे तदसिद्धेः छत्रिपदवदजहल्लक्षणया अस्येतिशब्दः सर्वकार्यपरः इति । न ह्यस्य शब्दस्य पृथिवीपरत्वे तन्मात्रकारणं पृष्टं भवति, येन तन्निरूपणेऽन्तवत्त्वदोषो नापनीतस्स्यात् । किंतु पृथिवीकारणं पृष्टं भवति । तत्कारणत्वं चानन्ते सर्वकारणेऽपि सम्भवतीति पृथिवीकारणप्रश्नेऽपि तन्निरूपणेनान्तवत्त्वदोषेऽपनेतुं शक्ये किमनुपपन्नम्, यदर्थं प्रश्नवाक्येऽपि लक्षणा कल्प्येत ।

नन्वाकाशस्य पृथिवीकारणत्वे निरूपिते अन्तवत्त्वदोषो नापनीतस्स्यादिति चेत्, तर्हि अनन्तत्वलिङ्गमेव पूर्वपक्षविरोध्याशङ्कनीयम्, न तु प्रश्नवाक्यास्पृष्टं सर्वलोकगतित्वम् । न च तदपीति वक्ष्यते ।

ननु माभूत् सर्वलोकगतित्वमाकाशश्रुतिबाधकम्, सर्वभूतकारणत्वं तु स्यात्, तद्धि लिङ्गमपि चरमपठितमपि सावधारणं भूताकाशे तेजःप्रभृतिसृष्टौ वाय्वादिकारणान्तरसापेक्षे न सम्भवतीत्यनन्यथासिद्धं

बलवत् इति चेत्, न। ब्रह्मणोऽपि जगत्सृष्टौ कालादृष्टादिसापेक्षत्वेन साम्यात्। कथञ्चिदवधारणसमर्थनस्य भूताकाशेऽपि सम्भवात्।

ननु परोवरीयस्त्वं नाम परेभ्य उत्कृष्टेभ्योऽपि अतिशयेन श्रैष्ठ्यं निरतिशयोत्कर्षरूपं सफलत्वादाकाशश्रुत्यपेक्षया बलवत् इति चेत्, न; 'परोवरीयसो ह लोकाञ्जयति' 'परोवरीय एव हास्यास्मिन् लोके जीवनं भवति तथाऽमुष्मिन् लोके' (छा १. ९. २. ४) इति फलवचनपर्यालोचनया ऐहिकामुष्मिकजीवनसाधारणस्य परोवरीयस्त्वस्य निरतिशयत्वेन व्यवस्थापयितुमशक्यत्वात्। परोवरीयस्त्वमात्रस्य भूताकाशेऽपि सम्भवात्।

ननु अन्तवत्त्वदोषापनिनीषया विवक्षितमिह निरपेक्षमनन्तत्वम्; सापेक्षानन्तत्वस्य स्वकार्यपेक्षया बहुकालस्थायिन्यां पृथिव्यामपि सम्भवेन तत्र अन्तवत्त्वदोषोद्भावनानौचित्यप्रसङ्गात्। तथाच अनन्यथासिद्धमनन्तत्वलिङ्गमाकाशश्रुतिबाधकं स्यादिति चेत्, मैवम्; प्रतिष्ठात्वलिङ्गवदनन्तत्वलिङ्गस्याप्यापेक्षिकत्वोपपत्तेः। दाल्भ्याभिमतस्वर्गलोकोद्भावितप्रतिष्ठितत्वदोषापनिनीषया हि शालावत्येन स्वर्गलोकस्यापि गतित्वेन स्वाभिमते पृथिवीलोके प्रतिष्ठात्वमुपन्यस्तम्। न च प्रतिष्ठात्वं निरपेक्षं ब्रह्मणोऽन्यत्र सम्भवति। सापेक्षं तु स्वर्गेऽप्यस्त्येव। तथाऽपि तत्र कयाचिद्विवक्षया स्वर्गापेक्षया पृथिव्यां प्रतिष्ठात्वातिशयमाश्रित्य उद्भावितदोषापनयस्समर्थनीयः। एवमनन्तत्वेऽपि भविष्यतीति किमनुपपन्नम्। किञ्च प्रतिष्ठात्वसमर्थन एव क्लेशः; स्वर्गलोकस्थितेर्मनुष्यकृतयज्ञाद्यधीनत्ववत् पृथिवीलोकस्थितेरपि देवकृतवृष्ट्याद्यधीनत्वस्य दर्शनात्। 'इतः प्रदानं देवा उपजीवन्ति अमुतः प्रदानं मनुष्या उपजीवन्ति' (तै. सं. ३. २. ९) इत्युभयत्रापि श्रुतितौल्यात्। इह तु पृथिव्यपेक्षया भूताकाशस्य बहुकालवृत्तित्वं निर्विवादम्। युज्यते च बहुकालानुवृत्तिमति अनन्तत्वव्यपदेशः; 'कदाऽपि न समाप्यतेऽस्य भोजनम्' इति व्यवहारदर्शनात्। तस्मादनन्तत्वलिङ्गमपि न बाधकम्।

ननु यथा सर्वभूतकारणत्वं सर्वभूतलयाधारत्वं सर्वतोज्यायस्त्वं परायणत्वं परोवरीयस्त्वं अनन्तत्वमित्येतानि ब्रह्मण्येव स्वारस्यवन्ति लिङ्गानि भूताकाशे कथञ्चिद्योजयितुं शक्यानि, एवमाकाशश्रुतिरपि ब्रह्मणि योजयितुं शक्या। 'यदेष आकाश आनन्दो न स्यात्' ( तै. २. ७. १ ) इत्यादिश्रुत्यन्तरे तस्य तत्र निरूढलक्षणासत्त्वात्। ततश्च बहुलिङ्गस्वारस्यानुग्रहाय एकस्याश्श्रुतेर्बाधो युक्तः 'त्यजेदेकं कुलस्यार्थे' इति, 'भूयसां स्यात् सधर्मत्वम्' (जै. सू. १२. ५. २३) इति च न्यायात् इति चेत्, न 'आत्मार्थे पृथिवीं

त्यजेत्', इति 'द्रव्यसंस्कारविरोधे द्रव्यं तदर्थत्वात्' (जै. सू. ६. ३. ३८) इति च ततोऽपि बलवता न्यायेन प्रधानविरोधिनां बहूनामपि गुणानामेव बाधस्य उचितत्वात् । 'अस्य लोकस्य का गतिः' इति प्रश्नोत्तरे आकाशस्य गतित्वेन प्रतिपाद्यतया प्रधानत्वात्, सर्वभूतकारणत्वादीनां तद्विशेषणत्वेन गुणत्वात् । तस्मात् उदाहृतलिङ्गेष्वेकैकस्य प्राबल्यहेतूनामसिद्धत्वात् गुणेषु भूयोऽनुग्रहन्यायानवतारात् आकाशश्रुतीनामपि भूयस्त्वाच्च भूताकाश एव प्रतिपाद्य इति **पूर्वः पक्षः** ।

**राद्धान्तस्तु**—अनन्तत्वं प्रतिष्ठात्ववदापेक्षिकतया योजनं न सहते । उपपत्त्युपबृंहितं ह्येतत् । कथम् ? जैवलिना पृथिवीलोकमन्तवत्त्वेन दूषितवता किं तर्ह्यनन्तं वस्तु तस्य कारणमिति पृष्टेन 'आकाशः' इत्युत्तरिते कथमेतस्य त्रिविधपरिच्छेदराहित्यरूपमनन्तत्वं इत्याकाङ्क्षायां 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा. ३. १४. १) इति श्रुत्यन्तरे सर्वस्य ब्रह्मात्मकतायां हेतुत्वेन या दर्शिता सर्वकार्योत्पत्तिस्थितिलयाधारता सैव 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति, आकाशः परायणम्' इति वाक्यत्रयेण वर्णिता । तेन वस्तुपरिच्छेदराहित्यं लब्धम् । 'आकाशादेव' इत्यवधारणेन उपादानातिरिक्तकर्तृसद्भावशङ्काया अप्यनवकाशीकरणात् । अवधारणं हि सर्वत्र उपात्तसजातीयं व्यवच्छिनत्ति । अत एव गृहमेधीये परिसंख्यापक्षे 'आज्यभागौ यजति' इत्यस्य अवधारणार्थलक्षकस्य आज्यभागसजातीययागान्तरव्यवच्छेदकत्वं तत्र[1] स्विष्टकृद्विधानस्यावधारणार्थलक्षकस्य स्विष्टकृत्सजातीयशेषकार्यान्तरव्यवच्छेदकत्वञ्च पूर्वतन्त्रे 'स्विष्टकृति भक्षप्रतिषेधस्स्यात्' (जै. सू. १०. ७. ३५) इत्यधिकरणे निर्णीतम् । ततश्चाकाशस्योपादानत्वेन सकलजगन्मूलकारणत्वप्रतिपादने कर्तृतया प्रसक्तं मूलकारणान्तरमेव व्यवच्छिन्ददवधारणं सफलं भवति । अनादिकालप्रवृत्तसकलजगन्मूलकारणत्वोक्त्यैव कालपरिच्छेदराहित्यमपि लब्धम् । अनादिभावस्यानन्तत्वनियमात् । 'आकाशो ह्येवैभ्यो ज्यायान्' (छा. १. ९. १) इति सकलकार्यप्रपञ्चाज्ज्यायस्त्वस्य 'तावानस्य महिमा ततो ज्यायांश्च पुरुषः' (छा. ३. १२. ६.) इति श्रुत्यन्तरसिद्धस्य वर्णनेन देशपरिच्छेदराहित्यं लब्धम् । 'आकाशवत् सर्वगतश्च नित्यः' इति श्रुत्यन्तरदर्शितसर्वगतत्वनित्यत्वरूपमुख्याकाशसादृश्यमूलप्रवृत्तिकस्य गौणस्याकाशशब्दस्य पुनः पुनः प्रयोगेणापि देशकालव्यवच्छेदराहित्यं स्पष्टीकृतम् । एवं तात्पर्यलिङ्गरूपोपपत्तिलंभितमनन्तत्वं न त्रिदशामरत्वन्यायेन नेतुं शक्यम् । अपि च यत्रोपक्रमे यं कञ्चित् दोषं संकीर्त्य तद्दोषसमाधानेनोपसंह्रियते तत्र

१ गृहमेधीये

तन्मध्यगतवाक्येषु यथाऽभ्युपगमेन तत्समाधानं लभ्यते तथाऽभ्युपगमे यतितव्यं मध्ये प्रतिपादनीयस्यान्य-प्रतिपादनशेषत्वाभावे। अत एव 'जामि वा एतद्यज्ञस्य क्रियते यदन्वंचौ पुरोडाशावुपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्यः प्रजापतिरुपांशु यष्टव्यः। अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इत्युपांशुयाजविधिवाक्ये उपक्रमे पुरोडाशयागद्वयनैरन्तर्यकृते जामितादोषे उपसंहारे तत्समाधाने च श्रूयमाणे तत्समाधानं मध्यगत-वाक्येषु अन्तरावाक्ये यागविधान एव लभ्यते, न तु विष्ण्वादिवाक्ये यागविधान इति तेषु प्रत्यक्षमपि यागविधिं परित्यज्य अन्तरावाक्य एव कल्प्योऽपि यागविधिस्स्वीकृतः। यत्र तु मध्ये प्रतिपादनीयस्यान्य-प्रतिपादनशेषत्वं न तत्रायं निर्बन्धः। तद्यथा 'यद् ग्राम्याणां पशूनां पयसा जुहुयात् ग्राम्यान् पशून् शुचाऽर्पयेत् यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा न ग्राम्यान् पशून् हिनस्ति नारण्यान्' इति अग्निहोत्रद्रव्यरूपपयोविध्यर्थवादभागे आदौ संकीर्तितस्य ग्राम्यारण्यपशुहिंसारूपदोषस्य अन्ते समाधानकीर्तनं मध्यगतवाक्यप्रतिपाद्यस्य जर्तिलगवीधुकशब्दवाच्यारण्यतिलगोधूमकृतयवाग्वोरग्निहोत्रे वैकल्पिकद्रव्यत्वस्याभ्युपगम एव लभ्यते, न तु कस्यचिदपि पयसः तद्द्रव्यत्वाभ्युपगमे; पशुहिंसादोषतादवस्थ्यापत्तेः। न तु तथा अभ्युपगतम्, किन्तु 'अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति पयसाऽग्निहोत्रं जुहुयात्' इति तदनन्तरश्रुतविध्यनुसारेण पय एव तद्द्रव्यम्, जर्तिलादिवाक्यं तु ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तमपि जर्तिलयवाग्वादिकं यदपेक्षया अहोम्यं तत् पयोऽत्यन्तं प्रशस्तमिति पयःप्रतिपादनशेषोऽर्थवाद इत्यभ्युपगतम्। एवमिहापि प्रतिष्ठात्व-सङ्कीर्तनमन्तवत्त्वदोषोद्भावनेन देशकालपरिच्छिन्नत्वात् निरपेक्षप्रतिष्ठात्वयोग्यं न भवतीत्यपि प्रदर्श्य तदन्य-स्यानन्तस्य निखिलकार्योपादानतया निरपेक्षप्रतिष्ठारूपस्य प्रतिपादनात् पृथिवीलोकस्य प्रतिष्ठात्ववर्णनं तत्प्रतिष्ठा-रूपानन्तवस्तुप्रतिपादनशेष इति तद्यथाकथञ्चिदुपपाद्यतां नाम। न तथोपपादनमिदं तथाऽन्यप्रतिपादन-शेषत्वरहितानन्तत्ववर्णनं सहते। अनन्ताकाशप्रतिपादनार्थमेव हि सर्वं प्रकरणमिदमारब्धम्। 'त्रयो होद्गीथे कुशला बभूवुः। सिलकश्शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति। ते होचुरुद्गीथे वै कुशलास्स्मः। हन्तोद्गीथे कथां वदामः' (छा. १. ८. १) इत्युपक्रान्तस्योद्गीथविचारस्य 'स एष परोवरीयानुद्गीथः स एषोऽनन्तः' (छा. १. ९. २) इत्युपसंहारदर्शनेन अनन्ताकाश उद्गीथे संपाद्योपास्य इति उद्गीथोपास्य-वस्तुविशेषनिर्णयार्थत्वावसायात्। यथा जर्तिलादिवाक्यस्य प्रतिष्ठावाक्यस्य चाग्रिमवाक्यानुसारेण स्वारस्यभङ्गेऽ-प्युपसंहारप्राबल्यं नापतति तथा समर्थितमस्माभिरुपक्रमपराक्रमे। यद्वा प्रतिष्ठात्वलिङ्गस्यात्र नास्ति स्वारस्यभङ्ग इति नानन्तत्वलिङ्गे तत्प्रतिबन्धावकाशः। प्रतिष्ठात्वं ह्यत्र नोपजीव्यत्वम्, किन्तु निश्चलत्वरूपं प्रतिष्ठितत्वम्। तद्धि स्वर्गलोके ज्योतिश्चक्रान्तर्गतत्वेन भ्रमति अप्रतिष्ठितत्वदोषोद्भावनापूर्वकं पृथिव्यां तत्परिजिहीर्षया वर्णितम्।

आर्यभटाभिमतस्तु भूभ्रमणवादः पुराणादिभिः 'आकाशे पृथिवी प्रतिष्ठिता' ( तै. ३. ९. १ ) इति श्रुत्या अनेन च प्रतिष्ठात्ववचनेन विरुद्धत्वात् बाध्यः । अत एव मत्स्यजिघृक्षुपक्षिशुष्कालाबुफलदृष्टान्तावलम्बनाभ्यां जैनयवनाभ्यां कल्पितौ भूपतनप्लवनवादावपि हेयौ । पक्षत्रयेऽपि वियत्क्षिप्तपाषाणखण्डादीनां पुनः क्षेत्र-प्राप्त्यभावप्रसङ्गाच्च । एवं अनन्तत्वलिङ्गानन्यथासिद्धौ स्थितायां सर्वभूतकारणत्वादीन्यप्यनन्यथासिद्धान्येव भवन्ति । उक्तरीत्या हि तान्याकाङ्क्षितानन्त्योपपादनार्थान्येव योजनीयानि । आकाङ्क्षितार्थोपयोगसम्भवेऽन्य-थायोजनाऽयोगात् । प्रसिद्धिद्योतकहवैशब्दस्यापि प्रसिद्ध्यपेक्षहेतुपरत्व एव सफलतरत्वात् । आनन्त्योपपाद-नार्थत्वं च तेषामसङ्कुचितसर्वभूतकारणत्वादिरूपत्व एव सङ्गच्छते, न तु भूताकाशनिष्ठकतिपयकारणत्वादि-रूपत्वे । अवधारणश्रुतिश्चावान्तरकारणे भूताकाशे न सङ्गच्छते; तेजःप्रभृतिषु भूताकाशकार्येषु वाय्वादी-नामवान्तरकारणानामपेक्षितत्वेन सजातीयकारणान्तरव्यवच्छेदासम्भवात् । एवं 'अस्य लोकस्य का गतिः' इति शालावत्यप्रश्नोऽपि अनन्यथासिद्धः; तस्य पृथिवीकारणविषयत्वेऽपि अनन्तवस्तुविषयत्वावश्यम्भावेन उत्तरस्य भूताकाशविषयत्वे तदननुगुणत्वात् ।

आचार्यवाचस्पतिमिश्रास्तु सर्वलोकगतिविषय एवायं प्रश्न इत्याहुः । तेषामयमाशयः—यथा शालावत्यप्रश्नैकरूपस्य दाल्भ्यप्रश्नस्यानन्तवस्तुपरत्वाभावेऽपि अन्तवत्त्वदोषमुद्भावितवान् जैवलिः अनन्तं वस्तु पृथिवीकारणं विवक्षतीति निश्चयवतश्शालावत्यस्य प्रश्नोऽयमनन्तवस्तुपर इति कल्प्यते, तथा सर्वकारणत्वाभावे तदनन्तं न स्यात्, अतोऽनन्तं वस्तूपक्षिपता जैवलिना सर्वकारणमेव तदुपक्षिप्तं भवतीत्यपि शालावत्यस्य निश्चयसम्भवात् तदीयप्रश्नोऽयं 'तत् किं सर्वकारणं अनन्तं वस्तु' इति सर्वलोकगतिविषयः इत्यपि कल्पयितुमुचित इति । एवंच यथा अनन्यथासिद्धेनानन्त्यलिङ्गेनाकाशश्रुतिबाधः, तथा पूर्वापरानेक-लिङ्गपर्यालोचनालब्धोपक्रमभूयोऽनुग्रहन्यायद्वयेनापि तद्बाधः । प्रधानपरस्याप्याकाशशब्दस्य लक्षणा-सहिष्णुत्वेनान्यथाऽप्युपपन्नस्य मुख्यार्थविषयत्वे सर्वकारणानन्तवस्तुविषयप्रश्नोत्तरसाधकत्वानुपपत्त्या स्वत एव तद्योग्यवस्त्वन्तरलक्षणोन्मुखत्वेनान्यथैवोपपन्नस्य अभ्यस्तस्यापि अनन्यथासिद्धलिङ्गेभ्यो दुर्बलत्वात् । आका-शस्य तद्गुणानाञ्च रूपरूपिवत् वस्तुतो गुणप्रधानभावे सत्यपि उद्गीथप्रक्रमानुसारेण तदुपास्यनिर्णयार्थे अस्मिन् प्रकरणे गुणगुणिनामुपास्यानां 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' (छा. ८. १. ६) इति लिङ्गेन चाक्षुषज्ञानजनकालोकतद्गतोद्भूतरूपवत् समप्रधानत्वाच्च । तस्मादनन्यथा-सिद्धानन्तत्वलिङ्गबलात् भूयोऽनुग्रहन्यायात् उपक्रान्तप्रश्नानुरोधाच्च आकाशः परमेश्वर एवेति ।

सूत्रे तच्छब्दः पूर्वाधिकरणसूत्र इवानन्यथासिद्धत्वज्ञापनार्थः । लिङ्गादित्येकवचनं तु 'अनन्तत्वमेकमेव प्रधानं स्वतो निर्णायकम्, अन्यानि तच्छेषभूतानि तदवलम्बनलभ्यबलानि तदुपबृंहण-मात्ररूपाणि' इति ज्ञापनार्थम् । ननु श्रुत्यन्यथाकरणभारं कथमेकमेव अनन्तत्वलिङ्गं वहति ? अनन्यथा-सिद्धिमहिम्ना वक्ष्यतीति ब्रूमः । आकाशपदं हि श्रुतित्वेऽपि प्रथमपठितत्वेऽपि अभ्यस्तत्वेऽपि लक्षणया ब्रह्मपरत्वं सहते । अनन्तपदं तूपक्रमोपसंहारोपपत्तिरूपानेकलिङ्गप्रतिष्ठापितमुख्यानन्त्यतात्पर्यं सत् न भूताकाशगतापेक्षि-कानन्त्यपरतां सहते । पूर्वतन्त्रे हि 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादिस्थलेषु मन्त्रलिङ्गब्राह्मणश्रुत्योः मन्त्रब्राह्मणान्यतरलक्षणया सम्भवदन्यथासिद्धिकयोर्विरोध एव श्रुत्या लिङ्गबाधोऽङ्गीकृतः । तत्राप्यनन्यथा-सिद्धलिङ्गविरोधे अन्यथासिद्धाया श्रुतेरेव बाधः । यथा 'हस्तेनावद्यति' 'स्रुवेणावद्यति' 'स्वधितिनाऽवद्यति' इति हस्तस्रुवस्वधितीनामवदानसामान्यसाधनत्वश्रवणेऽपि हस्तादिसामर्थ्यरूपानन्यथासिद्धलिङ्गविरोधेन सङ्कोच-सहिष्णूनामवद्यतिश्रुतीनामेव पुरोडाशादिकठिनद्रव्याज्यादिद्रवद्रव्यमांसावदानविषयतया संकोचरूपो बाधः । यथा वा 'कृष्णलं श्रपयेत्' इति श्रवणेऽपि कृष्णलेषु विक्लेदनफलकव्यापारासम्भवात्तत्राधिश्रयणादिव्यापारस्य उष्णीकरणमात्र एव सामर्थ्यात् वस्तुसामर्थ्यरूपानन्यथासिद्धलिङ्गबलेन श्रपणश्रुतेरेवोष्णीकरणलक्षणासहिष्णो-र्मुख्यार्थत्यागरूपो बाधः । इह तु अनन्तत्वलिङ्गस्यावधारणाद्युपबृंहणमप्यस्तीति विशेषः । तस्मादिहोपास्य आकाशः परमेश्वर इति सिद्धम् । १. १. २२ ।

इत्याकाशाधिकरणम् । ८ ।

( ९ अधिकरणम् )

**अत एव प्राणः । २३ ।**

अतिदेशाधिकरणस्यास्य पूर्वाधिकरणरीत्यैव पूर्वपक्षसिद्धान्तौ । 'प्रस्तोतर्या देवता प्रस्ताव-मन्वायत्ता' इत्युपक्रम्य श्रुते 'कतमा सा देवतेति प्राण इति होवाच । सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता' ( छा. १. ११. ४, ५ ) इति छान्दोग्यवाक्ये प्रस्तावदेवतारूपः प्राणः पञ्चवृत्तिर्वायुः, न ब्रह्म; उपक्रमगतप्रधानप्राणश्रुत्यनुसारेण चरमश्रुततद्गुणसर्वभूतसंवेशनोद्गमनावधारणदेवताशब्दोदितचेतनत्वलिङ्गानां वर्णनीयत्वादिति प्राप्ते 'कतमा सा

देवता' इति 'सैषा देवता' इत्युपक्रमोपसंहारगतप्रतिपिपादयिषितचेतनत्वलिङ्गेन असङ्कुचितसर्वभूतसंवेशनोद्गमनावधारणोपबृंहितेन प्राणश्रुतिबाधात् ब्रह्मैवेति **सिद्धान्त** इति । अतिदेशस्य प्रयोजनं तु यथा अन्नमयाद्यब्रह्मप्रायपाठादानन्दमयो न ब्रह्म एवमुद्गीथप्रतिहारदेवतारूपात्वादित्यप्रायपाठात् प्राणोऽपि न ब्रह्म ।

न च वाच्यम्—'इदं पुच्छं प्रतिष्ठा' इत्याद्यप्रधानाब्रह्मप्रायपाठेऽपि 'ब्रह्म पुच्छं प्रतिष्ठा' इत्यत्र यथा पुच्छं स्वप्रधानं ब्रह्म, तथा प्राणोऽपि स्यात्—इति; तत्र पुच्छशब्दतः प्रथमश्रुतया ब्रह्मश्रुत्या तत्प्रायपाठबाधात्, इह प्रथमश्रुतायाः प्राणश्रुतेः प्रायपाठानुग्राहकत्वेन तद्वैषम्यात् ।

नापि शङ्कनीयं 'तत्तेज ऐक्षत' ( छा. ६. २. ३ ) इत्यादिप्रायपाठबाधवदिहापि स्यादिति । तत्रेक्षणश्रुत्यमुख्यार्थत्वापादकप्रायपाठबाधनेऽप्यत्र प्राणश्रुतिमुख्यार्थानुग्राहकप्रायपाठबाधनायोगात् । न च 'का साम्नो गतिः' (छा. १. ८. ४) इत्यादिश्रुत्युपात्तस्वरप्राणाद्यब्रह्मप्रायपाठबाधवदिहापि स्यादिति चोदनीयम् । भूमविद्यायां 'एष तु वा अतिवदति' (छा. ७. १६. १) इति तुशब्देनाब्रह्मनामादिप्रायपाठवत् तत्रान्तवत्त्वदोषोद्भावनेनाब्रह्मस्वरादिप्रायपाठस्य व्यवच्छेदसिद्धावपि अत्र तद्व्यवच्छेदासिद्धेरित्यधिकशङ्कायाः 'श्रुत्यनुगृहीतमपि सन्निधानं तात्पर्यवल्लिङ्गबाध्यम्' इति व्युत्पादनेन निवर्तनमाशङ्कान्तरनिवर्तनं च प्रयोजनम् । तथाहि तत्रोपाख्यायते—

उषस्तिनामा कश्चिदृषिः धनलिप्सया राज्ञो यज्ञं गत्वा स्वस्य ज्ञानवैभवं प्रकटयन् प्रस्तोतारमुवाच—प्रस्तोतर्या देवता प्रस्तावभक्तिमनुगता तां चेदविद्वान्मम विदुषस्सन्निधौ प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति । एवमेवोद्गातारं प्रतिहर्तारं चोवाच—उद्गीथप्रतिहारभक्त्यनुगतदेवतावेदनं विनोद्गाने प्रतिहरणे च तयोर्मूर्द्धा विपतिष्यतीति । ते भीताः कर्मभ्यो विरेमुः । ततो यजमानेनानुनीतो 'यावदेभ्यो धनं दद्यास्तावन्मम दद्याः' इति यजमानं पृष्ट्वा ततो लब्धतावद्धनदानप्रतिश्रवणः तदनन्तरं प्रस्तोत्रा प्रस्तावदेवतां पृष्टः 'प्राणः' इत्युपदिश्य तत्र सर्वभूतसंवेशनोद्गमनमुक्त्वा 'सैषा देवता प्रस्तावमन्वायत्ता' (छा. १. ११. ४,५) इत्युपसञ्जहार । तथोद्गात्रा उद्गीथदेवतां पृष्टः 'आदित्यः' इत्युपदिश्य 'सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैस्सन्तं गायन्ति' (छा. १. ११. ७) इत्युक्त्वा 'सैषा देवतोद्गीथमन्वायत्ता' इत्युपसञ्जहार । एवं प्रतिहर्त्रा प्रतिहारदेवतां पृष्टः 'अन्नम्' इत्युपदिश्य 'सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति' (छा. १. ११. ९ ) इत्युक्त्वा 'सैषा देवता प्रतिहारमन्वायत्ता' इत्युपसञ्जहार ।

तत्र यथा देवताविषयोपक्रमोपसंहारयोस्सतोरप्यचेतनस्यान्नस्य प्रतिहारोपास्यत्वं तथा प्राणस्यापि

प्रस्तावोपास्यत्वमस्तु । यदि तत्र 'अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्' (२ । १ । ५) इति नविलक्षणत्वाधिकरणसूत्रे वक्ष्यमाणन्यायेन अन्नशब्दस्तदभिमानिदेवतापरः, तर्हि प्राणशब्दोऽपि प्राणाभिमानिदेवतापरोऽस्तु । न च वाच्यम्—सर्वभूतसंवेशनोद्गमनवाक्यशेषः प्राणवायावेव कथञ्चिद्योजयितुं शक्यते 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणञ्चक्षुः प्राणं श्रोत्रं प्राणं मनः स यदा प्रबुध्यते प्राणादेवाधि पुनर्जायन्ते' (शत. ब्रा. १०, ३, ३) इति श्रुत्यन्तरात्, स्वापकाले प्राणवृत्तौ स्थितायामिन्द्रियवृत्तीनां लोपस्य प्रबोधकाले प्रादुर्भावस्य सर्वदा देहिनां स्थितिप्रवृत्त्योः प्राणवाय्वधीनत्वस्य च प्रत्यक्षसिद्धत्वाच्च । तदभिमानिदेवतायां तु वाक्यशेषो न तथा योजयितुं शक्यते । अत एव 'प्राणवायुपूर्वपक्ष एवात्र कर्तुमुचितो न तद्देवतापूर्वपक्षः' इत्यभिप्रेत्य भाष्ये प्रत्यक्षानुगृहीतश्रुत्यन्तरानुरोधेन प्राणवायौ वाक्यशेषस्योपपत्तिर्दर्शिता । तत्र चानन्यथासिद्धं देवतालिंगं बाधकं स्यादेव—इति । एवं सति 'अन्नमेव प्रतिहरमाणानि जीवन्ति' इति वाक्यशेषेण अन्नशब्दस्याचेतनपरताया वक्तव्यत्वेन तत्राचेतने देवताशब्दवदिहापि देवताशब्दोपपत्त्या देवतात्वलिंगस्याबाधकत्वतादवस्थ्यात् । यदि चाभिमान्यभिमानविषययोरभेदाध्यासमाश्रित्य अन्नवाक्यशेषः तदभिमानिदेवतायां योज्यते, तर्हि प्राणवाक्यशेषोऽपि तथैव योज्यताम् । तस्मात् देवतात्वं न प्राणस्य परमेश्वरत्वसाधकम् ।

ननु तथाप्यसंकुचितसर्वभूतसंवेशनोद्गमनाधारत्वं तत्साधकं स्यात् । सर्वभूतशब्दो हि प्राणिनिकायपरः पञ्चमहाभूतपरो वा स्यात् । उभयत्र भूतशब्दस्य रूढिसत्त्वात् । न च सर्वेषां प्राणिनां महाभूतानां वा प्राणवायौ संवेशनोद्गमने स्तः । यदि च बालाक्यधिकरण (१ । ४ । ५) न्यायेन रूढ्योरन्यतरपरिग्रहे निर्णायकाभावात् तुल्यबलयोः परस्परप्रतिहतौ लब्धोन्मेषेण 'भवन्ति'-'जायन्ते' इति योगेन सर्वभूतशब्दस्सर्वकार्यपर आश्रीयते, तदा सुतरां प्राणवायौ ते न स्त एवेति चेत् । मैवम् । आदित्यान्नवाक्यशेषवत् प्राणवाक्यशेषस्यापि मुख्यार्थ एवोपपत्तेः । न हि सर्वे प्राणिनस्सर्वाणि महाभूतानि सर्वाणि कार्याणि वा आदित्यमुच्चैस्सन्तं गायन्ति अन्नमेव प्रतिहरमाणानि जीवन्ति वा । किन्तु चेतनविशेषा एव । अन्नशब्दो ह्योदनवाची 'भिस्सा स्त्री भक्तमन्धोऽन्नम्' इति नैघण्टुकप्रसिद्धेः । 'अन्नेन व्यञ्जनम् (पा. सू. २. १. ३४) इति पाणिनिसूत्रदर्शनाच्च । तस्माद्यथा तयोरेकत्र सर्वभूतशब्दः आदित्यगानयोग्यचेतनविशेषपरः अन्यत्रान्नोपजीवनयोग्यचेतनविशेषपरः, तथा अत्र प्राणवायुसंवेशनादियोग्यकार्यविशेषपरः प्राणाधीनस्थितिप्रवृत्तिकसर्वप्राणिपरो वा स्यात् । अत्रैव प्रकरणे सर्वभूतशब्दस्य योग्यताऽनुसारेण सङ्कोचदर्शनात् । एतेनावधारणानुपपत्तिरपि निरस्ता ; 'अन्नमेव' इतिवदयोगव्यवच्छेदकत्वोपपत्तेः । तस्मादिह पूर्वन्यायाप्रवृत्तेः न प्राणस्य परमेश्वरत्वसिद्धिरित्यधिका शङ्कोन्मिषति ।

अत्रेदं समाधानम्—प्रतिपिपादयिषितचेतनत्वलिङ्गविरोधात् प्राणशब्दस्य प्राणवायुरूपमुख्यार्थातिलङ्घनेन लक्षणीयचेतनाकाङ्क्षायां 'प्राणबन्धनं हि सोम्य मनः' (छा. ६. ८. २) 'प्राणस्य प्राणम्' (बृ. ४. ४. १८) इत्यादिश्रुतिषु परमेश्वर इव प्राणसंवादादिषु प्राणाभिमानिदेवतायामपि तस्य प्रयोगदर्शनेन निरूढलक्षणया तस्यामपि यद्यपि वृत्तिस्सम्भवति, तथाप्यत्र परमेश्वर एव तस्य वृत्तिर्युक्ता; वाक्यशेषस्य स्वरसतोऽसङ्कुचितसर्वभूतसंवेशनोद्गमननिरपेक्षाधारपरस्य स्वतस्तत्र सम्भवात् । प्राणाभिमानिदेवतायां सङ्कुचितार्थस्य तस्य प्राणवायुगततदर्थारोपेण समर्थनीयत्वात् । न ह्यन्नवाक्यशेषस्तदभिमानिदेवतां विना चेतनान्तरे कथमप्यन्वयमलभमानः तस्यामन्नगततदर्थारोपेण समर्थित इति अत्र गत्यन्तरसम्भवेऽपि अन्यदीयारोपस्समाश्रयणीयः, न वा गत्यन्तररहितयोरन्नादित्यवाक्यशेषयोस्सर्वशब्दस्य सङ्कोचः कल्प्यत इति असङ्कोचसम्भवेऽप्यत्र सङ्कोचः कल्पनीयः । नाप्यन्नवाक्यशेषेऽवधारणस्य स्वारसिकमन्ययोगव्यवच्छेदकत्वं त्यक्त्वा भिन्नक्रमत्वेनायोगव्यवच्छेदकत्वमाश्रितमिति अत्रापि तथा आश्रयणीयम् । प्रायपाठस्य स्थानप्रमाणरूपस्य लिङ्गबाध्यस्यानियामकत्वात् । तस्मात् सर्वजगत्प्रकृतित्वावधारणोपबृंहितप्रतिपिपादयिषितचेतनत्वलिङ्गेन प्राणश्रुतिबाधात् प्राणः परमेश्वर इति सिद्धम् । १. १. २३ ।

इति प्राणाधिकरणम् । ९ ।



(१० अधिकरणम् )

## ज्योतिश्चरणाभिधानात् । २४ ।

इदमामनन्ति छन्दोगाः—'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तज्ज्योतिर्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' (छा. ३. १३. ७) इति । अत्र कौक्षेयज्योतिषि संपाद्योपास्यं ज्योतिः किं प्रसिद्धमग्न्यादिकं ज्योतिः उत परमेश्वर इति संशये, प्रसिद्धमेव तत् ज्योतिः न ब्रह्म; प्राणाकाशवाक्ययोरिव वाक्यशेषे श्रुतिभञ्जकतल्लिङ्गाभावात् । प्रत्युत रूपवद्विषयदीप्तिद्युमर्यादत्वाधारबहुत्व कौक्षेयज्योतिरध्यास चक्षुष्यत्वविश्रुतत्वरूपाल्पफलोपासनोपास्यत्वलिङ्गैः वाक्यशेषगतैः प्रसिद्धज्योतिषि स्वारसिकैः श्रुतेरेवोत्तंभनात् ।

न च 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' (छा. ३. १२. ६) इति प्रकृते त्रिपाद्ब्रह्मणि द्युसम्बन्धित्वलिङ्गोपस्थापिते यच्छब्दपर्यवसानात् तत्समानाधिकृतो ज्योतिश्शब्दोऽपि तद्विषयः

स्यादिति वाच्यम् । वाक्यान्तरगतलिङ्गप्रापितादेकवाक्यगतलिङ्गानुगृहीतश्रुतिप्रापितस्य बलीयस्त्वेन दीप्त्यादि-लिङ्गानुगृहीतज्योतिश्श्रुतिप्रापिते प्रसिद्धज्योतिष्येव यच्छब्दस्यापि पर्यवसानात् । पूर्वं 'गायत्री वा इदं सर्वं भूतम्' (छा.३.१२.१) इति गायत्र्याख्यं छन्दः प्रकृत्य 'तदेतदृचाऽभ्यनूक्तम् । तावानस्य महिमा । ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि'(छा.३.१२.५,६) इति मन्त्रस्य तद्विषयतया अवतारितत्वेन ब्रह्मणः प्रकृतत्वासिद्धेश्च । न च—तत्र गायत्रीशब्दो गायत्र्यवच्छिन्नब्रह्मलक्षकः; छन्दोमात्रस्य सार्वात्म्यानुपपत्तेरिति वाच्यम् । गायत्र्यवच्छिन्नतया परिच्छिन्नरूपे ब्रह्मण्यपि तदनुपपत्तेस्तुल्यत्वात् । तत्र स्तावकतया तत्समर्थने मुख्यार्थानुग्रहाय गायत्र्यामेव तत्समर्थनस्योचितत्वात् । पूर्वं ब्रह्मणः प्रकृतत्वेऽपि तत्र दिवो ऽधिकरणत्वेन निर्देशः, इहावधित्वेनेति निर्देशभेदेन तत्प्रत्यभिज्ञाविरहाच्चेति **पूर्वपक्षः** ।

**राद्धान्तस्तु**— ब्रह्मैव इदं ज्योतिः; 'त्रिपादस्यामृतं दिवि' इति सर्वाणि भूतानि एकं पादं कृत्वा पादत्रयरूपेणोक्तस्य ब्रह्मणः यच्छब्देनाभिधानात् तत्समानाधिकृतज्योतिश्शब्दस्यापि तत्र वृत्त्यवश्यंभावात् । न च—यच्छब्द एव ज्योतिश्शब्दस्वारस्याबाधाय प्रकृतपरत्वं परित्यज्य ज्योतिश्शब्दोपस्थापितप्रसिद्धप्राकृत-ज्योतिःपरामर्शी स्यादिति वाच्यम् । सर्वनाम्नां समानाधिकृतशब्दस्वारस्यमतिलंघ्यापि प्रकृतपरामर्शित्वस्य व्युत्पत्तिसिद्धतया यच्छब्दानुसारेणैव ज्योतिश्शब्दस्य नेयत्वात् ।

अत एव प्रयुक्तिलक्षणे (जै. सू. ४. १. ९) 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम्' इति श्रुतावामिक्षापदवाच्यं पयसोऽर्थान्तरं दाधिपयस्संसर्गजन्यद्रव्यमभ्युपेयम्; पयः आमिक्षेति व्यपदेशभेदादिति तस्यैव द्रव्यान्तरस्य कठिनाम्लमधुररसस्य वैश्वदेवयागद्रव्यत्वे आमिक्षापद-समानाधिकृततत्पदस्यापि तद्द्रव्यपरत्वे च प्राप्ते सर्वनाम्नः प्रकृतपरत्वस्वाभाव्यात् तत्पदमानयनक्रियां प्रति प्रधानकर्मतया दध्यानयनाधिकरणत्वेन निर्दिष्टं पयः परामृशतीति पय एव यागद्रव्यम् । तत्पदे स्त्रीलिङ्ग-मामिक्षापदसामानाधिकरण्यकृतम् । आमिक्षापदं तु न संसृष्टद्रव्यान्तराभिधायकम्, किन्तु तत्पदेन केवले पयसि यागद्रव्ये विहिते तत्र दध्यानयनसंस्कारविधिप्राप्तदधिसंसर्गानुवादकम् । आमिक्षापदमप्यस्मादेव वैदिक-व्यवहारादम्लद्रव्यघनीभूतपयोमात्रवाचकम्, न तु तज्जन्यद्रव्यान्तरवाचकम् । अम्लरसोऽपि न यागद्रव्यगतः, किन्तु तत्संस्कारकद्रव्यगत इति पयोरूपामिक्षाप्रयुक्तमेव दध्यानयनं न वाजिनप्रयुक्तमपीति निर्णीतम् ।

'दधि मधु घृतं धानाः करम्भा उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इति चित्रायागविधौ दध्यादिसमद्रव्यमेलनरूपसंसृष्टैकद्रव्यात् एको यागः, तत्पदं च संसृष्टद्रव्यपरमिति प्राप्ते—तत्पदं प्रकृत-

परामर्शित्वस्वाभाव्यात् असंसृष्टदध्यादिसमद्रव्यपरं न तु संसृष्टैकद्रव्यपरमिति दध्यादिसमद्रव्यकास्सम यागाः । समस्वपि द्रव्येषु तदिति नपुंसकैकवचननिर्देशः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा.सू. १. २. ६९) इति व्याकरणस्मृत्यनुसारेणोपपद्यते । संसृष्टपदं तु यागभेदेऽप्येकदेवत्यतया सान्नाय्यवद्दध्यादीनां सहप्रक्षेपे संसर्गस्य सत्वात् तदनुवादकं योज्यमिति निर्णीतं टुप्टीकायामष्टमद्वादशाध्याययोः ।

अपि चात्र यच्छब्दयोगात् द्युसम्बन्धिज्योतिषोऽयमनुवादः । स चानुवाद्यस्य प्राप्तिमपेक्षते । प्राप्तं च द्युसम्बन्धित्वेन ब्रह्म 'त्रिपादस्यामृतं दिवि' इति । यद्यपि प्रसिद्धज्योतिरपि 'यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्' (ऐ. सं. ८. ४) इति मन्त्रवर्णतः प्राप्तिमत् भवति, तथाऽप्यत्रैव पुरस्तात् तथावर्णिते परस्तादपि शाण्डिल्यविद्यायामनुवर्तमाने उभयत्र सन्दष्टतया मध्यस्थोपासनायाम्, अभिक्रमणे प्रयाजवदन्वयसाकाङ्क्षे ब्रह्मणि स्वत एव बुद्धौ विपरिवर्तमाने तदतिलंघ्य कल्पनीयोपस्थितिकस्य प्रकृतोपासनान्वयाकाङ्क्षारहितस्य प्रसिद्धज्योतिषोऽनुवाद्यत्वकल्पनं न युक्तम् । एवमनुवादस्य प्रकृतार्थ-नियन्तृत्वे स्थिते ज्योतिश्शब्दस्यापि वसन्तवाक्यगतस्येव प्रकृतपरत्वमेव सिध्यति । दृष्टो हि ब्रह्मण्यपि भूयसा ज्योतिश्शब्दश्श्रुतिषु 'तं देवा ज्योतिषां ज्योतिः' (बृ. ४. ४. १६) 'परं ज्योतिरुपसम्पद्य' (छा. ८. १२. ३) इत्यादिषु । न च ज्योतिश्शब्दः प्रसिद्धज्योतिष एव वाचकः, किन्तु यदेव किञ्चिदवभासकं चेतनव्यवहारोपयोगविशेषशालि तस्य सर्वस्यापि वाचकः । बृहदारण्यके 'याज्ञवल्क्य किंज्योतिरयं पुरुषः' (बृ. ४.३. २) इति प्रश्ने आदित्यचन्द्राग्निवागात्मनां पूर्वपूर्वाभावे उत्तरोत्तरस्य पुरुषं प्रति ज्योतिष्ट्वमुक्तवता याज्ञवल्क्येन तेषु ज्योतिश्शब्दप्रवृत्त्युपपादनाय 'आदित्येनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येति' (बृ. ४. ३. २) इत्येवमादिभिरादित्यादीनां पुरुषव्यवहारोपयोगस्य प्रतिपादितत्वात्, अन्यत्रापि 'मनो ज्योतिर्जुषताम्' (तै. ब्रा. १. ६. ३. ३) इत्यादिदर्शनाच्च । अतः 'तस्य भासा सर्वमिदं विभाति' (क. २.५. १५) इति श्रुतेस्समस्तजगदवभासकं ब्रह्म ज्योतिश्शब्दस्य वाच्यमेवेति न ज्योतिश्शब्दानुपपत्तिः । 'दीप्यत' इति दीप्तिमच्छरीराद्यनुगत्यभिप्रायम् । द्युमर्यादत्वमुपासनार्थम् । सर्वत्राततं प्रसिद्धज्योतिष्यपि हि उपासनार्थमेव तद्वाच्यम् । आधारबहुत्वमप्यौपाधिकरूपेण न विरुद्धम् । तदेतद्दीप्त्यादित्रिकं अन्तरादित्यवाक्यश्रुत-हिरण्मयत्वैश्वर्यमर्यादाक्ष्यादित्याधारत्वसमर्थनेनैव समर्थितम् । कौक्षेयज्योतिरध्यासलिङ्गमपि न शङ्कार्हम् । न हि सारूप्यनिबन्धन एव सर्वत्राध्यासः येन कौक्षेयज्योतिष्यध्यस्यमानं तत्सारूप्यात् प्रसिद्धज्योतिरिति सिध्येत् । असारूप्येऽपि नामादिषु ब्रह्माध्यासदर्शनात् । 'तदेतद्दृष्टञ्च श्रुतञ्चेत्युपासीत चक्षुष्यश्श्रुतो भवति' (छा. ३. १३. ८) इत्यल्पफलश्रवणमपि न शङ्कार्हम्; महते फलायैव ब्रह्मोपासनीयमिति नियमाभावात्

'अन्नादो वसुदानो विन्दते वसु य एवं वेद' (बृ. ४।४।२४) इत्यादिदर्शनात्। यत्तु दृष्टश्रुतत्वमुपास्यं तत्फलवदपि न प्रसिद्धज्योतिर्लिङ्गम्, किन्तु प्रतीकस्य कौक्षेयज्योतिषो दृष्टश्रुतौष्ण्यघोषानुमितत्वरूपम्; 'अन्तः-पुरुषे ज्योतिः' इत्येतदनन्तरं 'तस्यैषा दृष्टिर्यत्रैतदस्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाति। तस्यैषा श्रुतिः यत्रैतत् कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति' (छा. ३. १३. ७, ८) इति श्रवणात्। तस्मात् ज्योतिश्श्रुतेर्ब्रह्मसाधारण्यात् दीप्त्यादित्रयस्यान्तरादित्यवाक्यगतहिरण्मयत्वादिवदन्यथा-सिद्धत्वात् आन्तरज्योतिरध्यासादित्रयस्यालिङ्गत्वाच्च यच्छब्दश्रुत्या द्युसम्बन्धलिङ्गेन ब्रह्मण उपासनान्वयाकाङ्क्षा-लक्षणेन प्रकरणेन च ज्योतिर्ब्रह्मैवेति।

सूत्रे 'चरणाभिधानात्' इत्यस्य यच्छब्दस्सर्वनामस्वाभाव्यात् समानाधिकृतशब्दस्वारस्यमतिलंघ्य प्रकृतपरामर्शीति युक्तौ प्रकृतस्य पादत्रयरूपस्य ब्रह्मणो यच्छब्देनाभिधानादित्यर्थः। यच्छब्दयोगादनुवाद्यं तु द्युसम्बन्धि प्राप्त्यपेक्षमिति युक्तौ प्राक् मन्त्रेण ब्रह्मणः पादत्रयरूपस्य द्युसम्बन्धिनोऽभिधानादित्यर्थः। यद्यप्याद्ययोजनायां पूर्वं प्रकृते ब्रह्मणि यावन्तो गायत्र्यादिशब्दाः प्रयुक्ताः तेषामन्यतमश्चरणशब्दस्थाने निवेश-यितुं शक्यः, तथाऽपि द्वितीययोजनायां 'त्रिपादस्यामृतं दिवि' इति मन्त्रभाग एवाश्रयणीय इति तत्साधार-ण्याय चरणशब्दो निवेशितः। उक्तयुक्तिद्वयबलात् 'यदतः परो दिवः' इत्यस्य त्रिपाद्ब्रह्मपरत्वमवलम्ब्य ज्योतिश्शब्दस्य तत्परत्वोपपादनयुक्तौ चरणे ब्रह्मणि 'यदतः परो दिवः' इति निर्दिष्टे ज्योतिश्शब्दस्याभिधा-वृत्तिसम्भवादित्यर्थः। एवं तृतीययोजनासाधारण्यार्थमेव सूत्रान्तरप्रयुक्तं व्यपदेशादिपदं विहाय 'अभिधानात्' इत्युक्तम्। १. १. २४।

अथ 'तावानस्य' इति मन्त्रे ब्रह्मणः प्रकृतत्वमसिद्धमित्याशङ्कामनुभाष्य निराकरोति—

**छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ २५ ॥**

पूर्वत्र गायत्रीशब्देन छन्द एव ह्यभिमतं न ब्रह्म; ज्योतिश्शब्दस्येव गायत्रीशब्दस्य तत्राभिधावृत्तेरुप-पादयितुमशक्यत्वात्। तथा च मन्त्रेणापि छन्दस एव प्रतिपादनान्न ब्रह्मणः प्रकृतत्वमस्ति। न च वाच्यमस्मिन् मन्त्रे चतुष्पात् ब्रह्म साक्षात् प्रतीयते, कथमयं छन्दःपरस्स्यादिति। 'गायत्री वा इदं सर्वं भूतम्' इति गायत्रीमुपक्रम्य 'सैषा चतुष्पदा' इत्युक्त्वा 'तदेतदृचाऽभ्यनूक्तम्' इति तस्मिन्नर्थेऽवतारितस्य मन्त्रस्य चतुष्पाद्ब्रह्मप्रति-पादकत्वायोगादिति चेत्—नायं मन्त्रश्छन्दोविषयः; छन्दोमात्रस्य सर्वभूतपादत्वाद्ययोगात्। तथा 'गायत्री

वा इदं सर्वम्' इत्यादिरपि न छन्दोमात्रविषयः; छन्दसस्सर्वात्मकत्वायोगात्, किंतु तत्र गायत्रीशब्दो गायत्री-रूपस्वविकारानुगतब्रह्मानुसन्धानोपदेशात्तल्लक्षकः। विकारश्च स्वानुगते ब्रह्मण्युपलक्षणामिति न सर्वात्मकत्वानुपपत्तिः। तथाह्यन्यत्रापि विकारानुगतब्रह्मानुसन्धानोपदेशो दृश्यते 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते' (ऐ. आ. ३. २. ३) इत्यादौ।

सूत्रे तथेत्यस्य तेन विकारानुगतत्वेन प्रकारेणेत्यर्थः। यत्तु भाष्ये 'यथा गायत्री षडक्षरैः पादैश्चतुष्पदा एवं ब्रह्मापि मन्त्रवर्णोक्तिरीत्या चतुष्पात्' इति सादृश्येन श्रुतिगतं गायत्रीपदं ब्रह्मणि गौण-मङ्गीकृत्य 'तथा तद्वत् गायत्रीच्छन्दोवत् चतुष्पात्त्वेन ब्रह्मणि चेतोर्पणनिगदात्' इति व्याख्यानं तत् 'अपर आह' इत्युपक्रमादनभिमतमुन्नीयते। अनभिमतिबीजं तु साक्षात्सम्बन्धेन गायत्रीपदस्य ब्रह्मणि लक्षणासम्भवे सादृश्यरूपपरम्परासम्बन्धमूलगौणवृत्तिरयुक्ता। चतुष्पदत्वं च गायत्र्या न प्रसिद्धम्। अष्टाक्षरैः त्रिभिः पादैः गायत्रीति प्रसिद्धेः त्रिपदैव गायत्री। षट्स्वक्षरेषु एकैकपादत्वकल्पनया चतुष्पदा सम्पद्यत इति न युक्तम्; 'तेषामृक् यत्रार्थवशेन पादव्यवस्था' (जै. सू. २. १. ३५) इत्यर्थवशेन नियमितां पादव्यवस्था-मपहाय केवलमक्षरगणनया पादकल्पनाऽयोगात्।

न च 'षट्त्रिष्टुभो माध्यन्दिने सवने' इति गायत्रीबृहत्यादिनानाच्छन्दस्सङ्घाते षट्त्रिष्टुप्त्वव्यप-देशनिर्वाहार्थं तेषु त्रैष्टुभानां पादानामक्षरगणनया कल्पना सम्प्रतिपन्नेति वाच्यम्। तत्र विनैव पादकल्पनां माध्यन्दिनसवनगतनानाच्छन्दोऽक्षराणां षट्त्रिष्टुबक्षराणां च संख्यासाम्यमात्रेण तथाव्यपदेशस्य गौणत्वात्। अन्यथा बृहस्पतिसवे 'गायत्रमेतदहर्भवति' इति वचनस्य प्राकृतेष्वेव नानाच्छन्दस्स्वक्षरगणनया अक्षरलोपेन वा गायत्रीत्वसम्पादनार्थतया प्राकृतीनामृचां बाधस्सम्भवतीति तत्र वचनबलान्नानाच्छन्दांस्यपहाय मुख्य-गायत्र्यो ग्राह्या इति निर्णयार्थेन 'गायत्रीषु प्राकृतानामवच्छेदः' (जै. सू. ८. ३. ६) इति पूर्वतन्त्राधि-करणेन विरोधापत्तेः।

न च वाच्यम्– 'इन्द्रश्शचीपतिर्बलेन पीडितः। दुश्च्यवनो वृषा समत्सुसासहिः' इति क्वचित् चतुष्पदाऽपि गायत्री दृष्टा—इति। तथाऽपि सर्वगायत्रीप्रसिद्धं रूपं विहाय क्वाचित्केन रूपेण सामान्यग्रहणा-योगात्। न हि सर्वत्र गवां चतुष्पात्त्वेऽपि क्वचिदौत्पातिकी द्विपादुत्पन्ना दृष्टेति 'वराहं गावोऽनुधावन्ति' इत्यत्र वायसे द्विपात्त्वेन गोसादृश्यं ग्राह्यमित्यलं विस्तरेण। १. १. २५।

ननु उपक्रमगतगायत्रीशब्दस्य तदनन्तरपठितमन्त्रश्रुतसर्वभूतपादत्वानुपपत्त्या गायत्र्यनुगतब्रह्म-लक्षकत्वकल्पनमयुक्तमित्याशंक्याह –

## भूतादिपादव्यपदेशोपपत्तेश्चैवम् । २६ ।

गायत्रीवाक्य एव भूतपृथिवीशरीरहृदयानि निर्दिश्य तेषां गायत्रीपादत्वेन व्यपदेशात् एवं गायत्रीशब्दो ब्रह्मपर इति निश्चीयते । 'व्यपदेशात्' इत्येतावति वक्तव्ये 'उपपत्तेः' इति अधिकोक्तिः तत्र किञ्चिदनुपपत्तिशङ्कानिरासाय । अनुपपत्तिश्च एवम्—'चतुष्पदेत्ययं हि भूतादिपादत्वव्यपदेशः । अयं तु गायत्र्यामृच्येवोपपद्यते; 'टाबृचि' (पा. सू. ४. १. ९) इति टाबन्तताया ऋच्येवानुशासनात् । ब्रह्मपरत्वे 'चतुष्पात्' इति स्यात्' इति । तत्रैवं समाधानम्—उपपद्यत एव गायत्र्यनुगतब्रह्मपरत्वे टाबन्तता; तदुपलक्षकऋक्संस्पर्शाप्रहाणादिति ।

चकारेण पुरुषसूक्ताम्नातस्य 'एतावानस्य' इति मन्त्रस्य ब्रह्मपरत्वस्याविचाल्यत्वात् 'यद्वै तत् ब्रह्म' इति 'इदं वाव तत्' (छा. ३. १२. ७) इति प्रकृतस्य ब्रह्मत्वप्रतिपादकाद्वाक्यात् गायत्र्युपासनाङ्गद्वारपालोपासनाविधौ 'ते वा एते पञ्च ब्रह्मपुरुषाः'(छा. ३. १३. ६) इति द्वारपालेषु ब्रह्मपुरुषत्वोक्तिलिङ्गाच्चेति समुच्चीयते । तथा च प्राथमिकैकप्रमाणात् उत्तरानेकप्रमाणानां बलवत्त्वात् भूतादिपादत्वप्रभृत्यनेकप्रमाणानुरोधेन एकस्या गायत्रीश्रुतेः गायत्र्यनुगतब्रह्मलक्षकत्वकल्पनमुपपन्नमिति दर्शितं भवति ।

एवमित्यधिकोक्तिरसन्देहार्था—आनन्दमयाधिकरणे हि 'भूयसां स्यात् स्वधर्मत्वम्' इति न्याये विप्रतिपद्यमानान् प्रति मान्त्रवर्णिकसूत्रेण हेत्वन्तरं दर्शितम्, इहापि तदवलम्ब्योत्तरानेकप्रमाणबलवत्त्वे कश्चिद्विचिकित्सेतेति । एवंकारेण तु—एवमेवायमर्थः; पदमात्रस्वारस्यानुरोधेन बहुबाधस्यान्याय्यत्वात्, आनन्दमयाधिकरणे तु 'तुष्यतु दुर्जनः' इति सम्भवद्धेत्वन्तरमप्युपन्यस्तम्—इति सूच्यते । १. १. २६ ।

नन्वस्तु प्रकृतं ब्रह्म, तथापि 'दिवि' 'दिवः' इति निर्देशभेदान्न ज्योतिर्वाक्यं तदनुवादक्षममित्याशंक्य निराकरोति —

## उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् । २७ ।

नैष दोषः; उभयस्मिन्नपि निर्देशे विरोधाभावात् । लोके वृक्षाग्रनिलीने श्येने 'वृक्षाग्रे श्येनः' 'वृक्षाग्रात् परतश्श्येनः' इति उभयथाव्यपदेशदर्शनेन दिवि स्थित एव ब्रह्मणि 'दिवि' दिवःपरः' इत्युभयथा व्यपदेशोपपत्तेः । यत्तु केनचिदुक्तं वृक्षाग्रनिलीने श्येने वृक्षाग्रात् परत इति व्यवहारोऽसिद्ध इति,

तत् पञ्चम्यन्तं सप्तम्यन्तमिति वा भ्रान्त्या । प्रथमान्तं हि तत्; तसेस्सार्वविभक्तिकत्वात्, 'दिवः परः' इति श्रुत्यानुगुण्यात्, 'एवं दिव्येव सत् ब्रह्म दिवः परमित्युपदिश्यते' इति दार्ष्टान्तिकपरभाष्यानुगुण्याच्च । न च वृक्षाग्रोपरिभागस्थिते श्येने वृक्षाग्रात् पर इति व्यवहारेऽप्यसंप्रतिपत्तिः । ततश्च दिव उपरिभागस्थिते ज्योतिष्यपि 'दिवः पर' इति व्यपदेशः तद्वदेवोपपद्यतेतराम् ।

ननु दिव उपरिभागे स्थितं ज्योतिः कथं 'अनुत्तमेषूत्तमेषु लोकेषु' इति अधिकरणान्तरस्थितं निर्दिश्यते । उच्यते । द्युशब्दोऽयं स्वर्गलोकपर्यायः । स्वर्गलोकश्चात्र भूर्भुवस्स्वरिति लोकत्रयपक्षानुसारेण भूमिसूर्यान्तररूपात् भुवर्लोकादुपरितनसत्यलोकान्तो विवक्षितः । तस्योपरिभागरूपा ये सत्यलोकान्तर्गतहिरण्य-गर्भादिभोगभूमिभेदाः 'तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति' (बृ. ६. २. १५) इत्यादिश्रुतिप्रसिद्धाः तेषु विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु सर्वस्मादपि लोकादुपरिस्थितेषु स्वेभ्य उत्तमरहितेषु स्वयं सर्वोत्तमेषु लोकेषु हिरण्यगर्भादिमूर्त्यभिव्यक्तं ब्रह्म 'दिवः परम्' इति, 'अनुत्तमेषूत्तमेषु लोकेषु स्थितम्' इति च युक्तमेव; वृक्षाग्रस्योपरिपल्लवितभागस्थिते श्येने 'वृक्षाग्रात् पर' इति 'पल्लवेषु स्थित' इति च व्यपदेशदर्शनात् । विस्तरेण चैतदनुपदं प्रतिपादयिष्यामः ।

यत्तु भाष्ये 'अपर आह' इत्यारभ्योक्तं 'यथा वृक्षाग्रेणासम्बद्धः उपरि भ्रमन्नेव श्येनो वृक्षाग्रे इत्यपि व्यपदिश्यते तथा दिवः परमपि ब्रह्म 'दिवि' इत्यपि व्यपदिश्यते' इति, तत् भूर्भुवस्स्वर्महर्जनस्तप-स्सत्यमिति सप्तलोकपक्षानुसारेण सूर्यादिध्रुवान्तमेव द्युशब्दार्थमभिप्रेत्य । तत्रेदमनभिमतिबीजम्—युक्तं वृक्षाग्रे श्येन इति तदसम्बद्धेऽपि व्यपदेशः; औपश्लेषिकाधिकरणत्वाभावेऽपि सामीपिकाधिकरणत्वस्य सत्त्वेन सप्तम्या मुख्यार्थानपायात्, इह महरादिलोकत्रयान्तरितसत्यलोकभोगभूमिरूपेषूत्तमेषु लोकेषु स्थितस्य ब्रह्मणो द्युलोकसामीप्याभावेन दिवीति व्यपदेशोऽनुपपन्नस्स्यात् । न चैतद्युक्तम्; अनुवादमुख्यताऽनुसारेण पुरोवादा-न्यथानयनस्यानुपपन्नत्वात्, प्रथमपक्षे पुरोवादानुवादयोरुभयोरपि मुख्यार्थत्वसङ्घटनाच्चेति ।

केचित्तु 'दिवि' 'दिवः पर' इति निर्देशयोः प्रकारान्तरेणाविरोधमुपपादयन्ति—द्युशब्देनात्र आकाश उच्यते । स च शरीरात् बहिः शरीरमध्ये हृदयपुण्डरीकमध्ये चेति त्र्यावच्छिन्नः । तत्र सर्वत्र वर्तमानं ब्रह्म अन्तराकाशावच्छिन्नं सत् बाह्याकाशभागापेक्षया दिवःपरमित्युच्यते । अन्तराकाशे वर्तमानत्वाच्च तदेव दिवीत्युच्यत इत्यविरोध इति । तदिदम्—पूर्वं गायत्रीप्रकरणे 'त्रिपादस्यामृतं दिवि' इति मन्त्रोदाहरणानन्तरं "यद्वै तत् ब्रह्मेति इदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशोऽयं

वाव स योऽयमन्तःपुरुष आकाशः यो वै सोऽन्तःपुरुष आकाशः अयं वाव स योऽयमन्तर्हृदय आकाशः' (छा. ३. १२. ७, ८, ९) इत्युक्तरूपाकाशत्रित्वस्य तेषाञ्चाकाशभागानां जाग्रत्स्वप्नसुषुप्तिस्थानतया ब्रह्मोपलब्धिस्थानानां स्तुत्यर्थं ब्रह्मैक्योपदेशस्य च दर्शनात् तदनुसारेणोक्तम् । अस्माभिस्तु 'विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु' (छा. ३. १३. ७) इति स्ववाक्यगतपदसमभिव्याहारस्वारस्यात्, ब्रह्मणि द्युमर्यादत्वानुपपत्तितत्समाधानपरपूर्वपक्षसिद्धान्तभाष्यानुगुण्याच्च द्युशब्दः स्वर्लोकपरतया व्याख्यातः । सर्वथाऽपि 'दिवःपर' इति निर्देशस्याविरोधात् 'अथ यदतः परो दिव' इत्यादिना प्रकृतं त्रिपात् ब्रह्मानूद्य तस्यैव कौक्षेयज्योतिष्युपासनं विधीयते, न तु प्रसिद्धज्योतिष इति स्थितम् ।

अत्राशंक्यते ---

ज्योतिर्वाक्यमृगप्राप्तामपि लोकान्तरस्थितिम् । निर्वर्णयत् कथं नाम स्यात् तदर्थानुवादकम् ॥
कथञ्चिच्च ऋचा प्राप्ता यदि साऽप्युपपाद्यते । मुधाऽनुवादस्तत्त्यागेऽप्युपास्तिविधिसम्भवात् ॥
अथेत्युक्तोऽधिकारश्च प्रकृतात् भेदकोऽस्त्यतः । संज्ञाऽधिकरणन्यायात् प्रकृतास्पर्शितोचिता ॥

'अथ यदतः पर' इत्यादि यदुपन्नन्धयुक्तं वाक्यं न केवलं द्युसम्बन्धमात्रं ज्योतिषः कीर्तयति येन तस्याविरोधोपपादनमात्रेण चारितार्थ्यं स्यात्, किन्तु 'विश्वतः पृष्ठेषु' इत्यादिना लोकविशेषाणां महिमानं तेषु ज्योतिषोऽवस्थानञ्च कीर्तयति । न च तदपि 'तावानस्य' इत्यृचा प्राप्तम्; येन तदर्थानुवादकत्वमुक्तमुपपद्यते । अथ यथा 'दिवि' 'दिवः' इति निर्देशभेदेऽपि प्राप्तिरुपपादिता तथा लोकान्तरस्थितेरपि कथञ्चिदृचा प्राप्तिरुपपाद्येत, तथाऽपि तदनुवादो व्यर्थः; तत्प्रहाणेऽपि 'इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इत्यत्र तदिति प्रकृतं त्रिपात् ब्रह्मानूद्य तस्य कौक्षेयज्योतिष्युपासनाविधानसम्भवात् । अपिच अथशब्दोऽत्राधिकारार्थो निर्दिष्टः । स च प्रकृतात् भेदकः । तस्मात् संज्ञाधिकरणन्यायेन 'अथ यदतः पर' इत्यादेः प्रकृतास्पर्शित्वमेव युक्तम् ।

'संज्ञा चोत्पत्तिसंयोगात्' (जै. सू. २. २. २२) इत्यधिकरणे हि 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इत्यत्र किं प्रकृतं ज्योतिष्टोममनूद्य तत्र सहस्रदक्षिणाविधानं उत ज्योतिरादिनामकसहस्रदक्षिणाविशिष्टकर्मान्तरविधानमिति संशये 'यजेत' इत्याख्यातस्य प्रकृतहानाप्रकृतपरत्वकल्पनाऽयोगात्, 'एष' इति च सर्वनाम्नः प्रकृतपरामर्शित्वावश्यंभावाच्च ज्योतिरिति नामैकदेशेन

ज्योतिष्टोममनूद्य विश्वज्योतिस्सर्वज्योतिश्शब्दाभ्यामपि ज्योतिश्शब्दितत्रिवृदादिसकलस्तोमवत्त्वनिमित्ताभ्यां तमेवानूद्य तत्र सहस्रदक्षिणाविधानमिति पूर्वपक्षं कृत्वा ज्योतिरित्यादिसंज्ञान्तराणां स्वतोऽर्थान्तरपरत्वस्वारस्येन ज्योतिष्टोमविषयत्वकल्पनाऽयोगात्, कथञ्चित्तद्विषयत्वकल्पने 'सहस्रदक्षिणेन यजेत' इत्येतावतापि प्रकृते ज्योतिष्टोमे गुणविधानोपपत्त्या 'अथैष ज्योतिः' इत्याद्यनुवादवैयर्थ्यात्, अथशब्देनाधिकारार्थेन प्रकरणविच्छेदात्, तद्वशात् एषशब्दानां प्रस्तूयमानपरत्वसम्भवाच्च नामगुणविशिष्टकर्मान्तरविधानमिति सिद्धान्तितम्। एवमिहापि प्रकृतत्रिपाद्ब्रह्मानुवादत्वकल्पने तत्राप्राप्तलोकान्तरस्थितिकीर्तनायोगात् कथञ्चित्प्राप्तिसमर्थनेन तत्कीर्तनोपपादनेऽप्यनुवादवैयर्थ्यात्, अधिकारार्थाथशब्दबलात् यत्पदस्य प्रस्तूयमानपरत्वसम्भवाच्च लोकविशेषावस्थितप्रसिद्धज्योतिरादिविशिष्टोपासनाविधिरेव युक्तः, न तु त्रिपाद्ब्रह्मानुवादेन तदुपासनाविधिः; 'त्रिपादस्यामृतं दिवि' इत्युपदेशातोऽस्य ऊर्ध्वलोकस्थितिवर्णनेन वैलक्षण्यात्। अधिकारार्थाथशब्देन ततोऽस्य भेदनाच्च तदनुवादत्वायोगादिति।

अस्यामपि शङ्कायां 'उभयस्मिन्नप्यविरोधात्' इति सौत्रमेवोत्तरम्। दिव इति निर्देशसमर्थनप्रकार एव च तत्समर्थनप्रकारः। तथा हि 'दिवः पर' इति निर्देशो 'दिवि' इति निर्देशात् विलक्षणोऽपि 'वृक्षाग्रात् परतश्श्येन' इति निर्देशवत् न विरुध्यत इति यदुक्तं तस्य खल्वयं फलितोऽर्थः। दिवो यत्किञ्चिद्भागावच्छेदेन सर्वभागावच्छेदेन वा अधिकरणत्वाविवक्षायामुपपन्नं दिवीति निर्देशमुपरिभागावच्छेदेन स्थितिविवक्षायामेवोपपन्नो 'दिवः पर' इति निर्देशस्स्वयं तदनुवादोऽपि 'कांस्यभोजि' न्यायेन स्वानुगुणामुपरिभागावच्छेदेन स्थितिविवक्षामुन्नयन्नैकार्थ्येन तदविरोधं प्रतिपद्यत इति। एवं लोकस्थितिनिर्देशो दिवीति निर्देशात् विलक्षणोऽपि वृक्षाग्रात्परश्चञ्चरीकगणस्सर्वोपरिस्थितेषु सुरभितमेषु कुसुमेषु इति निर्देशवदविरुद्ध इति न्यायसाम्येन सिध्यति। तेन चायमर्थः फलति—दिव उपरिभागेऽपि सर्वोपरिस्थितेषु सर्वोत्तमेषु सर्वेषु लोकेषु स्थितिविवक्षां 'दिवि' इति पुरोवादस्योपहरन्नैकार्थ्येन तदाविरोधं प्रतिपद्यते—इति। न च वाच्यम्—दिव उपरिभागे तादृशलोकास्सन्तीति पुरोवादतोऽप्राप्ततया तत्सत्ताया इहैव निरूपणीयत्वात् तदनुवादत्वमयुक्तम्—इति। पुरोवादेऽपि 'त्रिपादस्यामृतं दिवि' इति दिवमनूद्य तत्र स्थितिविधानपरे द्युस्वरूपावगत्यर्थं सूर्यादिसत्यलोकोपरिभूम्यन्तद्युस्वरूपनिरूपणपरवचनान्तरसुखनिरीक्षणावश्यम्भावेन ततस्तत्प्राप्तिसत्त्वात्।

एतेनानुवादवैफल्यशङ्काऽपि निरस्ता। 'पुरोवादे द्युशब्द आकाशपरः स्वर्लोकपरो वा। द्वितीयेऽपि ध्रुवलोकान्तपरः, सत्यलोकान्तपरो वा। सप्तमी सर्वभागावच्छेदेनाधिकरणत्वपरा किञ्चिद्भागावच्छेदेन

वा' इति सम्भवदनेकतात्पर्यस्य पुरोवादस्य उपासनार्थं विवक्षितमर्थविशेषमुपसंहरतस्तस्य सफलत्वात् । एवम-नुवादवशात् पुरोवादस्यार्थविशेषव्यवस्थितिः तद्व्यवस्थापकत्वेनानुवादसाफल्यञ्चेत्येतत् पूर्वतन्त्रेऽपि नवमाध्याये दर्शितम् ।

तद्यथा—ज्योतिष्टोमे 'यज्ञायज्ञीयेन स्तुवीत' इति प्रकृत्य श्रूयते 'न गिरागिरेति ब्रूयात् यत् गिरा-गिरेति ब्रूयादात्मानमेव तदुद्गाता गिरेत् ऐरं कृत्वोद्गेयम्' इति । अत्र यज्ञायज्ञीयसाम्न ऋचि 'गिरागिरा च दक्षसे' इति श्रूयमाणस्य 'गिरागिरा' इति पदस्य प्रतिषेधानुवादः इरापदविधिश्च श्रूयते । कथं ? विधिस्तावत् इरापदसम्बन्धि कृत्वा यज्ञायज्ञीयसामोद्गातव्यमित्यर्थः । ऐरशब्दस्य 'मतौ च्छःसूक्तसाम्नोः' (पा.सू. ५.२.५९) इत्यधिकृत्य 'विमुक्तादिभ्योऽण्' (पा. सू. ५. २. ६१) इति विहितमत्वर्थीयाण्प्रत्ययान्तत्वात् । यद्वा 'तस्य विकारः' (पा. सू. ४. ३. १३४) इत्यण्प्रत्यये इराशब्दस्य विकारभूतं गानं कृत्वा यज्ञायज्ञीय-सामोद्गातव्यमित्यर्थः । उभयथाऽप्ययमिरापदमात्रविधिः; प्रकरणतस्तस्य यज्ञायज्ञीयसम्बन्धलाभात्, दृष्टार्थस्य तस्य यज्ञायज्ञीयगतकिञ्चित्पदकार्यापत्त्यवश्यम्भावेन तत एव तदीयगानलाभाच्च । तस्य च गिरापदकार्ये विधिरिति गिरापद-प्रतिषेधानुवादादवसीयते । तथा सति हि कृतकार्यत्वे गिरापदनिवृत्तौ तत्प्रतिषेधानुवाद उपपद्यते । ततश्चा-नुवादबलादेव गिरापदस्थानापत्तिरिरापदस्य व्यवतिष्ठत इत्यनुवादोऽपि सफल इति तन्न्यायसाम्यादिदं ज्योति-र्वाक्यं प्रकृतत्रिपाद्ब्रह्मानुवादकं तदर्थविशेषव्यवस्थापनार्थमित्येवाङ्गीकर्तुं युक्तमिति सर्वमनवद्यम् ।

इदं तु चोद्यमवशिष्टम्—अधिकारार्थाथशब्दान्वयानुरोधात् यच्छब्दः प्रस्तूयमानपरः—इति । तत्समाधानसमुच्चयार्थस्सूत्रे अपिशब्दः । नायमपि दोषः प्रसरति; अथशब्दस्य पूर्वप्रकृतापेक्षावाचित्वो-पपत्तेः । तेन पूर्वोपासनान्वितब्रह्मगुणानां ज्योतिरुपासनायामप्यन्वयसिध्या तद्वाचित्वस्य सफलत्वात्, इदमारभ्यत इत्यनुक्त्वाऽप्यारम्भसम्भवेन आरम्भापरपर्यायाधिकारप्रतिपादनस्य श्रोतृचित्तसमाधानमात्रफलस्य निष्फलप्रायत्वात्, प्रकृतं ब्रह्मविहायैव तत्रोपासनान्तरारम्भार्थत्वसम्भवेनाधिकारार्थत्वेऽप्यविरोधाच्चेति तदभिप्रायः । सूत्रे शङ्कासमाधानयोर्दिवि दिव इति निर्देशविषयत्वप्रदर्शनेनैव 'दिवि लोकेषु' इति निर्देशाविषय-त्वमपि प्रदर्शितप्रायमिति भाष्ये तदनुक्तिः । अथशब्दाश्रितशङ्कासमाधानयोस्स्पष्टत्वादनुक्तिः ।१ । १ । २७।

इति ज्योतिरधिकरणम् । १० ।



(११ अधिकरणम्)

## प्राणस्तथाऽनुगमात् । २८ ।

अस्ति कौषीतकिनामुपनिषदि प्रतर्दनाख्यायिका—'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन च पौरुषेण च' (कौ. ३. १) इत्यारभ्याऽऽम्नाता । तस्यां प्रतर्दनं प्रति इन्द्रवचनं श्रूयते 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमित्युपास्व' इति । तत्र प्राणशब्दनिर्दिष्टः पञ्चवृत्तिर्वायुरुत परमात्मेति तावत् संशयः । यद्यपि 'अत एव प्राणः' (१. १. २३) इत्यत्र प्राणशब्दस्य ब्रह्मपरत्वं तल्लिङ्गान्निर्णीतम्, इहापि तल्लिङ्गमस्ति 'प्राण एव प्रज्ञात्मा आनन्दोऽजरोऽमृत' इति, तथाऽपि न ब्रह्मलिङ्गमेकमेवात्र व्यवतिष्ठते, किन्तु 'प्राणोऽस्मि मामुपास्व मामेव विजानीहि' इतीन्द्रवचनमिन्द्रलिङ्गम् । 'इदं शरीरं परिगृह्योत्थापयति' इति प्राणलिङ्गम् । 'न वाचं विजिज्ञासीत वक्तारं विद्यात्' इति जीवलिङ्गमित्यन्यलिङ्गान्यपि श्रूयन्ते । तथा च लिङ्गेषु परस्परपराहत्या स्वयमकिञ्चित्करेषु प्राणश्रुतिप्रसिध्यतिक्रमे कारणाभावात् वायुरेव प्राण इति **पूर्वपक्षे** —

**सिद्धान्तः**—प्राणः परमात्मा; तथा परमात्मपरत्वेन प्रकरणस्य उपक्रमपरामर्शोपसंहारैः अनुगमात् —समन्वितत्वात् । उपक्रमे हि 'तमेव वरं वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे' इति परमपुरुषार्थरूपत्वमुपक्षिप्तम् । मध्ये च 'स यो मां विजानीयात् नास्य केनचन कर्मणा लोको मीयते न मातृवधेन न पितृवधेन न स्तेयेन न भ्रूणहत्यया' इति सकलपापास्पर्शो दर्शितः । उपसंहारे च 'प्राण एव प्रज्ञात्मा' इत्याद्युक्तम् । न चैतत् सर्वं वायुपक्षे घटते । तस्मादवयविनो महावाक्यस्य ब्रह्मपरत्वे अवगम्यमाने प्राणश्रुत्यादिकमकिञ्चित्करम् । किञ्च ब्रह्माब्रह्मलिङ्गेषु सन्निविष्टेषु अब्रह्मलिङ्गानि ब्रह्मणि योज्यानि; कारणस्य ब्रह्मणः कार्येष्वनुगमात् । कार्याकारेण स्थितस्य तस्य तत्तत्कार्यधर्मैरपि सम्बन्धोपपत्तेः, न तु ब्रह्मलिङ्गान्यब्रह्मणि योजनीयानि, अननुगतस्य कार्यस्य कार्यान्तरानुगतकारणधर्मेण सम्बन्धानुपपत्तेरिति । १. १. २८ ।

एवं स्थितेऽपीन्द्रलिङ्गानां किञ्चिद्बलावष्टम्भेन पूर्वपक्षान्तरमुत्थाप्य निराकरोति—

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् । २९ ।

इह प्राणशब्दनिर्दिष्ट इन्द्र इति युक्तम्, प्रसिद्धस्येन्द्रस्य 'मामेव विजानीहि' इति वचनाल्लिङ्गात् ।

न हीदं ब्रह्मणि सङ्गच्छते; 'मामेव' इत्यवधारणेन स्वानुगतब्रह्मपर्यवसानव्यावर्तनात्, अन्यथा अवधारण-वैयर्थ्यात् । हिततमत्वादिकं तु इन्द्रपक्षेऽप्युपपद्यते । तथाहि—इन्द्रेण तत्र स्वस्य पापासंस्पृष्टत्वमुक्तं 'त्रिशीर्षाणं त्वाष्ट्रमहनं अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीस्सन्धा अतिक्रम्य दिवि प्रह्लादीनतृणहमन्तरिक्षे पौलोमान् पृथिव्यां कालकक्ष्यान् तस्य मे तत्र न लोम च मीयते' (कौ.३.१) इति । एतदनुसारेण 'स यो मां विजानीयात्' इत्यादिनोक्तं पापासंस्पर्शफलमपि इन्द्रोपासनाफलमित्येव युक्तम्; उपास्यगतगुणानुसारित्वात् । ततश्चेन्द्रोपासनस्य पापासंश्लेषफलतया हिततमोपक्रमोऽप्युपपन्नः । ब्रह्मपक्षेऽपि हिततमशब्दस्य तावन्मात्रपरत्वमेव वाच्यम्, न तु निरतिशयानन्दरूपपरमपुरुषार्थपरत्वम् । कथम् ? हिततमत्वं तत्र न विज्ञेयस्योच्यते, किंतु विज्ञानस्य; 'एतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयात्' इत्यनन्तरवाक्यात् । विज्ञानञ्च तत्रोपासनारूपम्; 'तं मामायुरमृतमुपास्व' इति तदनन्तरं विशेषितत्वात् । न च ब्रह्मपक्षेऽपि तदुपासना परमपुरुषार्थफला; तस्य तत्साक्षात्कारफलत्वात् । 'प्राणोऽस्मि' इति श्रुतं प्राणत्वञ्च इन्द्रस्य बलवत्त्वेन प्राणप्रधानत्वादुपपद्यते । 'प्राणो वै बलम्' इति श्रुतेः । या च काचित् बलकृतिरिन्द्रकर्मैव तदिति इन्द्रस्य बलवत्त्वप्रसिद्धेः । एतेन प्राणलिङ्गानां तत्र सङ्गतिर्व्याख्याता । जीवलिङ्गानां तत्र जीवविशेषे सङ्गतिस्स्फुटैव । 'स एष प्राण एव प्रज्ञात्माऽऽनन्दोऽजरोऽमृतः' इति प्रज्ञात्मत्वमप्रतिहतज्ञानत्वादुपपन्नम् । अजरोऽमृत इत्येतच्च निर्जरामरत्वप्रसिद्धेरुपपन्नम् । तस्मादिन्द्र एव प्राण इति **पूर्वपक्षः** ।

परमात्मेति **सिद्धान्तः** । अस्मिन् खलु प्रकरणे अध्यात्मसम्बन्धानां —प्रत्यगात्मसम्बन्धिनां लिङ्गानां भूमा--बाहुल्यमुपलभ्यते । तथा हि—'यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः' इति आयुःप्रदातृत्वम्, 'अस्तित्वे च प्राणानां निश्रेयसम्' इति इन्द्रियनिश्रेयसहेतुत्वम्, 'इदं शरीरं परिगृह्योत्थापयति' इति शरीरोत्थापकत्वमित्यादीनि बहूनि पराचीनायामिन्द्रदेवतायामसंभावितानि प्रत्यग्लिङ्गानि दृश्यन्ते ।

न च इन्द्रजीवेऽपि तदायुरवधित्वं तदिन्द्रियाश्रयत्वं तच्छरीरोत्थापकत्वमित्यादि सम्भवतीति शंक्यम्; उपासनाप्रकरणगतस्य 'यावद्ध्यस्मिन् शरीरे' 'इदं शरीरं परिगृह्य' इत्यादेः 'अथ यदिदमस्मिन् ब्रह्मपुरे' (छा.८.१.१)इत्यादेरिव उपासकशरीरादिसाधारणशरीरादिसामान्यपरत्वस्य उचितत्वेन वक्तृशरीरादिमात्रपरतया संकोचायोगात्, 'यत्रैतत् पुरुषस्सुमस्स्वप्नं न कञ्चन पश्यति अथास्मिन् प्राण एवैकधा भवति' इत्याद्यनन्तराम्नातस्य अस्वप्न इन्द्रे योजयितुमशक्यतया सामान्यपरत्वावश्यम्भावेन तत्सामान्यादायुरिन्द्रियशरीरपदानामपि सामान्यपरत्वौचित्याच्च । 'अथास्मिन् प्राण एवैकधा भवति' इति 'स म आत्मेति विद्यात्' इति च कथमपि

पराचीनायामिन्द्रदेवतायां न सम्भवति । तथा 'एष ह्येव साधु कर्म कारयति' 'एष एवासाधु कर्म कारयति' इति तस्यां न सङ्गच्छते । 'एष लोकाधिपतिरेष लोकपाल एष लोकेश आनन्दोऽजरोऽमृतः' इत्यादि च परमात्मनोऽन्यत्र न सम्यगुपपद्यते । तस्मादध्यात्मसम्बन्धिनां लिङ्गानामिन्द्रेऽसम्भवात्, 'अयमात्मा ब्रह्म सर्वानुभूः' इति श्रुते ब्रह्मणि सम्भवाच्च 'प्राणोस्मि' इति ब्रह्मोपदेश एवायं न देवतात्मोपदेशः । १. १. २९ ।

कथं तर्हि 'मामेव विजानीहि' इति वक्तुरात्मोपदेशः ?

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ।३०।**

इन्द्रस्त्वात्मानं परमात्मत्वेन अहमेव परं ब्रह्मेति शास्त्रदृष्ट्या पश्यन्नुपदिशति स 'मामेव विजानीहि' इत्यादि । यथा 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च' ( बृ. १. ४. १० ) इति । श्रूयते च ब्रह्मदर्शिनां ब्रह्मात्मभावः 'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्' ( बृ. १. ४. १० ) इति । 'मामेव' इत्येवकारस्तु निरन्तराभेदार्थः 'स एव तदभवत्' इतिवदिति न विरोधः ।

यत्तु त्वाष्ट्रवधादिभिरिन्द्रस्य पापासंश्लेषकीर्तनम्, न तत् उपास्यगुणविधानार्थम्, नापि तस्य उपास्यत्वसिद्धये स्तुत्यर्थं 'यस्मादेवंभूतोऽहं तस्मान्मामुपास्व' इति, किन्तु ब्रह्मज्ञानस्तुत्यर्थं—यस्मादीदृशानि क्रूराणि कर्माणि कृतवतोऽपि मम ब्रह्मज्ञानतो लोमापि न हिंस्यते, तस्मादन्योऽपि यो ब्रह्म जानीयात् न तस्य केनापि कर्मणा लोको हिंस्यते—इति । तस्मात् पापासंश्लेषकीर्तनादपि इन्द्रस्य नोपास्यत्वलाभः । १.१.३० ।

पुनर्विधाऽन्तरेण पूर्वपक्षमुत्थाप्य निराकरोति —

**जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात् । ३१ ।**

इति श्रीमहर्षिबादरायणप्रणीतायां शारीरकमीमांसायां प्रथमाध्यायस्य प्रथमः पादः ।१।

स्यादेतत्—माभूदिहेन्द्र उपास्यः प्रतिपाद्यः, तथाऽपि जीवप्राणब्रह्माणि त्रीणि उपास्यानि प्रतिपाद्यानि स्युः, न तु ज्ञेयं ब्रह्मैव प्रतिपाद्यम् । तथाहि—आयुःप्रदानस्वातन्त्र्यं तावत् प्राणलिङ्गम्; 'प्राणो हि भूतानामायुः' ( तै. २. ३. १ ) इति श्रुत्यन्तरात् । शरीरस्थापकत्वमिन्द्रियनिश्रेयसहेतुत्वमिति चेदमपि प्राणलिङ्गम्; प्राणसंवादे वागादीन् प्राणान् प्रकृत्य 'तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ अहमेवैतत्

पञ्चधाऽऽत्मानं प्रविभज्यैतत् बाणमवष्टभ्य विधारयामि' ( प्र. २. ३ ) इति, 'प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशंकून् सङ्खिदेदेवमितरान् प्राणान् समखिदत्' ( छा. ५. १. १२ ) इति च श्रवणात् । एवं जीवलिङ्गमपि 'न वाचं विजिज्ञासीत वक्तारं विद्यात् न गन्धं विजिज्ञासीत घ्रातारं विद्यात्' (कौ. ३-८) इत्याद्युपलभ्यते । तस्माज्जीवमुख्यप्राणौ तावदिहोपास्यतया प्रतिपाद्यौ । अत एव 'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्व' (कौ. ३. १) इत्युपास्यत्वेनोक्तयोः प्राणप्रज्ञात्मनोः 'यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राणस्सहैवैतावस्मिन् शरीरे वसतस्सहोत्क्रामतः' (कौ. ३. २) इति द्विवचनश्रुत्या सहवाससहोत्क्रमण-लिङ्गानुगृहीतया भेदो निर्दिष्टः ।

एतेन—व्यावृत्तजीवमुख्यप्राणलिङ्गान्यनुगते ब्रह्मणि योजयितुं शक्यानीति ब्रह्मैवात्र प्रतिपाद्यम्, तत्रैव प्राणप्रज्ञात्मादिशब्दानामायुःप्रदातृत्वादिलिङ्गानां च पर्यवसानमिति पूर्वोक्तं निरस्तम्; सहप्रवृत्ति-निवृत्तिलिङ्गानुगृहीतद्विवचनश्रुत्या प्राणप्रज्ञात्मशब्दोक्तयोर्भेदावगमात् । यस्तु तयोः 'यो वै प्राणः' इत्यादौ अभेदनिर्देशस्स नियतसहवाससहसञ्चाराभ्यामौपचारिकः । उपचारनिमित्तकथनेन तदौपचारिकत्वोपपादनायैव हि 'सहैवैतौ' इत्याद्यारम्भः । एवं चोपसंहारे 'प्राण एव प्रज्ञात्मा' इत्यादिना ब्रह्माप्युपास्यत्वेन प्रतिपाद्यमिति त्रीण्युपास्यान्यत्र प्रतिपाद्यानि ।

नन्वेवं सति चत्वार्युपास्यानीति पूर्वपक्षयितव्यम् । शक्यं हि प्राणलिङ्गादिस्वारस्यानुरोधेन त्रयाणामु-पास्यत्वमभ्युपगच्छता 'मामेव विजानीहि प्राणोऽस्मि प्रज्ञात्मा' इत्यादिस्वारस्यानुरोधेन चतुर्थस्याप्युपास्यत्वम-भ्युपगन्तुम्; अध्यात्मसम्बन्धिलिङ्गानां यथार्हं मुख्यप्राणाद्यन्वयोपपत्तेः । मध्ये प्राणप्रज्ञाशब्दयोर्मुख्यप्राण-जीवपरत्वेऽपि 'प्राण एव प्रज्ञात्मा' इत्युपसंहारे ब्रह्मपरत्ववत् 'प्राणोऽस्मि प्रज्ञात्मा' इत्युपक्रमे शक्रपरत्वस्यापि सम्भवात् । 'तं मामायुरमृतमुपास्व' इत्यस्य शक्रोपासनाविधिपरत्वेऽपि 'स म आत्मेति विद्यात्' इत्युपसंहारे ब्रह्मो-पासनाया इव मध्ये 'तस्मादेतदेवोक्थमुपासीत' 'वक्तारं विद्यात्' इति मुख्यप्राणजीवोपासनयोर्विध्यन्तरविधेय-त्वोपपत्तेः, 'प्राणोऽस्मि प्रज्ञात्मा' इत्यादौ मुख्यप्राणजीवोपासनाविधिद्वयस्वीकारे 'आयुरमृतम्' इत्येकैकस्य विशेषणमुभयमपि उभयोर्वैयर्थ्यविनिगमप्रसङ्गाच्चेति चेत् ।

उच्यते । 'उपास्व' इत्यनन्तरं 'आयुः प्राणः प्राणो वा आयुः प्राणो वा अमृतं यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोति' (कौ ३. २) इति वाक्यशेषश्श्रूयते । अयं च आयुष्ट्वामृतत्वयोः प्रस्तुतप्राणविशेषणत्वनिर्धारणार्थ इति स्पष्टमेव । अतो न तावदविनिगमः । अत्रैव

वाक्यशेषे श्रूयमाणमायुःप्रदानस्वातन्त्र्यञ्च न प्रस्तुतप्राणादन्यत्रान्वेतुं योग्यम् । समनन्तरखण्डे च 'अस्तित्वेव प्राणानां निश्रेयसम्' (कौ. ३. २) इति प्रस्तुतस्य प्राणस्यास्तित्व एवेन्द्रियाणां निश्रेयसमुक्त्वा 'जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामः' इत्यादिना 'प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति' इत्यन्तेन प्राणस्य शरीरस्थापकत्वव्यवस्थापकवचनसन्दर्भेण प्रस्तुतप्राणस्यैव पूर्वोक्तमायुःप्रदानस्वातन्त्र्यमन्वयव्यतिरेकाभ्यां विवृतम् । एवं सर्वस्मिन्नपि प्राणधर्मकीर्तने प्रस्तुतप्राणविषये सति तदनन्तरं 'अथ यथाऽस्यै प्रज्ञायै सर्वाणि भूतान्येकं भवन्ति तद् व्याख्यास्यामः' (कौ. ३. ४) इति यथा प्रज्ञाया जीवस्य सर्वाणि भूतानि सम्बन्धीनि भूत्वा तद्दृश्यत्वेन कल्पितानि वस्तुत एकत्वेन भवन्ति तथा व्याख्यानमुपक्रम्य 'वागेवास्याः एकमङ्गमदूदुहत्' इत्यादिना वाग्वक्तृत्वगन्धाघ्रातृत्वाद्यध्यासानुभवितृत्वरूपप्रज्ञाधर्मकीर्तनमपि प्रस्तुतप्रज्ञात्मविषयमेवावतिष्ठते ।

न चैवं सति 'प्राण एव प्रज्ञात्मा' इत्याद्युपसंहारस्यापि प्रस्तुतप्राणप्रज्ञात्मविषयत्वप्रसङ्गः; 'तद्यथ रथस्यारेषु नेमिरर्पिता' इत्यारभ्य सर्वाधारत्वानन्दत्वाजरत्वामरत्वसाध्वसाधुकर्मकारयितृत्वसकललोकेश्वरत्वलिङ्गैरुपसंहारस्य ब्रह्मपरत्वावसायात् । एवं स्थिते प्राणप्रज्ञागताध्यात्मसम्बन्धिलिंगानां 'प्राणोऽस्मि प्रज्ञात्मा' इत्यतोऽन्यत्र नेतुमशक्यत्वादयमुपदेशो वामदेवस्य मनुसूर्यादिभाववत् ब्रह्मभूतस्येन्द्रस्य प्राणादिभावोऽप्यस्तीति मुख्यप्राणजीवविषय एव । उपास्वेति च पृथक् पृथक् तदुभयोपासनविधानमिति स्वीकर्तव्यम् । अत एव 'प्राणेन ह्येवामुष्मिन् लोकेऽमृतत्वमाप्नोति' इति अमृतत्वविशिष्टप्राणोपासनस्य तदनुरूपफलनिर्देशानन्तरं प्रज्ञोपासनस्यापि पृथक् तदनुरूपफलनिर्देशो दृश्यते 'प्रज्ञया सत्यसङ्कल्पम्' इति । 'एतदेवोक्थमुपासीत' इत्यत्र 'वक्तारं विद्यात्' इत्यादिषु च पृथक् पृथक् प्राणोपासनां प्रज्ञोपासनाञ्चानूद्य शरीरोत्थापकत्ववक्तृत्वादिगुणसमर्पणं क्रियते । एतेन—अग्रे प्राणप्रज्ञोपासनाविधिदर्शनात् 'प्राणोऽस्मि प्रज्ञात्मा' इति इन्द्रोपासनाविधिरित्यपि शङ्का निरस्ता; तेषामुपास्यगुणसमर्पणार्थत्वात् ।

यस्तु 'प्राणोऽस्मि' इत्यतः प्राक् 'मामेव विजानीहि' इति इन्द्रोपदेशः, सः हिततमत्वसर्वपापासंस्पर्शहेतुत्वलिङ्गस्वारस्यात् प्रकरणावसाननिरूपणीयब्रह्मोपासनविधिरिति तत्रापि नेन्द्रोपासनाविधिश्शङ्कनीयः। अत एवात्रत्यस्य मामित्यस्याभिप्रायस्फुटीकरणार्थं 'एष लोकपाल एष लोकाधिपतिः एष लोकेशः' इत्येतदन्तब्रह्मनिरूपणानन्तरं 'स म आत्मेति विद्यात्' इत्युपसंहारः। तस्मात्त्रीण्युपास्यानि प्रतिपाद्यानीत्येव युक्तं पूर्वपक्षयितुम् ।

नन्वेवं प्रतिपाद्यत्रयाङ्गीकारे ब्रह्मविषयोपक्रमोपसंहारैकरूप्येण 'प्राणोऽस्मि प्रज्ञात्मा' 'प्राण एव

प्रज्ञात्मा' इत्युपक्रमोपसंहारैकरूप्येण च प्रतिपन्नस्यैकवाक्यत्वस्य भङ्गस्स्यादिति चेत्—अस्तु । वाक्यार्थावगमस्य पदार्थावगमजन्यत्वेन उपजीव्यप्रधानभूतपदार्थावगमानुरोधेन वाक्यैक्यभङ्गकल्पनस्योचितत्वात् ।

ननु पुत्रेष्टिविधौ 'वैश्वानरं द्वादशकपालं निर्वपेत् पुत्रे जाते यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति' (तै. सं. २. २. ५) इत्युपक्रमोपसंहारैकरूप्यावगतैकवाक्यत्वनिर्वाहायाष्टाकपालादिवाक्येषु गुणफलविधयस्त्यक्ताः । एवमिहाप्येकवाक्यत्वनिर्वाहाय मध्यगतोपास्यान्तरतदुपासनाविधयस्त्यक्तुमुचिता इति चेत् ।

मैवम्—न हि तत्र एकवाक्यत्वं मा बाधीति श्रूयमाणा गुणफलविधयस्त्यक्ताः । अष्टाकपालादिवाक्येषु विध्यश्रवणात् विधियोग्यपुरुषव्यापारमात्रस्याप्यश्रवणात् यच्छब्दोपबन्धेनानुवादत्वस्यैव प्रत्यायनात् अष्टाकपालादिमत्त्वपावनादिकयोरेककालत्वनिर्देशेन फलफलिभावाप्रतीतेः 'यस्मिञ्जात' इति वाक्ये पूतत्वादीनां समुच्चयावगमेन तेषां व्यवस्थिताष्टाकपालादिफलत्वायोगाच्च, किन्तूक्तहेतुभिरष्टाकपालादिवाक्यानामवयुत्यानुवादतया अर्थवादतैव प्रतीयत इति तेषु विध्यकल्पनेन बाधकानवतारादेकवाक्यत्वं न बाधितम् । इह स्पष्टमेव श्रूयमाणैरुपासनाविधिभिः कथमेकवाक्यत्वं न बाधितव्यम् ।

अथापि स्यात्—उपांशुयाजवाक्ये प्रतीतैकवाक्यत्वनिर्वाहाय मध्ये 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' इत्यादयश्श्रूयमाणा अपि विधयस्त्यक्ता इति । सत्यं त्यक्ताः, न त्वेकवाक्यत्वानुरोधात्, किन्तु जामितादोषपरिहारायावश्यमन्तरावाक्ये विधावभ्युपगन्तव्ये तत्रैव शाखाभेदेनाग्नेयाग्नीषोमीययाज्यानुवाक्यायुगलमध्ये पठितानां वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां क्रमप्रमाणेनान्वये सति तत्तन्मन्त्रोदितानां विष्ण्वादीनां तत्र यागे देवतात्वस्य प्राप्तत्वात्, विष्ण्वादिवाक्यस्थयजीनां सन्निहिततद्यागानुवादकत्वस्वारस्याच्च विधेयाभावेन विष्ण्वादिवाक्यानां मन्त्रवर्णप्राप्तविष्ण्वादिदेवताऽनुवादकत्वस्य वक्तव्यतया तद्यागस्तावकत्वप्रतीतेः ।

ननु 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्' इत्यत्र लिङ्द्वयश्रवणेऽपि समभिव्याहारलब्धैकवाक्यत्वनिर्वाहायैव गिरापदप्रतिषेधस्यानुवादकत्वमङ्गीकृत्य गिरापदकार्यापत्तिरिरापदस्य निर्णीता । नेति ब्रूमः । न हि तत्रैकवाक्यत्वनिर्वाहाय प्रतिषेधस्यानुवादकत्वाङ्गीकारः, किंत्वाम्नानानुग्रहाय विकल्पपरिहाराय च । न खलु यज्ञायज्ञीयस्य ऋक् यावत्पदसहिताऽऽम्नाता तन्मध्ये पदमात्रव्यावर्तनेन विधिप्रतिषेधयोश्चारितार्थ्यसम्भवे प्रतिषेधेन गिरापदं व्यावर्त्य विधिना पदान्तरमपि व्यावर्तनीयम् । नापि केवलमिरापदविधानं स्वीकृत्य

विकल्पानवकाशीकरणसम्भवे गिरापदप्रतिषेधमपि स्वीकृत्य प्रतिषेधस्य प्राप्तिपूर्वकत्वात् गिरापदप्राप्तये गिरापदविधिरूपं तस्य प्रकरणपाठेन कल्प्यं शास्त्रमनुमत्य शास्त्रप्राप्तस्य सर्वथा निरासे प्रापकवचनाप्रामाण्य-प्रसङ्गात् 'न चतुस्त्रिंशत्' इति मन्त्रप्रतिषेधस्य प्रतिषेधोन्नीततद्विधिनेव गिरापदप्रतिषेधस्य तदुन्नीतगिरापद-विधिना सहाष्टदोषदुष्टस्य विकल्पस्यावकाशो दातव्यः। सम्भवति च विधिप्रतिषेधयोर्द्वयोरपि गिरापद-व्यावर्त्तनमात्रेण चारितार्थ्यं विकल्पानवकाशीकरणं च, गिरापदकार्ये इरापदविधिः प्रतिषेधस्त्विरापदस्य गिरापदकार्यापत्त्याऽर्थसिद्धाया गिरापदनिवृत्तेरनुवाद इति कल्पनया। न चैवमनुवादत्वकल्पने 'न गिरा गिरेति ब्रूयात्' इति विधिश्रुतेरपूर्वार्थविधानस्वारस्यबाधो दोषः; प्रतिषेधस्यानुवादत्वपक्षेऽपि प्राप्तप्रतिषेध्य-समर्पणार्थायास्तत्रत्यविधिश्रुतेरनुवादत्वावश्यम्भावात्। न च प्रतिषेधस्याप्राप्तार्थपरत्वेन साफल्ये सम्भवति आनुवादत्वेन वैफल्यं दोषः; गिरापदस्य कार्ये इरापदविधिः न पदान्तरस्येति ज्ञापकतया तल्लब्धप्रतिषेधानुवादस्य सफलत्वात्। एवञ्चात्र कांस्यभोजिन्यायेनैकवाक्यत्वनिर्वाहाय प्रतिषेधस्यानुवादत्वाङ्गीकार इत्यपि सुवचम्; उक्तरीत्या प्रतिषेधस्यानुवादत्वेऽपि साफल्यात्। एतादृश एव च विषये 'सम्भवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति प्रवादः। न तु वाक्यान्तर्गतश्रुत्यादिबाधनेन यत्रैकवाक्यत्वमुपपादनीयं तत्रापि। तथा सति सर्वेषामपि वाक्यानामैक्येन बहुविप्लवापत्तेः।

ननु 'तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात् (जै. सू. ९. ४. १८) इति नावमिकाधिकरणे 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इत्यत्र आश्वमेधिकाश्ववङ्क्रीयत्ता-प्रकाशनाय पठितायाः 'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिस्समेति (ऐ. सं. २. ३) इत्यस्या ऋचो 'न चतुस्त्रिंशदिति ब्रूयात्' इति प्रतिषेधः। 'षड्विंशतिरित्येव ब्रूयात्' इति तु चोदकप्राप्तस्य वैशेषिकमन्त्रपाठेन प्रसक्तनिवृत्तिकस्य पुनस्तत्प्रतिषेधेन प्रतिष्ठितस्य 'षड्विंशतिरस्य वङ्क्रयः इति प्राकृतमन्त्रस्य यथाप्राप्त्यनुवादमात्रम्, न तु प्राकृतमन्त्रेषड्विंशतिपदयुक्त एव कार्य इति विधायकम्। अतस्तूपरगोमृग-योरश्वस्य च वङ्क्रीणां समस्य वचनं षडशीतिरेषां वङ्क्रय इत्येवंरूपं न्यायप्राप्तं कर्तव्यमिति निर्णीतम्। तत्र 'षड्विंशतिरित्येव ब्रूयात्' इत्यत्र विधिश्रुतेर्यद्विधायकत्वं त्यक्तं यच्च निष्फलमनुवादकत्वमङ्गीकृतं तत् एकवाक्यत्वनिर्वाहलोभादेव। न च—षड्विंशतिपदस्य चतुस्त्रिंशत्यश्ववङ्क्रिष्वसामर्थ्यात् तत्र विधायकत्वं त्यक्तमिति वाच्यम्; 'यद्यप्यन्यदेवत्यः पशुः आग्नेय्येव मनोता कार्या' इतिवद्वचनबलादयथार्थाभिधानसम्भ-वादिति चेत्—तत्रापि नेति ब्रूमः। एवकारेण विधिशक्तिप्रतिबन्धात् तत्र विधायकत्वं त्यक्तम्। षड्विंशतिपदं ह्येवकारोपसर्जनत्वात् न स्वयं विधिना सम्बध्यते। किंत्वन्योपसर्जनत्वादेवकार एव। तस्य

च निवृत्तिरर्थः । तेन षड्विंशतिमन्त्रात् यदन्यत् प्राकरणिकं 'चतुस्त्रिंशद्वाजिन' इति वचनं तन्न कर्तव्यमित्यर्थः फलति । तथाच कथमनुवादकत्वं वारणीयम् । यदि त्वेवकारमनादृत्य एकवाक्यत्वानिर्वाहाय यत्नोऽयमित्युच्येत, तदा 'चतुस्त्रिंशद्वाजिन' इति वैशेषिकमन्त्र एव चतुस्त्रिंशत्पदकार्ये षड्विंशतिपदमिरापदवद्विधीयते चतुस्त्रिंशत्पदप्रतिषेधश्च गिरापदप्रतिषेधवदर्थसिद्धः कार्यापत्तिप्रदर्शनायानूद्यत इत्येव किं न स्यात् । एवमप्येकवाक्यत्वसम्भवात् । अनुवादसाफल्यस्य चाधिकस्य लाभात् । तथाऽनभ्युपगमे विधिशक्तिप्रतिबन्ध एव शरणमिति अत्रापि स एव हेतुः ।

ननु जर्तिलगवीधुकविधिश्रुत्योर्निषेध्यसमर्पकत्वाभावादेवकाराभावाच्च विधिशक्त्यप्रतिबन्धेऽपि ग्राम्यारण्यपशुहिंसाराहित्यस्तुत्या विधिशक्त्युत्तम्भनेऽपि पयोविधिस्तावकत्वेनाविधायकत्वं यदङ्गीकृतम्, तत् एकवाक्यत्वानुरोधादेव । न च वाच्यम्—अग्रे जर्तिलगवीधुकनिन्दापूर्वकं तद्विधिदर्शनात् तयोर्विधायकत्वत्याग इति । चरमश्रुतानुसारेण प्रथमश्रुतत्यागायोगात्, जर्तिलादिनिन्दाया नहिनिन्दान्यायेन उदितानुदितहोमनिन्दावद्विधिशक्त्यप्रतिबन्धकत्वाच्चेति चेत् । मैवम् । जर्तिलगवीधुकयोरपि विधिस्वीकारे तयोः पयसश्चेति त्रयाणामपि विकल्पस्स्यादिति अष्टदोषदुष्टात्यन्तानन्यगतिकविकल्पपरिहारायैव ग्राम्यारण्यपशुहिंसाराहित्येन प्रशस्तयोरपि जर्तिलगवीधुकयोः यदपेक्षयाऽनाहुतित्वं तत्पयोऽत्यन्तं प्रशस्तमिति तत्स्तावकत्वाङ्गीकारात् । हिशब्दश्रुतेः 'न ह्यत्रानूयाजा इज्यन्ते' इत्यत्र हेतुपरत्वाङ्गीकारेऽपि 'तेन ह्यन्नं क्रियत' इत्यत्र शूर्पस्य दर्वीपिठरादिभिर्विकल्पपरिहाराय हेतुपरत्वं त्यक्त्वा हेतुवन्निगदार्थवादत्वस्याङ्गीकृततया तथैवात्रापि विकल्पपरिहाराय श्रुतविध्योर्विधायकत्वं त्यक्त्वा विधिवन्निगदार्थवादत्वस्याङ्गीकर्तुमुचितत्वात् । यत्तूदाहृतेष्वधिकरणेषु एकवाक्यत्वलाभस्सिद्धान्तहेतुतया तत्र तत्रोच्यते, तदभ्युच्चयमात्रम् । तस्मान्न क्वापि एकवाक्यत्वानुसारेण श्रुतविधित्यागः ।

प्रत्युतोपक्रमोपसंहारप्रतीतस्यापि एकवाक्यत्वस्यैव तदन्तर्गतविध्यनुसारेण त्यागो दृश्यते । तद्यथा 'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रक्रम्य 'पर्यग्निकृतं पात्नीवतमुत्सृजति आज्येन शेषं संस्थापयति' इति श्रूयते । अत्र तावत्पात्नीवतयागविधिः तदीयपशोः पर्यग्निकरणानन्तरं त्यागविधिः पशौ त्यक्ते सति आज्येन तत्प्रतिनिधिना प्रक्रान्तस्य यागस्य शेषसमापनविधिश्चेति पात्नीवतयागप्रयोगविषयतयैकवाक्यता प्रतीयते । तत्तद्विधिपर्यालोचनायां तु विधेयकर्मभेदेन वाक्यभेदः प्रतीयते । कथम् ? उत्सृजतीत्यनेन यदि यागे अविनियुक्तस्यैव पशोस्त्यागो विधीयते, तदा पशुना यागस्याननुष्ठिततया पशोर्देवतासम्बन्धस्याकृतत्वात् 'त्वाष्ट्रं पात्नीवतम्' इत्यत्र द्रव्यदेवतासम्बन्धश्रवणमप्रामाणिकं स्यात् । तथा सति कुतो यागः यस्य समापनीये

शेषे आज्यविधानमर्थवत् स्यात् । न ह्यत्र यागश्श्रुतोऽस्ति, किंतु आग्नेयादिवाक्य इव द्रव्यदेवतासम्बन्धेन कल्प्यः । तस्मात् 'पर्यग्निकृतानारण्यानुत्सृजति' इतिवत् पर्यग्निकरणान्ताङ्गरीतिरनेन विधीयत इति स्वीकर्तव्यम् । तथा सति पर्यग्निकरणकाले देवतोद्देशेन पशोस्त्यागात् उत्पत्तिवाक्यावगतो द्रव्यदेवतासम्बन्धो यागकल्पकः प्रामाणिको भवति । एवं च मुख्येनैव द्रव्येण यागस्यानुष्ठितत्वान्न तस्य प्रतिनिधिविधानम् ; अनाकाङ्क्षितत्वात् । नाप्युदीच्याङ्गानां तत्तत्प्राकृतद्रव्यबाधेनाज्यविधानम् । क्रमोपकारप्राकृताङ्गविधाननिराकाङ्क्षस्य पात्नीवतप्रयोगवचनस्यातिदेशतः प्राकृताङ्गग्राहित्वाभावेन पर्यग्निकरणानन्तरमनुष्ठेयानामङ्गानामभावात् । तस्मात् 'अज्येन शेषम्' इति यागान्तरविधिः तस्य पात्नीवतपदानुषङ्गेण देवतालाभः । एवं पूर्वोत्तरयागयोः पत्नीवद्देवतयोः, पूर्वयागे पर्यग्निकरणान्ते हविः प्रक्षेपं विनैव संस्थिते तदनन्तरमव्यवधानेन हविःप्रक्षेपसहिततद्देवत्याज्ययागानुष्ठानं तच्छेषसमापनमिव दृश्यत इति सादृश्याच्छेषसंस्थापयतिशब्दाविति । एवमेकवाक्यत्वविधिभेदपक्षयोः प्रतीतयोः नवमान्त्याधिकरणे विधिभेदप्रतीत्यनुसारेण एकवाक्यत्वत्याग एव सिद्धान्तितः । अतोऽत्रापि तथैव स्वीकर्तुं युक्तम् ।

एतेन—वाक्यार्थावगमस्य पदार्थावगमजन्यत्वेऽपि पदार्थावगमो न प्रधानम्, किन्तु वाक्यार्थावगमः, प्रवृत्तिनिवृत्त्यादिफलशालिनां वाक्यार्थावगममेवोदिश्य पदानां प्रवृत्तेः । तदर्थमेव तैः पदार्थावगमस्य मध्ये क्रियमाणत्वात् । अतः प्रधानवाक्यार्थविरोधिनो गुणभूताः पदार्था एव प्रधानपुत्रविरोधिपुत्रजननानन्तरप्राप्ततत्पूतत्वादिफलकपुत्रेष्टिवत्त्यक्तव्या इति—निरस्तम् । द्विवचनश्रुतिसहवासादिलिङ्गप्राप्तस्य प्राणप्रज्ञात्मभेदस्य विधिश्रुतिप्राप्तानां तत्तदुपासनाविधीनां च वाक्यार्थविरोधेन त्यागे श्रुतिलिङ्गवाक्यादिबलाबलवैपरीत्यप्रसङ्गात् । 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति मन्त्रस्य हि तस्मिन् सीदेति पूर्वोक्तसापेक्षत्वेन अवगम्यमानैक्यं वाक्यं पूर्वोत्तरभागव्यवस्थितसदनकरणप्रतिष्ठापनप्रकाशनसामर्थ्यलक्षणलिङ्गविरोधेन वाक्यभेदमङ्गीकृत्य बाधितम् । 'यदि कामयेत वर्षुकः पर्जन्यः स्यादिति नीचैस्सदो मिनुयात्' इत्यत्र सदोमानकर्त्रध्वर्युवचनेन 'मिनुयात्' इत्यनेन 'यदि कामयेत' इत्यस्य सामानाधिकरण्यरूपं गुणकामस्याध्वर्यवत्वप्रापकं वाक्यमध्वर्युव्यापारपाराथ्र्यपरपरस्मैपदश्रुतिविरोधेन 'यदि कामयेत यजमान' इत्यध्याहृत्य बाधितम् । एवमिहापि उपक्रमोपसंहारावगतैक्यं वाक्यं श्रुतिलिङ्गोभयविरोधेन वाक्यभेदमङ्गीकृत्य कथं न बाधनीयम् ? न हि समभिव्याहारावगतैक्याद्वाक्यादुपक्रमोपसंहारावगतैक्ये वाक्ये कश्चिदस्ति विशेषः । उपकोसलविद्यायां 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा.-

४. १०. ५) 'य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्म' (छा. ४. १५. १) इति उपक्रमोपसंहारावगतब्रह्मवाक्यमध्ये अग्निविद्याविधीनां स्वीकृतत्वात्, भूमविद्यायां 'तरति शोकमात्मवित्' (छा. ७. १. ३) आत्मैवेदं सर्वम् (छा. ७. २५. २) इत्युपक्रमोपसंहारावगत-निर्गुणवाक्यमध्ये नामाद्युपासनाविधीनां स्वीकृतत्वाच्च । तस्मादिह वाक्यभेदाङ्गीकार एव युक्त इति **पूर्वः पक्षः** ।

**राद्धान्तस्तु**:—उपक्रमोपसंहारामिततात्पर्यशालिना । अतादृगन्यश्रुत्यादि ब्रह्मवाक्येन बाध्यते ॥

श्रुत्यादिषूत्तरमपि तात्पर्यलिङ्गवत् प्रबलम् । पूर्वमपि तात्पर्यलिङ्गरहितं दुर्बलमिति हि स्थितिः । तदिहोपक्रमोपसंहारावगमिततात्पर्येण ब्रह्मवाक्येनातथाभूतं द्विवचनश्रुत्यादि बाध्यते । ननु श्रुत्यादिषु यदुपक्र-मोपसंहारयोरुभयोराम्रेडितं तदेव तदुभयावगमिततात्पर्यं सत् अतथाभूतात् पूर्वस्मात् प्रबलं भवति । यथा देवतात्वानन्तत्वादिलिङ्गं प्राणाकाशादिश्रुतेः । न चैवं ब्रह्मवाक्यमिहोभयत्र परामृश्यते । गायत्रीप्रकरणे श्रुतं 'यद्वै तत् ब्रह्म' (छा. ३. १२. १६) इति 'इदं वाव तत' (छा. ३. १३. ७) इति एतद्ब्रह्मवाक्यम् । तादृशमिह यद्युभयत्रापि श्रूयेत, तदैव तदुभयावगमिततात्पर्यं स्यात् । न चैवमिहास्ति, किंतूपक्रमोपसंहार-पर्यालोचनयोपक्रमप्रभृत्युपसंहारपर्यन्तमेकं ब्रह्मवाक्यमित्येतावदवगम्यते । तस्मादिहोपक्रमोपसंहारौ ब्रह्मवाक्य-स्वरूपावगमकावेव, न तु तस्य ब्रह्मतात्पर्यावगमकाविति चेत् । मैवं । स्वरूपावगमकयोः तात्पर्यावगमकत्व-स्याप्यविरुद्धत्वात् तात्पर्यावगमने क्षमस्य तत्सामर्थ्यस्य स्वरूपावगमकत्वेन वैकल्याप्रसक्तेः । न हि उपक्रमोप-संहारयोः प्रत्येकविश्रान्तत्वेनावृत्तिमत्येव श्रुत्यदिप्रमाणे तयोस्तात्पर्यवत्त्वग्राहकत्वम्, न तूभयानुस्यूतत्वेनावृत्तिरहित इत्यस्ति नियमः । श्रुत्यादिषु यदेवोभयसम्बन्धि तत्र तयोस्तात्पर्यवत्ताऽवगमकत्वात् । अपि च 'येनोपक्रम्यते येन चोपसंह्रियते स वाक्यार्थ' इति न्यायात् उपक्रमोपसंहारप्रतिष्ठितं ब्रह्म तात्पर्यविषयतया ताभ्यामवगमितमिति ब्रह्म तावदतथाभूताज्जीवात् मुख्यप्राणाच्च प्रबलम् । अतः प्रबलप्रमेयाश्रयं ब्रह्मवाक्यं दुर्बलप्रमेयाश्रितात् जीवमुख्यप्राणविषयश्रुत्यादितः प्रबलम् । प्रमाणस्य स्वरूपप्रयुक्तबलादपि प्रमेयाश्रयबलस्याधिकत्वात् । अत एव प्रधानभूताचमनादिपदार्थाश्रयायाः 'क्षुत आचामेत्' इत्यादिस्मृतेः 'वेदं कृत्वा वेदिं करोति' इत्यादिपदार्थ-गुणभूतकर्मविषयश्रुत्यपेक्षया प्रबलत्वमुक्तं शिष्टकोपाधिकरणे (जै. सू. १. ३. ४) । तस्मादिहोपक्रमोप-संहारैकरूप्यावगमिततात्पर्यवता उपक्रमोपसंहारावगमिततात्पर्यविषयमात्रब्रह्माश्रयेण च वाक्येन ज्ञेयं ब्रह्मैकमेवात्र प्रतिपाद्यमित्यभ्युपगन्तव्यम् । त्रयाणां जीवमुख्यप्राणब्रह्मणामुपास्यानां प्रतिपाद्यत्वे वाक्यभेदप्रसङ्गात् ।

ननु वाक्यभेदभयात् माभूवन् त्रीण्युपास्यानि प्रतिपाद्यानि । ब्रह्मैकमेव 'मामेव विजानीहि' इति विधिस्वारस्याद्युपास्यं प्रतिपाद्यं किं न स्यात् ? न स्यात् । हिततमत्वलिङ्गविरोधात् । तथाहि—हिततमत्वं 'यन्मां विजानीयात्' इत्युपात्तस्य विज्ञानस्योच्यमानं तस्य विशुद्धब्रह्मसाक्षात्काररूपतां व्यवस्थापयति । हिततमत्वं हि निरतिशयपुरुषार्थत्वं निरतिशयपुरुषार्थसाधकतमत्वं वा स्यात् । उभयथाऽपि तदखण्डानन्द-विषयकस्य निखिलानर्थनिवृत्तिपूर्वकाखण्डानन्दरूब्रह्मावाप्तिसाधकतमस्य विशुद्धब्रह्मसाक्षात्कारस्यैव युज्यते । न च वाच्यम्—'विजानीयात्' इत्युपक्रम्याग्रे 'उपास्व' इति तत्परामर्शात् विशेषश्रुत्यनुसारेण विज्ञानपद-मुपासनापरमित्यतस्तत्रैव हिततमत्वमापेक्षिकं योजनीयमिति । उपक्रमगततया प्रश्नोत्तराभ्यां प्रतिपिपादयिषित-तया च प्रबलेन हिततमत्वलिङ्गेन विज्ञानपदस्य विशुद्धब्रह्मसाक्षात्कारपरत्वावश्यम्भावेन प्रकृतविज्ञाने प्रयुज्य-मानस्य उपासनापदस्यापि तत्साक्षात्कारे स्वतः प्राप्तावृत्त्यनुवादकत्वकल्पनस्योचितत्वात् । एवं च 'विजानीहि' इत्यादिषु विधिश्रुतीनामविधेयफलरूपब्रह्मसाक्षात्कारविषये कुण्ठितशक्तिकत्वेनाविधायकत्वात् 'गोसदृशं गवयं विद्धि' 'आत्मानं रथिनं विद्धि' (का. १. ३. ३) इत्यादिलौकिकवैदिकवाक्यरीत्या प्रतिपाद्यपुरुषाभिमुखी-करणार्थतैवाभ्युपगन्तव्या ।

एतेन 'एतदेवोक्थमुपासीत' 'वक्तारं विद्यात्' इत्याद्यपि व्याख्यातम्; सार्वात्म्यप्रतिपत्तये प्राणधर्मैर्जीवधर्मैश्च प्रतिपाद्यमाने ब्रह्मणि तस्यापि विधिसरूपस्य प्रतिपाद्यपुरुषचेतस्समाधानार्थत्वोपपत्तेः । द्विवचनश्रुत्यादिकं तु न प्रतिपाद्यपरम्, किन्तु ज्ञानक्रियाशक्त्याश्रययोः बुद्धिप्राणयोः प्रत्यगात्मोपाधिभूत-योर्निर्देशपरं प्रत्यगात्मनस्तत्तदुपाधिकृतविशेषपरित्यागेन तत्स्वरूपमेतत्प्रकरणप्रतिपाद्यं ब्रह्मैवेति दर्शयितुम् । अत एवोपाधिद्वयोपहितस्य प्रत्यगात्मनः स्वरूपेणाभेदमभिप्रेत्य 'यो वै प्राणस्सा प्रज्ञा या वै प्रज्ञा स प्राण' इत्यभेदोऽपि निर्दिष्टः । तस्मात् प्रबलतरलिङ्गवाक्यबाध्यत्वात् विरोधिश्रुतिलिङ्गानां ब्रह्मैकमेवात्र प्रतिपाद्यमिति सिद्धम् ।

सूत्रस्य त्वयमर्थः । जीवमुख्यप्राणयोरपि लिङ्गसत्वात् ब्रह्मैकमेवात्र न प्रतिपाद्यम्, अतः 'प्राणोऽस्मि' इति प्राणशब्दो वक्ष्यमाणायुःप्रदत्वादिलिङ्गानुसारेण मुख्यप्राणपरो वाच्य इति प्राणो ब्रह्म न भवतीति चेत् । न । तथा सत्युपासात्रैविध्यप्रसङ्गात् । न च त्रिविधोपासनाभ्युपगन्तारं प्रति तत्प्रसङ्गो नानिष्ट इति वाच्यम् । तथा सति वाक्यभेदापत्तेः । एकस्यैव च वाक्यस्य आसमन्तादुपक्रमोपसंहाराश्रितत्वात् । तस्य च उपक्रमोपसंहारावगमिततात्पर्यकस्य जीवमुख्यप्राणलिङ्गेभ्यो बलवत्त्वात्, उपक्रमोपसंहारावगमिततात्पर्य-विषयभावब्रह्मरूपप्रबलप्रमेयाश्रितत्वादपि—

'दुर्बलस्य प्रमाणस्य बलवानाश्रयो यदा। तदाऽपि विपरीतत्वं शिष्टाकोपे यथोदितम्'

इति न्यायेन तस्य बलवत्त्वाच्च । तस्माद्वाक्यभेदपरिहाराय ब्रह्मैकमेवात्र प्रतिपाद्यमभ्युपगन्तव्यमिति प्राणो ब्रह्मैव। अन्यत्रापि ब्रह्मलिङ्गानुसारेण प्राणशब्दस्य ब्रह्मणि वृत्तेराश्रितत्वात्। इह सर्वात्मत्वेन विवक्षिते ब्रह्मणि तस्य समनन्तरवक्ष्यमाणस्य जीवमुख्यप्राणलिङ्गनिकायस्य युक्तत्वात्।

न च—एकवाक्यत्वबलात् प्राणशब्दस्य ब्रह्मणि वृत्तावपि 'मामेव विजानीहि' इत्याद्यनुरोधात् उपास्तिवाक्य इवोपास्ये ब्रह्मणि वृत्तिरस्त्विति शङ्कनीयम्; इहोपासनाविधिभञ्जकहिततमत्वादिलिङ्गयोगादिति।

यद्यपि मुख्यः प्राणः प्रतिपाद्य इति पूर्वपक्षे प्राणश्रुतिरप्यस्ति, तथाऽपि तामालम्ब्य पूर्वपक्षः 'प्राणस्तथाऽनुगमात्' इति सूत्र एव निराकृतः, इह तु प्राणश्रुतिविषये प्रवृत्तैरायुःप्रदातृत्वादिलिङ्गैः तत्रत्यपूर्वपक्षनिराकरणहेतूपमर्देन तस्यैव प्राणशब्दस्य मुख्यप्राणपरत्वमाशंक्यत इति विभावयितुं सूत्रे श्रुतिमुल्लंघ्य लिङ्गादिलुक्तम्। न च तथाऽपि द्विवचनश्रुतिरस्तीति वाच्यम्; तस्य प्रतिपाद्यभेदमात्रे श्रुतित्वेऽपि जीवमुख्यप्राणयोः श्रुतित्वाभावात्।

यत्तु भाष्ये उपासात्रैविध्यादित्यस्य व्याख्यानान्तरं 'न ब्रह्मवाक्येऽपि जीवमुख्यप्राणलिङ्गं विरुध्यते, उपासात्रैविध्यात्। त्रिविधमिह ब्रह्मण उपासनं विवक्षितं प्राणधर्मेण प्रज्ञाधर्मेण स्वधर्मेण च' इति तत् वृत्तिकारपक्षोन्यासमात्रम्, न त्वस्य प्रकरणस्य त्रिविधोपासनापरत्वं भाष्यकाराभिमतम्; हिततमत्वादिविरोधेन विधिशक्तिकुण्ठनस्योक्तत्वात्। प्रागुक्तवाक्यभेददोषानातिवृत्तेश्च । न ह्यत्रोपासनात्रयविशिष्टं ब्रह्म विधातुं शक्यम्; तस्य विध्यनर्हत्वात्, किन्तु ब्रह्मण्युपासनात्रयं विधातव्यम् । तच्च परस्परानन्वयि स्वतन्त्रमिति कथं न वाक्यभेदः ?

न च वाच्यं—नेहोपासनात्रयं विधीयते । किंत्वेकमेवोपासनं ब्रह्मणो रूपत्रयविशेषितं 'तम्मामायुरमृतमुपास्स्व' इत्यनेन विधीयते। तत्र मामिति जीवविशिष्टतोक्ता। 'आयुः' इति प्राणविशिष्टता। 'अमृतम्' इति स्वरूपमुक्तमिति। तावता इन्द्रमुख्यप्राणविशिष्टब्रह्मोपासनालाभेऽपि इन्द्रस्य 'तं माम्' इति विशेषणेन पूर्वोक्तत्वष्ट्रहननादिगुणकत्वलाभेऽपि वक्तृत्वघ्रातृत्वद्रष्टृत्वश्रोतृत्वादिगुणकत्वस्य वक्ष्यमाणस्यालाभात्, प्राणस्यायुष्ट्वगुणकत्वलाभेऽपि इन्द्रियनिश्रेयसहेतुत्वशरीरोत्थापकत्वादिगुणकत्वस्य वक्ष्यमाणस्यालाभाच्च। तत्तद्गुणविशिष्टेन्द्रप्राणविशेषितब्रह्मोपासनसिद्धये 'वक्तारं विद्यात्' इत्यादिषु 'एतदेवोक्थमुपासीत' इत्यत्र च विध्यन्तराणां स्वीकर्तव्यत्वेन वाक्यभेददोषानतिलङ्घनात् । न च अवाक्यभेदार्थं वक्ष्यमाणसर्वगुण-

विशिष्टेन्द्रप्राणविशेषितब्रह्मोपासनं 'तं मामायुरमृतमुपास्व' इत्यत्रैव विधेयं स्वीक्रियत इति वाच्यम्; अत्र वक्ष्यमाणतत्तद्गुणसमर्पकशब्देष्वश्रूयमाणेषु तत्तद्गुणोपासनाविधिषु चाग्रे श्रूयमाणेषु तथा स्वीकारस्यैवायुक्तत्वात्, अन्यथा 'अग्निहोत्रं जुहोति' इत्यत्रापि अवाक्यभेदार्थं प्रकरणगतविध्यन्तरश्रुतदध्यादिवैकल्पिकसकलद्रव्याशीर्ष्यग्निहोत्रविधिरिति कल्पनापत्तेः।

न च—अग्निहोत्रवाक्येन दध्यादिवाक्यानामिव 'तं मामायुः' इति वाक्येन 'एतदेवोक्थम्' इत्यादिवाक्यानां गुणविधायकतया वाक्यैकवाक्यत्वेन एकवाक्यतानिर्वाहोऽस्त्विति वाच्यम्। तथाऽपि ब्रह्मस्वरूपोपासनाविधेः 'तं मामायुरमृतम्' इत्यादावलाभेन 'स म आत्मेति विद्यात्' इत्यत्रैव तद्विधेस्स्वीकर्तव्यत्वात्। न हि 'अमृतम्' इत्यनेन तल्लाभः; 'प्राणो व आयुः प्राण एवामृतम्' इति वाक्यशेषेण आयुष्ट्वस्येवामृतत्वस्यापि प्राणविशेषणीकरणात्। तस्मादेकवाक्यताऽनुरोधात् ज्ञेयब्रह्मपरमेवेदं प्रकरणम्, न जीवमुख्यप्राणोपासनाविधिगर्भम्, तत्तद्गुणविशिष्टजीवमुख्यप्राणविशेषितब्रह्मोपासनाविधिगर्भं वा। यत्तु भूमविद्यायां ज्ञेयब्रह्मप्रकरणमध्येऽपि नामवागाद्युपासनाविधिस्वीकरणम् तत् नामवागादीनामुत्तरोत्तरभूयस्त्वनिरूपणावसरे श्रुतेषु 'नामोपास्व' 'वाचमुपास्व' इत्यादिषु श्रुतानां नामवागादिशब्दानामिह जीवमुख्यप्राणलिंगानामिव ब्रह्मणि पर्यवसानस्याभ्युपगन्तुमयुक्तत्वात्। तदभ्युपगमे हि ब्रह्मणस्स्वस्मादेव भूयस्त्वमुक्तं स्यात्।

ननु तथाऽप्येकवाक्यतानिर्वाहार्थं 'नामोपास्व' इत्यादिविधिस्त्यज्यताम्। नामादिप्रसंगमात्रस्योत्तरोत्तरभूयस्त्वनिरूपणद्वारा ब्रह्मणस्सर्वतोभूयस्त्वप्रतिपादन एव तात्पर्यवतः 'आध्यानाय प्रयोजनाभावात्' (३. ३. ७) इत्यधिकरणोक्तन्यायेन 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' (का. १. ३. १०) इत्यादौ इन्द्रियादिप्रसंगवदेकवाक्यताऽविरोधित्वादिति चेत्।

न। 'नामोपास्व' इत्यादिविधानान्तरं 'स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्ते' (छा. ७. १. ५) इत्यादिप्रकारेण नामादिषु ब्रह्मपदसामानाधिकरण्यस्याभ्यस्तस्येतिशिरस्कतया उपासनकर्मसमर्पकस्य ब्रह्मदृष्टिविशेषितनामाद्युपासनाविधिं विना अनुपपन्नत्वेनानन्यथासिद्धतया अन्यार्थप्रसक्तं नामादिकमाश्रित्य गोदोहनादिन्यायेन उपासनाविधीनामपि स्वीकरणीयत्वात्। एवं 'भूमविद्यायां दर्शनात् तद्दृष्टान्तबलादेव, स्थितेऽप्येतस्मिन्नधिकरणे, उपक्रमोपसंहाराभ्यां समस्तोपासनापरस्य वैश्वानरप्रकरणस्य मध्ये व्यस्तोपासनाविधयोऽपि स्वीकर्तव्या' इत्युत्थितस्य पूर्वपक्षस्य निराकरणार्थं तृतीयेऽध्याये 'भूम्नः क्रतुवत्' (३. ३. ५२) इत्यधिकरणं प्रवर्तिष्यते।

उपकोसलविद्यायां 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि' (छा. ४.११.१.) इति 'स य एतमेवं विद्वानुपास्ते अपहते पापकृत्याम्' (छा. ४.११.२) इत्यादिगार्हपत्यादिवाक्यानि यद्यपि शास्त्रदृष्ट्या ब्रह्मणि योजयितुं शक्यन्ते, तथाऽपि 'एषा सोम्य तेऽस्मद्विद्या चात्मविद्या च' (छा. ४.१४.१) इति आत्मविद्यातोऽग्निविद्यायाः पृथक् कीर्तनात्, अग्निविद्याया अपि कथञ्चिदात्मविद्यात्वनयनेऽपि 'य एष आदित्ये पुरुषः' 'य एष चन्द्रमसि पुरुषः' य एष विद्युति पुरुष' इति व्यवस्थितविषयतया निर्दिष्टानां गार्हपत्यादिविद्यानां 'प्राणो ब्रह्म' इति ब्रह्मदृष्टिविशेषितहिरण्यगर्भोपासनायाश्च विधानेन वाक्यभेदावश्यम्भावाच्च ब्रह्मोपासनाप्रकरणमध्येऽपि उपासनान्तरविधयः स्वीकृताः। न चेह तथा अनन्यथासिद्धमनेकविद्यासमुच्चयवचनमस्ति। तस्मात् ज्ञेयब्रह्ममात्रपरमेवेदं प्रकरणमिति सिद्धम्। १. १. ३१।

इति प्रातर्दनाधिकरणम्। ११।



इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यसर्वतन्त्रस्वतन्त्र
चतुरधिकशतप्रबन्धनिर्वाहकविश्वजिद्याजिश्रीरङ्गराजाध्वरिवर-
सत्सुतमहाव्रतयाजिश्रीमदप्पय्यदीक्षितपादानां कृतौ
शारीरकमीमांसान्यायरक्षामणौ प्रथमस्याध्यायस्य
प्रथमः पादः समाप्तः।

ओं तत्सत्।

# अथ द्वितीयः पादः

प्रथमे पादे स्पष्टब्रह्मलिङ्गानि वाक्यानि निर्णीतानि। अथास्पष्टब्रह्मलिङ्गानि निर्णेतुं पादान्तरारम्भः। इदञ्च तत्र तत्राधिकरणे स्फुटीकरिष्यते। जन्मादिसूत्रे निर्णीतं ब्रह्मणो जगत्कारणत्वं तदाक्षिप्तं सर्वज्ञत्वं सर्वात्मत्वं व्यापित्वं नित्यत्वमित्येवमादयो धर्मा इह सिद्धवद्ब्रह्मलिङ्गत्वेनोपादीयन्त इति प्रथमपादोपजीवकत्वात्तदानन्तर्यम्।

(१ अधिकरणम्)

**सर्वत्र प्रसिद्धोपदेशात्।१।**

छान्दोग्ये श्रूयते 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति। स क्रतुं कुर्वीत' 'मनोमयः प्राणशरीरो भारूपस्सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामस्सर्वगन्धस्सर्वरसः' (छा.३.१४.१,२) इत्यादि अत्र 'शान्त उपासीत' इत्यत्र 'स क्रतुं कुर्वीत' इति विहितामुपासनामनूद्य शान्तिरूपगुणमात्रविधिर्लाघवादिति स्थिते 'स क्रतुं कुर्वीत' इत्यनिर्दिष्टोपास्यायामुपासनायां किं मनोमयादिवाक्यशेषगतलिङ्गसमर्पितो जीव उपास्यः, उत 'सर्वं खल्विदं ब्रह्म' इति वाक्योपक्रमगतब्रह्मश्रुतिसमर्पितं ब्रह्मेति वाक्योपक्रमस्यान्यार्थत्वानन्यार्थत्वाभ्यां सन्देहः।

तत्र **पूर्वपक्षः** —मनोमयत्वं प्राणशरीरत्वं च तावज्जीवलिङ्गम्। यद्यपि 'मनोमय' इति मयटो विकारप्राचुर्याद्यनेकार्थसाधारण्यात्, प्राणः शरीरमस्येति प्राणे शरीरत्वरूपणस्य येन केनचित् सम्बन्धेन निर्वोढुं शक्यत्वाच्चाधिष्ठानत्वनियन्तृत्वादिरूपमनःप्राणसम्बन्धवति ब्रह्मण्यपि कथञ्चिद्योजयितुं शक्यम्, तथाऽपि मनःप्राणसम्बन्धित्वप्रतिपादने तदभाववत्त्वप्रतिपादन इव तयोर्जीवेन सहोपकरणोपकरणिभावलक्षणसम्बन्ध एव लोकवेदयोः प्रसिद्धतरो ग्राह्यः, न तु ब्रह्मणा सह तयोरप्रसिद्धस्सम्बन्धः; प्रसिद्धसम्बन्धे प्रथमं बुद्ध्यवतारात्। अत एव खलु 'अप्राणो ह्यमनाः' (मु.२.१.२) इति ब्रह्मणि मनःप्राणनिषेधो झटिति स्वारस्येनैव बुद्धिमारोहति। न तु घटवति भूतले 'घटाभाववत् भूतलम्' इत्याप्तवाक्यमनुपपन्नतया शङ्कितं सत् समवाय-

सम्बन्धेन घटाभाववत्परमित्युपपादनमिव 'अप्राणो ह्यमना' इति श्रुतिवाक्यमधिष्ठानत्वादिसम्बन्धेन मनःप्राणवति ब्रह्मणि कथमप्राणत्वममनस्कत्वञ्चेत्यनुपपन्नार्थतया शङ्कितं सत् भोगोपकरणभावेन मनःप्राणाभाववत्परमित्युपपादनमपेक्षते ।

न च वाच्यम्—मनःप्राणयोर्जीवसम्बन्धित्वप्रसिद्धावपि मनोमयप्राणशरीरशब्दौ 'मनोमयः प्राणशरीरनेता' (मु. २. २. ७.) 'स य एषोऽन्तर्हृदय आकाशः तस्मिन्नयं पुरुषो मनोमयः' (तै. १. ६. १) इत्यादिश्रुतिषु ब्रह्मण्येव प्रसिद्धौ । ततोऽर्थानुसन्धानात् पूर्वमेव बुद्धिस्थया शब्दप्रसिध्या अत्रापि मनोमयप्राणशरीरशब्दयोर्ब्रह्मपरत्वसिद्धौ तत्र सम्भवत्सम्बन्धपरतया मयट्प्रत्ययशरीरत्वरूपके योजनीये स्याताम् इति; श्रुत्यन्तरेष्वप्यर्थानुसारेण तयोर्जीवपरत्वस्यैवाङ्गीकारेण ब्रह्मणि तत्प्रसिध्यसंप्रतिपत्तेः, पञ्चकोशान्तर्गतमनोमयशब्दस्य जीवपरत्वदर्शनाच्च । न च श्रुत्यन्तरेषु तयोर्जीवपरत्वे ब्रह्मपरपदान्तरसामानाधिकरण्यविरोधः; अङ्गुष्ठाधिकरण (१. ३ ७) न्यायेन जीवब्रह्माभेदप्रतिपादनार्थत्वोपपत्तेः । न चात्रापि तयोर्ब्रह्मण्येव तदभिन्नजीवद्वारा वृत्तिस्स्यादिति वाच्यम् । मनःप्राणसम्बन्धेन प्रथमं बुद्धिस्थस्य जीवस्यैवोपास्यतयाऽन्वयसम्भवेन तमतिलंध्य तद्द्वारा ब्रह्मणि पर्यवसानकल्पनायां 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति विहितस्य सामिधेन्यभ्यासस्य प्रथमप्रतीतं स्थानधर्मत्वमतिलंध्य तद्द्वारा प्रवोवाजीयादिऋग्धर्मत्वकल्पनावदयुक्तत्वात् । न चात्रोपरितनसत्यसङ्कल्पत्वादिब्रह्मलिङ्गानुसारेण तथा कल्पनं युक्तमिति शंक्यम् । 'सत्यसङ्कल्प' इत्यस्य प्रथमश्रुतमनोमयत्वादिजीवलिंगानुसारेण सति–ब्रह्मणि, असङ्कल्पः सङ्कल्परहितः, ब्रह्मज्ञानरहित इति जीवे व्याख्यातुमुचितत्वात् । 'सर्वकर्मा सर्वकाम' इत्यादेर्जीवे पर्यायेणोपपत्तेः; युगपत् ब्रह्मण्यप्यसम्भवाद् । 'ज्यायान् पृथिव्याः' इत्यादेः 'अन्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा' इति तत्पूर्वश्रुतहृदयायततनत्वाणीयस्त्वाविरोधेन जीव एव ब्रह्मभावापेक्षया कल्पयितुं युक्तत्वात् । 'एष म आत्मा' इति व्यतिरेकनिर्देशस्य 'एतमितः प्रेत्याभिसम्भवितास्मि' इति प्राप्यप्राप्तृभावनिर्देशस्य च औपचारिकत्वेन साधकफलावस्थाभेदेन च जीवे संगमयितुं शक्यत्वात् । 'एतत् ब्रह्म', इत्युपसंहारे ब्रह्मसङ्कीर्तनस्य क्वचित् 'परब्रह्म' इति परमात्मनि सविशेषणव्यवहारदर्शनेन जीवेऽप्यविरुद्धत्वाच्च ।

स्यादेतत्—भवेदेवं जीव उपास्यो यदि मनोमयादिवाक्यशेष उपासनाकर्मसमर्पकः स्यात् । न त्वयमेवम् । तत्र मनोमयादिपदानां प्रथमान्ततया 'स क्रतुं कुर्वीत' इति प्रकृतोपासनाकर्तृविशेषणसमर्पकत्वात् । किन्तु 'सर्वं खल्विदं ब्रह्म' इति वाक्योपक्रम एवोपासनाकर्मसमर्पकः । तत्र ब्रह्मपदस्य

द्वितीयान्तत्वसम्भवादिति चेत् । मैवम् । मनोमयादिपदानामनपेक्षितोपासनाकर्तृविशेषणसमर्पकत्वं परित्यज्य विभक्तिविपरिणामेनापेक्षिततत्कर्मसमर्पकत्वकल्पनस्यैव युक्तत्वात्, क्रतुशब्देन द्वितीयान्तस्यापि ब्रह्मपदस्यानन्वयेन षष्ठ्यन्ततया विभक्तिविपरिणामस्य तत्राप्यावश्यकत्वात् । न चोभयत्रापि विभक्तिविपरिणामे विनिगमनाविरहः, स्ववाक्यशेषादुपास्यग्रहणसम्भवे परार्थवादतस्तद्ग्रहणायोगात् । शमविधौ हेतुवन्निगदार्थवादो हि 'सर्वं खल्ु' इत्याद्युपक्रमः । यस्मात् सर्वमिदं विकारजातं ब्रह्मैव तज्जत्वात्तल्लत्वात्तदनत्वाच्च, न च सर्वस्यैकात्मत्वे रागादयस्सम्भवन्ति; तस्माच्छान्त उपासीतेति तदेकवाक्यत्वात् ।

ननु तथाऽपि तद्गतब्रह्मपदान्वयो मनोमयादिपदानां विशेष्याकाङ्क्षया अपेक्षितः । तथा च तेषामुपास्यसमर्पकत्वेऽपि ब्रह्मणि पर्यवसानात् ब्रह्मैवोपास्यं सिध्येदिति चेत्; न । तेषां स्ववाक्यस्थानन्यार्थसमानलिङ्गात्मशब्दसमर्पितविशेष्यान्वयसम्भवे वाक्यान्तरस्थान्यार्थब्रह्मानुकर्षायोगात्, 'आत्मानमुपासीत मनोमयं प्राणशरीरं भारूपम्' इत्याद्यग्निरहस्यब्राह्मणेऽस्यां विद्यायामात्मनएव विशेष्यत्वदर्शनाच्च ।

ननु तथाऽपि प्राणः शरीरमस्येति सर्वनामार्थे विहितो बहुव्रीहिः प्रकृतं ब्रह्मैव परामृशेत्, न तु प्रकरिष्यमाणमात्मानम्; सर्वनाम्नां प्रकृतपरामर्शित्वात् । नपुंसकलिङ्गनिर्दिष्टस्यापि ब्रह्मणो विशेष्यभूतात्मपदानुसारिलिङ्गवता 'प्राणशरीरः' इत्यनेन परामृष्टुं शक्यत्वात्, 'तस्मिन् सीद' इतिवदन्यार्थनिर्दिष्टस्यापि सर्वनाम्ना परामर्शसम्भवाच्च । न च वाच्यं—'स क्रतुं कुर्वीत' इति विहितामुपासनामनूद्य 'सर्वं खलु' इत्यादिना सार्थवादेन वाक्येन शमगुणो विधेयः । तथा च प्रथमपठितमपि तत् अर्थानुसारात् पाश्चात्यमेवेति ततः प्रागेवोपासनाविधेस्सविषयस्य पर्यवसानं वक्तव्यम् । अतः प्रवर्तिष्यमाणविध्यर्थवादः तदुपजीव्यविधिपर्यवसानाय विषयसमर्पक इत्येतन्न युक्तम्—इति । भाव्यर्थानुसन्धानेनापि सविषयकोपासनाविधिपर्यवसानोपपत्तेः । उपांशुयाजविधिप्रवृत्त्यनन्तरभाविक्रमप्रमाणकयाज्यानुवाक्यान्वयलभ्यविष्णुदेवत्यत्वाद्यनुसन्धानेन 'विष्णुरुपांशु यष्टव्य' इत्यादिस्तुतिसहितोपांशुयाजविधिपर्यवसानदर्शनात् । एवञ्च—

'सर्वनाम प्रसिद्धार्थं प्रसाध्यार्थविघातकृत् । प्रसिध्यपेक्षि सत् पूर्ववाक्यस्थमपकर्षति,

इति ज्योतिरधिकरणोक्तन्यायेनैव मनोमयादिवाक्यस्य ब्रह्मपरत्वं सिध्यति । न च तत्र प्रकृतपरत्वप्रत्यभिज्ञापकोऽस्ति द्युसम्बन्धः; नात्र प्रकृतप्रत्यभिज्ञापकोऽस्तीति वैषम्यं शङ्कनीयम् । सर्वनाम्नः प्रकृतपरत्वस्य व्युत्पत्तिसिद्धत्वेन तत्सिद्ध्यर्थं प्रकृतप्रत्यभिज्ञापकानपेक्षणात् । 'सा वैश्वदेव्यामिक्षा तत्संसृष्टं प्राजापत्यम्' इत्यादिषु प्रत्यभिज्ञापकाभावेऽपि सर्वनाम्नः प्रकृतपरत्वदर्शनात् । ज्योतिर्वाक्येऽपि 'दिवि'

'दिवः' इति निर्देशभेदेन द्युसम्बन्धस्य वस्तुतः प्रत्यभिज्ञापकत्वाभावाच्चेति चेत्; मैवं। मनोमयशब्दस्य प्रसिद्धसम्बन्धानुरोधेन जीवपर्यवसायितया तदुपस्थापितजीवस्यैव सर्वनामार्थेन बहुव्रीहिणा परामर्शसम्भवात्, तदसम्भवेऽपि प्राणसम्बन्धरूपवर्तिपदार्थप्रसिध्यनुरोधेन प्रक्रंस्यमानस्यात्मनः परामर्शसम्भवाच्च। प्रक्रान्तपरत्वे वर्तिपदार्थस्वारस्यभङ्गापत्तेः। सर्वनाम्नः प्रक्रान्तपरत्वासम्भवे च प्रक्रंस्यमानपरत्वं 'अथैष ज्योतिः' इत्यादिवन्न दुष्यति।

एतेन—मा भूच्छमविध्यर्थवादः स्वातन्त्र्येण वा मनोमयादिवाक्ये विशेष्यसमर्पकतया वा सर्वनामार्थसमर्पकतया वा ब्रह्मण उपास्यत्वसंयोजकः। त्रिपाद्ब्रह्मप्रकरणमव्यवहिते ज्योतिर्वाक्येऽप्यनुवृत्तं तथा स्यादित्यपि शङ्का निरस्ता; समभिव्याहृतवाक्यशेषोपात्तलिङ्गसमर्पितस्य जीवस्योपास्यत्वेनान्वयसम्भवे प्रकरणसमर्पितस्य ब्रह्मणस्तथात्वेनान्वयायोगात्। लिङ्गवाक्याभ्यां प्रकरणस्य दुर्बलत्वात्।

ननु वाक्यशेषगतजीवलिङ्गं निष्प्रयोजनम्। न ह्यपूर्वार्थबोधनाय मनोमयत्वप्राणशरीरत्वोपन्यासः; जीवे तदुभयवैशिष्ट्यस्य लोकसिद्धत्वात्, उपासनावाक्यशेषे तदनुपयोगिजीवस्वरूपनिरूपणस्यानपेक्षितत्वाच्च। नाप्युपास्यो जीव इति गमयितुं तदुपलक्षणाय, एकेनैव तदुपलक्षणसिद्धावितरवैयर्थ्यात्। नापि तदुभयविशिष्टत्वेन तदुपासनासिद्धये; मनस्संवलितरूपतया सदा अहमिति भासमाने जीवे विधिं विनाऽपि तद्विशिष्टतयैवोपासनासिद्धेः। एवं निष्प्रयोजनाद्वाक्यशेषसमर्पितजीवलिङ्गात् सर्वाभिलषितब्रह्मप्रकरणं बलवदिति तदेवोपास्यसमर्पकं युक्तमिति चेत्; न। नित्यमहंप्रत्ययविषयतयोपासनाविषयत्वेनापि प्राप्तात् मनस्तादात्म्यादन्यत्रैव मनोविकारत्वे स्वप्नजागरानुवृत्तमनःप्रचुरत्वे मनःप्रधानत्वे वा 'द्वयोः प्रणयन्ति' इत्यस्य चोदकाप्राप्तप्रणयनान्तर इव वृत्तिसम्भवेन जीवलिङ्गप्रतिपादनस्योपासनार्थत्वेनैव सप्रयोजनत्वात्। तस्मान्मनोमयादिवाक्यशेषगतलिङ्गसमर्पितो जीव एवोपास्य इति। **अत्रोच्यते**—

प्रकृतब्रह्मणस्सर्वतादात्म्येनोपदेशतः। क्रतौ तदेवानन्यार्थमुपास्यं प्रमिमीमहे॥

'सर्वं खल्विदं ब्रह्म' इत्युपक्रमवाक्ये तावत्सर्वस्मिन् प्रपञ्चे 'इदं ब्रह्म' इतीदंशब्दसमानाधिकृतेन ब्रह्मशब्देन परामृष्टं त्रिपाद्ब्रह्म तादात्म्येनोपदिश्यते। इदमित्येतद्धि ब्रह्मणो विशेषणं, न तु सर्वस्य; तद्विशेषणत्वे प्रयोजनाभावात्, 'सर्वं ब्रह्म' इत्येतावतैव सर्वस्य ब्रह्मात्मकत्वसिद्धेः। ब्रह्मविशेषणत्वे त्वस्ति प्रयोजनं प्रकृतत्रिपाद्ब्रह्माधिकारलाभः। स च प्रकृतस्य प्रयत्नेनाधिकारःस्वानर्थक्यपरिहाराय क्रतौ वाक्यशेषगतलिङ्गं बाधित्वा स्वयमुपास्यत्वेन ब्रह्मसमर्पणार्थः पर्यवस्यतीति तदेव प्रकरणसमर्पितमनन्यार्थं सर्वात्मकं ब्रह्मात्रोपास्यमित्यध्यवस्यामः।

ननु 'सर्वं खल्विदं ब्रह्म' इत्यादि शमविध्यर्थवाद इति दर्शितं भाष्यकृता पूर्वपक्षे। सिद्धान्तेऽपि तदनुमत्यैव ब्रह्मण उपास्यत्वमुपपादितं 'यद्यपि शमविधिविवक्षया ब्रह्म निर्दिष्टम्' इत्यादिना। कथमनन्यार्थकत्वेन तस्योपास्यसमर्पकत्वमुच्यते? सत्यम्। त्रिपाद्ब्रह्मानुकर्षणार्थेदंविशेषणबलादुपास्यसमर्पणार्थेनापि तेन सन्निहितस्य शमविधेः स्तुतिद्वारा अर्थसमर्पणरूप उपकारः प्रसङ्गात्सिध्यतीति सिद्धान्ते तदनुमतिः, न तु शमविधिशेषतया, 'सर्वं ब्रह्मात्मकम्' इत्येतावतैव शमविधिशेषत्वसम्भवेन तदर्थत्वे 'इदम्' इति विशेषणवैयर्थ्यात्।

ननु शमविधिस्तुतौ 'सर्वं ब्रह्मात्मकम्' इति धीरपेक्ष्यते। उपास्यसमर्पणार्थं प्रकृतस्य त्रिपाद्ब्रह्मणःस्वप्राधान्येनाधिकार इत्यभ्युपगमे सर्वस्य तज्जत्वादिकं परंपरया हेतूकृत्य तद्धेतुकसर्वात्मत्वशालि प्रकृतं ब्रह्म प्रतिपाद्यं वक्तव्यमिति कथं तेन शमविधेरुपकारसिद्धिः? सत्यम्। ब्रह्मणस्सर्वात्मकत्वप्रतिपादने सर्वस्य ब्रह्मात्मकत्वमप्यर्थाल्लभ्यत इति तेन तस्योपकारसिद्धिः।

ननु 'यद्यपि शमविधिविवक्षया' इति भाष्यस्वारस्येन शमविधिशेषत्वमेव भाष्यकृदभिमतं प्रतीयते। कथं प्रासङ्गिकोपकाराभिप्रायं तद्व्याख्यायते? तत्स्वारस्यानुरोधेन श्रुताविदंशब्द एव 'इदं सर्वं यदयमात्मा' इत्यादिश्रुताविव सर्वविशेषणमिति व्याख्यायताम्। उच्यते—अत्रेदंशब्दस्य प्रकृतत्रिपाद्ब्रह्मानुकर्षणार्थतया ब्रह्मविशेषणत्वेन सार्थकत्वे सम्भवति परिदृश्यमानप्रपञ्चस्वरूपानुवादमात्रपरत्वं न वक्तव्यमित्येव भाष्यकृतोऽभिसन्धिः। अत एव ज्योतिरधिकरणे (१. १. १०) ज्योतिर्वाक्ये त्रिपाद्ब्रह्मानुवृत्तौ विवदमानं पूर्वपक्षिणं प्रति द्युसम्बन्धप्रत्यभिज्ञापनेन तत्र तदनुवृत्तिं प्रसाध्य तस्यामेव हेत्वन्तरमुक्तं 'न केवलं ज्योतिर्वाक्य एव ब्रह्मानुवृत्तिः, परस्यामपि हि शाण्डिल्यविद्यायामनुवर्तिष्यते ब्रह्म' इति। अनेन हि भाष्यवाक्येन परत्राप्यनुवृत्तिरत्रानुवृत्त्यवश्यंभावे हेतुत्वेन दर्शिता। सा कथं ज्योतिर्वाक्येऽपि त्रिपाद्ब्रह्मानुवृत्तिमनङ्गीकुर्वाणं पूर्वपक्षिणं प्रति सिद्धवद्धेतुभावं प्रतिपद्येत यद्यत्र त्रिपाद्ब्रह्मानुकर्षणैकप्रयोजनेदंविशेषणसामर्थ्यं नाश्रीयेत? भाष्ये शमविधिशेषत्वोपन्यासस्तु शमविधिशेषत्वमङ्गीकृत्यापि परिहर्तुं शक्यत इत्यभिप्रायः प्रौढिवादः। प्रौढिवादत्वं च तस्य भाष्य एव 'यद्यपि' इत्यनेन ध्वनितम्।

तत्रायं परिहाराभिप्रायः—यद्यपि ब्रह्म शमविध्यर्थवादे परविशेषणत्वेन निर्दिष्टम्, तथाऽपि ब्रह्मैव तद्गुणकतयोपास्यमिति बुद्धिसन्निहितं भवति, न जीवः; मनोमयत्वादिगुणानां जीवपर्यवसाने हेयगुणत्वाद्धेयगुणानां चात्रैव प्रदर्शितेन तत्क्रतुन्यायेन विरुद्धतया अनुपासनीयत्वात्। अत्र हि 'यथाक्रतुरस्मिँल्लोके पुरुषो भवति

तथेतःप्रेत्य भवति' इति वाक्येनोपासको यद्गुणविशिष्टतयोपास्ते, तद्गुणकः स्वयं परत्र भवतीति तत्क्रतुन्यायो दर्शितः। कथं तद्गुणोपासनामात्रेण स्वयं तद्गुणकःस्यादिति विचिकित्सायाम् 'अथ खलु क्रतुमयः पुरुष' इति पूर्ववाक्येन यस्मात् क्रतुशब्दितध्यानप्रधानो जीवः, न तूपायान्तरप्रधानः अतो ध्यानमात्रेण तत्तद्गुणकःस्यादेवेत्युपपत्तिरपि दर्शिता। एवं सोपपत्तिकमत्रैव दर्शितस्तत्क्रतुन्यायोऽत्रानुपकुर्वन् विपरीतार्थतामापद्यते चेत् क्वान्यत्रोपकुर्यात्? एवमप्यत्र नादरणीयस्स्यादन्यत्रैवोपकारः स्यात् यद्यत्र मनोमयादिवाक्ये जीव एवाहत्य निर्दिष्टः स्यात्। तदा हि पञ्चाग्निविद्यावत् सांसारिकहेयगुणविशिष्टजीवविषयाऽप्येषा वचनबलात् सत्यसङ्कल्पत्वाद्याविर्भावसंपादकब्रह्मप्राप्तिहेतुर्भवेत्, न तु तत्र जीवः स्वशब्दोपात्तोऽस्तीति।

ननु मनोमयत्वादिषूपदिश्यमानेषु ब्रह्म केनोपायेन बुद्धिसन्निहितं भवतीति चेत्; विश्वजिन्न्यायेनेति ब्रूमः। यथा विश्वजिद्विधिना तस्य सामान्यत इष्टसाधनत्वावगताविष्टविशेषाकांक्षायां सर्वाभिलषितस्वर्ग इष्टविशेषतया बुद्धिसन्निहितो भवति, तथोपासनाविधिना सामान्यत उपास्यसिद्धौ तद्विशेषाकाङ्क्षायां मनोमयादिवाक्यस्वरसविषयस्य जीवस्योपास्यत्वायोग्यत्वे सर्वाभिलषितसत्यसङ्कल्पत्वादिगुणविशिष्टतया सर्ववेदान्तप्रसिद्धं ब्रह्मैवोपास्यविशेषतया समनन्तरप्रदर्शिततत्क्रतुन्यायविदां बुद्धिसन्निहितं भवति। यद्यपि वाक्यशेषस्वरसविषयस्य जीवस्योपास्यत्वेन परिग्रहे रात्रिसत्रन्यायोऽनुसृतो भवति, रात्रिसत्रन्यायश्च विश्वजिन्न्यायात् बलीयान्, तथाऽप्यत्र हेयगुणजीवोपासनापर्यवसायितया निष्प्रयोजनाद्रात्रिसत्रन्यायात् उत्कृष्टगुणब्रह्मोपासनापर्यवसायितया सप्रयोजनो विश्वजिन्न्यायो बलीयानिति स एवात्रानुसरणीयः। यद्वा सर्वनामार्थो बहुव्रीहिः मनस्सम्बन्धादिप्रसिध्युपस्थापितेऽपि जीवे हेयगुणे पर्यवसानस्यायुक्ततया शमविध्यर्थवादनिर्दिष्टे ब्रह्मणि पर्यवस्यतीत्यनेन प्रकारेण ब्रह्मणो बुद्धिसन्निहिततोपपादनीया। न च वाच्यम्—तत्र तत्र ब्रह्मणि परब्रह्मशब्दप्रयोगदर्शनेन केवलब्रह्मशब्दस्य जीवेऽपि प्रयोज्यतावगमात् शमविध्यर्थवादस्थो ब्रह्मशब्दोऽपि जीवपरोऽस्तु—इति; सर्वेषु वेदान्तेषु ब्रह्मशब्दालम्बनतया परस्य प्रसिद्धत्वेन तत्रैव प्रथमं बुध्यवतारात्। तस्मादिह ब्रह्मैवोपास्यत्वेनान्वेतीति सिद्धम्।

सूत्रस्यानन्यार्थत्रिपाद्ब्रह्माधिकारपरं 'सर्वं खलु' इत्यादिकमिति सिद्धान्ते, सर्वत्र-'सर्वं खलु' इति निर्दिष्टे सर्वस्मिन्, प्रसिद्धस्य-प्रकृतस्य त्रिपाद्ब्रह्मणस्तादात्म्येनोपदेशादित्यर्थः। 'सर्वं खलु' इत्यादिकं शमविधिशेष इत्यभ्युपगम्य कृते सिद्धान्ते, सर्वत्र सर्वेषु वेदान्तेषूपासकाभिलषितगुणविशिष्टतया प्रसिद्धस्य ब्रह्मणो विश्वजिन्न्यायेनोपस्थितस्य मनोमयत्वादिधर्मविशिष्टतयोपदेशादिति प्रथमे पक्षे अर्थः। द्वितीयपक्षे तु, सर्वत्र-'सर्वं खल्विदं ब्रह्म' इति वाक्ये, प्रसिद्धस्य प्रकृतस्य ब्रह्मणः 'प्राणशरीर' इति सर्वनामार्थेन बहुव्रीहिण

परामृश्योपास्यगुणविशिष्टतयोपदेशादित्यर्थः। तदपि वक्ष्यं जीवपरमस्त्विति शङ्कानिराकरणे तु, सर्वेषु वेदान्तेषु ब्रह्मशब्दालम्बनतया प्रसिद्धस्य परस्यैवात्रापि ब्रह्मशब्देनोपदेशादित्यर्थः। एतास्सर्वा अपि योजनाः 'यत्सर्वेषु वेदान्तेषु प्रसिद्धं ब्रह्मशब्दालम्बनम्' इत्यादिभाष्येण गर्भीकृताः। १. २. १।

स्यादेतत्—यथा वाक्यशेषनिर्दिष्टा गुणा न जीवे तत्क्रतुन्यायानुकूला एवं ब्रह्मण्यपि। तथा हि—सर्वकर्मत्वं सर्वकारणत्वम्; बालाक्यधिकरण (१. ४. ५) न्यायेन कर्मशब्दस्य क्रियत इति व्युत्पत्त्या कार्यपरत्वात्। तत्तावन्नोपासकेन प्राप्यम्; जगद्व्यापाराधिकरण (४. ४. ७) न्यायविरोधात्। सर्वकामत्वं सर्वं कामयत इति कर्मण्युपपदे अण्प्रत्ययान्ततया 'सोऽकामयत' (तै.२.६.१) इति श्रुत्युक्तं स्रष्टव्यसर्वविषयकामनावत्त्वम्। तदपि तथैव। काम्यन्त इति कामा इति कामशब्दस्य भोगपरतया सर्वभोगशालित्वं तदिति चेत्। तत् सर्वभोगाश्रयसकलजीवतादात्म्यनिर्वाह्यमिति तदपि नोपासकेन प्राप्तुं शक्यम्; सगुणविद्याफलानुभवसमयेऽपि परिच्छिन्नत्वानपायात्। अविद्याऽवच्छिन्नो जीवः अविद्या च व्यापिनीत्यभ्युपगमे व्यापित्वस्य प्राप्तत्वेन प्राप्तव्यगुणत्वाभावात्। एतेन ज्यायस्त्वाणीयस्त्वे अपि व्याख्याते। 'अवाकी' (छा. ३. १४. २) इत्युक्तं वागिन्द्रियोपलक्षितसकलेन्द्रियराहित्यं तु सगुणफलानुभवसमये भोगान् भुञ्जानस्योपासकस्य नापेक्षितम्। विषयस्पृहाराहित्यरूपमनादरत्वमवाप्तसकलकामत्वापेक्षं ब्रह्मणोऽन्यत्र न सम्भवति। ननु 'सर्वकर्मा सर्वकाम' इत्यादिकमुपास्यगुणनिर्देशपरं मा भूत्, केवलमुपास्यस्योपलक्षकं स्तुत्यर्थं वाऽस्त्विति चेत्; न। सर्वकर्मत्वादीनां द्विः पाठेनाभ्यासावगततात्पर्यविषयभावानामुपास्यबहिर्भावकल्पनाऽयोगात्, प्रत्युत वाक्यशेषनिर्दिष्टेषु सर्वेषु गुणेषूपास्यतया प्रसक्तेषु सर्वकर्मत्वादीनां पुनः पाठस्य गुणान्तरपरिसंख्यार्थत्वौचित्येन तेषामेवोपास्यगुणत्वप्रतीतेश्च, मनोमयत्वादीनामपि मनस्सम्बन्धादिपर्यवसितानामुपासकस्पृहणीयगुणत्वाभावाच्चेत्याशंक्याह :—

### विवक्षितगुणोपपत्तेश्च। २।

विवक्षिताः—उपास्यत्वेन तात्पर्यविषया ये मनोमयत्वादयः ते ब्रह्मणि तत्क्रतुन्यायानुरोधिनः स्पृहणीयगुणा इत्येतदुपपद्यते। तथाहि—सगुणोपासनासिद्धस्य ब्रह्मलोके भोग्यभोगोपकरणानि यानि प्राक्सिद्धान्यरण्या (अर्णवा) दीनि यानि च स्वसङ्कल्पसाध्यानि स्त्र्यन्नपानादीनि तानि सर्वाणि स्वाप्नपदार्थवन्मानसप्रत्ययरूपाण्येव। यथा चैतत्तथा छान्दोग्यभाष्ये दहरविद्याप्रकरणे 'य इमेऽर्णवादयो ब्रह्मलोके

सङ्कल्पजाश्च पित्रादयो भोगास्ते किं पार्थिवा आप्याश्च यथेह लोके अर्णववृक्षपूर्मण्डपाद्याः, आहोस्विन्मानसप्रत्ययमात्रा इति । किञ्चातः । यदि पार्थिवा आप्याश्च स्थूलास्स्युः हृद्याकाशे समाधानानुपपत्तिः । पुराणे च मनोमयानि ब्रह्मलोकेऽर्णवशरीरादीनीति वाक्यं विरुध्येत' इत्यादिना 'तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयस्सङ्कल्पजाश्च पित्रादयः कामा बाह्यविषयभोगवदशुद्धिरहितत्वात् शुद्धसत्वसङ्कल्पजन्या इति निरतिशयास्सत्याश्चेश्वराणां भवन्ति' इत्यन्तेन भगवत्पादैरेव प्रपञ्चितम् । त इह ब्राह्मलौकिकाः पदार्था मनोविकारत्वान्मनोमया इति सर्वविकाराभिन्नः परमेश्वरोऽपि मनोमयः । अत एव विकारादिवाचिमनोमयशब्दो जीव एव समवेतार्थो न ब्रह्मणीत्याशंक्य ब्रह्मणि तदुपपादनार्थो भामतीग्रन्थः 'तस्यापि सर्वविकारकारणतया विकाराणाञ्च स्वकारणादभेदात्तेषाञ्च मनोमयतया ब्रह्मणस्तत्कारणस्य मनोमयत्वोपपत्तेः' इति । एवञ्च मनोमयत्वं ब्राह्मलौकिकादिव्यभोगसंपन्नत्वरूपमुपासकस्य परत्र प्रेप्सितगुणो भवत्येव । तथा प्राणाः शरीराणि शरीरवन्नियम्यान्यस्येति प्राणशरीरत्वं सर्वात्मना वश्येन्द्रियत्वरूपम् । तदपि तस्य स्पृहणीयमेव; 'ते ब्रह्मलोकेषु परान्तकाले' (महानारा. १०. ६) 'ब्रह्मणा सह ते सर्वे' इत्यादिश्रुतिस्मृत्यनुसारेण हिरण्यगर्भेण सह मोक्ष्यमाणानामहंग्रहोपासनापराणामपेक्षिते परब्रह्मसाक्षात्कारे चित्तवशीकरणस्योपायत्वात् । एकवचनमुत्सर्गतः करिष्ये' (महाभाष्य) इति न्यायमवलम्ब्य प्राणः शरीरमस्येति विग्रहकरणे तल्लभ्यं वश्यवायुत्वमपि तस्य स्पृहणीयमेव; वायुजयस्य मनोवशीकरणोपायत्वेन योगशास्त्रप्रसिद्धत्वात् । भारूपत्वं निर्मलचैतन्यलक्षणदीप्तिस्वरूपत्वं उपासकानुग्रहार्थपरिगृहीतविग्रहोपाधिकदीप्तिमत्त्वं वा । सत्यसङ्कल्पत्वमुक्तवक्ष्यमाणगुणनिर्वाहकममोघसङ्कल्पत्वम् । आकाशात्मत्वं 'आकाश इव पङ्केन न स पापेन लिप्यते' इति स्मृतिप्रसिद्धं निर्लेपत्वम् । सर्वकर्मत्वं 'स यदि पितृकामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छा. ८. २. १) इत्यादिश्रुतिप्रसिद्धं प्रागुक्तमनोमयपित्रादिसकलस्रष्टृत्वम् । सर्वगन्धत्वं सर्वरसत्वं च भोग्यतया सकलशुभगन्धरसवत्त्वम्, यस्य पर्यङ्कविद्यायामर्चिरादिमार्गेण ब्रह्म प्राप्नुवता विदुषा प्राप्तव्यत्वं श्रूयते 'तं ब्रह्मगन्धः प्रविशति, तं ब्रह्मरसः प्रविशति' (कौषी. १. ५) इति । 'सर्वमिदमभ्यात्त' (छा. ३. १४. २) इति प्रागुक्तसकलगुणाभिव्याप्तिमत्त्वम् । यद्यप्येतदनुक्तसिद्धम्, तथाऽपि 'सर्वकर्मा' इत्यादिपुनः पाठस्य परिसंख्यार्थत्वशङ्कानिरासाय प्रागुक्तास्सर्वेऽपि गुणा उपास्या इति प्रतिपादनार्थम् । तेन पुनः पाठः केवलमादरार्थो न परिसंख्यार्थ इति सिध्यति । सर्वरसान्तास्सर्वेऽपि गुणा उपास्यास्तदनन्तरगुणास्त्वविरुद्धा एवोपास्या इति च सिध्यति । अतो न किञ्चिदनुपपन्नम् ।

सूत्रे 'धर्मोक्तेः' 'धर्मोपदेशात्' इत्यादिवत् धर्मपदमप्रयुज्य गुणपदग्रहणं तत्र विवक्षित-

विशेषणं च मनोमयादिपदानां यत्नेनोपास्यत्वानुगुणार्थपरिग्रहे हेतुत्वेनोपात्तम् । यत एव मनोमयत्वादयः 'सर्वमिदमभ्यात्त' इति सिद्धार्थपुनःप्रतिपादनफलादुपास्यत्वेन विवक्षिताः, अतस्ते समनन्तरप्रदर्शिततत्क्रतुन्यायसाफल्याय परत्रोपासकजम्यगुणतयैवोपपादनीयाः, न तु ब्रह्मधर्ममात्रतयेति तदभिप्रायः । 'उपपत्तेश्च' इति चकारस्य त्वयमभिप्रायः—मनोमयादिशब्दाः प्रदर्शितार्थेषु स्वारस्याभावेऽपि तत्क्रतुवचनानुरोधाद्यत्नतस्तत्परतयोपपादनीया इत्येतावदेव न । उपपद्यन्ते च ते प्रदर्शितार्थेषु स्वरसत एव, न तु यत्नमपेक्षन्त इति । तथा हि—मनोमयशब्दस्तावन्मनोविकारार्थः; तैत्तिरीये तस्य तदर्थतया निर्णीतत्वेनान्यत्राप्यौत्सर्गिकत्वात् । मनोविकारत्वं च ब्रह्मणि साक्षादसम्भवत् मनोविकारवत्त्वभेदेनोपपादनीयम् । तथाभूतं च वस्तु बुद्धिसन्निहितं ग्राह्यम्; व्यक्तिवचनानां सन्निहितविशेषपरत्वनियमात् । सन्निहिताश्चोपासकसङ्कल्पसाध्याः पित्रादयो मनोमयाः; 'स क्रतुं कुर्वीत' इति लिङा उपासनाया इष्टसाधनत्वे बोधिते इष्टविशेषाकांक्षायामुपासनाफलत्वेन श्रुत्यन्तरप्रसिद्धानां तेषामिष्टविशेषत्वेनान्वयात् । 'सर्वकर्मा' इत्यत्रापि तेषां पितृमातृभ्रातृस्वसृसखिगन्धमाल्यगीतवादित्रस्त्र्यन्नपानादिरूपाणां सामस्त्यमेवोच्यते; अनादिजीवाविद्यादिसाधारण्येन सर्वेषां मुख्यवृत्त्या ब्रह्मकार्यत्वस्यायुक्ततया किञ्चिदवच्छेदापेक्षायां 'अथैतस्य हार्योजनस्य सर्व एव लिप्सन्ते' इत्यत्र[1] सर्वशब्दस्य प्रकृतऋत्विक्सामस्त्य इव प्रकृतमनोमयकार्यसामस्त्ये वृत्त्यौचित्यात् । एवं च सर्वगन्धसर्वरसशब्दयोरपि प्रायपाठानुसारेण उपासकप्राप्यब्रह्मगन्धरससामस्त्यएव पर्यवसानं स्यादिति । १. २. २

यद्येवमुपासकजीवेऽपि मनोमयत्वादय उपासनया प्राप्यमानास्सन्तीति तत्रापि तेषां नानुपपत्तिरित्याशंक्याह—

## अनुपपत्तेस्तु न शारीरः ।३।

यद्यपि मनोमयत्वादयो भाव्यभिप्रायेण जीवेऽपि कथञ्चिदुपपद्यन्ते, तथापि 'अवाकी' इत्यादिनोक्ता अनिन्द्रियत्वादयः कथमपि नोपपद्यन्ते । ते हि नोपासनार्थमुपात्ताः, किन्तु घ्राणरसनभोग्यगन्धरसवत्त्वोक्त्या प्रसक्तामिन्द्रियवत्त्वशङ्कां सत्यसङ्कल्पेन ब्रह्मणा गन्धरसादिभोगसंपत्तये स्वस्येन्द्रियाणि किमिति न सङ्कल्प्यन्त इति शङ्कामणीयस्त्वोक्तिप्राप्तव्यापित्वाभावशङ्कां च निवर्तयितुमुक्ताः । अतस्ते नोपासकप्राप्य-

---

१. हरिरसि हार्यियोजनः' इत्यनन मन्त्रेण गृह्यमाणो ग्रहः हार्योजनः, तत्र भक्षणं सर्वेषां ऋत्विजाम्, नतु चमसिनामेव इति पूर्वमीमांसासिद्धान्तः (३. ५. ६)

गुणतया व्याख्येया इति ते जीवे नोपपद्यन्त एव । किञ्च मनोमयत्वादयो ब्रह्मगुणा एव ग्रहीतुमुचिताः, न तूपासकगुणा इति वैषम्यं सूत्रे तुशब्देन द्योत्यते । ते हि ब्रह्मणि स्वतस्सिद्धाः, जीवे तूपासनालक्षण-हेतुसाध्याः । सिद्धसाध्यधर्मग्रहणसन्देहे च सिद्धधर्मा एव ग्राह्याः, न तु साध्यधर्मा इत्यन्तर्याम्यधिकरणे (१. २. ५) वक्ष्यमाणमेकं वैषम्यम् । ब्रह्मगुणग्रहणेनानन्यार्थत्रिपाद्ब्रह्माधिकारानुग्रहे बहुव्रीहेः प्रकृतपर-त्वस्वारस्यानुग्रहे च सम्भवति तद्बाधनं न युक्तमित्यपरं वैषम्यम् । अतश्शारीर उपास्यो न भवति । १. २. ३.

अपि च–'एतमितः प्रेत्य' (छा. ३. १४. ४) इत्यादिकर्मकर्तृव्यपदेशात्, स्वप्रकरणे 'एष म आत्मा' (छा. ७. १४. ३) इति, वाजसनेयके समानप्रकरणे 'एवमयमन्तरात्मन् पुरुषो हिरण्मय' इति चासमानविभक्तिकशब्दविशेषात्' 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' (गी. १८. ६०) इत्यादिस्मरणाच्च न शारीर उपास्य इति सूत्रत्रयेणाह —

**कर्मकर्तृव्यपदेशाच्च । ४ ।**

**शब्दविशेषात् । ५ ।**

**स्मृतेश्च । ६ ।**

यद्यपि 'एतमितः प्रेत्याभिसम्भवितास्मि' (छा. ३. १४. ४) इत्यत्राप्यसमानविभक्तिकशब्दरूप-शब्दविशेषोऽस्ति, तथाऽपि तत्र प्राप्यप्राप्तृतारूपकर्मकर्तृव्यपदेशः साधकफलावस्थाभेदेनोपपद्यत इति शङ्का-परिहारायैकस्यामेवावस्थायां 'स क्रतुं कुर्वीत मनोमयः प्राणशरीरः' (छा. ३. १४. १) इत्याद्युपास्योपासक-तारूपकर्मकर्तृव्यपदेशोऽपि प्रदर्शनीयः । तत्प्रदर्शने च 'एतमितः प्रेत्य' इत्यत्राप्यवस्थाभेदेनोपपत्तिशङ्का परिहृता भवति । न तु तत्प्रदर्शनं शब्दविशेषसूत्रेण कर्तुं शक्यम्; उपास्योपासकयोर्द्वयोरपि प्रथमान्तेन निर्दिष्टतया विशेषाश्रवणात् । अतस्तत्सङ्ग्रहाय कर्मकर्तृव्यपदेशसूत्रम् । तत्र व्यपदेशो विशिष्टोऽपदेशः एकावस्थायामपि कर्मकर्तृभावनिर्देशः । चकारो 'न शारीर' इति समनन्तरसूत्रप्रकृतावान्तरसाध्यविषयतयाऽस्य हेतोः 'अनुपपत्तेः' इति तद्धेतुना सह समुच्चयसूचनार्थः ।

यद्यपि 'शब्दविशेषात्' इत्यपि तत्रैव हेतुः, तथाऽपि तस्य 'राहोश्शिरः' 'स्वे महिम्नि' इत्यादिवदुपचारोऽस्त्विति शङ्कानिवर्तनाय स्मृत्यनुग्रहापेक्षत्वादनन्तरसूत्रार्थसाहित्येन तस्य हेतुत्वपर्यवसानमिति तत्रैव चकारः प्रयुक्तः । तत्साहित्ये हि स्मृतावीश्वरशब्दितस्य देहाख्ययन्त्रारूढानां जीवानां भ्रान्तिजनकत्वेन प्रसादाय शरणी-

करणीयत्वेन च जीवभिन्नस्यैव हृदये स्थितिसिद्धौ तस्यैव 'एष म आत्मा' इत्यादौ ग्रहणसम्भवान्नोपचारः कल्पनीय इति तच्छङ्काव्यावर्तनं लभ्यते। १. २. ४, ५, ६.।



अथ ब्रह्मण उपास्यत्वे अल्पायतनत्वाणीयस्त्वलिङ्गविरोधशङ्कामुद्भाव्य निराकरोति--

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ।७।**

इहोपास्यतया निर्दिष्टं ब्रह्म न भवति 'एष म आत्माऽन्तर्हृदयेऽणीयान्' (छा. ७. १४. ३) इति श्रुतादल्पायतनत्वात्। न हि सर्वगतं ब्रह्मान्तर्हृदये शक्नोति मातुं। ननु तत्र मातुमशक्तस्यापि ब्रह्मणस्तद्गतत्वमस्त्येव, अन्यथा तस्य क्वचिदपि सम्बन्धाभावे सर्वगतत्वमेव न स्यात्। ततश्चान्यगतत्वाविरोधेन तद्गतत्वमात्रविषयोऽयं 'अन्तर्हृदय' इति निर्देशोऽस्तु। न च 'अपवरके देवदत्तः' इत्यादावन्यगतत्वविरोधिन्येकत्र पर्यवसितवृत्तित्व एवेत्थं निर्देशो दृष्ट इति वाच्यम्। 'स एवाधस्तात् स उपरिष्टात्' (छा.- ७. २५. १) इत्यादौ तत्तद्वस्तुगतत्वमात्रेऽप्येवं निर्देशदर्शनादिति चेत्; मैवम्। उभयथोपपन्नोऽपि 'अन्तर्हृदये' इति निर्देशोऽग्रिमाणीयस्त्वोपन्यासेन तत्रैव पर्यवसितवृत्तित्वविषय इत्येवावगमात्। नन्निर्धारणार्थतायामेव तस्य सप्रयोजनत्वात्। तथाच 'एष म आत्मा' इति वाक्ये अणीयस्त्वोपपत्त्युपन्यासपूर्वकस्य विधेयस्य हृदयायतने पर्यवसितवृत्तित्वस्यान्तःकरणोपाधिकत्वेनाराग्रमात्रे जीव एव सम्भवात्; तात्पर्यविषयविधेयानुसारेणोद्देश्योपमर्दनस्य 'अप्याग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्य' इत्यादिषु दृष्टत्वाच्च। 'एष म आत्मा' इत्युद्देश्यगतव्यतिरेकनिर्देशो 'राहोश्शिर' इतिवदौपचारिको ग्रहीतव्यः। उदाहृतस्मृतिस्त्वीश्वरस्यान्यगतत्वाविरुद्धसर्वगतत्वमात्रविषया नास्य व्यतिरेकनिर्देशस्याणीयस्त्वोपपत्त्या जीवविषयत्वनिर्णयेन प्राप्तमौपचारिकत्वं निरोद्धुमीष्टे। तथा प्राप्यप्राप्तृभावनिर्देशोऽपि साधकफलावस्थाभेदेन नेतव्यः। उपास्योपासकभावस्त्वेकस्याविरुद्धः; पञ्चाग्निविद्यादिषु स्वात्मनस्स्वोपास्यत्वसम्प्रतिपत्तेः। मनोमयत्वादिकमपि प्राप्स्यमानगुणतया जीव एव नेतव्यम्। वाक्योपक्रमस्तु शमविध्यर्थवादतया नेतव्यः। सर्वनामार्थो बहुव्रीहिरपि प्रक्रंस्यमानपरामर्शितया उपपाद्यः। उपपाद्योपपादकभावेनोपन्यस्तयोरल्पायतनत्वाणीस्त्वयोरनन्यथासिद्धतया तदनुसारेणान्यथा नेतुं शक्यानां बहूनामप्यन्येषां नयनस्योचितत्वादित्येवमिहाशङ्का।

अत्रायं परिहारः—भवेदेवं यदि 'एष म आत्माऽन्तर्हृदये' इत्यनेनान्तर्हृदये पर्यवसितवृत्तित्वमुच्येत, 'अणीयान्' इत्यनेन च तदुपपादनाय प्राक्सिद्धमणीयस्त्वं वर्ण्येत। न त्वेवम्, किन्तु सर्वगतमेव ब्रह्म सूर्यमण्डलस्येव हृदयपुण्डरीकस्यान्तरुपास्यमुपादिश्यते। हृदयपुण्डरीकान्तस्थसुषिरावच्छेदकमेव च

तस्याणीयस्त्वमुपासनार्थमुपदिश्यते । कुतोऽयं निर्णय इति चेत्—समनन्तरमेव ज्यायस्त्वोपदेशात् । ज्यायस्त्वाणीयस्त्वयोर्विरुद्धत्वादेकस्मिन्नन्यानुसारेण नेतव्ये हृदयोपाध्युपादानात् 'सूचीरन्ध्रावच्छिन्नं व्योमाणीयः' इत्यत्रेवाणीयस्त्वमन्योपाधिकमिति वक्तुं युक्तम्, न तु ज्यायस्त्वम् ।

किंचाणीयस्त्वं जीवगतमन्तःकरणावच्छेदोपाधिकतया प्राक्सिद्धं ग्राह्यं, उत समनन्तरोक्तहृदयसुषिरावच्छेदोपाधिकं ब्रह्मगतमेव ग्राह्यमिति संशये 'सर्वं खलु' इत्याद्युपक्रमस्वारस्यात्, सिद्धरूपमनोमयत्वादिस्वारस्यात्, कर्मकर्तृप्राप्यप्राप्तृभावस्वारस्यात् 'एतत् ब्रह्म' इत्यौपसंहारिकब्रह्मशब्दस्वारस्याच्च ब्रह्मगतमेव ग्राह्यमिति हृदयायतनत्वं तत्कृतमणीयस्त्वं चोपासनार्थतया ग्रहीतुं युक्तमिति ।

सूत्रे अर्भकौकस्त्वमल्पायतनत्वम् । 'अर्भकस्थत्वात्' इत्यनुक्त्वा ओकश्शब्दप्रयोगस्तत्र पर्यवसितवृत्तित्वज्ञापनार्थः । यद्यपि वाचकत्वाल्लघुत्वाच्चाल्पपदमेव प्रयोक्तुं युक्तम्, तथापि शङ्कान्तरमपि सूचयितुमर्भकपदम् । तेन हि लक्षणया आयतनाल्पत्वमिव अर्भकयति, स्वावच्छिन्नं चेतनं मूढं करोतीति व्युत्पत्त्या स्वावच्छिन्नचेतनमोहकत्वमपि प्रतिपाद्यते । अर्भकयतीत्यर्थे 'तत्करोति' इति णिचि पचाद्यचि 'णेरनिटि' (पा. सू. ६. ४. ५१) इति णेर्लोपे च सति अर्भकशब्दनिष्पत्तेः । ततश्च यद्येतद्धृदयायतनत्वं ब्रह्मणः स्यात्, तर्हि तस्यापि जीववद्दुःखादिमत्त्वं स्यात् । न हि प्रज्वलितगृहान्तर्गतयोर्द्वयोरेको दह्यते नापर इति दूषणमत्राभिसंहितम् । तत्रैतद्वैषम्यं वाच्यम्—जीवो देहाद्यविवेकोत्थरागद्वेषमूलधर्माधर्मपरवश इति तस्य दुःखादिमत्त्वम्, ईश्वरस्तथाभूतो न भवतीति तस्य दुःखादिरहितत्वञ्चेति । नैतदपि युक्तम् । अविवेकापादकस्य हृदयगुहावच्छेदस्य द्वयोरप्यविशेषे एकस्याविवेको नान्यस्येति नियन्तुमशक्यत्वादित्यभिप्रायान्तरमपि गर्भीकर्तुमर्भकपदम् । तदिदं गूढमभिप्रायान्तरमुत्तरसूत्रेण परिहरिष्यते । 'तद्व्यपदेशाच्च' इति तस्य हृदयायतनत्वस्य विशिष्यापदेशात्, हृदये पर्यवसितवृत्तित्वरूपतया अणीयस्त्वोपन्यासेन विशिष्य प्रतिपादनादित्यर्थः ।

यद्वा तद्व्यपदेशात् अर्भकत्वव्यपदेशादित्यर्थः । व्यपदेशो विशेषेणातिशयेनाणीयस्त्वरूपतयोपन्यासः । परिहारांशे एवं निचाय्यत्वात् एवं द्रष्टव्यत्वात् हृदयायतने अणीयस्त्वादिगुणकतयोपासनीयत्वादित्यर्थः । 'चायृ पूजानिशामनयोः' इति धातुः । 'व्योमवच्च' इति चकारेणोपक्रमस्वारस्यादिकं समुच्चीयते । १. २. ७ ।

अथार्भकपदेन क्रोडीकृतमाशङ्कान्तरमुद्भाव्य परिहरति—

**संभोगप्राप्तिरिति चेन्न वैशेष्यात् । ८ ।**

जीवस्याविवेकादिदोषे कादाचित्को हृदयगुहानुप्रवेशो न प्रयोजकः, किन्त्वविद्यारूपः, अन्तःकरणरूपो वा जीवत्वोपाधिरेव; 'न तं विदाथ य इमं जजानान्यद्युष्माकमन्तरं भवाति' (तै. सं. ४.६) 'ध्यायतीव लेलायतीव' (बृ. ४. ३. ७) इत्यादिश्रुतेः । ततश्च जीवेश्वरयोः हृदयगुहानुप्रवेशे समानेऽपि जीवोऽविद्याऽन्तःकरणरूपोपाधिकृताविवेकनिदानधर्माधर्मपरवशः, ईश्वरस्तु अपहतपाप्मत्वादिगुणक इति विशेषसद्भावादीश्वरस्य दुःखादिमत्त्वं न प्रसज्यते । न हि प्रज्वलितगृहान्तर्गतिसाम्येनान्यवत् अग्निस्तम्भनकुशलो योगसिद्धोऽपि दह्यते, अन्यथेश्वरस्य दुःखादिमज्जीवाभेदमात्रेण दुःखादिभोगप्रसङ्गं किमिति नाशङ्कथाः ? तदाशङ्कायामपि 'वैशेष्यात्' इत्येवोत्तरम् । ईश्वरस्स्वाभिन्नेऽप्यविद्यादिकल्पितभेदे जीवे दुःखादिकमुपाधिसन्निधानवशात् कल्पितमवभासत इत्येतज्जानातीति विशेषादित्यर्थः । न हि लोके स्वमुखाभिन्नेऽपि दर्पणोपाधिवशात् भिन्ने प्रतिमुखे दर्पणोपाधिकं मालिन्यं पश्यन्नपि कल्पितमिति जानन्ननुशोचति । तस्मात् सिद्धमिह ब्रह्मैवोपास्यमिति ।

इदमाधिकरणं स्पष्टजीवलिङ्गमस्पष्टब्रह्मलिङ्गं च । मनोमयत्वप्राणशरीरत्वाल्पायतनत्वाणीयस्त्वानि हि प्रथमपाठादिना बलवन्ति जीवलिङ्गानि स्पष्टानि । न च—मनोमयत्वं मनस्सम्बन्धमात्रं, तच्च ग्राह्यग्राहकतारूपं ब्रह्मण्यपि प्रसिद्धमिति शंक्यम्; विकाराद्यर्थस्य मयटस्सम्बन्धलक्षकत्वकल्पनायोगात् । तस्य सम्बन्धशक्तिकल्पनेऽप्युपकरणोपकरणिभावरूपजीवगतसम्बन्धस्यैव प्रसिद्धतरस्य प्रथमं प्रतीतेः, अन्यथा 'चक्षुष्मान्' इत्यादावपि चक्षुरादिवेद्यघटादिधीप्रसङ्गात् । ननु उदाहृताज्जीवलिङ्गादपि वाक्योपक्रमगतं तज्जत्वादिहेतुकसार्वात्म्यरूपं ब्रह्मश्रुतिसहकृतं स्पष्टतरमिति चेत् । न । विषयवाक्यस्य 'मनोमयः' इत्यादेः पूर्वपक्षे 'सर्वं खलु' इत्यादितो भिन्नवाक्यत्वेन मनोमयादिवाक्ये सर्वात्मकब्रह्मानुवृत्तेरस्पष्टत्वात् । तर्हि 'दिवि' 'दिव' इति विभक्तिभेदेन प्रत्यभिज्ञाविच्छेदकशङ्कया अस्पष्टगायत्रीब्रह्मानुवृत्तिकं ज्योतिर्वाक्यं विषयीकृत्य प्रवृत्तं ज्योतिरधिकरणमत्रैव पादे कर्तव्यं स्यादिति चेत, न । तत्र स्पष्टब्रह्मलिङ्गस्य गायत्रीवाक्यस्यापि निर्णेतव्यत्वेन तस्य प्रथमपादेऽपि सङ्गतिसत्त्वादिति सर्वमनवद्यम् । १. २. ८ ।

इति सर्वत्रप्रसिद्धाधिकरणम् । १ ।



( २ अधिकरणम् )

## अत्ता चराचरग्रहणात् । ९ ।

'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः। मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः' (क. १. २. २४) इति कठवल्लीमन्त्रे ओदनोपसेचनसंसूचितोऽत्ता जीवः, परो वेति अत्तृत्वस्य भोक्तृत्वसंहर्तृत्वरूपतान्यतरानिर्द्धारणात् संशये जीव इति तावत्प्राप्तम्; अत्तृत्वस्यौदनप्रतिसम्बन्धित्वेन भोक्तृत्वरूपत्वात्तस्य च जीव एव सम्भवात् । परस्मिन् भोक्तृत्वस्य पूर्वाधिकरणे निवारणात्, जीवे च स्त्रीभृत्यादिरूपतया ब्रह्मक्षत्रभोक्तृत्वस्यापि सम्भवात् ।

ननु मन्त्रे मुख्य ओदनो न श्रुतः येन तत्प्रतिसम्बन्धी अत्ता भोक्ता स्यात्, किन्तु ब्रह्मक्षत्रयोरोदनत्वरूपकमात्रं कृतम् । न चोपचरितौदनस्यापि प्रतिसम्बन्धिना तद्भोक्त्रा भाव्यम् । न च वाच्यम्—ओदनभोक्तारं प्रत्येवानोदनयोरोदनत्वरूपकमवकल्पते । ततश्च यथा 'यस्य मृगयाविनोदिनो मृगाः परनरपतय' इत्यत्र अमृगेषु मृगत्वरूपके वस्तुतो मृगहन्ता क्षत्रिय एव तत्प्रतिसम्बन्धी प्रतीयते, न तु श्रोत्रियः कश्चित् ब्राह्मणः, एवमत्रापि स्यात्–इति; तथा नियमाभावात् । 'त्वत्कृपाणभुजङ्गस्य क्षीरं विद्विषतां यशः' इत्यत्रोपचरितक्षीरप्रतिसम्बन्धिनि कृपाणे तत्पातृत्वादर्शनादिति चेत् । उच्यते । अवश्यं तावदिहानोदनविषयेणौदनशब्देन वाच्यगतं कश्चित् गुणमपेक्ष्य वर्तितव्यम् । तदिह भोग्यतया प्रसिद्धस्य वाच्यस्य गुणो भोग्यत्वरूपः पर्यवस्यतीति तत्प्रतिसम्बन्धिनो 'यस्य' इति पदोपात्तस्य भोक्तृत्वप्रतीतिरनिवार्या । 'त्वत्कृपाणभुजङ्गस्य' इत्याद्युदाहरणेऽपि कृपाणे समारोपिततत्पातृत्वप्रतीतिरस्त्येव । अत एव तदन्वयसिद्धये कृपाणस्य भुजङ्गत्वरूपणं क्रियते । यत्र तन्न क्रियते 'करवालस्य ते वीर क्षीरं विद्विषतां यशः' इत्यादौ तत्रापि भुजङ्गत्वप्रतीतिरस्तीत्येकदेशविवर्तिरूपकमालङ्कारिकैरिष्यते ।

ननु तथाऽपि कृपाणभुजङ्गगतपातृत्ववदुपचरितौदनप्रतिसम्बन्धिगतभोक्तृत्वमारोपितमेव स्वीकरणीयमिति फलतस्तत्प्रतिसम्बन्धी अभोक्तैव पर्यवस्येदिति चेत् । न। तथा नियमाभावात् । 'यावनालभूनिवासिनां शाल्योदनश्शर्कराऽपूपः' इति रूपके उपचरितापूपप्रतिसम्बन्धिनोऽनुपचरिततद्भोक्तृत्वदर्शनात्, उभयथा दर्शने सति अत्र बाधकाभावेनानारोपितस्यैव भोक्तृत्वस्य स्वीकरणीयत्वात् । एवमौत्सर्गिकत्वमभिप्रेत्यैवामृगेषु मृगत्वरूपणे वस्तुतो मृगहन्ता क्षत्रिय एव प्रतीयत इत्युक्तं कल्पतरौ ।

नन्वोदनशब्दस्य भोग्यत्वलक्षकत्वे भवतु नाम्नैवम् । तेन विनाश्यत्वमेव लक्ष्यताम् । तथा च तत्प्रतिसम्बन्ध्यत्तृत्वं विनाशकत्वरूपं संहर्तृत्वं स्यात् । तत्तु परस्मिन् सम्भवतीति चेत् । उच्यते । गौणत्वं शब्दस्य साधारणगुणमपहायासाधारणगुणेन निर्वाह्यम् । नहि 'अग्निर्माणवकः' इत्यत्राग्निशब्देन पैङ्गल्यादेरिव द्रव्यत्वादेरुपस्थितिरस्ति । अत एव 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातृणां प्र यजमानस्य' इत्यध्वर्युप्रैषे उद्गातृशब्दस्य बहुवचनानुरोधेन रूढिपूर्वकलक्षणया बहुषु वृत्तौ वक्तव्यायां षोडशर्त्विक्साधारणाकारं विहाय विशेषाकारेणोद्गातृगणमात्रलक्षणा पूर्वतन्त्रे निर्णीता । तदिह ब्रह्मक्षत्रयोरोदनत्वस्यात्यन्तविशेषाकारस्य भोज्यत्वस्य च बाधेऽपि भोग्यत्वस्याबाधात्तदेवौदनशब्देन लक्षणीयम् । व्याघ्रादिजीवविशेषं प्रति ब्रह्मक्षत्रिययोर्भोज्यत्वसम्भवात्तदेव वा लक्षणीयमिति सर्वथा तत्प्रतिसम्बन्ध्यत्तृत्वं भोक्तृत्वमेव न संहर्तृत्वम् । एवञ्च भोक्तृतया जीवस्यैव प्रतिपाद्यत्वे तस्य नित्यतया मृत्युवश्यत्वं नास्तीति मृत्योरबाधकत्वाभिप्रायेण तदुपसेचनत्ववर्णनं नेतव्यम् ।

ननु उपसेचनशब्देनापि साधारणमबाधकत्वमात्रं न लक्षणीयम्, किन्तु स्वयमद्यमानत्वे सति अन्यादनहेतुत्वम् । तत्त्वदनं संहार इति परब्रह्मपक्ष एव घटते । तेन मृत्योरपि संहार्यत्वात् भूतवर्गसंहारे मृत्योर्द्वारत्वेनान्यसंहारहेतुत्वाच्च, न त्वदनं भोग इति जीवपक्षे; मृत्योरभोग्यत्वादन्यभोगाहेतुत्वाच्चेति चेत् ; नैष दोषः । प्रथमश्रुतौदनशब्दोपचारनिमित्तस्वारस्यानुरोधेनोपसेचनशब्दे सामान्याकारलक्षकत्वकल्पन-स्यादोषत्वात् । तस्मादत्ता जीव इति । अग्निपूर्वपक्षस्तु भाष्ये सम्भवमात्रेणोपन्यस्तः ।

**सिद्धान्तस्तु** —अत्ता पर एव; कृत्स्नस्य चराचरस्यौदनतया ग्रहणेनात्तृत्वस्य संहर्तृत्वरूप-तावगमात् । न हि कृत्स्नचराचरभोक्तृत्वं कस्यापि जीवस्य सम्भवति । ननु मन्त्रे चराचरग्रहणाभावात् कथञ्चराचरविषयत्वमत्तृत्वस्य ? कथञ्चौदनशब्दलक्षणीयभोग्यप्रातिसम्बन्ध्यत्तृत्वं संहर्तृत्वमिति चेत् ; उच्यते । इह ब्रह्मक्षत्रयोर्मृत्योश्च तावदोदनोपसेचनभावरूपणाद्व्यन्नरीत्या सम्बन्धः प्रतीयते । तथा च मृत्युमिश्रण-प्रतीत्यनुसारेण ब्रह्मक्षत्रशब्दाभ्यां चराचरात्मकं विनाशिवस्तुमात्रं लक्षणीयम् । मृत्यूपसेचनत्वरूपणसन्निधा-नादेवौदनशब्देनापि विनाश्यत्वं लक्षणीयम् । स्वबुध्युपस्थापनीयविशेषाकाररूपगुणग्रहणादप्येकवाक्यतापन्न-पदान्तरार्थोपस्थापितगुणग्रहणस्य बुद्धिलाघवेन एकवाक्यतासामर्थ्येन तस्य च न्याय्यत्वात् । चरमश्रुतेनाप्येक-वाक्यान्तर्गतपदार्थान्तरेणानुपस्थापित एवापेक्षिते तस्य पुरुषबुध्या कल्पनीयत्वात् । अत एव हि 'अक्ताश्शर्करा उपदधाति' इत्यत्र विधेयस्याञ्जनस्य साधनापेक्षायां 'तेजो वै घृतम्' इति वाक्यशेषस्तुतं घृतमेव ग्राह्यम्, न तु पुरुषबुद्धिकल्पनीयं द्रवद्रव्यमात्रमिति पूर्वतन्त्रे निर्णीतम् । एवञ्चोपसेचनत्वरूपणेऽपि स्वयमद्यमानत्वे

सति अन्यादनहेतुत्वगुण एव स्वारस्यावगतो निमित्ततया व्यवतिष्ठते ।

ननु तथापि कथं चराचरग्रहणासिद्धिः ? ओदनशब्दस्य गौणत्वावश्यम्भावेन तस्य समभिव्याहृतपदार्थान्तरोपस्थापितगुणलक्षकत्वेऽपि 'ब्रह्म च क्षत्रञ्च' इत्यस्य मुख्यार्थवृत्तिसम्भवात् । न च मृत्यूपसेचनकीर्तनात्तदुपसिच्यमानं सर्वं तेन ग्राह्यमित्युक्तं युक्तम् । 'शूर्पेण जुहोति तेन ह्यन्नं क्रियते' इत्यत्र शूर्पशब्दस्य वाक्यशेषे अन्नकरणत्वकीर्तनेऽपि यद्यदन्नकरणं तत्र सर्वत्र लक्षणानुपगमात् । 'तत्र शूर्पमात्रस्याप्यन्नकरणत्वेन स्तुतिस्सम्भवति । अन्नकरणत्वस्य शूर्पे दर्वीपिठरादिषु च व्यासज्यवृत्त्यभावात्' इति चेत् । इहापि ब्रह्मक्षत्रमात्रस्यापि मृत्युमिश्रणप्रतिपादनं सम्भवतीति तुल्यम् । व्यर्थञ्च चराचरग्रहणोपपादनम् । ओदनशब्दस्य संहार्यत्वलक्षकतोपपादनमात्रेण तत्प्रतिसम्बन्ध्यत्ता संहर्तेति सिद्धौ शब्दवृत्त्यसङ्कोचप्राप्तसर्वकल्पानुयायिसकलब्रह्मक्षत्रजात्यालिङ्गितव्यक्तिसंहारकत्वालिङ्गेनैवात्तुः परमात्मत्वसिद्धेरिति चेत् ।

उच्यते—अत्तृत्वं भोक्तृत्वं संहर्तृत्वमिति पक्षद्वयेप्योदनपदवत् ब्रह्मक्षत्रपदयोरपि लक्षकत्वमवश्यम्भावि । न हि स्वीभृत्यादिरूपतया, भक्ष्यतया वा ब्रह्मक्षत्रिययोरेव भोक्ता कश्चिज्जीवोऽस्ति, न वा परमेश्वरस्तदुभयमात्रसंहर्ता, नचाधिकभोक्तृत्वेऽप्यधिकसंहर्तृत्वेऽपि विशिष्य तन्मात्रग्रहणे प्रयोजनमस्ति । यद्येतदुपासनाप्रकरणं स्यात्, तदा अन्तरादित्यविद्यायां विशिष्य लोककामविशेषेशितृत्वश्रवणवत् विशिष्य ब्रह्मक्षत्रसंहर्तृत्ववर्णनमुपासनार्थमिति कल्प्येतापि । न त्वेतदुपासनाप्रकरणम् । तथा च यथा 'यस्मिन् पंच पञ्चजनाः' (बृ. ४. ४. १७) इत्यत्र विशिष्य पञ्चानां मनुष्याणामाधार इति कीर्तने प्रयोजनं न किञ्चिदस्तीति तल्लक्षणीयाकाङ्क्षायां वाक्यशेषात् प्राणादयस्तल्लक्षणीया इति निश्चीयन्ते, एवं ब्रह्मक्षत्रग्रहणमितरेषामपि केषाञ्चिदुपलक्षणम्, न स्वार्थमात्रनिष्ठमिति उपलक्षणीयाकाङ्क्षायां पश्चात्तनमृत्यूपसेचनकीर्तनात्तदुपासिच्यमानं सर्वमुपलक्षणीयमिति निश्चीयते । किञ्चौदनशब्दस्योक्तयुक्त्या संहार्यत्वलक्षकतास्थितौ यच्छब्दयोगेनानुवादकेऽस्मिन्मन्त्रे संहार्यसमर्पकस्य 'ब्रह्म च क्षत्रं च' इत्यस्य 'सन्मूलास्सोम्येमास्सर्वाः प्रजास्सदायतनास्सत्प्रतिष्ठाः' ( छा. ६.८.४ ) इत्यादिपुरोवादानुसारेण चराचरात्मकाविनाशिमात्रोपलक्षकत्वमावश्यकम् । न चैतदुपपादनं व्यर्थम्; जन्मादिसूत्रोक्तलक्षणान्तर्गतसकलजगत्संहर्तृत्वाधिकरणजगत्कारणमायाशबलोपलक्षिते शुद्धब्रह्मणि कठवल्ल्यास्समन्वयस्य स्पष्टीकरणार्थत्वात् । उक्तरूपे ब्रह्मणि वेदान्तानां समन्वयस्य समन्वयसूत्रे सामान्यतः प्रदर्शितस्य विशिष्य तत्तद्वाक्योदाहरणमुखेन प्रसाधनमेव ह्यध्यायशेषस्य मुख्यं प्रयोजनमित्यानन्दमयाधिकरणोपक्रमे वर्णितम् । तत्र यदि सकलब्रह्मक्षत्रसंहर्तृत्वमात्रमिह गृह्यते, तदा तस्य ब्रह्मणोऽन्यत्रासम्भवेन ब्रह्मलिङ्गत्वेऽपि ब्रह्मण एव व्यष्टिसंहारकः तमोगुणोपाधिको रूपविशेष इह अत्ता; 'क इत्था वेद यत्र सः' इति तु तस्य

प्रतिष्ठारूपस्सकलप्रपञ्चसृष्टिस्थितिसंहारकारी मायाशबलितः परमेश्वर उच्यते इति शङ्कया तस्य शुद्धब्रह्मणि समन्वयः प्रदिदर्शयिषितः स्पष्टीकृतो न स्यात् । अत एव सूत्रकृताऽपि 'सर्वग्रहणात्' इति लघुनि सूत्रे कर्तव्ये वाच्यार्थयोर्ब्रह्मक्षत्रयोस्सामस्त्यमात्रं सर्वशब्देनोच्यत इति शङ्कया जगत्कारणोपलक्षितशुद्धब्रह्मसमन्वयः प्रदिदर्शयिषितः स्पष्टीकृतो न स्यादिति ब्रह्मक्षत्रपदयोर्न्यायप्राप्तचराचरोपलक्षकत्वसूचनेन तस्य स्पष्टीकरणाय 'चराचरग्रहणात्' इति सूत्रं कृतम् । अत एव इदमधिकरणमप्यर्थवत्; जगत्कारणस्य सगुणब्रह्मणोऽपि प्रतिष्ठारूपे शुद्धब्रह्मणि समन्वयप्रदर्शनार्थत्वात् । अन्यथाह्यत्रात्तुर्जीवत्वेऽपि 'यत्र स' इति तत्प्रतिष्ठात्वेन वर्ण्यमानं प्रकृतं ब्रह्म भवेदेवेति तस्य परमेश्वरत्वप्रसाधनं व्यर्थमेव स्यात् । तस्मात् समृत्युकस्य कृत्स्नस्य चराचरस्य संहार्यत्वप्रतिपादनात्तत्संहर्तृरूपो 'यत्र स' इति शुद्धे प्रतिष्ठितत्वेन वर्ण्यमानोऽत्ता परमेश्वर इति निरवद्यम् । १.२.९ ।

स्यादेतत्—'न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् । अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे' (क. १. २. १८) 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् । उभौ तौ न विजानीतो नायं हन्ति न हन्यते' (क. १. २. १९) इत्यादि प्रकरणं तावदिह जीवविषयमभ्युपगन्तव्यम्, तत्र प्रदर्शितानां जननमरणयोर्देहहनने हन्यमानत्वस्य हन्तृत्वस्य, हन्तव्यत्वस्य च निषेधानां लोकतो विधिनिषेधविशेषतश्च तत्प्रसक्तिमति जीव एवार्थवत्त्वात्, हन्तृहन्तव्यभावभ्रान्तेश्चात्रैव संभवात् । न चोदाहृतमन्त्रद्वयस्य जीवपरत्वेऽपि तदनन्तरं 'अणोरणीयान्' (क. १. २. ८) इति मन्त्रे 'अस्य जन्तोः' इत्यनेन तं परामृश्य तदीयहृदयगुहाहितत्वेन प्रतिपाद्यमानः परमात्मेति प्रकरणं परमात्मप्रधानमेवेति शंक्यम् । 'न जायते' (क. १. २. १८) इत्युपन्यस्तस्य जायमानार्थकजन्तुशब्देन परामर्शस्यानुपपन्नतया तत्र 'अस्य जन्तोः' इत्यस्य प्रत्यक्षादिसन्निधापितदेहपरताया वक्तव्यत्वेन तद्गुहाहित आत्मा प्रागुपन्यस्तो जीव इत्येव लाभात् । न च जीवस्य सदा 'अहम्' इति भासमानत्वात् 'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' (क. १. २. २१) इत्यादिना प्रपञ्चितं दुर्विज्ञानत्वमयुक्तमिति वाच्यम्; अन्तःकरणविशिष्टरूपेण तस्य भासमानत्वेऽपि तन्निष्कृष्टरूपेण दुर्विज्ञानत्वोपपत्तेः । एवञ्चात्तुः प्रतिष्ठात्वेन वर्ण्यमानोऽपि जीव एव । तत्रैव 'क इत्थावेद' इति दुर्विज्ञानत्वलिंगप्रत्यभिज्ञानात् । अतो नात्ता संहारकः परमात्मा; तस्य जीवे प्रतिष्ठितत्वायोगात्, किन्तु अविद्याप्रतिबिंबरूपे जीवे प्रतिष्ठितं तस्यैवान्तःकरणतादात्म्यापत्त्या भोक्तृत्वकलुषितं रूपमित्याशंक्याह—

**प्रकरणाच्च । १० ।**

प्रकरणं तावदिदं परमात्मन एव 'अन्यत्र धर्मात्' (क. १. २. १४)इत्यादितत्प्रश्नोत्तररूपत्वात्,

'न जायते' इति मन्त्रगतविपश्चिच्छब्दोक्तविविधदर्शित्वरूपसर्वज्ञत्वालिंगात्, 'तमक्रतुः पश्यति वीतशोकः' 'महान्तं विभुमात्मानं मत्वा धीरो न शोचति' 'इति तदनन्तराम्नातशोकतरणहेतुसाक्षात्कारविषयत्वापारिच्छिन्नत्वलिङ्गाच्च। तत्र च स्वरूपेणाप्रसक्तानामपि जननमरणहन्तृत्वहन्तव्यत्वानां जीवात्मना प्रसक्तानां निषेधः, स्वरूपेण विपश्चित्त्वादिगुणकोऽयं जीवात्मनाऽपि न जननमरणहन्तृत्वहन्तव्यत्वभाक् हन्तृत्वाद्यभिमानी परमिति। न हि 'अन्यत्र धर्मात्' इति जीवस्पृगेव ब्रह्मविषयः प्रश्नः; 'येयं प्रेते' इति प्रकृतजीवविषयप्रश्नस्यैव 'अन्यत्र धर्मात्' इत्यनेन जीवस्यासंसारिब्रह्मस्वरूपत्वपर्यन्तं नयनात्। इदं चानुमानिकाधिकरणे (१. ४. १) स्फुटीभविष्यतीति। तत्र प्रथमप्रश्नक्रोडीकृतस्य देहातिरिक्तजीवास्तित्वस्य प्रदर्शनाय तदसंसारिरूपात्मकब्रह्मप्रश्नोत्तरप्रकरण एव जीवात्मनाऽपि तस्य देहादिगतजननमरणादिस्पार्शित्वं नास्तीति प्रथममुक्त्वा तदनन्तरं द्वितीयप्रश्नक्रोडीकृतमसंसारिब्रह्मरूपं 'अणोरणीयान्' इत्यादिना प्रपञ्च्यत इति न काचिदसङ्गतिः। एवञ्च परमात्मप्रकरणात्, 'क इत्था वेद' इति प्रकरणात्वगतदुर्विज्ञानत्वलिङ्गप्रत्यभिज्ञानाच्च 'यत्र' इति परामृष्टः शुद्ध इति तत्र प्रतिष्ठितत्वेन वर्ण्यमानोऽत्ता जगत्संहर्ता परमेश्वर इत्यत्र न किञ्चित् बाधकमिति।

एवमस्मिन् सूत्रे दर्शितं प्रकरणं चकारसमुचितं लिङ्गं च बाधकशङ्कानिरासद्वारा अत्तुः परमेश्वरत्वसाधकं न साक्षात्तत्र साधकान्तरम्; तयोस्तत्प्रतिष्ठान्वयिनोस्तदनन्वयित्वात्। अत एव प्रकरणस्य जीवपरत्वशङ्कानिरासार्थत्वमस्य सूत्रस्य दर्शयितुमेव भाष्ये "प्रकरणमिदं परमात्मनः 'न जायते म्रियते वा विपश्चित्' इत्यादि" इति जीवपरत्वशङ्कास्पदं मन्त्रमुपादायैव प्रकरणमुदाहृतम्, अन्यथा तच्छङ्कानास्पदं 'महान्तं विभुमात्मानम्' इत्यादिकमुपादायैव तदुदाहरिष्यत। स्पष्टजीवलिङ्गमिदमधिकरणम्; भोग्यतया प्रसिद्धौदनसम्बन्धेनात्तुर्भोक्तृतायाः प्रथमं प्रतीतेः। अस्पष्टब्रह्मलिङ्गम्; प्रथमप्रतीतभोग्यत्वलक्षणापवादेन विनश्यत्वलक्षणां व्युत्पाद्य ब्रह्मलिङ्गस्योन्मेषणीयत्वात्। १. २. १०।

इति अत्त्रधिकरणम्। २।



(३ अधिकरणम्)

## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ।११।

'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' (क.१.३.१) इति पूर्वाधिकरणोदाहृतमन्त्रानन्तरमन्त्रनिर्दिष्टौ बुद्धिजीवौ, जीवपरौ वेति संशयः। बुद्धिजीवौ चेत् 'येयं प्रेते विचिकित्सा मनुष्ये' (क. १. १.२०) इति प्रश्नोत्तरतया कार्यकरण-विलक्षणो जीव इह प्रतिपादितो भवति। जीवपरौ चेत् 'अन्यत्र धर्मादन्यत्राधर्मात् (क.१.२.१४) इति प्रश्नोत्तरतया संसारिस्वरूपविविक्तमसंसारिपरमात्मकस्वरूपं प्रतिपादितं भवतीति फलभेदः। तत्र सुकृत-साध्यलोकवर्तित्वगुहाप्रवेशच्छायातपशब्दलक्षितजडचेतनत्वलिङ्गैर्बुद्धिजीवाविति प्राप्तम्। यद्यपि कर्मफलभो-क्तृत्वरूपमृतपानं जीव इव बुद्धौ न सम्भवति, तथाऽपि तत् परमात्मन्यपि न सम्भवतीति सर्वथा 'ऋतं पिबन्तौ' इत्यत्र ऋतपानलिङ्गोपस्थापितस्य जीवस्य द्वितीये लक्षणयैव ग्राह्ये लक्षणीयविशेषाकाङ्क्षायां पूर्वा-धिकरणन्यायादनन्तरश्रुतलिङ्गानुसारेण बुद्धिर्लक्षणीयेति युक्तम्।

ननु संख्याश्रवणे सति एकस्मिन् संप्रतिपन्ने द्वितीयाकाङ्क्षायां संप्रतिपन्नजातिमुपजीव्य विशेष-परिग्रहे बुद्धिलाघवाद्विजातीयपरिग्रहे जातिव्यक्तिबुद्धिद्वयापेक्षागौरवात् संप्रतिपन्नसजातीयपरिग्रहो युक्तः। लोकेऽपि 'अस्य गोर्द्वितीयोऽन्वेष्टव्य' इत्यादिषु तथा दर्शनादिति ऋतपानलिङ्गावगतस्य जीवस्य द्वितीयश्चेतन-त्वेन तत्सजातीयः परमात्मैव ग्राह्यः। न च परतन्त्रत्वादिधर्मान्तरेण तस्य बुद्धिरपि सजातीयेति वाच्यम्। तत्र स्वाभाविकधर्मस्य चेतनत्वस्यान्तरङ्गत्वात्, सुखानुभवितृपरपिबच्छब्दसंसृष्टत्वाच्च। न च मुख्यद्वित्वलाभार्थं विजातीयाऽपि धर्मिसमसत्ताकभेदवती बुद्धिरेव द्वितीया ग्राह्येति वाच्यम्। मुख्यस्य व्यावहारिकद्वित्वस्य तत्सम-सत्ताकेन व्यावहारिकभेदेनोपपादनसम्भवे धर्मिसमसत्ताकभेदानपेक्षणात्, बुद्धौ तत्सम्भवेऽपि जीवे तदसम्भवेन तस्य बुद्धिजीवगतद्वित्वोपपादकत्वशङ्कानवकाशाच्चेति चेत्। मैवम्। सुकृतलोकवर्तित्वाद्यग्रिमलिङ्गविरोधिना लौकिकन्यायमात्रेण द्वितीयपरिग्रहायोगात्।

नन्वग्रे विरोधिलिङ्गानि न सन्त्येव। सुकृतसाध्यलोकवर्तित्वं हि नैकान्ततः प्रतीयते; सुकृतस्य ऋतं अव-श्यम्भावि फलं पिबन्ताविति पूर्वत्राप्यन्वयसम्भवात्। लोकशब्दस्य लोक्यत इति व्युत्पत्त्या देहपरत्वोपपत्तेः। सुकृतस्य लोक इत्यन्वयेऽपि न दोषः। सर्वगतस्य ब्रह्मणो देहवर्तित्ववत् सुकृतलोकवर्तित्वस्याप्युपपन्नत्वात्, 'अनुत्तमे-

बृत्तमेनु लोकेषु' इति ब्रह्मणस्सुकृतप्राप्यलोकवर्तित्वश्रवणाच्च । छायातपावित्यत्र जडचेतनत्वमपि न प्रतीयते; न्यायनः परमात्मा द्वितीय इति निर्णयानुसारेण तस्य संसार्यसंसारित्वलक्षकत्वोपपत्तेः । न हि तस्य जडचेतनत्वलक्षणायां पक्षपातहेतुरस्ति । गुहाप्रवेशस्तु जीवपरावित्यत्र साधक एव, न तु बाधकः । अस्मिन् प्रकरणे 'या प्राणेन सम्भवत्यदितिर्देवतामयी । गुहां प्रविश्य तिष्ठन्ती या भूतेभिर्व्यजायत' (क. २.४.७) 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम् । अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' । (क. १.२. १२) इत्यादिमन्त्रेषु जीवपरयोरेव गुहाप्रवेशदर्शनात् ।

उच्यते—अस्तु नामैवं सुकृतलोकवर्तित्वच्छायातपत्वश्रवणयोर्ब्रह्मणि कथञ्चिदुपपादनम् । गुहाप्रवेशश्रवणस्य तु तत्रोपपादनं न सम्भवत्येव; सर्वगतस्य तस्य गुहावृत्तित्वेऽपि तत्प्रवेशासम्भवात् । 'अग्रिममन्त्रेषु ब्रह्मणस्तत्प्रवेशश्श्रूयते' इति चेत् । अत्यल्पमिदमुच्यते । 'तत् सृष्ट्वा तदेवानुप्राविशत्' (तै. २. ६. १) 'अन्तःप्रविष्टश्शास्ता जनानाम्' इत्यादिश्रुतिषु तस्य सर्वत्रापि प्रवेशश्श्रूयत एव, स सर्वोऽपि जीवभावाभिप्रायेण नेतव्यः । श्रुतो हि तस्य जीवभावेनानुप्रवेशो 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' (छा.६.३.२) इति । 'इहापि तथैवास्तु' इति चेत् । न । इह 'गुहां प्रविष्टौ' इति जीववत् तद्द्वितीयस्यापि पृथक् प्रवेशश्रवणात्, जीवभावेनानुप्रवेशमात्रमभिप्रेत्य उभयोः प्रवेशवर्णनस्यानुपपन्नत्वात् । न हि जीवभावेन संसारित्वमभिप्रेत्य 'ब्रह्मैव संसारि' इति निर्देशवत् 'जीवब्रह्मणी संसरतः' इत्यपि निर्देशस्सङ्गच्छते । तस्मात् गुहाप्रवेशलिङ्गविरोधान्न ब्रह्म जीवद्वितीयतया ग्राह्यम्, किंत्वन्तःकरणमेवेति जीव एवास्मिन्मन्त्रेऽन्तःकरणविविक्ततया प्रतिपाद्यः । न च पूर्वाधिकरणेनात्तृमन्त्रस्य परमात्मप्रधानत्वनिर्णयात्तदनन्तरपठितस्यापि मन्त्रस्य प्रकरणेन तत्प्रधानत्वं युक्तम्, न जीवप्रधानत्वमिति शंक्यम्; तस्य लिङ्गप्रत्यभिज्ञानुगृहीतप्रकरणबलेन परमात्मपरत्वेऽप्यत्र केवलप्रकरणस्य लिङ्गेन बाधोपपत्तेः । न चात्रापि 'ब्रह्मविदो वदन्ति' इति ब्रह्मविद्वचनाविषयत्वलिङ्गानुग्रहः प्रकरणस्यास्तीति शङ्कनीयम्; 'पञ्चाग्नयो ये च त्रिणाचिकेताः' इत्यपि श्रवणात् । न हि पञ्चाग्नयो नाचिकेताग्निचितश्च कर्मठास्संसारिजीवविविक्तमसंसार्यात्मकब्रह्मरूपं वदन्ति; तदवगमस्य कर्मानुष्ठानविरोधित्वात्, किन्तु देहान्तरभोग्यफलानि कर्माण्यनुष्ठातुं स्थूलसूक्ष्मदेहविविक्तं जीवस्वरूपं शास्त्रादवगम्य वदन्ति । अतस्तदनुसारेणैव 'ब्रह्मविदो वदन्ति' इत्येतदपि नेतव्यम् । ब्रह्मविदोऽपि हि जीवस्य ब्रह्मैक्यबोधनाय देहद्वयविविक्तं वदन्ति । तस्मात् बुद्धिजीवावेव मन्त्रेण निर्दिष्टाविति ।

एवं प्राप्तेऽभिधीयते—सन्ति तावदुपरितनेषु मन्त्रेषु ब्रह्मणो गुहाप्रवेशश्रवणानि । न च तानि जीवभावाभिप्रायेण नेतव्यानि; जीवस्यापि ब्रह्माभिन्नस्य स्वतोऽपरिच्छिन्नत्वेन तत्रापि प्रवेशानुपपत्तेस्तुल्यत्वात् ।

ननु जीवस्योपाध्यन्तःकरणान्तर्गत इति तदुपाधिकस्तस्य प्रवेशस्सम्भवतीति चेत्—तर्हि परोऽपि स्वनियम्यान्तःकरणान्तर्गत इति तस्यापि तदुपाधिकप्रवेशसम्भवाद्व्यर्थं जीवद्वाराश्रयणम्। तस्मादग्रे ब्रह्मणो भूयसा गुहाप्रवेशवर्णनदर्शनादिहापि तथैवोपपद्यत इति तस्याबाधकत्वादृतपानालिङ्गावगतस्य द्वितीयस्त-त्सजातीयः पर एव ग्राह्यः। 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः' इत्यादिषु सजातीयग्रहणदर्शनादिति जीवपरावेव मन्त्रनिर्दिष्टौ। तत्रैव च सर्वाणि विशेषणानि समञ्जसानि।

तथाहि—'ऋतं पिबन्तौ' इति तावद्विनैव लक्षणां जीवपरयोस्सङ्गच्छते; ऋतपाने साक्षात्कर्तरि जीव इवान्तर्यामितया तत्र हेतुकर्तरि परमात्मन्यपि शतुः कर्तृत्वसामान्यवाचकस्य मुख्यवृत्तिसत्त्वात्। बुद्धिजीवयोस्तु लक्षणां विना न सङ्गच्छते; बुद्ध्यंशे ऋतपानकरणे तत्कर्तृत्वाभावात्। एवं जीवस्य ऋतपाने नियामकत्वेनोक्तस्य परस्य नियम्यनेदिष्ठत्वनिर्वाहाय सुकृतलोकवर्तित्वगुहाप्रवेशवर्णनमपि सङ्गच्छते। प्रत्युत बुद्धिजीवौ गुहां प्रविष्टाविति पक्ष एव स्वतः प्रवेशवत्या बुद्ध्या सह तदुपाधिकप्रवेशस्य जीवस्य प्रवेशवर्णनं न सङ्गच्छते। न ह्युपष्टम्भकोपाधिकगुरुत्वशालिनि सुवर्णे 'गुरु सुवर्णम्' इति व्यवहारवत् 'उपष्टम्भकसुवर्णे गुरुणी' इत्यपि व्यवहारस्सङ्गच्छते। छायातपत्वनिर्देशोऽपि जीवपरयोरेव श्लिष्यते। समाने चेतनत्वे कथमृतपानादिषु जीवस्य पारतन्त्र्यं परस्य स्वातन्त्र्यं चेति शङ्कानिवर्तनाय तयोरज्ञानतमोऽभिभवतदभाव-रूपविशेषप्रदर्शनार्थत्वात्। 'ब्रह्मविदः' इति तु श्लिष्यत एव। एवञ्च 'पञ्चाग्नयः' इत्यादि तेषामेव विशेषणम्। ये प्राक् पञ्चाग्निशुश्रूषया ये वा नाचिकेतादिचयनैरन्तःकरणशुद्धिं प्राप्तास्तथाभूता एव पश्चाल्लब्धब्रह्मविद्याः इत्थं वदन्तीत्यर्थः।

सूत्रे गुहां प्रविष्टौ जीवपराविति साध्यमध्याहार्यम्। तत्र हेतुः 'आत्मानौ हि' इति। यस्मादृतपानेन लिंगेन एकस्य चेतनत्वनिश्चयात्तस्य द्वितीयोऽपि चेतन इत्येवमुभावपि चेतनावित्यर्थः। 'तद्दर्शनात्' इति हेतूपपादको हेतुः। 'अस्य गोः' इत्यादिषु द्वितीयस्य गृहीतसाजात्यनियमदर्शनादित्यर्थः। 'तद्दर्शनात्' इत्यस्य परमात्मनो गुहाप्रवेशदर्शनादिति व्याख्यानान्तरमपि प्राक्प्रदर्शितया रीत्या बाधको-द्धारप्रयोजनकं भाष्ये दर्शितम्। तत्र तच्छब्देन गुहाप्रवेशपरामर्शसिद्धये, गुहाप्रवेश एव परस्य यत्नसाध्य इति सूचनाय च सूत्रे 'गुहां प्रविष्टौ' इति धर्मिनिर्देशः कृतः, अन्यथा प्राथम्यात् 'ऋतं पिबन्तौ' इत्येव स कार्यस्स्यात्। न चैवमपि तच्छब्दस्य साजात्यनियमदर्शनादिति पूर्वव्याख्याने प्रकृतपरामर्शित्वसिद्धि-र्नास्तीति शंक्यम्। गुहाप्रवेशपरामर्शिनस्तच्छब्दस्य साजात्यनियमपरशब्दस्य च 'त्यदादीनि सर्वैर्नित्यम्'

(पा. सू. १. २. ७२) इत्येकशेषकल्पनोपपत्तेः। न च गुहाप्रवेशस्यापि निष्ठार्थोपसर्जनस्य सर्वनाम्ना परामर्शो न युज्यत इति वाच्यम्। 'सर्वनाम्नाऽनुसन्धिः वृत्तिच्छन्नस्य' (वा. सू. ५. १. ११) इति वामनसूत्रे कृत्तद्धितादिवृत्तिन्यग्भूतस्यापि सर्वनाम्ना परामर्शस्याङ्गीकृतत्वात्। १. २. ११।

स्यादेतत्—यद्यपि जीवपरयोर्गुहाप्रवेशवर्णनमुपपद्यते, यद्यपि च बुद्धिजीवयोरेव तत् क्लिष्टम्, तथाऽपि तयोरेवेह गुहाप्रवेशवर्णनमित्याकाङ्क्षानुरोधेनाङ्गीकर्तुं युक्तम्। तथाहि—'आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च' (क. १. ३. ३) इत्याद्युपरितनमन्त्रवाक्यैर्जीवशरीरबुद्ध्यादीनां रथिरथसारथ्यादिभावं कल्पयित्वा अन्ते 'सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क. १. ३. ९) इत्यनेन रथसारथ्यादिमज्जीवप्राप्यमध्वनस्सर्वस्यापि पारभूतं परं ब्रह्मेति वर्णितम्। तत्र रथिसारथिरूपेण कल्पितयोर्जीवबुद्ध्योरेव शरीराख्यरथप्रवेशोऽपेक्ष्यते, न तु प्राप्तृप्राप्ययोर्जीवपरयोः; प्राप्यस्य रथ एव स्थितत्वे तत्प्राप्त्यर्थं रथसारथिहयप्रग्रहाद्यनपेक्षणात्। तस्माद्रथिसारथ्योरपेक्षितस्य रथस्थत्वस्य सिध्यर्थं रथिसारथिरूपयोर्जीवबुद्ध्योरेव शरीररथप्रवेशविशेषरूपगुहाप्रवेशवर्णनमित्याशंक्याह—

## विशेषणाच्च। १२।

'सोऽध्वनः पारमाप्नोति' (क. १. ३. ९) इति प्राप्तव्यत्वेनोक्तस्य परस्योपरि 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' (क. २. ६. १४) इत्यत्रैव प्राप्यत्वेन विशेषणात्। प्राप्यस्य प्राप्तृसन्निकर्षापेक्षायामपेक्षाऽनुसारेण जीवपरयोरेवेदं गुहाप्रवेशवर्णनमिति युज्यते। तथाच सति नित्यप्राप्तस्य का नाम साधनीया प्राप्तिरित्याशङ्कायां प्राप्तेरज्ञाननिबन्धनाप्राप्तिभ्रमनिवृत्तिरूपतयोपपादयितुं 'छायातपौ' इत्यपि सङ्गच्छते। बुद्धिजीवयोश्शरीरान्तरवस्थितेः प्रसिद्धत्वात्तयोर्गुहाप्रवेशवर्णनं निष्प्रयोजनम्। तस्मादाशङ्कितबाधकाभावान्मन्त्रनिर्दिष्टौ जीवपराविति युक्तमेव।

अपि च देवदत्तयज्ञदत्तयोर्भूयस्सहभावमनुभूतवतः 'खलतिरन्यश्च कश्चिद् द्वौ गृहं प्रविष्टौ' इति वाक्यश्रवणानन्तरं खलतित्वेन लिङ्गेन तयोरेको देवदत्त इति निश्चये सति द्वितीयस्तद्भूयस्सहचरितो यज्ञदत्त इत्येव निर्णयो जायते। तथेहापि पूर्वापरमन्त्रेषु मन्तृमन्तव्यत्वेन, प्राप्तृप्राप्यत्वेन च जीवपरयोर्बहुधा विशेषितत्वात् तेषु तयोर्भूयस्सम्बन्धमनुभूतवतोऽस्मिन्मन्त्रे ऋतपानलिङ्गावगतजीवद्वितीयः पर इत्येव निर्णयो भवितुमर्हति। तस्मादस्मिन्मन्त्रे निर्दिष्टौ जीवपरावेव।

सूत्रे 'विशेषणात्' इत्यस्य जीवपरयोर्बहुशः परस्परसम्बन्धित्वेन विशेषणादिति द्वितीयार्थ एव भाष्ये कण्ठत उक्तः। प्राप्यस्य 'अत्रैव' इति विशेषितत्वादिति प्रथमार्थस्तु 'सोऽध्वनः पारमाप्नोति' इति मन्त्रोदाहरणेनैवोन्नेतव्य इति कण्ठतो नोक्तः। चकारः प्रकरणस्य 'ब्रह्मविदो वदन्ति' इति वक्तृविशेषोपादानस्य च समुच्चयार्थः। १. २. १२।

इति गुहाऽधिकरणम्। ३।



( ४ अधिकरणम् )

## अन्तर उपपत्तेः। १३।

छान्दोग्ये श्रूयते 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतत् ब्रह्मेति। तद्यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति' (छा. ४. १५. १) इत्यादि। किमयमक्ष्याधारश्छायापुरुषः, परमात्मा वेति संशये च्छायापुरुष इति **पूर्वः पक्षः**; 'एष' इति प्रसिद्धवन्निर्देशात्, 'दृश्यते' इत्यपरोक्षत्वाभिधानाच्च। न च यथा अन्तरादित्यवाक्ये अन्तरक्षिवाक्ये च तदुभयसत्वेऽपि परमात्मा प्रतिपाद्यः, तथेहापि स्यादिति वाच्यम्। न हि तत्र छायापुरुष इति पूर्वः पक्षः। आदित्ये प्रतिबिम्बादर्शनेनान्तरादित्यवाक्ये तथा पूर्वपक्षासम्भवात्। अन्तरक्षिवाक्येऽपि तत्सरूपे 'तदधिदैवतमिदमध्यात्मम्' इत्येतावता ततो भिन्ने तदसम्भवाच्च, किन्तु तत्र देवताविशेष इति पूर्वपक्षः। तत्र च परमात्मनीव न लौकिकी प्रसिद्धिः। नाप्यपरोक्षत्वमिति युक्तस्तत्र परमात्मेति निर्णयः। इह त्वक्षिवाक्ये छायापुरुष इत्येव पूर्वपक्षः। भाष्ये तु संभवमात्रेणात्त्रधिकरणे अग्निपूर्वपक्षवदिह जीवदेवतापूर्वपक्षयोरुपन्यासः। अतो युक्तं तदुभयालंबनेन प्रत्यवस्थानम्। तथाप्यमृतत्वाभयत्वादिपरमात्मलिंगैस्तदुभयबाधस्स्यात् इति चेत्। न। पूर्वाधिकरणन्यायात् प्रथमावगतानुसारेण तेषामेवान्यथानेयत्वात्।

नन्वन्तरादित्यवाक्ये सर्वपापोदयलिंगवदिह 'एतं संयद्वाम इत्याचक्षते। एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येवैनं वामान्यभिसंयन्ति य एवं वेद' ( छा. ४. १५. २ ) इत्यादिना प्रदर्शितानि संयद्वामत्वादिब्रह्मलिंगानि चरमश्रुतान्यपि प्रयोजनवत्वात् बलवन्ति। तथा गायत्रीवाक्ये भूतादिपादव्यपदेश-

प्रभृतिवदात्मब्रह्मश्रुत्यमृतत्वाभयत्वसंयद्वामत्ववामनीत्वलिंगानि बाहुल्यादपि बलवन्ति । अतस्तैरेव प्रथमावगतयोरपि प्रसिद्धिदृश्यत्वलिंगयोरन्यथानयनं युक्तमिति चेत् । सत्यम् । स्यादेव एवं यद्यात्मश्रुत्यादयस्स्वार्थनिष्ठास्स्युः, न चेह तथा । आत्मब्रह्मश्रुत्योस्संयद्वामत्वगुणश्रवणस्य चेतिशब्दशिरस्कत्वेन 'मनो ब्रह्म' इत्यादिवदतस्मिंस्तद्रूपप्रत्ययपरत्वावगमात् , तदनुरोधेनामृतत्वादिश्रवणानामपि तन्मात्रपरत्वनिर्णयात् । नन्वेवमेषां प्रत्ययमात्रपरत्वेऽपि संयद्वामत्वाद्यनुरूपफलश्रवणानि न तथाऽभ्युपेयानि । रात्रिसत्रन्यायेनोपासनायामार्थवादिकफलान्वयावश्यंभावात् । तानि कथं छायात्मोपासनायां स्युरिति चेत् । वचनबलाद्वैवाहिकवरवधूदर्शनेनाभ्युदयवदिति ब्रूमः ।

एतेन—पुष्करपलाशवाक्यावगतफलस्य 'अर्चिषमभिसंभवन्ति' (छा. ४. १५. ५) इत्यादिवाक्यावगतफलस्य चानुपपत्तिरपि निरस्ता । न चाब्रह्मविदामर्चिरादिमार्गो नास्तीति नियमः । अब्रह्मविदामेव पञ्चाग्निविद्योपासकानां सिद्धान्तेऽपि 'तद्य इत्थं विदुः' इति वचनबलेन तदभ्युपगमात् । ननु तथाऽप्युपक्रम एव चेतनाभिधायिपुरुषशब्दश्रवणाच्छायात्मेति न युक्तमिति चेत् । न । ततोऽपि प्रथमश्रुतेन हि 'य एष' इति प्रसिद्धिलिङ्गेन तस्यापि बाधात् । एकस्मिन्नपि 'चतुरो मुष्टीन्निर्वपति' इति वाक्ये प्रथमश्रुतसंख्याऽनुरोधेन सप्तदशशरावे मुष्टिबाधाङ्गीकारात् ।

ननु 'य एष' इत्येतदपि 'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' इति ब्रह्मप्रकरणानुसारेण ज्योतिर्वाक्यगतयत्पदवत् ब्रह्मपरं स्यादिति चेत् । न । तस्य 'मनो ब्रह्म' इत्यादिसारूप्येण ब्रह्मदृष्टिविधिपरतया ब्रह्मप्रकरणासिद्धेः । तत्सत्वेपि 'प्राणो ब्रह्म' इत्याद्यग्निवाक्यम्, 'य एषोऽक्षिणि' इत्याचार्यवाक्यमिति वक्तृभेदेन 'अथ हैनं गार्हपत्योऽनुशशास' (छा. ४. ११. १) इत्यादिवाक्यप्रतिपादिताग्निविद्याव्यवधानेन च तद्विच्छेदात् । न च 'आचार्यस्तु ते गतिं वक्ता' (छा. ४. १४. १) इति गत्यभिधानपरिशेषश्रवणादग्निवक्तृकं ब्रह्मप्रकरणं वक्तृभेदेऽपि व्यवधानेऽपि न विच्छिन्नमिति वाच्यम् । तावता अर्चिरादिगत्यभिधानस्य तत्राप्यन्वयलाभेऽपि स्थानगुणयोराचार्यवक्तव्यत्वेनापरिशेषिततया 'य एषोऽक्षिणि' इत्यादेः प्रकृते ब्रह्मण्यक्षिस्थानसंयद्वामत्वादिगुणविधायकत्वेनान्वयालाभात् । तस्मादक्ष्याधारः छायापुरुष इति ।

**राद्धान्तस्तु**—इतिशब्दस्तत्रैवार्थविवक्षां वारयति यत्र प्रत्ययो विवक्ष्यते । यत्र तु उक्तार्थावच्छेदेन वचनसंबन्धस्तत्र स न तां वारयति । यथा 'इति ह स्म उपाध्यायः कथयति' इति, इह पुनः 'इति होवाच' इति वचनसंबन्धस्स्पष्टः । 'एतत् ब्रह्म' इत्यत्रापि प्रकृत एव वचनसंबन्धोऽनुवर्तते । अतोऽर्थविवक्षाबाधका-

भावेन स्वार्थनिष्ठब्रह्मात्मश्रुत्यमृतत्वादिलिङ्गैर्बहुभिस्सप्रयोजनैश्चातथाभूतयोः प्रसिद्धिदृश्यत्वलिंगयोश्शास्त्रीयप्रसिद्धिशास्त्रदृष्टिरूपतया नयनं युक्तमित्यक्ष्याधारः परमात्मैव । किञ्च 'चतुरो मुष्टीन् निर्वपति' इत्यत्र चतुर्शब्दस्य संख्याविशेषाभिधानेन पर्यवसितस्य प्रथमश्रुतत्वेन प्राबल्येऽप्यत्र 'य एष' इति सर्वनाम्नोः प्रकृताभावेन पुरुषपदान्वयात् प्रागपर्यवसिताभिधानयोस्ततः प्राबल्याभावेन तत्पर्यवसानापेक्षितपुरुषपदसमर्पितचेतनत्वलिङ्गादप्यक्ष्याधारः परमात्मा । अपि च 'तद्यद्यप्यस्मिन्' इत्यादौ स्थानिमहिम्ना स्थानस्य निर्लेपत्वप्रतिपादनं स्थानिनश्श्रुत्यन्तरप्रसिद्धनिर्लेपभावपरमात्मत्वे सत्येवोपपद्यते इत्यतोऽप्ययं परमात्मा ।

यस्तु काचपटलादिभिस्सलेपेऽक्षणि स्थानिमाहात्म्यायत्तसर्पिरादिलेपराहित्योक्तिस्स्तुतिमात्रमिति न ततस्स्थानिनो निर्लेपत्वसिद्धिरिति विचिकित्सते, स इत्थं प्रतिबोधनीयः—तथाऽपि तथाभूतस्तुतिद्वारा श्रुत्यन्तरेषु निर्लेपत्वेन प्रसिद्धस्य परमात्मन एव स्थानितया ग्रहणं प्राप्नोति । यथा 'द्वयोः प्रणयन्ति तस्माद्द्वाभ्यामेति' इत्यत्र प्रणयनवतोर्द्वयोः पर्वणोर्महिम्ना चातुर्मास्याख्यो यज्ञ एति गच्छतीति हेतुहेतुमद्भाववर्णनस्य स्तुतिमात्रत्वेऽपि स्तुतिनिर्वाहकतया 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासास्साकमेधाश्च' इत्यर्थवादान्तरे ऊरुसंस्तुतयोर्वरुणप्रघाससाकमेधपर्वणोरेव ग्रहणमिति ।

सूत्रे 'उपपत्तेः' इत्यनेनात्मश्रुत्याद्युपपत्तिः, पुरुषशब्दसमर्पितचेतनत्वोपपत्तिः, स्थानिमाहात्म्यायत्तस्थाननिर्लेपत्वोपपत्तिश्च संगृहीता । १. २. १३ ।

ननु स्थानिनः स्थानं महत् दृष्टं यथा यादोभ्यस्समुद्रः । तत्कथमत्यल्पमक्षि परमात्मनस्स्थानमित्याशंक्याह—

**स्थानादिव्यपदेशाच्च । १४ ।**

नास्याक्ष्येकमेव स्थानमनुचितं निर्दिष्टम्, किन्तर्हि? अनामरूपस्यास्य नामरूपमपि निर्दिष्टं दृश्यते 'तस्योदिति नाम हिरण्यश्मश्रुः' इत्यादिषु, ततश्च तद्वदिदमपि स्थानविशेषकीर्तनमुपासनार्थं न विरुध्यते । यद्यपि 'अर्भकौकस्त्व' सूत्रेण शंकेयं समाहिता, तथाऽपि दृष्टान्तमुखेनापि बुद्धिसामान्यमुपपादयितुमिदं सूत्रम् । १. २. १४ ।

एवं प्रकरणं नास्तीत्यंगीकृत्य हेत्वन्तरमुक्तम् । अथ प्रकरणेन ब्रह्मत्वमुपपादयितुं सूत्रम्—

## सुखविशिष्टाभिधानादेव च । १५ ।

'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म' (छा. ४. १०. ५) इति सुखविशिष्टं यत् प्रकृतं ब्रह्म, तस्यैव प्रकृतपरामर्शिना 'य एष' इति सर्वनाम्नाऽभिधानादप्यक्ष्याधारः परमात्मा । ननु प्राणादिषु प्रत्येकं ब्रह्म-पदयोगात् 'नाम ब्रह्म' 'मनो ब्रह्म' इत्यादाविव ब्रह्मदृष्टिविधिपरत्वं युक्तम् । अत एव 'प्राणश्च हास्मै तदाकाशश्चोचुः' (छा. ४. १०. ५) इति प्राणादिशब्दैरेव निगमनं दृश्यते; प्राणादिप्रधानत्वात् । ब्रह्मप्रधानत्वे हि ब्रह्मशब्देन निगमनं स्यात् । अतो नात्र ब्रह्म प्रकृतमस्तीति चेत् । उच्यते । नेदं ब्रह्मदृष्टिविधिपरम्; 'प्राणो ब्रह्म' इत्याद्युपदेशानन्तरं प्राणस्सूत्रात्मा बृहत्त्वात् ब्रह्मेति जानामि, विषयेन्द्रिय-संपर्कजं सुखं भूताकाशं च कथं ब्रह्मेति विजानीयामित्याभिप्रायवता उपकोसलेन 'विजानाम्यहं यत् प्राणो ब्रह्मेति कंच तु खञ्च न विजानामि' (छा. ४. १०. ५) इति पृष्टैराग्निभिः 'यद्वाव कं तदेव खं यदेव खं तदेव कम्' (छा. ४. १०. ५) इत्युक्तत्वात् । न चेदमपि वैषयिकसुखे भूताकाशदृष्टिविधिपरं भूताकाशे वैषयिकसुखदृष्टिविधिपरञ्च किं न स्यादिति शंक्यम् । 'कं ब्रह्म खं ब्रह्म' इत्यस्यार्थाज्ञानेन पृष्टवन्तं प्रति दृष्टिविध्यन्तरस्योत्तरत्वायोगात् ।

तस्मात्तद्वाक्यं पूर्ववाक्ये कखशब्दोक्तयोरन्योन्यविशेषणविशेष्यभावप्रदर्शनेन वैषयिकसुख भूताकाशरूपतां व्यवच्छिद्यापरिच्छिन्नसुखरूपत्वसुखात्मकापरिच्छिन्नत्वस्वरूपलक्षणोपास्यब्रह्मविशेषणद्वयरूपतां विवेक्तुं प्रवृत्तमिति तदनुरोध्येव 'कं ब्रह्म खं ब्रह्म' इति पूर्ववाक्यस्याप्यर्थो ग्राह्यः, न तु दृष्टिविधिरूपः । तत्र 'कं खं ब्रह्म' इत्येवोच्यमाने सुखात्मकत्वोपलक्षितापरिच्छिन्नत्वगुणस्य उपास्यत्वलाभेऽपि अन्योन्यविशेषि-तयोरुभयोरप्युपास्यगुणत्वमभिमतं न सिध्येदिति प्रत्येकं ब्रह्मशब्दः । 'प्राणो ब्रह्म' इत्यत्र तु ब्रह्मशब्दः कार्यब्रह्मविद्यामग्निविद्यावद्विधित्सितसगुणब्रह्मविद्याङ्गभूतां विधातुम् । अत एव 'प्राणश्च हास्मै' इति निगमन-वाक्ये प्राणस्य, सुखाकाशात्मकब्रह्मणश्च पृथग्ग्रहणमप्युपपद्यते । तत्र तदाकाशशब्द उपक्रमानुरोधेन उक्तरूपब्रह्मपरः ।

एवं दृष्टिविधिपरत्वशङ्कानिरासमपि गर्भीकर्तुं 'सुखविशिष्टाभिधानात्' इति गुरु सूत्रं कृतम् । अन्यथा प्रकृतस्य ब्रह्मणो 'य एषोऽक्षणि' इत्यत्राभिधानादित्येतावन्मात्रविवक्षायां लाघवार्थं 'प्रकृताभिधानात्' इति वा अत्त्रधिकरणद्युभ्वाद्यधिकरणयोरिव 'प्रकरणात्' इति वा सूत्रयेत् । दृष्टिविधिपरत्वशङ्कानिरासार्थत्वेन योजनायां सूत्रस्यायमर्थः—'कं ब्रह्म' इति वाक्यनिर्दिष्टः परमात्मा, न तु ब्रह्मदृष्टिविशिष्टं वैषयिकसुखम् ।

सुखविशिष्टाभिधानादेव—सुखेषु यत् विशिष्टमनवच्छिन्नसुखं तस्य शब्देनाभिधानादित्यर्थः । तथा 'खं ब्रह्म' इति वाक्यनिर्दिष्टश्च परमात्मा, न तु ब्रह्मदृष्टिविशिष्टो भूताकाशः । सुखविशिष्टाभिधानादेव—शोभनं सुखात्मकं यत् खं, तस्य खशब्देनाभिधानादित्यर्थः । न च उभययत्रापि हेत्वसिद्धिः । 'कं ब्रह्म' इत्यत्र कशब्दस्य 'यद्वाव कं तदेव खम्' इति विवरणवाक्यानुसारेण खशब्दोक्तानवच्छिन्नत्वविशेषितसुखपरत्वात् । 'खं ब्रह्म' इत्यत्र खशब्दस्य 'यदेव खं तदेव कम्' इति विवरणवाक्यानुसारेण कशब्दोक्तसुखविशेषितानवच्छिन्नखरूपत्वात् । एवं प्रकरणासिद्धिशङ्कापरिहारार्थत्वेन योजनान्तरे सत्येवावधारणचकारयोरप्यर्थवत्ता । १. २. १५ ।

नन्वस्तु प्राक् प्रकृतं ब्रह्म । तथाऽपि वक्तृभेदेनाग्निविद्याव्यवधानेन च तत्प्रकरणं विच्छिन्नमिति न प्रकरणादक्ष्याधारस्य ब्रह्मत्वसिद्धिरित्याशंक्याह :—

## श्रुतोपनिषत्कगत्यभिधानाच्च । १६ ।

श्रुता—अग्नीनामुपदेशेन लब्धा उपनिषत्—रहस्यविज्ञानरूपा सुखाकाशात्मकब्रह्मोपासना येनोपकोसलेन तस्य तदुपासनया प्राप्या या गतिरग्निभिर्वक्तव्याऽप्यग्निभिरेव 'आचार्यस्तु ते गतिं वक्ता' इत्याचार्येण वक्तव्यतयाऽवशेषिता, तस्याः प्रोषितप्रत्यागतेनाचार्येणाभिधानादाचार्यवाक्यं न स्वातन्त्र्येण किञ्चिदुपदेशार्थं प्रवृत्तम् । किं त्वग्न्युपदिष्टावशेषितपूरणार्थमेव प्रवृत्तमित्यवसीयते । अतस्तत्प्रकरणानुवृत्तौ न विवादः; एवंविधस्थले वक्तृभेदस्य विद्यान्तरव्यवधानस्य च प्रकरणाविच्छेदकत्वात्, वस्तुतोऽग्निविद्यानां प्रकृतब्रह्मविद्याङ्गत्वेन तद्व्यवधायकत्वाशङ्कानास्पदत्वाच्च ।

एवं हि छन्दोगानामुपनिषद्युपाख्यायते—उपकोसलस्सत्यकामाचार्यमुपसन्नस्तस्य द्वादशवर्षाण्यग्नीन् परिचरन्नास्त । तस्मै ब्रह्मोपदेशमकृत्वैवाचार्ये प्रोषिते सति आधिव्याधिपरवशमानसमनश्नन्तं तदाऽप्याचार्याग्निपरिचर्यायामवहितं तमवेक्ष्य गार्हपत्यदक्षिणाग्न्याहवनीयास्त्रयोऽपि तदग्नयस्सम्भूय करुणया तस्मै 'कं ब्रह्म खं ब्रह्म' इत्यादिना (छा. ४. १०. ५) ब्रह्मविद्यामुपदिश्य प्रत्येकं स्वस्वविषयां विद्यां 'य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मि' (छा. ४. ११. १) इत्यादिना, 'य एष चन्द्रमसि पुरुषो दृश्यते' (छा. ४. १२. १) इत्यादिना, 'य एष विद्युति पुरुषो दृश्यते' (छा. ४. १३. १) इत्यादिना चोपदि-

दिशुः । तदनन्तरञ्च सर्वेऽग्नयस्सम्भूय 'एषा सोम्य तेऽस्मद्विद्या चात्मविद्या च' (छा. ४. १४. १) इति स्वस्वविषयविद्यां सुखाकाशात्मकब्रह्मविद्याञ्चोपदिष्टामुपसंहृत्य तत्प्राप्यां गतिं वक्तव्यामालोच्य 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्' (छा. ४. ९. ३) इति श्रुत्यनुसारेण स्वोपदिष्टविद्या तदाचार्यकर्तृकावशिष्ट-गत्युपदेशेन साधिष्ठत्वं प्राप्नोतीत्यप्यालोच्य 'आचार्यस्तु ते गतिं वक्ता' इत्यवोचन् । ततः प्रत्यागत आचार्यः प्रसन्नमुखमुपकोसलं वीक्ष्य 'ब्रह्मविद इव सोम्य ते मुखं भाति कोऽनु त्वाऽनुशशास' (छा. ४. १४. २) इति पृष्ट्वा अग्निभिस्सह भीते तस्मिन्नग्नयोऽस्मा उपदिदिशुरिति निश्चित्य 'किं नु सोम्य किल तेऽवोचन्' इति पृष्ट्वा 'एतावदुपादिशन्' इति तेनोक्ते तत्र वक्तव्यशेषोऽस्तीत्यवधार्य 'अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश-आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' (छा. ४. १४. ३) इति स्ववक्तव्यं प्रतिज्ञाय 'ब्रवीतु मे भगवान्' इति तेन प्रार्थितस्संयद्वामत्वादिगुणकमाक्षिस्थं पुरुषमुपदिश्य तदुपासकस्य 'अथ यदु-चैवास्मिन्' शव्यं कुर्वन्ति यदु च न, अर्चिषमेवाभिसम्भवन्ति' (छा. ४. १५. ५) इत्यारभ्य 'एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते' (छा. ४. १५. ६) इत्यन्तेनानावृत्ति-पर्यवसायिनमर्चिरादिमार्गमुपदिदेश—इति ।

नन्वेतावता सत्यकामोपदिष्टा देवयानगतिरग्न्युपदिष्टायां सुखाकाशब्रह्मविद्यायामप्यन्वेतीति सिध्यति, न त्वक्षिपुरुषोऽपि सुखाकाशात्मकं ब्रह्मेति सिध्यति; अग्निभिर्गतिमात्रस्य, आचार्येण वक्तव्यतयाऽवशेषितत्वात्, सुखाकाशब्रह्मणः स्थानस्य गुणजातस्य च वक्तव्यत्वेनावशेषितत्वात्, तथाऽपि सर्वनाम्नः प्रकृतपरामर्शित्व-स्वाभाव्यादाक्षिस्थपुरुषः प्रकृतं ब्रह्म भवेदिति चेत् । न । अत्रैव गार्हपत्यादिविद्यासु 'य एष' इति पदानां प्रकृतब्रह्मपरामर्शित्वाभावदर्शनात् ।

ननु 'एषा सोम्य ते अस्मद्विद्या चात्मविद्या च' इत्यग्निभिः स्वविद्यानामात्मविद्यायाश्च भेदेन कीर्ति-तत्वात् तत्र सर्वनाम्नां प्रकृतपरत्वं त्यक्तव्यमासीदिति चेत् । तर्ह्यत्रापि गतिमात्रस्यावशेषितत्वात् तस्य प्रकृत-परत्वं त्यक्तव्यमिति समानम् । यदि ह्यग्निभिः 'एषा सोम्य' इत्यादिना स्वविद्यामात्मविद्याञ्च निरपेक्षमुपदिष्ट-तया उपसंहृत्याचार्येण उपदेष्टव्यतया गतिमात्रेऽवशेषितेऽप्याचार्योऽग्न्युपदिष्टस्य ब्रह्मणोऽक्षि स्थानं संयद्वामत्वा-दिगुणजातं चोपदेष्टव्यमालोच्योपदिशेत्, तदा अग्नयो वितथवादिनोऽनभिज्ञा वा स्युः । तस्मादक्षिपुरुषविद्याऽ-प्यग्निविद्यावत् सुखाकाशब्रह्मविद्यातो भिन्नैवेति युक्तम्; पात्नीवताधिकरणन्यायात् ।

एवं हि तत्—'त्वाष्ट्रं पात्नीवतमालभेत' इति प्रकृत्य, 'पर्यग्निकृतं पात्नीवतमुत्सृजति आज्येन

शेषं संस्थापयति' इति श्रूयते । तत्र किं 'आज्येन शेषम्' इत्यनेन पात्नीवतयाग एव पशोरुत्सृष्टस्य स्थाने प्रातिनिधित्वेन आज्यं विधीयते, कर्मान्तरं वेति संशयः । तत्र पात्नीवतयागस्य पशुनोपक्रमेऽपि पशोः पर्यग्नि-कृतावस्थायां वचनबलेन त्यक्तत्वात् द्रव्यसाकाङ्क्षस्य तस्य आज्येन शेषसमापनं विधीयते न कर्मान्तरम् । देव-ताऽभावात्, शेषसंस्थाशब्दानुपपत्तेश्चेति पूर्वः पक्षः ।

पात्नीवतयागस्य मुख्येन पशुद्रव्येण निर्वृत्तस्य प्रतिनिधेरनपेक्षितत्वात्कर्मान्तरविधिरिति सिद्धान्तः । तथाहि —यदि पशोस्त्यागमात्रं क्रियते, तदा तस्य देवतासम्बन्धो नानुष्ठितस्स्यात् । तथा सति 'त्वाष्ट्रं पात्नीवतम्' इति श्रुतस्तस्य देवतासम्बन्धविधिरप्रमाणं स्यात् । असति च देवतासम्बन्धे यागो न सिध्येत्; द्रव्यदेवतासम्बन्धस्य यागानुमापकस्याभावात् । प्रत्यक्षयजेश्चाश्रवणात् । असति यागे कस्य शेषसमापनं विधीयेत । तस्मात् 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति पशोः पर्यग्निकृतावस्थायां न त्यागविधिः; किन्तु परस्वदधिकरणन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानमिदम् । ततश्च तयैव निराकांक्षस्य पात्नीवतयागस्य समाप्तत्वात् न शेषमस्ति यस्याज्येन संस्थानमुच्येत । तस्मात् 'आज्येन शेषम्' इत्याज्यद्रव्यकयागान्तरविधिः । तत्र देवता प्रकृतपात्नीवतपदानुषङ्गेण लम्भनीया । शेषसंस्थाशब्दौ च सादृश्येनोपपादनीयौ । पशुयागो हि पर्यग्निकरणान्ततया देवतोद्देशेन मानसपशुत्यागवानपि हविःप्रक्षेपाद्यभावात् सशेष इव । आज्ययागस्तद्देवत्य एव हविःप्रक्षेपादिमान् तस्य शेष इव च भवतीति । एवं शेषसंस्थाशब्दसद्भावेऽपि पूर्वयागस्य निरपेक्षत्वात् कथञ्चिद्देवतालाभेन यदि कर्मान्तरविधिः, तदा किमु वक्तव्यमिह कर्मान्तरविधिरिति ।

नन्विहाक्षिपुरुषोपन्यासानन्तरं देवयानगतिः न सुखाकाशब्रह्मवित्प्राप्यत्वेन न वा ताटस्थ्येन कीर्तिता, किन्तु 'य एवं वेद' इत्यक्षिपुरुषविदमुपक्षिप्य 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति' इत्यादिना तत्प्राप्यत्वेन कीर्तिता । तथा च सुखाकाशब्रह्मवित्प्राप्यत्वेन आचार्येण वक्ष्यमाणतया प्रागग्निभिर्वर्णिताया गतेरक्षिपुरुषवित्प्राप्यत्वेन आचार्येणोपपादितत्वादक्षिपुरुषस्सुखाकाशब्रह्मैवेति निश्चीयत इति चेत् । मैवं । आचार्यो विद्यान्तरमुपदेक्ष्यति, तदन्वयितया च देवयानगतिमुपदेक्ष्यतीत्येतदग्नयो निश्चित्य तत्सर्वमनुद्भाव्य यां गतिमाचार्य उपदेक्ष्यति सा सुखाकाशब्रह्मविदोऽपीत्यभिप्रायेण 'आचार्यस्तु ते गतिं वक्ता' इत्यग्नयोऽवो-चन्नित्युपपादनोपपत्तौ तन्मात्रमवलम्ब्य निरपेक्षतयोपसंहृतायाः प्रकृतब्रह्मविद्यायाः पुनस्स्थानगुणाविध्यङ्गी-कारायोगात् । तस्मात् देवयानगत्यभिधानस्य प्रागुक्तब्रह्मविद्यार्थत्वायोगात् तदभिधानेन तत्प्रकरणाविच्छेदो-क्तिरयुक्तेति चेत्—

अत्र ब्रूमः—'आचार्यस्तु ते गतिं वक्ता' इत्यत्र गतिशब्दः करणव्युत्पत्त्या देवयानमार्गपरो न भवति, किन्तु कर्मव्युत्पत्त्या प्रकृतब्रह्मविद्याफलपरः। प्रथमं फल एवाकाङ्क्षोदयाल्लोकान्तरभोग्यफल-निर्देशानन्तरमेव तत्प्राप्त्युपायमार्गाकाङ्क्षोदयौचित्यात्। न च प्राक् ब्रह्मविद्यायाः फलं निर्दिष्टम्। तदङ्ग-भूतानामग्निविद्यानामेव हि परं 'लोकीभवति' इत्यादिना फलमर्थवादेन वर्णितम्। अत एवाचार्यो 'लोकान्वाव किल सोम्य तेऽवोचन् अहं तु ते तद्वक्ष्यामि' (छा. ४. १४. ३) इत्यग्नयः स्वस्वविद्याफलभूतानग्निलो-कादीनेवावोचन्, न तु ब्रह्मविद्याया महत् फलम्, तदहं वक्ष्यामीति प्रतिजज्ञे। तस्मात् ततःप्रभृति यावदाचार्यवाक्यं 'इमं मानवमावर्तं नावर्तन्ते' (छा. ४. १५. ६) इत्येतत्पर्यन्तं तत्सर्वमग्न्यवशेषितफल-रूपगत्यभिधानमेव।

तथा हि—प्रथमं तावत् पुष्करपलाशवाक्यं फलवर्णनात्मकमिति निर्विवादम्। तदुपपादकस्त-दनन्तरमाक्षिस्थानोपदेशः। यदक्षिस्थानोपदेशानन्तरमक्षिस्थानमाहात्म्येन सर्पिरुदकाद्यश्लेषं वर्णयति तेन सकलपापश्लेषविदूरं स्वोचिताक्षिस्थाने विद्यमानं ब्रह्मोपासनीयमिति विधिर्लभ्यमानः तत्क्रतुन्यायेन वर्णित-फलोपपादको भवति। एवं 'सर्वाण्येनं वामान्यभिसंविशन्ति य एवं वेद' (छा. ४. १५. २) 'सर्वाणि वामानि नयति य एवं वेद' (छा. ४. १५. ३) 'सर्वेषु लोकेषु भाति य एवं वेद' (छा. ४. १५. ४) इति वाक्यान्यपि फलवर्णनात्मकानि। आद्यवाक्येन हि निखिलाभिमतवस्तुप्राप्तिमात्रं सङ्कल्पमात्रसाध्यं दहरविद्याफलत्वेन प्रसिद्धं वर्ण्यते। द्वितीयवाक्येन स्वभक्तेषु सकलाभिमतवस्तुप्रापकत्वं 'यं यं लोकं मनसा संविभाति विशुद्ध सत्वः कामयते यांश्च कामान् तं तं लोकञ्जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेत् भूतिकामः' (मु. ३. १. १०) इत्यादिश्रुतिषु तत्फलत्वेन प्रसिद्धं वर्ण्यते। तृतीयवाक्येन 'स स्वराड् भवति तेषां सर्वेषु कामचारो भवति' (छा. ७. २५. २) इत्यादिश्रुतिप्रसिद्धं तत्फलं वर्ण्यते। तत्तत्फलोपपादकत्वेन च तत्तद्वाक्येभ्यः प्राक् ब्रह्मणस्संयद्वामत्ववामनीत्वभामनीत्वगुणाः विधीयन्ते। अग्रे च 'इमं मानवमावर्तं नावर्तन्ते' इति सत्यलो-कस्थब्रह्मप्राप्त्यनन्तरमनावृत्तिलक्षणं फलं वर्ण्यते।

एवं सर्वमिदमाचार्यवाक्यं सोपपादकफलवर्णनात्मकमित्यमुमर्थं हृदि निधाय 'श्रुतोपनिषत्कगत्य-भिधानात्' इति सूत्रितम्। श्रुतोपनिषत्कस्य उपकोसलस्याचार्यवक्तव्यत्वेनाग्निभिरवशेषितायाः फलरूपाया गतेः कृत्स्नेन चाचार्यवाक्येनाभिधानात् तत्प्रकरणविच्छेदशङ्का नावकाशमासादयतीति तात्पर्यम्। इत्थमस्य सूत्रस्य योजना भाष्ये पूर्वसूत्रव्याख्यानसमय एवानागतावेक्षणन्यायेन प्रदर्शिता—"'आचार्यस्तु ते गतिं वक्ता'

इति च गतिमात्राभिधानप्रतिज्ञानमर्थान्तरविवक्षां वारयति'' इति । अनेन हि भाष्यवाक्येनाक्षिपुरुषवाक्यमग्निभिरवशेषितां गतिमेवाचष्टे, न किञ्चिदप्यर्थान्तरमिति स्पष्टमेवोच्यते । भामत्यामपि भाष्यमिदमुक्तार्थपरतयैवावतारितम् ''नन्वग्निभिः पूर्वं निर्दिश्यतां ब्रह्म । 'यएषोऽक्षणि' इत्याचार्यवाक्येऽपि तदेवानुवर्तनीयमिति तु कुत इत्यत आह'' इति ।

यदि तु 'आचार्यस्तु ते गतिं वक्ता' इत्यत्र गतिशब्दो देवयानमार्गपर इति निर्बन्धः, तथाऽपि न दोषः । तदा हि गतिशब्दोऽन्येषामपि केषांचिदाचार्येण वक्तव्यानामुपलक्षणत्वेन व्याख्येयः; गतिमात्रपरत्वे वैयर्थ्यप्रसङ्गात् । 'आचार्यस्तु ते गतिं वक्ता' इत्यग्निभिरनुक्तेऽपि हि विद्यान्तरसंबन्धित्वेनाचार्योक्ताऽपि देवयानगतिः प्रकृतब्रह्मविद्यायामपि दहरवैश्वानरविद्यादिष्विव 'अनियमस्सर्वासामविरोधश्शब्दानुमानाभ्यां' (३. ३. ३१) इति गुणोपसंहारपादाधिकरणे प्रदर्शयिष्यमाणन्यायेन लभ्यत एव । एवञ्च सूत्रस्थगतिशब्दोऽपि श्रुतौ गतिशब्देन यावदुपलक्षितं तावत्परः । तथा च कृत्स्नेनाप्याचार्यवाक्येनाग्निवाक्यस्थगतिशब्दविषयमात्रस्यैवाभिधानान्न प्रकरणविच्छेदशङ्केति तात्पर्यम् । उदाहृतभाष्यभामतीग्रन्थयोरप्यत्रैव तात्पर्यम् । सूत्रे चकारोऽग्निविद्यानामङ्गत्वसमुच्चयार्थः । तथा च कृत्स्नस्याप्याचार्यवाक्यस्य प्रकृतब्रह्मविद्यापेक्षितगतिनिरूपणैदम्पर्येण प्रवृत्तत्वान्न वक्तृभेदेनाग्निविद्याव्यवधानेन वा प्रकरणविच्छेदः । अग्निविद्यानामङ्गत्वादपि न तद्व्यवधानेन प्रकरणविच्छेद इत्यर्थः । अङ्गत्वञ्च प्रकृतब्रह्मविद्योपक्रमतदुपसंहारमध्यपतितत्वात्, 'अथ हैनम्' इति पूर्वप्रकृतापेक्षावाचकेनाथशब्देनाग्निविद्यानां ब्रह्मविद्यायाश्च संम्बन्धावगमात्, 'एनम्' इति ब्रह्मविद्याधिकारिण उपकोसलस्यान्वादेशविहितेन एनादेशेन निर्देशात् ।

न च वाच्यम्—'अपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योक् जीवति नास्यापरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च' (छा. ४. ११. २) इत्यग्निविद्यानां पृथक्फलश्रवणादंगत्वं न युक्तम्—इति । तेषां वाक्यानामग्निविद्यानां ब्रह्मविद्याङ्गताया द्वारप्रदर्शनपरतया तदङ्गताऽनुगुणत्वात् ।

तथाहि—आद्येन वाक्येन तासां ब्रह्मोपासनाप्रावृत्तिप्रतिबंधकदुरितनिवर्तकत्वमुच्यते । द्वितीयेन 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौ. १. ३) इत्यादिश्रुतिष्वर्चिरादिमार्गे प्रथमपर्वत्वेन श्रुताग्निलोकप्रापकत्वमुच्यते; अग्न्युपासनानामग्निलोकप्राप्तिफलकत्वौचित्यात् । यद्यपि ब्रह्मोपासनयैवार्चिरादिपर्वप्राप्तिर्लभ्यते, तदर्थं नोपासनान्तरमपेक्ष्यते, तथाऽपि विदुषो देहपातानन्तरमेवार्चिरादिगतिप्राप्तौ

प्रतिबन्धकसद्भावेऽपि तदानीमेव तत्प्रापकत्वमनेनोच्यते। अत एवास्मिन्नेव प्रकरणे श्रूयते 'अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदुच न, अर्चिषमेवाभिसंभवन्ति' इति। अस्मिन्नक्षिपुरुषोपासके मृते पुत्रादयश्शव्यं शवकर्म पैतृमेधिकसंस्कारादिकं यदि कुर्वन्ति, यदि वा न कुर्वन्ति उभयथाऽपि तस्यार्चिरादिगतिप्राप्तिरवश्यं भवत्येवेत्यर्थः। अनेन हि वाक्येन विद्यान्तरोपासकानां शवकर्माकरणेऽर्चिरादिगतिप्राप्तौ किञ्चित् प्रतिबन्धो भवति। प्रकृतब्रह्मविद्यायां तु न भवतीत्युभयमप्यर्थतश्शब्दतश्च प्रतीयते। सोऽयमस्यां विशेषो 'लोकीभवन्ति' इति फलवाक्यपर्यालोचनायामाग्निविद्यासाहित्यकृत इत्यवसीयते। तृतीयवाक्येन आप्रायणमहरहरावर्तनीयब्रह्मोपासनाफलभूयस्त्वसिध्यर्थं पुरुषायुषप्राप्तिरुच्यते। चतुर्थवाक्येन प्रत्यहमुपासनाप्रवृत्तौ प्रतिबन्धकानां धनप्राप्तिरोगनिवृत्त्याद्युपायचिन्ताक्लेशानामप्रसङ्गाय ज्योक् उज्वलं धनधान्यादिसमृद्धं रोगानाभिभूतश्च जीवनमुच्यते। पञ्चमवाक्येन ब्रह्मविद्याफलाभिवृद्ध्यर्थमुपासकस्य पुत्रपौत्रादीनां ज्ञानकर्मसन्तत्यादिक्षयाभाव उच्यते। सत्पुत्रपौत्रादिसन्ततिवृद्धेर्हि अमुष्य पुत्रोऽमुष्य पौत्र इति पितृपितामहादिकीर्तिस्थैर्यसंपादनेन साक्षाच्च पितृपितामहाद्युपार्जितपारलौकिकफलाभिवृद्धिहेतुत्वमापस्तम्बेन स्मर्यते 'ते शिष्टेषु कर्मसु वर्तमानाः पूर्वेषां साम्परायेण कीर्तिं स्वर्गञ्च वर्धयन्त्येवमवरोऽवरः परेषामाभूसतम्प्लवात्' (आ. ध. सू. २. २४) इति। षष्ठवाक्येन उपासनाप्रीतानामग्नीनामैहिकपारत्रिकप्रतिबन्धनिरासादिद्वारा प्रकृतब्रह्मोपासनानुष्ठातृपरिपालकत्वमुच्यते। तस्मादाग्निविद्यानामङ्गत्वान्न व्यवधायकत्वमित्यपि युक्तमेव।

एतेन 'एषा सोम्य ते' इति निरपेक्षतयोपसंहृतायां ब्रह्मविद्यायामव्यवधानादिसमर्थनेऽपि न स्थानगुणान्वयस्सम्भवतीत्यपि निरस्तम्। गतिवाक्यावैयर्थ्याय गतिशब्देन यावत्क्रोडीकृतं तावदतिरिक्तापेक्षितराहित्येनैव उपसंहाराभिप्रायस्य वर्णनीयतया पार्ष्णिवतयागवत्सर्वथा नैरपेक्ष्यासिद्धेः। गतिशब्दस्य फलपरत्वपक्षे तदुपपादकतया स्थानगुणयोरपि तेन क्रोडीकृतत्वात्, मार्गपरत्वपक्षे वाक्यावैयर्थ्याय तस्य स्थानगुणोपलक्षणत्वावश्यंभावात्। एवं श्रुतोपनिषत्कसूत्रस्य सुखविशिष्टसूत्रप्रसाधितब्रह्मप्रकरणविच्छेदशङ्कानिरासार्थत्वेन योजनाद्वयं सुखविशिष्टसूत्रव्याख्यानसमय एव भाष्ये सूचितं प्रपञ्चेन प्रादीदृशाम्। अक्षिपुरुषस्य ब्रह्मत्वे लिङ्गप्रदर्शनपरतयाऽपि एतत्सूत्रं तदनन्तरं भाष्ये व्याख्यातम्—'श्रुतोपनिषत्कस्य वेदान्तेषु प्रसिद्धा या देवयानगतिस्तदभिधानादपि अक्षिपुरुषः परं ब्रह्म' इति। यद्यप्यब्रह्मविदामपि पञ्चाग्न्युपासकानां देवयानगतिः श्रुता, तथाऽपि क्वचिद्वचनबलात्तत्क्रतुन्यायातिलङ्घनेऽपि ब्रह्मविद्यायामेव सा प्रसिद्धेत्यौत्सर्गिकत्वाश्रयमिदं लिङ्गम्।

सूत्रे श्रुतोपनिषत्केत्यल्पार्थे कप्रत्ययः देवयानगतेः 'निर्विशेषं परं ब्रह्म साक्षात् कर्तुमनीश्वराः।

ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः' इत्युक्तरूपमन्दाधिकारिविषयत्वज्ञापनार्थः । १. २. १६ ।

एवं सिद्धान्तहेतव उक्ताः । अथ पूर्वपक्षनिराकरणार्थं सूत्रम्—

**अनवस्थितेरसम्भवाच्च नेतरः । १७ ।**

यदुक्तमक्ष्याधारश्छायात्मेति तन्न युज्यते; छायाऽऽत्मनः प्रतिबिम्बस्याक्ष्यादिषु प्रतिबिम्बोपाधिष्वनवस्थितेः । सर्वत्र स्वस्थानस्थितस्यैव हि बिम्बस्य तत्तदुपाधिसम्बन्धमात्रमध्यस्यते, न तु बिम्बस्तत्तदुपाधीननुप्रविशति, न वा बिम्बाद्भिन्नः प्रतिबिम्बस्तत्तदुपाधिषूद्भवति । यथा चैतत्तथा समर्थितं विवरणप्रकाशे तातचरणैः । यद्यपि चाक्षाणि छायात्मनस्स्यादवस्थितिः तथाऽपि बिम्बसन्निधानकाल एव सा भवेन्न सर्वदा । न चोपासनाकाले बिम्बसन्निधाननियमोऽस्ति येन तदानीमुपास्यसत्ता लभ्यते । न च तदाऽपि यस्य कस्यचिदक्षाणि तत्सत्ता लभ्यत इति शङ्कनीयम् । 'य एषोऽक्षाणि' इत्यत्र प्रत्यासत्तेरुपासकस्याक्षणीत्येव पर्यवसानात्, 'दृश्यते' इत्यस्य चरमश्रुतस्यान्यदृश्यत्वमादायापि चारितार्थ्यात् । न चैतदुपासनाकाले छायाकरं कञ्चित्पुरुषमक्षिसमीपे सन्निधाप्य उपासीतेति युक्तम्; कल्पनागौरवात्, 'अक्षाणि पुरुष' इति नित्यवच्छ्रवणायोगाच्च । तस्मादक्षाणि च्छायात्मनः कदाऽप्यनवस्थितेः, उपासनाकाले अवस्थितिनियमाभावाच्च नाक्ष्याधारः परमात्मनः इतरः छायात्मा । तत्र संयद्वामत्वादिगुणानामसम्भवाच्च ।

ननु स्पष्ट एवासम्भवः किमर्थं सूत्रत उच्यते ? स्थानादिसूत्रे ब्रह्मणोऽपि नामरूपादिकं काल्पनिकमेवेति दर्शितम्, तद्वच्छायात्मनोऽपि काल्पनिकं सम्भवतीति शङ्कानिरासार्थमसम्भवस्सूत्रितः । वस्तुतो नामरूपरहितमपि ब्रह्म व्यावहारिकैस्स्वाध्यस्तैर्नामरूपैस्तद्वदिति सम्भवति तद्विषयत्वे संयद्वामत्वादिश्रुतीनां सालम्बनता, न तु च्छायात्मविषयत्वे । तत्र बुद्धिपूर्वमारोपणीयस्यार्थस्य फलश्रुत्यालम्बनत्वासम्भवादिति तन्निरासः । तत्र आत्मश्रुत्यादेरितिशिरस्कत्वेनाविवक्षितार्थत्वमित्यङ्गीकृत्य पूर्वपक्षप्रवर्तनादस्पष्टब्रह्मलिङ्गता । १. २. १७ ।

इत्यन्तराधिकरणम् । ४ ।

( ५ अधिकरणम् )

**अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । १८ ।**

पूर्वत्र 'य एषोऽक्षाणि' इति परमात्मनः स्थाननिर्देशोपपादनाय 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः'

(बृ. ५. ७. ३) इत्याद्यन्तर्यामिब्राह्मणे तस्य पृथिव्याद्यनेकस्थानव्यपदेशो दृष्टान्ततयोक्तः। स आक्षिप्यते तत्र प्रतिपादितोऽन्तर्यामी परमात्मा न भवतीति। अन्तर्यामी दहराद्युपासनासिद्धः कौशिक-कुम्भसम्भवादिवत् कश्चन योगसिद्ध इति युक्तम्, न तु परमात्मा; शरीररहितस्य नियन्तृत्वाभावात्। शरीरवतामेव तक्षादीनां वास्यादिनियन्तृत्वदर्शनात्। स्वशरीरानियमनेऽपि तेनैव शरीरेण नियन्तुश्शरीरवत्त्वात्। न च परमात्माऽपि नियम्यपृथिव्यादिशरीरेणैव शरीरवानिति वक्तुं शक्यम्; 'यस्य पृथिवी शरीरम्' इत्या-द्याम्नानात्, इति वाच्यम्। तक्षादीनां भोगायतनस्वशरीरेणैव नियन्तृत्वदर्शनात्, स्वभोगायतनशरीरस्यैव च स्वशरीरत्वात्। 'य इमञ्च लोकं परञ्च लोकं सर्वाणि च भूतानि योऽन्तरो यमयति इति परमोपक्रमेण 'एष त आत्माऽन्तर्याम्यमृतः' इत्युपसंहारेण च प्रकरणप्रतिपाद्यत्वेन निर्णीतस्य पृथिव्यादिवाक्येष्वपि प्रथमश्रुतस्य यमयितृत्वस्योपपादनाय जीवविशेषपरिग्रहे स्थिते 'एष त आत्मा' इति 'अमृत' इति चोभयमौ-पचारिकं नेयं 'प्राणस्तथाऽनुगमात्' (१. १. ११) इति न्यायादिति **पूर्वः पक्षः**।

पृथिव्याद्यभिमानिदेवताविशेषोऽन्तर्यामीति पूर्वपक्षस्तु भाष्ये सम्भवमात्रेण दर्शितो न तु मुख्यः। उपक्रमोपसंहाराभ्यामेकस्यैवान्तर्यामित्वप्रतीतेः; 'यं पृथिवी न वेद' 'यमापो न विदुः' इत्यादिना तत्तदभिमानिदेवताव्यतिरेकप्रतीतेश्च। अनेनैव हेतुद्वयेन तथापूर्वपक्षस्यामुख्यतां दर्शयितुमेव सूत्रे 'अधिदैवा-दिषु' इति अन्तर्यामी विशेषितः। तेन ह्यधिदैवादिषु सर्वेष्वपि पर्यायेष्वेक एवान्तर्यामी तत्तद्देवताव्यतिरिक्त-श्चेति दर्शितं भवति।

**सिद्धान्तस्तु**:—यमयितृत्वधर्मेण धर्मिग्रहणे साधनसाध्येन तेन धर्मिग्रहणाद्वरं नित्यसिद्धेन तद्ग्रहणम्; कल्पनालाघवात्। अतोऽन्तर्यामित्वं साधारणमपि न्यायतः परमात्मन्येव समन्वेतीति तस्मादेव-तद्धर्मव्यपदेशात् 'एष त आत्मा' इत्यादितद्धर्मव्यपदेशाच्चान्तर्यामी परमात्मा। एवञ्च शरीरवत एव नियन्तृत्व मिति शङ्काऽप्यनवकाशा; साधनाधीन एव नियन्तृत्वे साधनविशेषत्वेन तदपेक्षणात्। न च नियन्तृत्वमात्रं साधनाधीन-मिति नियमः; ज्ञानमात्रमनित्यमित्यादिवदप्रयोजकत्वात्, श्रुत्यन्तरप्रसिद्धजगत्कारणत्वाक्षिप्तसहजसर्वशक्तिशालिनः परमेश्वरस्य स्वत एव सर्वनियमनशक्तियोगसम्भवाच्च। तथाऽपि नियन्ता शरीर्येवेति नियमो दृष्ट इति चेत्; न तस्यापि कर्ता शरीर्येवेति नियमवदप्रयोजकत्वात्, नियम्यपृथिव्यादिशरीरेणैव परमेश्वरस्य शरीरित्वसम्भवाच्च। न च शरीरे भोक्तुरेव नियन्तृत्वमिति नियमः; अभोक्तुरनियन्तृत्वे अचेतनत्वस्योपाधित्वात्। न च मुक्तात्मसु साध्याव्यापकत्वम्। तेषां परमेश्वराभेदेन पक्षान्तर्भावात्। न च यच्छरीरं यस्य भोगायतनं तेनैव स नियच्छतीति

नियमः; स्वकरगृहीतपरांगुल्यादिना क्रियमाणे चित्रलेखनादिकर्मणि तदभावात्, अप्रयोजकत्वाच्च ।

किञ्च योगसिद्धत्वेऽपि न जीवोऽन्तर्यामी भवितुमर्हति; तस्यापि नियन्त्रन्तरापेक्षायामनवस्थानात् । न च स्वतन्त्र एव स कल्पनीयः; योगसिध्यनन्तरं तस्य कथञ्चित् स्वातन्त्र्यसम्भवेऽपि ततः प्रागस्मदादिवन्नियन्त्रन्तरनियम्यत्वात् । तस्य नित्यस्वतन्त्रत्वाभ्युपगमे पर्यायान्तरेण परमेश्वरपक्षस्यैव परिग्रहापत्तेः । सेयमनवस्था भगवता भाष्यकारेण सिद्धान्ते तदप्रसक्तिप्रदर्शनमुखेन पूर्वपक्षे प्रसज्यत एवेति समुद्घाटिता— 'तस्याप्यन्यो नियन्तेत्यनवस्थादोषश्च न भवति; भेदाभावात् । भेदे हि सति अनवस्थादोषापत्तिः' इति । सिद्धान्तेऽन्तर्यामिणोऽप्यन्यो नियन्तेत्यनवस्था न प्रसज्यते; नित्यस्वतन्त्रपरमेश्वरस्य नियन्त्रन्तरस्याकल्पनीयतया नियन्तृभेदाभावात् । पूर्वपक्षेऽन्तर्यामिणोऽपि जीवस्य नियन्त्राऽन्येन भाव्यमिति तद्भेदे सति अनवस्थाऽपत्तिरित्यर्थः ।

इदञ्च दूषणं 'अनवस्थितेरसम्भवाच्च नेतरः' इति पूर्वाधिकरणसूत्रानुवृत्तिमभिप्रेत्योद्घाटितम् । अत एव तत्र सूत्रे 'अनवस्थितेः' इति सोपसर्गप्रयोगोऽपि सफलः, अन्यथा तस्य तदधिकरणमात्रार्थत्वे लाघवात् स्थानादिसूत्रे अवोपसर्गाभावाच्च 'स्थितेः' इत्येवासूत्रयिष्यत् । 'असम्भवात्' इत्यनुवृत्तांशेन योगिनोऽसंकुचितसर्वभूतनियन्तृत्वासम्भवादिति हेत्वन्तरं समुच्चीयते । अयञ्च हेतुः 'समस्तं विकारजातमन्तस्तिष्ठन् यमयतीति परमात्मनोऽयं धर्म उपपद्यते' इति भाष्येण गर्भीकृतः । यद्यपि सर्वभूतनियन्तृत्वं योगिनो न सम्भवतीति स्पष्टमेव, तथाऽपि तत्सम्भवमङ्गीकृत्य कृत्वाचिन्तया न्यायः प्रदर्शितः । इदं तु कृत्वाचिन्तोद्घाटनम् । १. २. १८ ।

स्यादेतत् । यद्यपि सर्वभूतशब्दोक्तसकलकार्यनियन्तृत्वं योगिनो न संभवति, तथाऽपि सांख्यस्मृतिकल्पिते प्रधाने तद्व्यपदेष्टुं शक्यम् । सर्वस्य कार्यस्य कारणाधीनत्वात्, 'यः पृथिव्यां तिष्ठन्' इत्यादिकं कार्येषु कारणस्यानुगतत्वात् । 'यं पृथिवी न वेद' इत्यादि तस्य 'अप्रतर्क्यमविज्ञेयम्' इत्यविज्ञेयत्ववर्णनात् । 'यस्य पृथिवी शरीरम्' इत्यादि कार्यकारणयोर्वस्तुतो भेदाभावात् । 'पूर्वपक्षशरीरम्' इत्यादौ स्वरूपवाचकस्यापि शरीरशब्दस्य दर्शनात्, 'एष त आत्मा' इति जीवस्य सर्वनिर्वाहके प्रधाने 'ममात्मा भद्रसेन' इतिवदात्मत्वोपचारात्, 'अदृष्टो द्रष्टा अश्रुतश्श्रोता अमतो मन्ता अविज्ञातो विज्ञाता' (बृ. ३. ७. २३) इत्यत्रादृष्टत्वादि रूपादिहीनत्वात्, द्रष्टृत्वादि तत्प्रकृतिकत्वेन तदभिन्नानाञ्चक्षुरादीनां दर्शनादिसाधनत्वात्, 'चक्षू रूप ग्राहकम्' इत्यदौ करणे कर्तृत्वोपचारादिति सर्वस्यापि विशेषणस्योपपन्नत्वात् प्रधानमेवान्तर्यामीति युक्तम्,

न तु परमात्मेति; तत्र पृथिव्यादिशरीरवत्त्वव्यपदेशानुपपत्तेः। न हि तस्य पृथिव्यादि स्वरूपम्, न वा भोगायतनम्। न च तस्य पृथिव्यादिशरीरेण भोक्तृभोगायतनभावसम्बन्धाभावेऽपि कर्तृकार्योपादानोपादेयभावादिसम्बन्धान्तरसत्त्वात्तथा व्यपदेशस्स्यादिति वाच्यम्। पित्रादेः पुत्रादिशरीरस्य च तादृक्सम्बन्धान्तरसत्त्वेऽपि 'पितुश्शरीरम्' इत्यादिव्यपदेशादर्शनेन तथा व्यपदेशे तेषां सम्बन्धानामप्रयोजकत्वात्। न च तदज्ञानकल्पितत्वेन सम्बन्धेन तथा व्यपदेशः; स्थाण्वज्ञानकल्पिते शरीरे 'स्थाणोश्शरीरम्' इति व्यपदेशादर्शनात्। न च नियम्यत्वेन तथा व्यपदेशः; स्वामिनियम्यभृत्यादिशरीरेषु नाविकनियम्यनौकादिषु तत्तच्छरीरत्वव्यपदेशाभावात्। न च यावद्द्रव्यभाविना नियम्यत्वेन तथा व्यपदेशः; स्वशरीरस्यापि व्याध्यादिभिः कदाचिदनियम्यत्वेन शरीरत्वव्यपदेशे तस्य प्रयोजकत्वायोगात्। 'तदानीमपि स्वशरीरस्य नियम्यत्वयोग्यताऽस्ति' इति चेत् न। तथा सति नौकादिष्वपि सर्वदा नाविकादिनियम्यत्वयोग्यताऽस्तीत्यतिप्रसङ्गतादवस्थ्यादिति पूर्वपक्षान्तरयाशंक्य निराकरोति—

**न च स्मार्तमतद्धर्माभिलापात्। १९।**

न सांख्यस्मृत्युक्तं प्रधानमन्तर्यामीति युक्तम्; अतद्धर्माणां द्रष्टृत्वादीनामभिलापात्; तेषां मुख्यत्वसम्भवे औपचारिकत्वकल्पनायोगात्। 'यस्य पृथिवी शरीरम्' इत्यादि तु नियन्तृत्वप्रसक्तशरीरापेक्षाशङ्कां नित्यसिद्धे नियन्तृत्वे नास्ति तदपेक्षेति सूचनेन व्यावर्तयितुमन्तर्यामिणो नियमनार्थं नियम्यपृथिव्याद्यतिरेकेण शरीरं नास्तीति प्रतिपादनपरम्। आकाङ्क्षाऽनुरोधात्, न तु पृथिव्यादेस्तच्छरीरत्वप्रतिपादनपरमपि; अनाकाङ्क्षितत्वात्, उभयत्र वाक्यव्यापारायोगाच्च। १. २. १९।

ननु यदि द्रष्टृत्वादिमुख्यताऽनुरोधान्न प्रधानमन्तर्यामि, तर्हि तत एव न परमात्माऽपि, किन्तु शारीर एव। यदि 'द्रष्टा' इत्यादिविशेषणैः 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ. २. ४. ५) 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन' (बृ. २. ४. ५) 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते' (बृ. ४. ५. ६) इत्यादिश्रुत्यन्तरप्रत्यभिज्ञानादात्मविषयसाक्षात्कारश्रवणमनननिदिध्यासनवत्त्वमुच्यते, यदि वा चक्षुश्श्रोत्रमनोबुद्धिकरणकज्ञानवत्त्वमुच्यते, उभयथाऽपि जीव एव द्रष्टृत्वादिकं घटते न परमात्मनि। द्रष्टृत्वादिशब्दा रूपालोकनादिमत्त्ववाचकास्सन्तु इति चेत्। न। तथाऽपि मन्तृशब्दाभिधेयस्य विचारयितृत्वस्य सर्वज्ञे ब्रह्मण्यसम्भवात्। दर्शनादिशब्दानां रूपालोकनादिवाचित्वे

'रूपं दृष्टं घटो दृष्ट' इत्यादि प्रयोगाणां 'इन्द्र इन्द्राणीपतिर्वरुणो वरुणानीपतिः' इत्यादिवदसामञ्जस्य-प्रसङ्गाच्च। न च—चाक्षुषादिज्ञानवाचित्वमप्यसमञ्जसम्। चक्षुरादीनामयोग्यत्वेन 'दृष्टं पश्यामि' इत्याद्यनु-भवे स्फुरणासम्भवादिति वाच्यम्; चक्षुरादिकरणविशेषप्रयोज्यजातिविशेषवाचित्वोपपत्तेः।

न च वाच्यम्—'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुस्स श्रृणोत्यकर्णः' (श्वे. ३. १९) इत्यत्र रूपालोकनादिमात्रे पश्यत्यादिप्रयोगो दृष्टः इति। तत्र जवनशब्दस्य दूरस्थसम्बन्ध इव तस्य रूपालोकनादौ लक्षणाऽभ्युपगमात्, इह मुख्यार्थसम्भवेन लक्षणाकल्पनानौचित्यात्। तस्माज्जीव एवान्तर्यामी, 'न दृष्टेर्द्रष्टारं पश्येः न श्रुतेश्श्रोतारं श्रृणुयाः' (बृ. ३. ४. २) इत्यादिश्रुत्यन्तरे तस्मिन्नद्रष्टृत्वादीनां प्रसिद्धेश्च। साधनाधीनमपि तस्यैव यमयितृत्वं ग्राह्यम्; द्रष्टृत्वाद्यनुरोधात्। तस्मिन्नमृतशब्दोऽपि युज्यते; नित्यत्वात्। 'क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः' (श्वे. ५. १) इति श्रुत्यन्तरे तस्मिन्दृष्टप्रयोगत्वाच्च।

अथोच्येत—जीवः कोऽन्तर्यामी स्यात्। न तावत्तत्तदुपासकजीवः; परिच्छिन्ने तत्र पृथिव्या-दिस्थितितन्नियन्तृत्वयोरसम्भवात्, 'किमन्तर्यामिणं वेत्थ' इति गन्धर्वेण पृष्टस्य काप्यस्य 'नाहं तं भगवन्वेद' (बृ. ३. ७. १) इत्युत्तरासामञ्जस्यप्रसङ्गाच्च। यज्ञविद्याविदः काप्यस्य कर्मफलभोक्तृदेहातिरिक्तजीवज्ञाना-वश्यम्भावात्। नापि पृथिव्याद्यभिमानी जीवः;श्रोतारमुद्दालकं प्रति पराग्भूते तस्मिन् 'एष त आत्मा' (बृ. ३. ७. ३) इति तदात्मत्वोपदेशायोगात्। पृथिव्यादिष्वप्यभिमानिजीवस्य प्रत्येकं भिन्नतया 'सर्वाणि भूतानि योऽन्तरो यमयति' (बृ. ३. ७. १) इत्युपक्रान्ततया एकस्य सर्वनियन्तृताया अनन्वयप्रसङ्गाच्च। नापि जीवसमुदायः; तस्य पृथिव्यादिस्थत्वतन्नियन्तृत्वयोरभावेन 'यः पृथिव्यान्तिष्ठन् पृथिव्या अन्तरः' (बृ. ३. ७. ३) इत्यादेरनन्वयात्। न च सर्वभूतवाक्ये जीवसमुदायः पृथिव्यादिवाक्ये तत्तदभिमानि-जीव इति वैरूप्यकल्पनं युक्तम्। न वा तदपि निर्वोढुं शक्यम्, 'एष त आत्मा' इत्युपदेशायोगस्य उक्तत्वात्।

अपिच उपासकजीव इति पृथिव्याद्यभिमानिजीव इति पूर्वपक्षौ 'शब्दविशेषात्' (१. २. ५) 'भेदव्यपदेशाच्चान्यः' (छा१.१.११) इति सूत्राभ्यां निरासितौ नात्र निरसनीयौ। शाण्डिल्यविद्यायां 'एष म आत्मा'(छां.३.१४.३) इतिवदिह प्रतिपर्यायं 'एष त आत्मा' इति शब्दविशेषसत्त्वात्। आदित्यपर्याये 'यमादित्यो न वेद' (बृ. ३.७.९.) इत्यादिभेदव्यपदेशवत् पृथिव्यादिपर्यायेष्वपि 'यं पृथिवी न वेद' (बृ. ३. ७. ३)

इत्यादिभेदव्यपदेशसत्त्वाच्च । एवं च सर्वजीवसमुदाय इति पूर्वपक्षोऽपि न सम्भवति । सर्वभूतपर्याये 'यं सर्वाणि भूतानि न विदुः' (बृ. ३. ७. १५) इत्यादिभेदव्यपदेशदर्शनात् ।

अपि च प्रतिपर्यायं 'अमृतं' इति जीवात् भेदो निर्दिश्यते । अमृतत्वं ह्यमरणधर्मकत्वम् । न च जीवस्यापि नित्यत्वात्तत्रामृतत्वोक्तिरुपपद्यत इति वाच्यम् । आत्मत्वकीर्तनादेव स्वतो नित्यत्वस्य सिद्धत्वेनामृतपदस्य जीवधर्मशरीरोपाधिकमरणराहित्यपरत्व एव व्यावर्तकत्वोपपत्तेः । न च व्यावर्तकत्वे सम्भवति स्वरूपकथनमात्रार्थत्वं युक्तम् । अत एव 'राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इत्यत्र 'राज्ञः पुरोहितौ' इति षष्ठीतत्पुरुषैकशेषपक्षे क्षत्रियादन्यस्य पुरोहिताभावात् राजपदं व्यर्थं स्यादिति तं त्यक्त्वा 'राजा च पुरोहितश्च' इति द्वन्द्वमाश्रित्य राज्ञः पुरोहितस्य च कुलाययज्ञे सहाधिकार इति निर्णीतं पूर्वतन्त्रे । 'क्षरं त्वविद्या ह्यमृतं तु विद्या' (श्वे.५.१) इत्यत्रामृतपदं विशेष्यसमर्पणार्थम्, न त्वितरव्यावर्तनार्थम् । न वा तदपि सर्वथैवाव्यावर्तकम्; पूर्वं निर्दिष्टक्षरवैलक्षण्येन विशेष्यसमर्पकत्वात् । किञ्च उपक्रम एवान्तर्यामिविज्ञानेन सर्वज्ञानप्रतिज्ञाने सर्ववेदान्तप्रसिद्धे ब्रह्मलिङ्गे जाग्रति कथमौपसंहारिकैर्द्रष्टृत्वादिभिर्जीवपूर्वपक्षस्योदयः ? न च 'उपक्रमगतमेकं लिङ्गमुपरितनानेकलिङ्गविरोधे दुर्बलम्' इति भूतादिपादव्यपदेशसूत्रोक्तन्यायोऽत्र प्रसरति । ब्रह्माब्रह्मलिङ्गसमावेशे ब्रह्मण्यब्रह्मलिङ्गानां नेतुं शक्यत्वेनान्यथासिद्धतायाः प्रतर्दनाधिकरणे प्रदर्शितत्वात् । तस्मात् केनापि प्रकारेणात्र जीवपूर्वपक्षो न सम्भवतीति चेत्—

उच्यते । अस्ति तावदन्तःकरणोपाधिकानां कर्तृत्वभोक्तृत्वशालिनां प्रतिदेहमन्तःकरणभेदेन विभक्तानां प्रमातृरूपाणां जीवानामधिष्ठानभूतस्सुषुप्तावन्तःकरणविलयेन प्रमात्रभावेऽपि सौषुप्तिकाज्ञानसुखाद्यनुभवात्मा मूलाज्ञानोपाधिकस्साक्षिरूपो जीवः, स तु न प्रतिदेहं भिन्नः । 'त्वत्तोऽहं भिन्नः' इत्यादिभेदप्रत्ययानां प्रमातृविषयत्वेन लाघवादेकाज्ञानोपाधिकस्य सर्वभूतानुगतस्यैकस्यैव तस्य सिद्धेः, 'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च' (श्वे. ६. ११) इति श्रुतेश्च । न च इयं श्रुतिः परमेश्वरविषया; मायाशवलिते सगुणे परमेश्वरे 'केवलो निर्गुण' इति विशेषणानुपपत्तेः ।

न च सर्वभूतेषु सुखाद्यनुभवरूपस्य साक्षिण एकत्वे पुरुषान्तरसुखादेरपि पुरुषान्तरं प्रति प्रत्यक्षत्वापत्तिः; तस्य पुरुषान्तरं प्रति आवृतत्वात्, सर्वेषु साक्षिण एकत्वेऽपि यं प्रति यदनावृतं तं प्रत्येव तस्य तदनुभवरूपतायाः फलबलेन कल्पनात्, अन्यथा घटाद्यधिष्ठानं ब्रह्मचैतन्यमेवाध्यासिकसम्बन्धेन घटादिभासकमिति सर्वदा सर्वेषां घटाद्यवभासप्रसङ्गात् ।

न च वाच्यम्—यस्य स्वोपाध्यन्तःकरणवृत्तिकृता घटाद्यधिष्ठानचैतन्येनाभेदाभिव्यक्तिः, तस्यैव तदवभासते इति; व्यावर्तकोपाधावन्तःकरणे दर्पण इव स्थिते बिम्बप्रतिबिम्बाद्यात्मना भेदानुवृत्त्यवश्यम्भावेनाभेदाभिव्यक्त्यसम्भवात् । तात्त्विकाभेदस्य प्रागपि सत्त्वात् । तस्मादन्तःकरणवृत्तिकृतावरणाभिभवेन यं प्रति घटादिरनावृतः, तं प्रति तदधिष्ठानचैतन्यं घटाद्यवभासकमिति फलबलात् कल्पनीयम् । अभेदाभिव्यक्तिव्यवहारश्च ब्रह्मणा सह तस्य जीवस्य घटादिविषयावरणराहित्यरूपसाम्यापत्तिपर इति व्यवस्थापनीयम् । तस्मान्मूलाज्ञानोपाधिकस्सर्वेषां प्रत्यग्भूत एकस्साक्षीति स्थितौ स एवान्तर्यामीति **पूर्वः पक्षः** ।

अस्मिन् सर्वमप्यन्तर्यामिब्राह्मणं सङ्गच्छते । एवं हि तत्रोपाख्यायते—'अथ हैनमुद्दालक आरुणिः पप्रच्छ । याज्ञवल्क्येति होवाच । मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानाः । तस्यासीत् भार्या गन्धर्वगृहीता । तमपृच्छाम कोऽसीति । सोऽब्रवीत् कबन्ध आथर्वण इति । सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, वेत्थ नु त्वं काप्य तत् सूत्रं येनायञ्च लोकः परश्च लोकस्सर्वाणि च भूतानि सन्दृब्धानि भवन्तीति । सोऽब्रवीत् पतञ्जलः काप्यो नाहं तत् भगवन्वेदेति । सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, वेत्थ नु त्वं काप्यं तमन्तर्यामिणम् । य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो यमयतीति । सोऽब्रवीत् पतञ्जलः काप्यो नाहं तं भगवन्वेदेति । सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकांश्च, यो वै तत् काप्य सूत्रं विद्यात्तञ्चान्तर्यामिणं स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्वविदिति तेभ्योऽब्रवीत् तदहं वेद । तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वान् तञ्चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्द्धा ते विपतिष्यतीति । वेद वा अहं गौतम तत्सूत्रं चान्तर्यामिणमिति । यो वा इदं कश्चित् ब्रूयात् वेद वेदेति । यथा वेत्थ तथा ब्रूहि' (बृ. ३. ७. १) इति । एवं कथायां विजिगीषुणा गौतमवंश्येनारुणिना पृष्टो याज्ञवल्क्यो 'वायुर्वै गौतम तत् सूत्रम्' (बृ. ३. ७. २) इत्यारभ्य सूत्रात्मस्वरूपमुक्त्वा 'यः पृथिव्यान्तिष्ठन्' (बृ. ३. ७. ३) इत्यारभ्य 'यो रेतसि तिष्ठन्' (बृ. ३. ७. २३) इत्यन्तैः पर्यायैः पृथिव्यग्निवाय्वादिक्रमेण सर्वान्तर्यामिणमुपदिश्य 'अदृष्टो द्रष्टाऽश्रुतश्श्रोता' इत्यादिना तस्यादृष्टत्वद्रष्टृत्वादिकमुक्त्वा 'नान्योऽतोऽस्ति द्रष्टा' (बृ. ३. ७. २३) इत्यादिना ततोऽन्यं द्रष्टृत्वादिगुणकं निषिध्य 'एष त आत्माऽन्तर्याम्यमृतोऽतोऽन्यदार्तम्' (बृ. ३. ७. २३) इति तदतिरिक्तस्य सर्वस्यानित्यत्वं प्रतिपादयामास ।

अत्र तावदेकस्य सर्ववस्तुनियन्तृत्वोक्तिमारभ्य सर्वमप्युपपद्यते; एकस्यैव सर्वसाक्षिणो जीवस्य तत्तदन्तःकरणावच्छिन्नांशभेदद्वारा तदीयकार्यकरणोपकरणभूतसर्ववस्तुनियन्तृत्वात्। पृथिव्यादिसर्वनियन्तृसर्वभूतानुगतैकजीवरूपत्वेन जीवज्ञानस्य यज्ञविद्याऽनुपयोगितया काण्वस्य तदज्ञानसम्भवात्। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य सूत्रात्मनि 'वायुर्वै गौतम तत्सूत्रम्' इत्युक्त्वा 'तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रंसिषतास्याङ्गानीति। वायुना हि गौतम तत्सूत्रेण सन्दब्धानि भवन्ति' (बृ. ३. ७. २) इत्युपपत्त्युपन्यासेन च वायुरूपतयाऽवगते प्रशंसार्थत्वाव्यस्यम्भावेन तदेकवाक्योपात्तेऽन्तर्यामिण्यपि तदर्थत्वावगमात्। 'यः पृथिव्यां तिष्ठन्' इत्यादिपर्यायेषु तत्तज्जीवेभ्यो घटाकाशादिभ्यो महाकाशस्येव भेदनिर्देशसामञ्जस्यात्। 'एष त आत्मा' इति शब्दविशेषस्यापि अन्तःकरणावच्छिन्नस्यापि तव एष सकलसाक्षी जीव आत्मा व्यापकस्वरूपमिति सामञ्जस्यात्। अमृतत्वस्यापि तत्तदन्तःकरणावच्छिन्न इवाज्ञानोपाधिकस्सर्वगतो जीवस्तत्तच्छरीरापादानकोत्क्रमणरूपमरणवान्न भवतीति साङ्गत्यात्। दृष्टत्वादिवर्जनस्य च जीवस्य प्रमातृरूपाणामिव अनुगतसाक्षिरूपस्याप्रसिद्धतया सङ्गतत्वात्। द्रष्टृत्वादीनाञ्च अन्तःकरणावच्छिन्नप्रमातृरूपेण समन्वयात्। द्रष्ट्रन्तरादिनिषेधानाञ्च—कथमेकस्मिन् देहे द्वौ द्रष्टारौ जीवोऽन्तर्यामी च, देहेन्द्रियाणामनेकचेतनदर्शनाद्यर्थत्वे तदीयविरुद्धाभिप्रायानुवर्तनासम्भवात्, न च शरीरेन्द्रियान्तरैरन्तर्यामिणो दर्शनादिमत्त्वम्, 'यस्य पृथिवी शरीरम्' इत्यादिभिस्तस्य, नियम्यशरीरातिरिक्तशरीरेन्द्रियराहित्यावगमात्; इत्याशङ्कायां तत्र तत्र भेदनिर्देशेन देवमनुष्यादिरूपद्रष्ट्रतिरिक्तं तदन्तर्यामिरूपं द्रष्ट्रन्तरमुपदिष्टमिति न भ्रमितव्यम्; देवमनुष्यादिगतद्रष्टृत्वादिगुणैरेव अन्तर्यामी द्रष्टृत्वादिमानुपदिष्टः द्रष्टृत्वादिगुणकानां प्रमातृणामन्तर्यामितो वस्तुतो भेदाभावादित्यभिप्रायत्वात्। तस्मात् सर्वसाक्षी जीव एवान्तर्यामीति पूर्वपक्षान्तरमाशंक्य निराकरोति—

## शारीरश्चोभयेऽपि हि भेदेनैनमधीयते। २०।

शारीरश्चान्तर्यामी न भवति। उभयेऽपि माध्यन्दिनाः काण्वाश्च अन्तर्यामिणो भेदेन एनं पूर्वपक्ष्याशङ्कितं सर्वभूतानुगतसाक्षिरूपं शारीरमधीयते। 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत' इति माध्यन्दिनाः। अस्मिन्नेव पर्याये 'यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानं शरीरं यो विज्ञानमन्तरो यमयति एष त आत्माऽन्तर्याम्यमृतः' (बृ. ३. ७. २२) इति काण्वाः। अत्र विज्ञानशब्दस्य स्थानप्रमाणाज्जीव एवार्थ इत्यवगतम्। न चात्र वैपरीत्यं शङ्कनीयम्। आत्मशब्दस्य जीवे रूढत्वात् विज्ञानशब्दस्य च 'विज्ञानं

यज्ञं तनुते' ( तै. २. ५. १ ) इत्यादिश्रुत्यन्तरेषु जीवे दृष्टप्रयोगत्वाच्च । अयञ्च आत्मविज्ञानशब्दोक्तो जीवस्साक्षिरूप एव, न तु तत्तत्प्रमातृरूपः; एकवचननिर्देशात् ।

'यस्सर्वेषु भूतेषु तिष्ठन्' इति पर्याये भूतशब्दोदितानां सर्वेषां प्रमातृरूपाणां जीवानां पृथगन्तर्यामिनियम्यत्वस्य वर्णितत्वाच्च । तत्र भूतशब्दो 'भवन्ति जायन्ते' इति व्युत्पत्त्या न जडप्रपञ्चपरः; भूतशब्दस्य कार्ययोगतः प्राणिषु रूढेर्बलवत्त्वात् । न च तत्र महाभूतेषु रूढेः प्राणिषु रूढेश्च विनिगमनाविरहेण अन्योन्यप्रतिरोधे योगोन्मेषश्शङ्कनीयः; 'यः पृथिव्यान्तिष्ठन्' इत्यादिपर्यायेषु पृथिव्यादिमहाभूतानामुपात्तत्वेन अत्र प्राणिरूढेरेवोन्मेषात् । तस्मात्परमेश्वर एवान्तर्यामी । तत्र द्रष्टृत्वादिवर्णनं जीवाभेदाभिप्रायेण योज्यम् । द्रष्टन्तरादिनिषेधश्च द्रष्टृद्वयशङ्कावारणाय जीवाभेदाभिप्रायस्फोरणार्थत्वेन पूर्वपक्षोक्तरीत्यैव योजनीयः ।

सूत्रे 'शारीर' इत्येकवचनेन—एक एवाज्ञानोपाधिको जीवोऽन्तर्यामीति पूर्वपक्षः, न तु तद्विशेषा देवमनुष्यादिजीवा इति; 'य इमञ्च लोकम्' इत्यादावेकवचननिर्देशादिति सूचितम् । चकारात् पूर्वसूत्रात् नञोऽनुवर्तनं सूचितम् । 'उभये' इत्यनेन—काण्वमाध्यन्दिनपाठयोर्भिन्नभिन्नार्थान्तरपरत्वशङ्कानिराकरणद्वारा तत्रत्यभेदनिर्देश एवात्र हेतुः, न तु 'एष त आत्मा' 'यं सर्वाणि भूतानि न विदुः' इत्यादिभेदनिर्देशः, अन्तर्यामिणस्तत्तदुपासकजीवरूपत्वेन, सर्वजीवरूपत्वेन वा पूर्वपक्षस्य हि तादृशो भेदनिर्देशः प्रतिक्षेपकस्स्यान्न तु सर्वसाक्षिजीवरूपत्वेन पूर्वपक्षस्य; तादृशभेदनिर्देशानां प्रमातृसाक्षिभेदमादायोपपन्नत्वादिति सूचितम् । एतत्सूचनार्थत्वाभावे क्वाचित्कभेदनिर्देशेऽपि साध्यसिद्धेरुभयग्रहणं व्यर्थमेव स्यात् । न हि नानाशाखाऽऽम्नातशाण्डिल्यवैश्वानरविद्यादिगतविषयवाक्यानां ब्रह्मपरत्वसाधने नानाशाखाम्नातत्वमुद्घाटितम् । न वा अस्मिन्नधिकरणे 'तद्धर्मव्यपदेशात्' इति हेतोरुभयत्रापि समाम्नातत्वमुक्तम् । 'भेदेन' इत्युपलक्षणतृतीयानिर्देशेन—जीवस्येश्वरात् भेदो न विशेषणम्, किन्तु उपलक्षणमेव, मिथ्यात्वेन यावद्द्रव्यभावित्वादिति सूचितम् । एतत्सूचनार्थत्वाभावे लाघवात् 'भिन्नमेनमधीयते' इत्येवासूत्रयिष्यत । इदमप्यस्पष्टब्रह्मलिङ्गमधिकरणम्; योगिपूर्वपक्षनिराकरणार्थं यमयितृत्वस्य साधननिरपेक्षग्रहणौत्सर्गिकतया ब्रह्मलिङ्गतायाः प्रसाधनीयत्वात्, जीवपूर्वपक्षनिराकरणार्थं भेदेनाधीयत इति हेतोश्च स्थानप्रमाणादिभिर्नेयत्वात् । १. २. २० ।

इत्यन्तर्याम्यधिकरणम् ।५।



( ६ अधिकरणम् )

अदृश्यत्वादिगुणको धर्मोक्तेः । २१ ।

अथर्वणे श्रूयते 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यत् भूतयोनिं परिपश्यन्ति धीराः' (मु. १. ५. ६) इति ।

अत्रायमदृश्यत्वादिगुणको भूतयोनिः प्रधानं शारीरः परमात्मा वेत्यदृश्यत्वादीनां साधारण्यात् संशये प्रधानमिति तावत् **प्राप्तम्** । 'यथोर्णनाभिस्सृजते गृह्णते च यथा पृथिव्यामोषधयस्सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्' (मु. १.१.७) इति समनन्तरमन्त्रोक्ताचेतनदृष्टान्तसारूप्यात्, परिणामवादे विवर्तवादे च कनकरुचकस्रग्भुजङ्गरीत्याऽवश्यापेक्षितात् । अत्रापि 'यथा सुदीप्तात् पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवन्ते सरूपाः । तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु. २. १. १) इति उपरितनमन्त्रान्तरप्रदर्शितादचेतनात्मनःप्राणादिवक्ष्यमाणकार्यसारूप्याच्च ।

अपि च पृथिव्यादिदृष्टदृश्यत्वादिनिषेधस्याधिकरणविशेषाकाङ्क्षायां तस्यैव पृथिव्यादेरवस्थाभेदेनाधिकरणत्वे सम्भवत्यधिकरणान्तरं नापेक्षणीयम्; बुद्धिगौरवापत्तेः; बाल्यकार्श्यादिनिषेधानामवस्थाभेदेन प्रतियोग्यधिकरण एवान्वयस्यौत्सर्गिकत्वानुभवाच्च । पृथिव्यादीनाञ्च सूक्ष्मावस्थारूपं प्रधानं न तेभ्यो भिन्नम्; उपादानोपादेययोरभेदात् । तद्भेदाभ्युपगमेऽपि अचेतनपृथिव्यादिरूपदृश्यभिन्नतया प्रतिपाद्यमानमचेतनं प्रधानमेवेति युक्तम्; 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति न्यायेनाब्राह्मणादिशब्दवत् तदन्यवृत्तेश्शब्दस्य तत्सदृशान्यवृत्तित्वनियमात् । न ह्यब्राह्मणादिशब्दाः क्षत्रियादिष्विव लोष्टादिषु प्रयुज्यन्ते । अन्तर्यामिण्यदृष्टत्वादिश्रवणेऽपि द्रष्टृत्वाद्यनुरोधात् 'नञिवयुक्त' न्यायस्त्यक्तः । न चेह तत्त्यागे कारणमस्ति ।

नन्विहापि 'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते । अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतम्' (मु. १. १. ८) 'यस्सर्वज्ञस्सर्ववित्तस्य ज्ञानमयं तपः । तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते' (मु. १. १. ९) इत्यादिवाक्यशेषे ब्रह्मश्रुतिसर्वज्ञत्वलिङ्गादिकमाम्नायते । उपक्रमेऽपि 'कस्मिन्न भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु. १. १. ३) इति एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं ब्रह्मलिङ्गमाम्नायते । 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह' (मु. १. १. १) इति ब्रह्म-

विद्यासमाख्या दृश्यते। तथा 'द्वे विद्ये वेदितव्ये परा चैवापरा च' (मु. १. १. ४) इति विद्ययोः परापरविभागं कृत्वा तयोरपरामृग्वेदादिलक्षणामुक्त्वा 'अथ परा यथा तदक्षरमधिगम्यते' (मु. १. १. ५) इति वक्ष्यमाणाक्षरविद्यायाः परविद्यात्वमुच्यते। तदेतत् सर्वं न प्रधाने सङ्गमयितुं शक्यम्।

अपि च सर्वेषां कारणवाक्यानां 'ईक्षत्यधिकरणे' (१. १. ५) सांख्याभिमतप्रधानपरत्वं निरस्तम्। तदुपदर्शिता युक्तयोऽत्रापि प्रवर्तन्त एव। अस्ति खल्वीक्षापूर्वककर्तृत्वश्रवणमत्रापि—'तपसा चीयते ब्रह्म ततोऽन्नमभिजायते' इति। यतस्तपोऽत्र स्रष्टव्यालोचनरूपं ज्ञानं 'यस्य ज्ञानमयं तपः' (मु. १. १. ९) इत्यग्रे विवरणात्। आत्मशब्दश्चात्रास्ति—'यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि। दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः' (मु. २. २. ७) इत्यादिमन्त्रेषु। भूतयोनिनिष्ठस्य मोक्षोपदेशोऽप्यस्ति—'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' (मु. ३. १. ३) इत्यादिमन्त्रेषु। हेयत्वञ्च भूतयोनेरग्रे क्वापि नोच्यते। चकारसमुचितः प्रतिज्ञाविरोधोऽप्यस्तीति प्रदर्शितमेव। साक्षाच्च रुशब्देन परमेश्वरस्य कर्तृत्वमुपादानत्वं च श्रूयते 'यदा पश्यः' इत्यादिमन्त्रेषु। तथाऽप्यचेतनदृष्टान्तानुगुण्यं कार्यसारूप्यं दृश्यत्वादिनिषेध रस्यं चावलम्ब्यात्र प्रत्यवस्थानमिति चेत्। न। एतावत् ब्रह्मश्रुतिलिङ्गादिकमविगणय्य तन्मात्रावलम्बनेन प्रत्यवस्थानायोगात्। 'यथा सोम्यैकेन मृत्पिण्डेन' इत्याद्यचेतनदृष्टान्तोपादानस्य ईक्षत्यधिकरणे लिखित विषयवाक्येऽपि सत्त्वेन ततो भूतयोनिवाक्ये विशेषशङ्कानुदयात्। कार्यकारणसारूप्यनियमस्य न विलक्षणत्वाधिकरणे (२. १. ३) निराकरिष्यमाणत्वात्। तत्र परिणामवाद एव तच्छङ्कानिराकरणमित्यत्र नियामकाभावात्, स्वच्छजलगतनैल्यादिविवर्ते तद्व्यभिचारस्य स्फुटत्वाच्च। 'यथा सुदीप्तात्' इति मन्त्रस्यापि प्रलये ब्रह्मणि निलीनाश्चेतनास्सर्गादौ तत उद्गच्छन्तीत्येतत्परत्वोपपत्त्या सर्वस्य कार्यस्य कारणसारूप्यपरत्वासिद्धेः, निषेधरूपस्यायुक्तेः भूतयोनिः शारीर इति वा ब्रह्मेति वा पक्षयोरेवानुगुण्यस्य वक्ष्यमाणतया ततः प्रधानपूर्वपक्षस्योन्मेषासम्भवाच्च। तस्मात् प्रधानं भूतयोनिरिति पूर्वपक्षो न युक्त इति चेत्।

उच्यते। इहाक्षरस्य भूतयोनेः प्रतिपादनानन्तरं 'दिव्यो ह्यमूर्तः पुरुषस्स बाह्याभ्यन्तरो ह्यजः। अप्राणो ह्यमनाश्शुभ्रो ह्यक्षरात् परतः परः' (मु. २. १. २) इति ततोऽपि परस्य पुरुषस्य प्रतिपादनं दृश्यते। स पुरुषो ब्रह्मैवेति तत्र ब्रह्मश्रुत्यादीनां समन्वयः। 'तथाऽक्षरात् सम्भवतीह विश्वम्' (मु. १.१.७) इति अक्षरकार्यत्वेन वर्णिताद्विश्वस्मात् परतोऽक्षरादपि परत्वेन 'महतः परमव्यक्तमव्यक्तात् पुरुषः परः'

(क. ३. ११) इति कठवल्लीष्विव तस्यैव प्रतिपिपादयिषितत्वात्। यत्तु 'यया तदक्षरमधिगम्यते' (मु. १. १. ५) इति परविद्याविषयत्वमक्षरस्योक्तम्, तत् उपक्रान्तसर्वविज्ञानप्रतिज्ञानिर्वाहाय प्रतिपिपादयिषितम्। 'तपसा चीयते ब्रह्म' (मु. १. १. ८) इत्यादिमन्त्रेषु प्रतिपाद्यमानं ब्रह्मणस्सर्वोपादानत्वं ब्रह्मशक्तिरूपेण सकलनामरूपबीजभूतेनाव्याकृतेन इहाक्षरभूतयोनिशब्दगृहीतेन घटनीयमिति तस्यापि सर्वोपादानत्वेनात्र प्रतिपादनीयत्वमभिप्रेत्य, न तु स्वातन्त्र्येण तदेव प्रतिपादनीयमित्यभिप्रेत्य, 'अक्षरात् परतः परः' इत्यग्रे तत्प्रतिपादने च पारार्थ्यस्य स्फुटत्वात्।

ननु 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्' (मु. १. १. १३) इति अक्षरात्परत्वेन वर्णनीयेऽपि पुरुषे अक्षरशब्दश्श्रुतः। तेन स एव प्राधान्येन प्रतिपाद्यमानो भूतयोन्यक्षरम्। 'अक्षरात् परतः' इति पुरुषापरत्वेन श्रुतमक्षरमेव केवलमव्याकृतमिति कल्प्यतामिति चेत्, मैवम्। उभयथाऽप्युपपत्तौ ऊर्णनाभ्यादिदृष्टान्तानुगुण्येन 'यथा सुदीप्तात्' (मु. २. १. १) इति प्रकृतस्य भूतयोन्यक्षरस्य सरूपकार्यप्रभवत्वोक्त्यनन्तरमेव 'दिव्यो ह्यमूर्तः' इति मन्त्रे पुरुषस्याक्षरपरत्वोक्त्यानुगुण्येन च भूतयोन्यक्षरमेव पुरुषापरमक्षरम्। 'येनाक्षरम्' इति पुरुषे अक्षरशब्दस्तु 'न क्षरति' इति व्युत्पत्त्या प्रयुक्त इति कल्पनस्योचितत्वात्। असति विरोधे अचेतनदृष्टान्तानुगुण्यस्य 'यथा सुदीप्तात्' इतिमन्त्रे पञ्चम्याः 'तथाऽक्षरात् सम्भवतीह विश्वम्' इति पञ्चमीनिर्दिष्टभूतयोन्यक्षरपरत्वेन प्रतीयमानाक्षरशब्दस्वारस्यस्य च भङ्गायोगात्।

ननु सत्यमुक्तं भूतयोन्यक्षरस्य, सरूपकार्यप्रभवाक्षरस्य च पञ्चमीनिर्देशादभेदो वक्तव्य इति। तत एवाक्षरात् परस्य पुरुषस्यापि तदभेदो वक्तव्यः। तत्रापि हि 'ततोऽन्नमभिजायते' 'तस्मादेतत् ब्रह्म' इति जगदुपादानपरपञ्चमीनिर्देशो दृश्यते। तस्मात् 'यथा सुदीप्तात्' इति मन्त्रे अपादानपञ्चमीनिर्दिष्टस्य भूतयोन्यक्षरत्वेऽपि तदनन्तरमन्त्रे अवधिपञ्चमीनिर्दिष्टं ततो भिन्नमित्येव कल्पयितुं युक्तमिति चेत्; मैवम्। न हि पञ्चमीमात्रेण भूतयोनिसरूपकार्यप्रभवाक्षरयोरभेदं ब्रूमः, किन्त्वक्षरशब्दपरया पञ्चम्या। सा त्वक्षरात् परे पुरुषे नास्त्येव।

ननु तथाऽपि अपादानपञ्चमीप्रत्यभिज्ञानमात्रेण तदक्षरात्परस्यापि पुरुषस्य तदभेदः किं न स्यादिति चेत्; न। ब्रह्माव्याकृतयोरुभयोरपि विवर्तमानतया, परिणममानतया च 'मायां तु प्रकृतिं

विद्यात्' (श्वे. ४. १०) 'आत्मन आकाशस्सम्भूतः' (तै. २. १) इति श्रुतिद्वयानुरोधेन 'सन् घटः' 'जडो घटः' इति जगत्युभयतादात्म्यप्रतीत्यनुरोधेन च स्वाभिन्नकार्यजनकत्वरूपजगदुपादानत्वसत्त्वे सर्वविज्ञानप्रतिज्ञानिर्वाहकब्रह्मगतजगदुपादानत्वघटकतया अव्याकृतगतजगदुपादानत्वप्रतिपादनस्यापि सङ्गतिसत्वे चापादानपञ्चमीप्रत्यभिज्ञानमात्रेण प्रथमोपस्थितपञ्चम्यन्ताक्षरपदप्रत्यभिज्ञालभ्यस्य भूतयोनिसरूपकार्यप्रभवपरत्वावच्छ्यक्षराभेदस्य चेतनाधिष्ठिताचेतनोर्णनाभिदेहादिदृष्टान्तसारूप्यस्य च भङ्गायोगात् ।

ननु 'तथाऽक्षरात् सम्भवति' इत्यन्तमव्याकृतपरम्, 'तपसा चीयते' इत्यारभ्य 'येनाक्षरं पुरुषम्' इत्यन्तं ब्रह्मपरम्, ततो 'यथा सुदीप्तात्' इत्याद्यव्याकृतपरम्, पुनः 'दिव्यो ह्यमूर्तः' इत्यादि ब्रह्मपरमिति कथमिदमादरणीयमिति चेत्, अर्थसम्बन्धादिति गृहाण । उक्तं हि जैमिनिना विश्वजिदधिकरणे 'अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्धः' (जै. सू. ४. ३. ११) इति । उक्तञ्च वार्तिककृता 'आनन्तर्यमचोदना' (जै. सू. ३. १. २४) इत्यधिकरणे 'यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । अर्थतोह्यसमर्थानामानन्तर्यमकारणम्' इति ।

यदि त्वेवमपि भूतयोन्यक्षरस्य चाक्षरात्परस्य चाभेदे निर्बन्धः, तदा शारीरो भूतयोनिरस्तु । स हि साक्षिभावेन सर्वज्ञः । सर्वं वस्तु ज्ञाततया, अज्ञाततया वा साक्षिचैतन्यस्य विषय इति प्रसिद्धेः । कश्चित् किञ्चिज्जानातीत्येवं सर्वजीवानुगतसाक्षिभावेन विशिष्यापि सर्वज्ञः । अन्तःकरणप्राणेन्द्रियादीनां स्वप्नप्रपञ्चान्तर्गतगगनपवनचन्द्रसूर्यसरित्समुद्रभूगोलकादीनाञ्चोपादानभूतश्च ।

अत एवाध्यासभाष्यादिष्वन्तःकरणादीनां जीव एवाध्यासो दर्शितः । तेषां जीवतादात्म्यप्रतीतिश्चानुभवसिद्धा । विवरणे च प्रतिकर्मव्यवस्थायां ब्रह्मचैतन्यस्य उपादानतया घटादिसङ्गित्वम्, जीवस्य तदसङ्गित्वेऽपि अन्तःकरणसङ्गित्वञ्च तदुपादानत्वाभिप्रायेण वर्णितम् । भामत्याञ्च 'ज्योतिश्चरणाभिधानात्' (१. १. १०) इत्यधिकरणे जाठराग्नेर्जीवोपादानकत्वं जीवच्छरीरमृतशरीरयोरौष्ण्योपलम्भानुपलम्भाभ्यां दर्शितम् । कृत्स्नप्रसक्त्यधिकरणे (२. १. ८) च 'आत्मनि चैवं विचित्राश्च हि' (ब्र. सू. २. १. २८) इति सूत्रे जीवात्मनि स्वरूपानुपमर्देनानेकाकारस्वप्नप्रपञ्चसृष्टिवत् ब्रह्मणि वियदादिसृष्टिरुपपद्यत इति वर्णितम् । योनिशब्दस्य पञ्चमीनाञ्च निमित्तत्वपरत्वे जीवस्य वियदादिष्वपि धर्माधर्मद्वारा कारणत्वं वक्तुं शक्यम् । मुक्तप्राप्यत्वादिकं च साधकफलावस्थाभेदादिभिर्जीव एव सङ्गमयितुं शक्यम् ।

तथाऽपि जीव एवेति पक्षविशेषपरिग्रहे किं नियामकमिति चेत्; उच्यते । 'अगोत्रमवर्णमचक्षुश्श्रोत्रमपाणि पादम्' (मु. १. १. ६) इति जीवे प्रसिद्धस्य गोत्रवर्णादिनिषेधजातस्याधिकरणविशेषाकांक्षायां तस्यैव जीवस्य रजतात्मना प्रतीतस्य रङ्गस्य 'नेदं रजतम्' इति निषेध इवाधिकरणत्वे सम्भवति नाधिकरणान्तरमपेक्षणीयम् । तस्याधिकरणत्वासम्भवे परं तदन्यस्मिन्नधिकरणे ग्राह्ये 'नञिवयुक्त' न्यायेन तत्सदृशान्वेषणं भवति । यद्यपि दृश्यत्वग्राह्यत्वनिषेधानुरोधेन तदधिकरणमव्याकृतमिति लभ्यते, प्रथमश्रुतं च तन्निषेधद्वयम्, तथाऽपि बाहुल्याद्गोत्रादिनिषेधजातमेवानुरोद्धव्यम् । अग्रेऽपि हि 'दिव्यो ह्यमूर्तः' इति मन्त्रे जीवे प्रसिद्धस्य मूर्तिमत्त्वस्य मनःप्राणवत्त्वस्य च निषेधो दृश्यते । अतस्सर्वज्ञत्वादिकं प्राक्प्रदर्शितया रीत्या जीव एव नेतव्यम् । ब्रह्मविद्यासमाख्यादिकमपि निष्कृष्टजीवनिरूपणस्य ब्रह्मावगतिपर्यवसायित्वाभिप्रायं नेतव्यम् । तस्मात्प्रधानं जीवो वा भूतयोनिरिति **पूर्वः पक्षः** ।

**राद्धान्तस्तु**—भूतयोनिः परमात्मा । 'यस्सर्वज्ञस्सर्ववित्' (मु. १. १. ९) इति तद्धर्मरूपालिङ्गात्, 'तपसा चीयते ब्रह्म' (मु. १. १. ८) इति तदभिधानश्रुतेश्च । ननु तदुभयमक्षरात्परे पुरुषेऽन्वेति । 'तथाऽक्षरात्सम्भवतीह विश्वम्' (मु. १. १. ७) 'तथाऽक्षराद्विविधास्सोम्य भावाः' (मु. २. १. १) 'अक्षरात्परतः परः' इति पञ्चम्यन्ताक्षरशब्दानामेकरूपत्वेन तत्प्रत्यभिज्ञया भूतयोन्यक्षरस्य पुरुषशब्दोक्तब्रह्मपरत्वावश्यम्भावेन तत्र ब्रह्मश्रुतिलिङ्गयोरन्वयानर्हत्वात् । न च 'तपसा चीयते' 'यस्सर्वज्ञः' इति मन्त्रगताभ्यां 'ततः' 'तस्मात्' इति पञ्चमीभ्यां 'तथाऽक्षरात्' इति भूतयोनाववगतस्य उपादानत्वस्य प्रत्यभिज्ञानात् तत्रैव ब्रह्मश्रुतिलिङ्गयोरन्वयः स्यादिति वाच्यम् । अर्थैकरूप्यकृतप्रत्यभिज्ञानादपि शब्दैकरूप्यकृतप्रत्यभिज्ञानस्य प्राथमिकत्वेन बलवत्त्वात् । 'ततः' 'तस्मात्' इति पञ्चम्युक्तोपादानत्वस्य च प्रागुक्ताक्षरगतपरिणामित्वरूपोपादानत्वातिरिक्ततद्घटनीयब्रह्मगतविवर्ताश्रयत्वरूपसर्वविज्ञानप्रतिज्ञानिर्वाहकोपादानत्वान्तररूपत्वादिति चेत्;

उच्यते—'यस्सर्वज्ञः' इति मन्त्रे सर्वज्ञत्वं जगदुपादानत्वं चेत्युभयमपि न विधेयम्; अन्यतरानुवादेनान्यतरविधौ सम्भवति उभयविधानाङ्गीकारे गौरवात् । सम्भवति च जगदुपादानत्वस्य 'तथाक्षरात्सम्भवतीह विश्वम्' इत्यनुपदोक्तस्यानुवादेन सर्वज्ञत्वमात्रविधानम् । एवं 'तपसा चीयते' इति मन्त्रेऽपि तदनुवादेन तपसा स्रष्टव्यालोचनोपचितत्वमात्रविधानम् । न च मन्त्रयोः पौनरुक्त्यम्; द्वितीयमन्त्रस्य स्रष्टव्यसर्ववस्तुगताशेषविशेषविषयज्ञानरूपतया प्रथममन्त्रोक्ततपश्शब्दविवरणार्थत्वात् ।

अपिच 'ततः' 'तस्मात्' इति पञ्चमीभ्यां 'तथाऽक्षरात्' इत्यनुपदोक्तोपादानत्वप्रत्यभिज्ञानादपि नोपादानत्वान्तरपरत्वं तयोः कल्पयितुं युक्तम्; 'अक्षरात्परतः परः' इत्यतः 'ततः' 'तस्मात्' इत्यनयोः प्राक्पठितत्वेन तद्गतशब्दैकरूप्यकृतप्रत्यभिज्ञानादप्यत्रत्यार्थैकरूप्यकृतप्रत्यभिज्ञानस्यैव प्राथमिकत्वात् । न च प्रधाने सर्वज्ञत्वमसम्भवदपि जीवे सम्भवतीत्युक्तमिति वाच्यम् । जीवेऽपि स्रष्टव्यसकलवस्तुगताशेषविशेषविषयज्ञानवत्त्वरूपस्यात्र विवक्षितस्य सर्वज्ञत्वस्यासम्भवात् । तस्मात् सर्वज्ञत्वब्रह्मश्रुत्योर्भूतयोन्यन्वयित्वात्ताभ्यां भूतयोनिः परमात्मेति युक्तम् ।

सूत्रे यद्यप्यक्षरशब्देन धर्मिनिर्देशः कर्तुं युक्तः; तस्य विषयवाक्योपक्रमगतत्वात्, 'अक्षरधियां त्ववरोधः' (ब्र.सू. ३. ३. ३३) इति गुणोपसंहाराधिकरणे तस्योपादास्यमानत्वाल्लघुत्वाच्च, तथाऽपि तेन धर्मिनिर्देशे 'यस्सर्वज्ञः' इत्यादेर्लिङ्गवैरूप्यादन्वयो न सम्भवतीति तस्याक्षरात्परे पुरुष एवान्वयोऽभ्युपेय इति स्यादाशङ्का । तामदृश्यत्वादिगुणकभूतयोन्यभिप्रायेण सर्वज्ञपदे पुंल्लिङ्गोपपत्तिरिति सूचनेन निवारयितुं 'अदृश्यत्वादिगुणकः' इति धर्मिनिर्देशः कृतः ।

यद्यप्येवं सति 'भूतयोनिः' इत्येव धर्मिनिर्देशः कर्तुं युक्तो लाघवात्, तथाऽपि योनिशब्दस्य स्त्रीलिङ्गत्वेन प्रसिद्धिप्राचुर्यात् पुल्लिङ्गानन्वय इति मन्दशङ्कानिराकरणाय भूतयोनिशब्दस्य 'अद्रेश्यमग्राह्यं नित्यं विभुम्' इत्यादिविशेषणावगमितपुल्लिङ्गस्पष्टीकरणार्थम्, अन्तर्यामिगतादृष्टत्वादिवदक्षरगतादृश्यत्वादिकं द्रष्टृत्वादिमिश्रितं न भवतीति प्रत्यवस्थानहेतुस्फुटीकरणार्थं चैवं धर्मिनिर्देशः कृतः । 'धर्मोक्तेः' इत्यत्र धर्मः सर्वज्ञत्वं 'सर्वज्ञस्सर्ववित्' इति पदद्वयप्रयोगेणाशेषविशेषविषयतया स्फुटीकृतम् । उक्तिर्ब्रह्मश्रुतिः । धर्मोक्त्योर्द्वन्द्वैकवद्भावे सति नपुंसके नुमागमस्यानित्यत्वात्, मध्यमपदलोपिसमासाद्वा 'धर्मोक्तेः' इति निर्देशः । १. २. २१ ।

ननु 'अगोत्रमवर्णम्' इत्यादिनिषेधस्वारस्याज्जीवो भूतयोनिरिति प्रतीयते । 'तथाऽक्षराद्विविधास्सोम्य भावाः' इत्यत्र भावशब्दस्य भवन्ति—जायन्त इति व्युत्पत्त्या असंकुचितवियदादिसकलकार्यपरत्वौचित्येन तत्सरूपमक्षरशब्दोदितं कारणमव्याकृतमित्यवगतौ तदनन्तरमन्त्रे 'अक्षरात्परतः परः' इत्यक्षरात्परत्ववचनं तस्मादेवाक्षरात्परत्वविषयमित्यपि व्यवस्थितौ तदेवाक्षरं प्राग्भूतयोनित्वेनोक्तमिति ततोऽव्याकृतं भूतयोनिरित्यपि प्रतीयते इत्याशंक्याह—

विशेषणभेदव्यपदेशाभ्यां च नेतरौ । २२ ।

अक्षराद्भेदव्यपदेशेनाव्याकृतं भूतयोनिरिति न सिध्यति । किन्तु तत एव तत् भूतयोनि नं भवतीति सिध्यति । कथं ? 'तथाऽक्षराद्विविधाः' इत्यत्र पञ्चम्युपात्तमक्षरं तावद्भूतयोन्यक्षरमिति निर्विवादम् । तदेव 'दिव्यो ह्यमूर्तः' इति मन्त्रे पुरुषशब्देनोच्यते; 'स बाह्याभ्यन्तरः' इत्यत्र तच्छब्दस्य पूर्वमन्त्रप्रकृताक्षर-परामर्शित्वात् । न च बाह्याभ्यन्तरसहित इत्येकपदत्वेन योजनीयम्; वैयर्थ्यात्, 'बाह्याभ्यन्तर' इति सर्व-गतत्वोक्त्यैव बाह्याभ्यन्तरसकलवस्तुसंसर्गसिद्धेः । भिन्नपदत्वे च अक्षरात्परः पुरुष एव प्रकृताक्षरम्, न तु परत्वावधिभूतमक्षरमिति प्रत्यायनेन सार्थकत्वात । एवञ्च भूतयोन्यक्षरपरामर्शितत्पदसामानाधिकरण्येन 'अक्षरात्परतः' इत्यतः प्राचीनेन 'येनाक्षरम्' इति अक्षरपुरुषपदसामानाधिकरण्येन चाक्षरात्परः पुरुषो भूतयोन्यक्षरमिति स्थिते तदवरतया ततो भेदेन व्यपदिश्यमानमक्षरमव्याकृतामिति न तत् भूतयोन्यक्षरमिति सिध्यति । एवमगोत्रमित्यादिविशेषणेन शारीरो भूतयोनिरिति न सिध्यति, किन्तु तत् एव भूतयोनि न भवतीति सिध्यति, भूतयोनित्वस्य शारीरेऽपि सम्भवात्; तद्ग्रहणप्रसक्तौ तद्व्यावर्तनेनैव अगोत्रमित्यादि-विशेषणानां सफलत्वात् ।

ननु भूतयोनित्वेन शारीर एव गृहीते तस्मिन् गोत्रसम्बन्धादिप्रतीतिकाले तदभावायोगप्रसक्तौ तद्व्यवच्छेदकत्वेनागोत्रमित्यादीनां साफल्यमुक्तम् । युक्तं च तदेवागोत्रत्वादिरूपोपात्तविधेयगतत्वेन, तदयोगव्यवच्छे-दस्य प्रत्यासन्नत्वात्; न त्वन्यस्य शारीरस्य भूतयोनिपदग्राह्यत्वयोगव्यवच्छेदेन तेषां साफल्यं युक्तम्; अविधेय-गतफलस्य विप्रकृष्टत्वात्, प्रत्यासन्नफले लभ्ये विप्रकृष्टफलग्रहणायोगात् । अत एवावहननविधेर्विधेयावहनन-गताप्राप्तांशपरिपूरणरूपस्तदयोगव्यच्छेद एव फलम्, न त्वविधेयनखविदलननिवृत्तिरूपस्तदन्ययोगव्यवच्छेद इति नियमस्य परिसंख्यातो भेद इष्यते । अपि चान्ययोगव्यवच्छेदकत्वे गोत्रनिषेधादीनामाधिकरणान्तरमन्वे-षणीयमिति गौरवम् । अयोगव्यवच्छेदफलकत्वे प्रतियोगितया गोत्रादिमत्त्वेन बुद्धिस्थस्य शारीरस्यैवाधिकरण-त्वान्नान्यदाधिकरणमन्वेषणीयमित्यपि लाघवं प्रागुक्तमिति चेत्—

स्यादेवं यदि 'यादिदं पुरोवर्ति तन्न रजतम्' इतिवत् 'यो भूतयोनिस्स गोत्रादिमान्न भवति' इत्यगोत्रत्वादिकं विधेयं स्यात् । न त्वेवम्, किन्तु 'यो गोत्रादिरहितः तं भूतयोनिं पश्यन्ति' इत्युद्देश्यविशेष-

प्रतीत्यर्थतया तद्विशेषणत्वेनैव निर्दिष्टम् । तथा च यथा 'निश्चलश्चन्द्रः' इति चन्द्रोद्देशेन निश्चलत्वविधानस्य तरङ्गचन्द्रे अध्यस्तचलनप्रत्ययेन निश्चलत्वायोगप्रसक्तौ तद्व्यवच्छेदकत्वेऽपि 'निश्चलं चन्द्रं पश्य' इति तस्योद्देश्यविशेषणत्वेन प्रयोगे अध्यस्तचलनवत्तरङ्गचन्द्रव्यावर्तकतयैव सार्थकत्वमेवमिह 'यो भूतयोनिस्सगोत्रादिमान्न भवति' इति गोत्राद्यभावस्य विधेयत्वे शारीरे तदयोगव्यवच्छेदकत्वसम्भवेऽपि 'यो गोत्रादिमान्न भवति तं भूतयोनिं पश्यन्ति' इत्यस्मिन्नुद्देश्यविशेषणत्वेन प्रयोगे अध्यस्तगोत्रादिमच्छारीरव्यावर्तकतयैव सार्थकत्वं भवति । एवं 'दिव्यो ह्यमूर्तः पुरुषः' इति मन्त्रे अमूर्तत्वादिविशेषणानामपि तद्व्यावर्तकतयैव सार्थकत्वम्; तत्राप्यक्षरात्परत्वस्यैव विधेयत्वेनामूर्तत्वादीनामविधेयत्वात् ।

सूत्रे 'इतरौ' इति पूर्वाधिकरणनिर्दिष्टौ स्मार्तशारीरौ परामृश्येते । यद्यपि स्मार्तं प्रधानं सिद्धान्ते नेष्यते, तथाऽपि तदेव फलतोऽव्याकृतं भविष्यतीति तस्य परामर्शः । यद्यप्येवं सति स्मार्तशारीरनिराकरणपक्षहेत्वोः क्रमेणान्वयार्थं 'भेदव्यपदेशाविशेषणाभ्याम्' इति सूत्रणीयम्, तथाऽपि हेतुद्वयमप्युभयत्र योजयितुं शक्यमित्येवं सूत्रितम् । अमूर्तत्वादिविशेषणेन हि 'नञिवयुक्त' न्यायेनाव्याकृतव्यावर्तनमपि लभ्यते । यद्यपि मनुष्यपशुपक्षिसरीसृपरूपभूतग्रामयोनित्वेन प्रसिद्धा पृथिवीह भूतयोनिपदेन मा ग्राहीति तद्व्यावर्तनार्थेनादृश्यत्वाग्राह्यत्वविशेषणेन तत्सूक्ष्मावस्थारूपस्याव्याकृतस्य ग्रहणं प्रसज्यते, तथाऽपि अमूर्तत्वगोत्रत्वादीनां बाहुल्यात्तेषामेव स्वारस्यमादरणीयमित्युक्तम् । तथा 'येनाक्षरं पुरुषम्' 'अमूर्तः पुरुषः सः' इति पुरुषस्याक्षरविशेषणेनापि अव्याकृतव्यावर्तनं लभ्यते । एवं 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशम्' (मु. ३. १. ३) इति कर्तृकार्यभावेन, नियम्यनियामकभावेन, कर्तृकर्मभावेन च पुरुषशारीरयोर्भेदेन व्यपदेशात् पुरुषस्य च प्रागेवाक्षरपदसामानाधिकरण्यादिभिः भूतयोन्यक्षरत्वनिश्चयात् शारीरव्यावर्तनमपि लभ्यते ।

भाष्ये हेत्वोर्यथासंख्यान्वयः कण्ठतोऽनुक्तोऽपि न्यायत एवोन्नेतुं शक्यत इति व्युत्क्रमेणान्वयमात्रं दर्शितम् । किञ्च भेदव्यपदेशहेतुर्जीवपक्ष एवान्वेतुं योग्यः 'क्षरं प्रधानममृताक्षरम्' (श्वे. १. १०) इति श्रुत्यन्तरे तत्रैवाक्षरशब्ददर्शनेन पुरुषात्परस्याक्षरशब्दस्य तत्परत्वौचित्यादिति शङ्कानिराकरणाय चाव्याकृतपक्षनिराकरणे भेदव्यपदेशहेतुसद्भावमवगमयितुं व्युत्क्रमेणान्वयो दर्शितः । तस्यायमाशयः । सर्वविज्ञानप्रतिज्ञानिर्वाहाय ब्रह्मणो जगत्प्रकृतित्वप्रतिपादनस्थले तदुपपादकाव्याकृताधिष्ठातृत्वप्रदर्शनमेवात्राकाङ्क्षितमित्याकाङ्क्षाऽनुसारेण 'अश्नोति व्याप्नोति स्वकार्याणि' इति व्युत्पत्त्येहाक्षरशब्दोऽव्याकृत एव वर्तयितव्य इति । चस्त्वर्थः । विशेषणभेदव्यपदेशौ न स्मार्तशारीरपक्षसाधकौ, किन्तु तन्निराकरण एव साधकाविति

भाव: । अगोत्रत्वामूर्तत्वादीनि इतरव्यावर्तकरूपाणि विशेषणान्येव, न तु 'लोहितस्तक्षकः' इत्यादिवदयोगव्यवच्छेदकान्युपरञ्जकानीत्यभिप्रेत्य विशेषणपदमित्यलं प्रपञ्चेन । १. २. २२ ।

स्यादेतत्—अमूर्तत्वादीनां मूर्तिमत्त्वादिविशिष्टशारीरव्यावर्तकत्वरूपविशेषणत्वमनुपपन्नम्; 'अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्रे वाग्विवृताश्च वेदाः । वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा' (मु. २. १. ४) इति मन्त्रे भूतयोन्यक्षररूपस्य पुरुषस्य मूर्तीन्द्रियप्राणादिश्रवणात् । न चायं मन्त्रोऽन्यपरः । 'एष' इति सर्वनाम्ना 'दिव्यो ह्यमूर्तः पुरुषः' इति प्रकृतस्य तस्यैव परामर्शात् । अतो व्यवहारदृष्ट्या मूर्त्यादिमत्येव जीवे परमार्थदृष्ट्या मूर्त्यादिराहित्यपरत्वममूर्तादिपदानामगत्या कल्पनीयमिति जीव एव भूतयोन्यक्षररूपः पुरुष इति युक्तम् ।

ननु जीवेऽग्निमूर्द्धत्वादिविशिष्टं रूपं न संभवतीति चेत्; सत्यं; जीवान्तरे न संभवत्येव, हिरण्यगर्भे तु तत् संभवति; तस्य स्मृतिषु तथाभूतरूपप्रसिद्धेः । सर्वभूतान्तरात्मत्वमपि प्राणात्मना सर्वभूतानामध्यात्ममवस्थिमाने तस्मिन्व्यपदेष्टुं शक्यम् । तस्मिन् सर्वज्ञत्वसर्वस्रष्टृत्वादिकं श्रुतिस्मृतिषु प्रसिद्धमेव । न च वाच्यमक्षरादव्याकृतात्परो हिरण्यगर्भः, तस्मात् परत्वम् मूर्तपुरुषस्य श्रुतमिति; पराक्षरपदयोः प्राक् दर्शितया रीत्या सामानाधिकरण्ये संभवति वैयधिकरण्यकल्पनायोगात् । न च ब्रह्मविद्यासमाख्याविरोधः । तत्र ब्रह्मशब्दस्य पुल्लिङ्गस्य समाससंभवात्, 'ब्रह्मा देवानां प्रथमस्संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता' इत्युपक्रमे पुंलिङ्गस्यैव तस्य श्रवणाच्च । परविद्यात्वमप्यापेक्षिकं हिरण्यगर्भविद्यायां वक्तुं शक्यम् । न च सर्वविज्ञानप्रतिज्ञाविरोधः; अन्तर्यामिब्राह्मणे सूत्रात्मनस्तस्य ज्ञानात्सर्वविज्ञानस्य वर्णितत्वेन तद्वदिहाप्युपपत्तेः । तस्मात् समष्टिपुरुषो हिरण्यगर्भ एव भूतयोन्यक्षररूपः पुरुष इति युक्तमित्याशङ्क्याह—

## रूपोपन्यासाच्च । २३ ।

न विग्रहादिमत्त्वविवक्षया 'अग्निर्मूर्द्धा' इत्यादिकमुपन्यस्तम्; किन्तु अग्न्यादिविकाररूपेष्वधिष्ठानेषु मूर्धत्वादिरूपकमात्रं मुखचन्द्रन्यायेनोपन्यस्तं सर्वात्मत्वविवक्षया । दृश्यते ह्यन्यत्रापि शरीररथत्वप्रियशिरस्त्ववेदनिश्वसितत्वादिरूपकम् । शरीरादिषु रथत्वाद्यसंभववदग्न्यादिषु मूर्धत्वाद्यसंभवोऽपि अविशिष्ट एव । तस्मादमूर्तत्वादीनां विशेषणत्वस्याविचलत्वात्तैरन्यजीवानामिव हिरण्यगर्भस्यापि व्यावर्तनं स्यादेव ।

सूत्रे रूपशब्देन रूपकमुक्तम् । रूपयति अधिष्ठानमारोप्यरूपेण रूपवन्तं करोतीति हि रूपकशब्दव्युत्पत्तिः । तत्र ण्वुला रूपकशब्दवत् पचाद्यचा रूपशब्दोऽपि वर्तितुमर्हति । अयञ्च सूत्रार्थो भाष्यकृता स्वमतरीत्या सूत्रव्याख्यानानन्तरमाशङ्कापरिहाराभ्यां स्पष्टीकृतः । 'एतस्माज्जायते प्राणः' (मु. २. १. ३) इति मन्त्रात् क्रियानुषङ्गेण 'अग्निर्मूर्द्धा' इति मन्त्रस्य त्रैलोक्यशरीरो हिरण्यगर्भः भूतयोन्यक्षरादजायतेत्यर्थपरत्वमङ्गीकृत्य 'रूपोपन्यासात्' इति सूत्रस्य, 'पुरुष एवेदं विश्वम्' इति सार्वात्म्य-रूपब्रह्मलिङ्गोपन्यासात् भूतयोनिः परमात्मा, इति योजनान्तरमपि भाष्ये दर्शितम् । तत् 'स्मर्यमाणमनुमानं स्यात्' इत्युत्तराधिकरणसूत्रविरुद्धमित्यस्वारस्यं भाष्य एव 'केचित्' इत्यनेन ध्वनितम् । चकारः समाख्या-दिसमुच्चयार्थः । १. २. २३. ।

इत्यदृश्यत्वाधिकरणम् । ६ ।

( ७ अधिकरणम् )

**वैश्वानरस्साधारणशब्दविशेषात् । २४ ।**

छान्दोग्ये श्रूयते 'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' (छा. ५. १८.२) इति । अत्र वैश्वानरशब्दस्य जाठरतृतीयभूततदधिष्ठातृदेवतासाधारणत्वादात्मशब्दस्य जीवात्मपरमात्मसाधा-रणत्वाच्च क एषोपास्य इति संशये अनिर्धारणेन पूर्वः पक्षः । छान्दोग्ये 'को न आत्मा किं ब्रह्म' (छा. ५. ११. १) इत्युपक्रमेऽपि वाजसनेयिशाखायां 'वैश्वानरं ह वै भगवन् सम्प्रति वेद तन्नो ब्रूहि' इति वैश्वानरशब्दोपक्रमदर्शनेन उपक्रमस्याविनिगमकत्वात् । 'स सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा. ५. १८.१) इति च महाफलश्रवणस्य वचनबलादब्रह्मोपासनायामप्युपपत्तेः । न हि ब्रह्मोपासनाया महाफलत्वम् नाब्रह्मोपासनाया इति नियमोऽस्ति; 'चक्षुष्यश्श्रुतो भवति' इति ब्रह्मोपासनाया अपि अल्पफलत्वश्रवणात्, अब्रह्मोपासनाया अपि पञ्चाग्निविद्याया महाफलत्वश्रवणाच्च । 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ' (छा. ५. १८. २) इति द्युसूर्यवाय्वाकाशजलपृथिवीनां वैश्वानरं प्रति मूर्द्धचक्षुःप्राणमध्यमूत्रस्थानपादावयवत्वोक्तेश्च पूर्वाधिकरणो-क्तरीत्या शरीररथत्वादिवत् कल्पनामात्ररूपत्वात्, तत्कल्पनायाश्च ब्रह्मणीव जाठरादिष्वपि सम्भवात् ।

तस्मादुपक्रमादिभिर्वैश्वानरो ब्रह्मेति निर्णयो न युक्तः, प्रत्युत 'प्रादेशमात्रम्' इति परिच्छिन्नत्वश्रवणान्न ब्रह्म, किन्तु जाठरादिषु चतुर्ष्वन्यतम इति निर्णय एव युक्त इति **पूर्वः पक्षः** ।

**सिद्धान्तस्तु**—द्युमूर्द्धत्वादिकल्पना सर्वोपादानत्वेन, सर्वनियन्तृत्वेन च सर्वविकारानुगते ब्रह्मणि सालम्बना, न तु जाठरादिषु । सर्वलोकाद्याश्रयफलश्रवणञ्च सर्वलोकाद्यात्मकब्रह्मोपासनाया एव तत्क्रतुन्यायानुसारि । सर्वपापप्रदाहश्च ब्रह्मोपासनफलत्वेनैव वेदान्तेषु प्रसिद्धतरः । शाखाभेदेन ब्रह्मवैश्वानरशब्दयोरुपक्रमश्रुतत्वाविशेषेऽपि ब्रह्मशब्दो वैश्वानरशब्दवदनेकसाधारणत्वाभावाज्झटित्येवार्थविशेषसमर्पकः । ततश्च यद्यप्यात्मवैश्वानरशब्दौ साधारणौ, तथाऽपि तयोः परमात्मपरत्वावगमकद्युमूर्द्धत्वादिविशेषसद्भावात् वैश्वानरः परमात्मेति ।

सूत्रे 'विशेषात्' इति एतावति वक्तव्ये आत्मवैश्वानरशब्दयोस्साधारण्यकीर्तनं न केवलमिह शब्दसाधारण्यमधिकरणान्तरवत् संशयमात्रबीजम्, किन्तु पूर्वपक्षस्यापि तदेव बीजमिति दर्शयितुम् । तेन जाठरादीनां पञ्चानां चतुर्णां वाऽनवधारणेनात्र पूर्वपक्ष इति सूचितं भवति । १. २. २४ ।

ननु द्युमूर्द्धत्वादिविशिष्टरूपं हिरण्यगर्भस्यापि भवति स्मृतिषु प्रसिद्धम् । तत्कथं परमात्मलिङ्गम् ? न च 'अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ' (मु. २. १. ४) इत्यादीनां द्युमूर्द्धत्वादिप्रतिपादकश्रुत्यन्तराणां परमात्मविषयत्वाद्वैदिकप्रसिध्या तत्परमात्मलिङ्गं स्यादिति वाच्यम्; हिरण्यगर्भे तादृग्रूपस्मरणस्यापि मूलश्रुत्याकाङ्क्षत्वेन तत्रापि वैदिकप्रसिद्धेरनिवार्यत्वादित्यत आह—

**स्मर्यमाणमनुमानं स्यादिति । २५ ।**

परमात्मनोऽपि तावदीदृशं रूपं स्मर्यते 'यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः । सूर्यश्चक्षुर्दिशश्श्रोत्रं तस्मै लोकात्मने नमः' । 'द्यां मूर्द्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे । दिशश्श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिन्त्यात्मा सर्वभूतप्रणेता' इत्याद्यासु स्मृतिषु । तच्च स्मर्यमाणं रूपमस्याः श्रुतेराथर्वणादिश्रुतेश्च मुलत्वानुमापकं सत् हैरण्यगर्भतादृग्रूपस्मरणस्यापि मूलाकांक्षापूरकं भवितुं शक्तम् । उपासनाविवक्षया सर्वात्मत्वविवक्षया च परमात्मनि श्रुतिप्रतिपन्नस्यैव द्युमुर्द्धत्वादिकल्पनस्य सर्ग स्थितिप्रलयकर्तृत्वादेरिव परमात्मशक्त्यभिव्यक्तिमति हिरण्यगर्भे स्तुत्यर्थतया स्मरणोपपत्तेः । अतः परमात्मन

एवैतत्त्रैलोक्यात्मकं रूपं स्मर्यत इति फलतः पर्यवस्यतीति तत्स्मर्यमाणं रूपमुदाहृतश्रुतिवाक्यानां मूलत्वानुमापकं सत् वैश्वानरस्य परमात्मत्वे लिङ्गं भवितुमर्हति । अतस्तेन लिङ्गेन वैश्वानरः परमात्मेति युक्तमेव ।

अस्मिन्नर्थे सूत्रमावृत्त्या योजनीयम् । तत्र स्मर्यमाणमित्यस्य परमात्मनस्स्मर्यमाणं त्रैलोक्यात्मकं रूपमित्यर्थो योजनाद्वयेऽपि समानः । आद्ययोजनायामनुमानमित्यस्य मूलश्रुत्यनुमापकमित्यर्थः, स्यादित्यस्य—भवितुं शक्यमित्यर्थः । 'शकि लिङ् च' (पा. सू. ३. ३. १७२) इति शक्तौ लिङ्प्रत्ययः । किं भवितुं शक्यमित्याकाङ्क्षायामपनोद्यशङ्कानुसारेण हैरण्यगर्भतादृग्रूपस्मरणस्य मूलश्रुत्याकांक्षापूरकमित्यध्याहृतेन स्याच्छब्दस्यान्वयः । इयञ्च योजना 'यस्मात्परमेश्वरस्यैवाग्निरास्यन्द्यौर्मूर्द्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते' इति भाष्येण फलप्रदर्शनमुखेन सूचिता, अन्यथा हिरण्यगर्भस्यापि तादृग्रूपस्मरणसत्वेन भाष्ये परमेश्वरस्यैवेत्यवधारणानुपपत्तेः । इति शब्दो द्वितीययोजनाप्रदर्शनीयमर्थं प्रति हेतुत्वार्थः । यस्मादेवं तस्मात् स्मृतिप्रसिद्धं परमात्मनो रूपं मूलभूतश्रुत्यनुमापकतया प्रथमयोजनायां प्रदर्शितं, अनुमानं स्यात्, वैश्वानरस्य परमात्मत्वे लिङ्गं भवतीत्यर्थः । इयं योजना 'तत्स्मर्यमाणम्' इत्यादिभाष्येण स्पष्टमेव दर्शिता । अस्यामपि योजनायामितिशब्दो हेत्वर्थः । स च 'यस्मादिदं गमकं तस्मादपि वैश्वानरः परमात्मा' इति भाष्येण दर्शितः ।

ननु स्मर्यमाणं परमात्मनो रूपं वैश्वानरवाक्यमाथर्वणवाक्यं चेत्युभयमपि किमर्थं मूलश्रुतित्वेनापेक्षत इति चेत्; स्मृत्युक्तसर्वावयवप्रतिपत्त्यर्थमिति ब्रूमः । चन्द्रस्य चक्षुष्ट्वं ह्याथर्वणवाक्यादेव प्रतिपत्तव्यम् । दिवो मूर्द्धत्वन्तु वैश्वानरवाक्यात् । ततः प्रतिपद्य आथर्वणेऽपि 'असौ वात्र लोको गौतमाग्निः' (छा. ५. ४. १) इति श्रुत्यनुसारेण द्युपरोऽग्निशब्द इति निश्चेतव्यम् । न च वैश्वानरवाक्येपि दिवो मूर्द्धत्वं नोक्तमिति शंक्यम्; तत्रोपक्रमानुसारेण सुतेजश्शब्दस्य द्युपरत्वात् ।

एवं ह्युपाख्यायते—औपमन्यवादयः पञ्च महर्षयः 'को न आत्मा किं ब्रह्म' इति मीमांसित्वा निश्चयमलभमाना वैश्वानरोपासनापरमुद्दालकं गत्वा तेनापि तस्यामकृत्स्नवेदिना अश्वपतिः कैकयो वैश्वानरमुपास्ते तमभ्यागच्छाम' इत्युक्ता उद्दालकषष्ठास्तमभ्यगमन् । कैकयः 'तान् परीक्ष्य ततो वक्तव्यशेषं वक्ष्यामि' इत्यभिसन्धाय, 'औपमन्यव कं त्वमात्मानमुपास्से' (छा. ५. १२. १) इत्यादिना तान् षडपि ऋषीन् क्रमेण पृष्ट्वा तैः 'दिवमेव भगवो राजन्' (छा. ५. १२. १) इत्यादिभिर्यथाक्रमं द्युसूर्यानिलाकाशजला-

वनिषु वैश्वानरबुध्या हे रुपास्यमानतयोक्तेषु द्युप्रायो वैश्वानरस्य मूर्द्धादिपादान्तावयवा एव, न तु ते वैश्वानरबुध्योपास्या इति व्यस्तोपासनाः प्रतिषिध्य समस्तोपासनाविषयस्य वैश्वानरस्य प्रागुपक्षिप्तद्युमूर्द्धत्वादि-विशिष्टं रूपमेकीकृत्य उपदिदेश 'मूर्द्धैव सुतेजाः' (छा. ५. १८. २) इत्यादिना । एवं 'यस्याग्निरास्यम्' इत्यग्निमुखत्वस्मरणांशेपि श्रुत्यन्तरापेक्षणं द्रष्टव्यम् । १. २. २५ ।

अथ वैश्वानरो जाठरोऽग्निरेवेति निर्धारणेन पूर्वपक्षान्तरमुपपादकमुखेन उद्भाव्य निराकरोति—

**शब्दादिभ्योऽन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसम्भवात् पुरुषमपि चैनमधीयते । २६ ।**

न वैश्वानरस्तृतीयभूतं, तदधिदेवता, जीवः, परमात्मा वा, किन्तु जाठर एव । अयमग्निर्वैश्वानरो योऽयमन्तःपुरुषे येनेदमन्नं पच्यते' (बृ. ५. ९) इत्यादिवाक्यान्तरे विशिष्य जाठरे प्रसिद्धाद्वैश्वानरशब्दात्, 'स एषोऽग्निर्वैश्वानरः' (श. ब्रा. १०. ६. १. ११) इति वाजसनेयके समानप्रकरणे अस्मिन्वैश्वानर एव प्रयुक्तादग्निशब्दात्, 'हृदयङ्गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' (छा. ५. १८. २) इति त्रेताग्निकल्पनालिङ्गात्, 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' इति प्राणाहुत्यधिकरणतालिङ्गात्, 'पुरुषेऽन्तःप्रतिष्ठितं वेद' (श. ब्रा. १०. ६. १. ११) इति वाजसनेयके श्रुतात्पुरुषान्तःप्रतिष्ठितत्वलिङ्गाच्च । यद्यप्यग्निवैश्वानरशब्दौ 'विश्वस्मा अग्निं भुवनाय देवाः वैश्वानरं केतुमह्नामकृण्वन्' (ऋ. सं. १०. ८८. १२) 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः' (ऋ. सं. १. ९८. १) इत्यादिश्रुत्यन्तरेषु तृतीयभूततदधिष्ठातृदेवतयोरपि दृष्टौ, पुरुषान्तःप्रतिष्ठितत्वञ्च जीवपरमात्मनोरपि प्रसिद्धम्, तथाप्युक्तरूपत्रेताग्नित्वकल्पनम्, प्राणाहुत्याधारतासङ्कीर्तनञ्च जाठर एव सङ्गच्छते । स हि 'सन्तापयति स्वं देहमापादतलमस्तगः' (तै. ४. १३. ३०) इति देहव्यापित्वेन श्रुतः; प्राणाहुतिद्रव्यस्यान्नस्य पाचकश्च, देहव्यापिन्यग्नावेव हि हृदयादिप्रदेशावच्छेदेन गार्हपत्यत्वादिकल्पनं युक्तम् । आहुतिद्रव्यपाचकस्यैव चाग्नेस्तदाधारत्ववर्णनं युक्तम् 'अवाड्ढव्यानि सुरभीणि कृत्वा' इति श्रुतितः, प्रत्यक्षतश्च आहुतिद्रव्याधारस्यैवाग्नेस्तत्पाचकत्वावगमात् । एवञ्च 'यस्य येनार्थसम्बन्ध' इति न्यायेनाग्निवैश्वानरशब्दयोर्जीवपरमात्मपक्षनिराकरण एवान्वयः, अन्तःप्रतिष्ठितत्वहेतोः भूतदेवतापक्षनिराकरण एवान्वयः, न त्वेषां जाठरत्वसाधनेऽन्वयः । अत एव सूत्रे जाठर इत्यभिमतसाध्यमनिर्दिश्य नञा पक्षान्तरनिराकरणमेव साध्यत्वेन निर्दिष्टम् । त्रेताग्नित्वकल्पनप्राणाहुत्याधारत्वलिङ्गयोस्तु चतुर्णामपि पक्षान्तराणां निराकरणेन तदर्थलब्धजाठरत्वसाधनेन चान्वयो द्रष्टव्यः ।

एवं सिद्धान्त्यभिमतपरमात्मपक्षनिराकरणे, पूर्वपक्ष्यभिमतजाठरपक्षसाधने चोपयुक्ततया अन्तरङ्ग-हेतून् 'शब्दादिभ्यः' इत्यनेन निर्दिश्यादिशब्देन ग्रहीतुं शक्यमप्यन्तःप्रतिष्ठितत्वमनवधारणपूर्वपक्षप्राप्तभूत-देवतापक्षनिराकरणमात्रार्थतया तेभ्यो विलक्षणं बहिरङ्गमिति द्योतयितुमेव पृथक् बहिर्निर्दिष्टम् । न च जाठरे द्युमूर्द्धत्वाद्यसम्भवः; वाजसेनयके 'स होवाच मूर्द्धानमुपदिशन्नुवाच एष वा अतिष्ठा वैश्वानर इति । चक्षुषी उपदिशन्नुवाच एष वै सुतेजाः वैश्वानर इति । नासिके उपदिशन्नुवाच एष वै पृथग्वर्त्मात्मा वैश्वानर इति । मुख्यमाकाशमुपदिशन्नुवाच एष वै बहुलो वैश्वानर इति । मुख्या अप उपदिशन्नुवाच एष वै रयिर्वैश्वानर इति । चुबुकमुपदिशन्नुवाच एष वै प्रतिष्ठा वैश्वानरः' इत्युपासकमूर्द्धादीनामतिष्ठासुतेजश्शब्दाद्युक्तद्युलोक-सूर्यादिरूपवैश्वानरमूर्द्धचक्षुराद्यात्मना संपादनात्तैर्जाठरस्यापि द्युमूर्द्धत्वादिव्यपदेशोपपत्तेः, छान्दोग्येऽपि 'यस्त्वेत मेवं प्रादेशमात्रम्' (छा. ५. १५. १) इति विशेषणानुसारेण वाजसनेयकप्रतिपादितमूर्द्धचुबुकान्तराल-कल्पितद्युमूर्द्धत्वादेरेवावश्यमुपादेयत्वाच्च । न च 'स एषोग्निर्वैश्वानरो यत्पुरुषः' (श. ब्रा. ७. ३. १. ३५) इति वाजसनेयकगतपुरुषत्वव्यपदेशविरोधः, उपासकमूर्द्धादिचुबुकान्तावयवेषु वैश्वानरं प्रति मूर्द्धादिपादान्ता-वयवत्वस्य कल्पिततया तल्लब्धशरीरत्वसादृश्येन जाठरेऽपि तद्व्यपदेशोपपत्तेः । अत एव अनन्तरं 'स यो हैतम्' इत्यादिवाक्ये पुरुषविधत्वकीर्तनम् । न हि मुख्ये पुरुषत्वे पुरुषविधत्वकीर्तनमुपपद्यते । एवं च छान्दोग्यगतौ ब्रह्मात्मशब्दावपि कल्पितेन द्युमूर्द्धत्वादिना जाठरस्याथर्वणोक्तब्रह्मसादृश्यादुपपादनीयौ । तदेत-द्द्युमूर्द्धत्वाद्यसम्भवपरिहारजातं द्योतयितुमप्यन्तःप्रतिष्ठानादिति हेतुः पृथङ्निर्दिष्टः । तेन हि वैश्वानरः परमात्मेति वदता सिद्धान्तिनाऽपि 'पुरुषेऽन्तः प्रतिष्ठितम्' इत्यनेन स्वरसतः प्रतीतस्य पुरुषेऽन्तःपर्याप्त-वृत्तित्वस्य परमात्मनि स्वरूपेण प्रसिद्धद्युमूर्द्धत्वादिना चासम्भवतो निर्वाहाय उपासकमूर्द्धादिचुबुकान्तावयव-कल्पितशरीरावच्छिन्नत्वमेव शरणीकर्तव्यमिति जाठरेऽपि न द्युमूर्द्धत्वाद्यसम्भवः, नापि ब्रह्मश्रुत्यादिविरोध इति द्योतितं भवति ।

सूत्रे चशब्देन फलविशेषनिर्देशासम्भवपरिहारस्समुच्चितः । 'अन्नमत्ति' इति श्रुतं फलं न ब्रह्मोपासनायामेव नियतम्; 'एतयाऽन्नाद्यकामं याजयेत्' इत्यादिषु कर्मणामपि तत्फलश्रवणात् । सर्वपापप्र-दाहस्तु प्राणाग्निहोत्रस्यैव फलत्वेन श्रुताः; न वैश्वानरविद्यायाः । तस्माद्वैश्वानरो जाठर एवेति **पूर्वः पक्षः** ।

**सिद्धान्तस्तु** 'वैश्वानरो न परमात्मा, किन्तु जाठर' इति नैतैः श्रुतिलिङ्गैरभ्युपगन्तुं युक्तम्; जाठरप्रतीकस्य, जाठरोपाधिकस्य वा परमात्मनः उपासनोपदेशः इत्यङ्गीकारेण एतेषां श्रुतिलिङ्गानामन्यथा

नेतुं शक्यत्वात्। केवले जाठरे द्युमूर्द्धत्वादेरसम्भवेन तस्यानन्यथासिद्धत्वात्। न चोपासकमूर्द्धचुबुकान्तराल कल्पितद्युमूर्द्धत्वादेर्जाठरेऽपि सम्भवोऽस्तीति शंक्यम्; छान्दोग्ये 'दिवमेव भगवो राजन्निति होवाच' (छा. ५. १२. १) इत्याद्युपक्रमानुसारेण 'मूर्द्धैव सुतेजाः' इत्यादेः प्रसिद्धद्युप्रभृतिमूर्द्धत्वादिपरतया तस्य जाठरे असम्भवात्। उभयविधश्रुत्यनुसारेण छान्दोग्ये अधिदैवतं प्रसिद्धदिवादिषु मूर्द्धादिपादान्तावयवरूपत्वं वाजसनेयके अध्यात्ममुपासकमूर्द्धादिषु द्य्वादिपृथिव्यन्तत्रैलोक्यात्मकवैश्वानरमूर्द्धादिपादान्तावयवरूपत्वमुपास्यमित्युभयविधस्यापि द्युमूर्द्धत्वादेः प्रामाणिकत्वात्। छान्दोग्यगतप्रादेशमात्रत्वोक्तिनिर्वाहस्याग्रे सूत्रकृतैव प्रदर्शयिष्यमाणत्वात्, उपासकमूर्द्धादिकल्पितद्युमूर्द्धत्वादेरपि तन्नियन्तरि परमात्मनीव गगनादिवत् तत्सम्बन्धमात्रशालिनि जाठरे असम्भवाच्च।

एवं द्युमूर्द्धत्वाद्यसम्भवेन तल्लब्धसादृश्योपपादनीयानां ब्रह्मात्मपुरुषश्रुतीनामप्यसम्भवो व्याख्यातः। तथा फलनिर्देशोऽपि जाठरपक्षे न सम्भवति। न हि 'अन्नमत्ति' इति कर्मफलसाधारणमन्नादत्वमात्रमुच्यते; सर्वभूतलोकात्मसम्बन्धिनोऽन्नस्याप्रसिद्धत्वात्, किन्तु सर्वेषु भूतेषु लोकेषु सर्वेष्वात्मसु च यद्यद्भोग्यमुपासकस्य स्पृहणीयं सम्भवति, तत् सर्वं सङ्कल्पमात्रेण प्राप्नोतीत्येतत् 'तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. ७. २५. २) इत्यादिश्रुत्यन्तरेषु ब्रह्मोपासनाफलत्वेन प्रसिद्धमत्रोच्यते। सर्वपापप्रदाहश्च न प्राणाग्निहोत्रफलत्वेन उच्यते; वैश्वानरविद्याङ्गस्य प्राणाग्निहोत्रस्य पृथक्फलानपेक्षत्वात्, किन्तु प्रधानापेक्षितफलत्वेनैव प्राणाग्निहोत्रसन्निधौ निर्दिश्यते। एवं परमात्मसाधकानां द्युमूर्द्धत्वादिलिङ्गब्रह्मात्मपुरुषश्रुतिफलविशेषरूपाणां सर्वेषामपि हेतूनां जाठराग्निसाधकानां तथा दृष्ट्युपदेशेन ब्रह्मणीव जाठराग्नौ सम्भवाभावः 'असम्भवात्' इत्यनेन संगृहीतः।

ननु पुरुषश्रुत्यसम्भवस्यापि 'असम्भवात्' इत्यनेनैव संग्रहे 'पुरुषमपि' इत्यादिसूत्रशेषः किमर्थः? 'अन्तःप्रतिष्ठानात्' इति पृथङ्निर्दिष्टहेत्वन्तरनिराकरणार्थं इति चेत्; न। अग्निवैश्वानरश्रुतित्रेताग्निकल्पनप्राणाहुत्याधारत्वलिङ्गानां परमात्मन्यसम्भवतामपि द्युमूर्द्धत्वाद्यनुसारेण तथा दृष्ट्यभिप्रायतया नयने परमात्मन्यपि सम्भवतोऽन्तःप्रतिष्ठितत्वस्य दुर्बलस्य पृथङ्निराकरणहेत्वनपेक्षत्वात्। तदपेक्षत्वेऽपि 'पुरुषमपि' इत्यादिसूत्रशेषेण पुरुषश्रुतिव्यतिरिक्तस्य हेतोरलाभात्, तस्य चासम्भवादित्यनेनैव लब्धत्वादिति चेत्।

अत्र ब्रूमः—'असम्भवात्' इत्यनेन न केवलं परमात्मसाधकानां द्युमूर्द्धत्वादीनामेवासम्भवः संगृहीतः, किन्तु जाठरपक्षसाधकत्वेन पूर्वपक्षिणोपन्यस्तस्य पुरुषेऽन्तःप्रतिष्ठितत्वस्याप्यसम्भवः संगृहीतः।

पुरुषेऽन्तःप्रष्ठितत्वं हि जीवेऽन्तःप्रतिष्ठितत्वम् । तत्तु परमात्मन्येव सम्भवति; 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' इति श्रुत्यन्तरप्रसिद्धेः, न तु जाठराग्नाविति । तत्र पुरुषशब्देन शरीरं विवक्षितम्, न तु जीवः 'इदं वाव तज्ज्योतिर्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इति जाठराग्नावेव शरीरान्तर्वर्तित्वाभिप्रायेण 'अन्तःपुरुषे' इति निर्देशदर्शनादिति शङ्कायामिदमुत्तरं 'पुरुषमपि चैनमधीयते' इति । अत्रायमाशयः—भवेदेवं यदि 'यदिदमस्मिन्नन्तः पुरुषे ज्योतिः' इत्यत्र ज्योतिरिवैनं वैश्वानरं केवलं पुरुषान्तवर्तिनमधीयीरन् । न त्वेवम्; इह तु वैश्वानरं पुरुषमप्यधीयते 'स यो हैतमग्निं वैश्वानरं पुरुषं पुरुषविधं पुरुषेऽन्तः प्रतिष्ठितं वेद' इति । तथा च ज्योतिर्वाक्ये पुरुषपदस्य शरीरपरत्वेन जाठरपर्यवसाने विरोधिपुरुषपदान्तरसान्निधानाभावात्तत्र तथात्वेऽपि अत्र तद्विरोधिपुरुषपदान्तरसन्निधानसत्त्वान्न तथात्वमिति ।

ननु पुरुषपदान्तरसान्निधानं कथमिह जाठरपर्यवसानविरोधीति चेत्; तदाकर्णय । 'पुरुषं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितम्' इति त्रयाणामपि पुरुषपदानामैकार्थ्यं तावदभ्युपगन्तव्यम् । ऐकार्थ्यसम्भवे 'स्याच्चैकस्य ब्रह्मशब्दवत्' (ब्र. सू. २.३.५) इति न्यायानवतारात् । तथा च यदात्मकत्वं यद्विधत्वं यदन्तःप्रतिष्ठितत्वं चात्र वैश्वानरशब्दोक्तत्वेनालोच्यमानानां मध्ये कस्य चित् सम्भवति, स एव पुरुषशब्दार्थो वक्तव्यः । सम्भवति च परमात्मनो जीवरूपत्वं सर्वात्मत्वात् जीवविधत्वं च द्युमूर्द्धत्वादिलब्धसादृश्यात् । जीवान्तः प्रतिष्ठितत्वं च सर्वान्तर्यामित्वात् । जाठरस्य त्वचेतनस्य न जीवात्मत्वं जीवविधत्वं जीवान्तर्यामित्वं वाऽस्ति । तस्मात् पुरुषं पुरुषविधमिति विरोधिपुरुषपदसान्निधानात् जाठरे पुरुषान्तर्वर्तित्वस्याप्यसम्भवो युक्त एव ।

ननु 'पुरुषमपि चैनम्' इति सूत्रं लिखित्वा कथं पुरुषमप्यधीयते पुरुषविधमप्यधीयते इति व्याख्यातम् ? उच्यते । ''पुरुषविधम् इत्यपि केचित् सूत्रावयवं पठन्ति'' इति भाष्ये दर्शितम् । तत्र भगवतो बादरायणादेव केचन शिष्याः पुरुषमिति पाठं अन्ये शिष्याः पुरुषविधमित्यपि पाठं श्रुतवन्त इति तत्तत्सम्प्रदायानुसारिणस्तथा तथा पठन्तीति पाठद्वयमपि सूत्रकारप्रणयनमूलमित्येव भाष्याभिप्रायः । न हि सूत्रकारानुपज्ञमसाम्प्रदायिकं सम्पातायातपाठं भगवत्पादा लिखन्ति । अतः पाठद्वयमप्येकीकृत्य तथा व्याख्यातम् । सूत्रे चशब्दः तुशब्दार्थे वर्तमानः प्रसक्तशङ्कानिवृत्त्यर्थः सन् जाठरे पुरुषान्तःप्रतिष्ठितत्वासम्भववर्णनेन प्राग्लिखिताशङ्कावतारं सूचयतीति सर्वमनवद्यम् । १. २. २६ ।

अथ त्रैलोक्यव्याप्त्यभावेन जाठरस्य वैश्वानरत्वासम्भवेऽपि महाभूताग्निः स भविष्यति । तस्य हि द्युलोकादिव्याप्तिरवगम्यते 'यो भानुना पृथिवीं द्यामुतेमामाततान रोदसी अन्तरिक्षम्' इति । तस्य

पुरुषेऽन्तःप्रतिष्ठितत्वं च जाठररूपेण सम्भवति। अथवा तच्छरीरा देवता वैश्वानरो भविष्यति। सा हैश्वर्ययोगेन द्युलोकाद्यधिष्ठातुं शक्नोति। पुरुषान्तःप्रतिष्ठितत्वं च तत्र सम्भवति 'अग्निर्वाक् भूत्वा मुखं प्राविशत्' इति श्रुतेरित्याशङ्कां जाठरपक्षनिराकरणहेत्वतिदेशेन निराकरोति—

## अत एव न देवता भूतं च ।२७।

अचेतनस्य भूतस्य द्युनूर्याद्यधिष्ठातृत्वं न सम्भवति। तदसम्भवे च गगनादिसाधारणेन सम्बन्धमात्रेण तस्य द्युमूर्द्धत्वादिकल्पनं न शोभत इति जाठरपक्षनिराकरणप्रकारेणैव भूतपक्षनिराकरणमिति न तत्रातिदेशसूत्रनिवर्तनीयाधिकाशङ्काऽस्ति। अतो देवतायामैश्वर्येण द्य्वाद्यधिष्ठातृत्वसम्भवाद्द्युमूर्द्धत्वादिकल्पना युज्यत इति देवतापक्षेऽधिकशङ्कां निरपेक्षैश्वर्यपरमेश्वरगताधिष्ठातृत्वग्रहणसम्भवे सापेक्षग्रहणमयुक्तमिति अन्तर्याम्यधिकरणन्यायस्मारणेन निराकर्तुमेवेदं सूत्रम्। भूतपक्षनिराकरणं त्वन्वाचयशिष्टमिति अन्वाचयार्थेन चकारेण सूचितम्। अथवा चकारेण जीवपक्षनिराकरणं समुच्चीयते। १. २. २७।

एवं द्युमूर्द्धत्वाद्यसम्भवेन पक्षान्तरपरिग्रहायोगात् परमात्मन्येव जाठरप्रतीकत्वेन, जाठरोपाधिकत्वेन वा अग्निवैश्वानरश्रुतित्रेताग्निकल्पनाप्राणाहुत्याधारत्वलिङ्गानि नेतव्यानि। पुरुषान्तःप्रतिष्ठितत्वं तु परमात्मन्येव सम्भवति. न जाठरादिष्वित्युक्तम्। इदानीं यद्यग्निश्रुत्यादिचतुष्टयं वैश्वानरे साक्षादेव योजनीयम्, यदि च 'पुरुषेऽन्तःप्रतिष्ठितम्' इत्यत्र पुरुषशब्दस्य ज्योतिर्वाक्य इव शरीरपरत्वं वक्तव्यम्, तदाऽप्येतत्सर्वं परमात्मनि न विरुद्धमित्याह—

## साक्षादप्यविरोधं जैमिनिः। २८।

पुरुषेऽन्तःप्रतिष्ठितत्वं तावन्मूर्द्धादिचुबुकान्तावयवकल्पितमूर्द्धादिपादान्तावयवाधिष्ठातृत्वेन शरीरान्तर्गते परमात्मन्युपपद्यते। त्रेताग्निकल्पनं प्राणाहुत्यधिकरणत्वं चात एव तस्मिन्नुपपद्यते। प्राणाहुतिपाचकत्वेन प्रसिद्धे जाठरेऽग्नौ तदुभयं स्वारसिकम् इति चेत्; न। आस्यं ह्याहवनीयायतनत्वेन कल्पितम्। न च जाठरस्य जठरप्रतिष्ठितस्य स्वोष्ममात्रेण सकलदेहसन्तापकस्यास्यमायतनमिति स्वारसिकम्। पाचकत्वं तु सर्वशक्तेर्ब्रह्मणोऽपि अविशिष्टम्। तस्मान्मूर्द्धादिचुबुकान्तावयवप्रतिष्ठिते तस्मिन्नेवास्यस्य आहवनीयायतनत्वकल्पनं प्राणाहुत्यधिकरणत्वं चोपपद्यत इति तस्मिन्नेव स्वरूपेण त्रैलोक्यशरीरित्वेन च सकलदेहव्यापके गार्हपत्यादिकल्पनमप्युपपाद्यम्। अग्निवैश्वानरशब्दावपि 'अग्निः कस्मात्, अग्रणीर्भवति अग्रं नीयते अग्रं नयति।

वैश्वानरः कस्मात्? विश्वान्नरान्नयति, विश्व एनं नरा नयन्तीति वा, विश्वानर एव वैश्वानरः, राक्षसो वायस इतिवत्; रक्ष एव हि राक्षसः, वय एव हि वायसः' इति निरुक्तदर्शितेन केनचिद्योगेन तस्मिन्नुपपद्यते। अवश्यं ह्यग्निवैश्वानरशब्दयोरन्यतरस्येह यौगिकत्वं वाच्यम्। रूढ्योभयोर्ज्वलनपरत्वे पर्याययोरेकत्र प्रयोगस्य वैयर्थ्यप्रसङ्गात्। तदिहोभयोरप्यस्तु निरुक्तसार्थकत्वाय परमात्मविषयबहुश्रुतिलिङ्गानुग्रहाय च। सूत्रे अपि-शब्देन पुरुषशब्दस्य शरीरपरत्वे अविरोधः समुच्चीयते। जैमिनिग्रहणं स्वशिष्योपपादितप्रकारोऽयमिति तत्ख्या-पनार्थम्। एवमुत्तरत्रापि ऋषिविशेषग्रहणे फलं द्रष्टव्यम्। १. २. २८।

कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरिति तां व्याख्यातुमारभते—

**अभिव्यक्तेरित्याश्मरथ्यः। २९।**

द्युलोकादिपृथिव्यन्तेषु मूर्द्धादिपादान्तावयवत्वेन कल्पितेषु उपासकानुग्रहार्थमतिमात्रस्यापि परमेश्वर-स्याभिव्यक्तेर्द्युलोकादिप्रदेशसम्बन्धिनी मात्रा परिमाणमस्येति वा प्रकर्षेण परमेश्वरमूर्द्धत्वादिकल्पनाकृतेना-दिश्यन्ते उपदिश्यन्त इति प्रादेशाः द्युलोकादयः, तन्मात्रं तत्परिमाणमिति वा प्रादेशमात्रत्वमित्याश्मरथ्यो मन्यते। यद्यपि प्रादेशशब्दस्य उक्तयोगात् परिमाणविशेषरूढिर्बलीयसी, तथाप्येवं प्रादेशमात्रमिति प्रागु-पदिष्टं द्युमूर्द्धत्वादिप्रकारमेवंशब्देन परामृश्य तेन प्रकारेण प्रादेशमात्रत्वोपन्यासात्तेन च प्रकारेण द्वाद-शाङ्गुलिपरिमाणत्वायोगादिह योगः एव ग्राह्यः इत्याश्मरथ्याभिप्रायः। एतन्न्यायसूचनार्थमेव अर्भकौकस्त्वादि-सूत्रसिद्धस्याप्यस्य पुनस्सूत्रणम्। १. २. २९।

अथ रूढिमाश्रित्य मतान्तरं प्रदर्शयति—

**अनुस्मृतेर्बादरिः। ३०।**

प्रादेशमात्रहृदयप्रतिष्ठेन मनसा अनुस्मर्यमाणत्वात् प्रादेशमात्रत्वम्, यथा प्रस्थमितानां यवानां प्रस्थत्वम्। यद्यपि तदन्तर्गत्या तदवच्छिन्नेष्विव, तेन ज्ञायमानेषु तत्परिमाणं व्यपदिष्टं न दृष्टम्, तथाऽपि रूढ्यपरित्यागेन यथाकथञ्चिदालम्बनमात्रमिति बादरिर्मन्यते। १. २. ३०।

अत्राप्यपरितोषेण मतान्तरमाह—

**संपत्तेरिति जैमिनिस्तथा हि दर्शयति। ३१।**

समानप्रकरण वाजसनेयिब्राह्मणे त्रैलोक्यात्मना वैश्वानरस्यावयवानामध्यात्मं मूर्द्धादिचुबुकान्ता-वयवेषु सम्पादनाद् रूढ्यपरित्यागेन तदवच्छेदकृतमञ्जसैव प्रादेशमात्रत्वमिति जैमिनिर्मन्यते। १. २. ३१।

## आमनन्ति चैनमस्मिन् । ३२ ।

आमनन्ति चैनं परमेश्वरमस्मिन्मूर्धचुबुकान्तराले सम्पत्त्यधिष्ठानत्वेन पूर्वसूत्रप्रकृते जाबालाः 'स एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठितः' (जा. २. १) इत्यारभ्य 'कतमश्चास्य स्थानं भवति भ्रुवोर्घ्राणस्य च यः सन्धिः' (जा. २.१) इति । अतः परमेश्वरस्य मूर्द्धचुबुकान्तरालवर्तिताया: शाखान्तरेऽपि दृष्टत्वात् तदवच्छेदकृतं प्रादेशमात्रत्वमिति निर्वहणं युक्तम् । इदं प्रादेशमात्रत्वं छान्दोग्ये पूर्वोक्तप्रकारो न भवति इत्येवंशब्दानुपपत्तिरिति चेत्, न । एवं अधिदैवतं प्रसिद्धद्युमूर्द्धत्वादिविशिष्टं रूपम्, प्रादेशमात्रमध्यात्मं मूर्द्धचुबुकान्तरालप्रतिष्ठितप्रादेशमात्रंच इत्युभयविधोपासनालाभाय एवं प्रादेशमात्रमित्यनयोर्विशेषणद्वयत्वोपपत्तेः । वाजसनेयके 'तथा तु व एनान्वक्ष्यामि यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामि' इति प्रतिज्ञापूर्वकं 'स होवाच मुर्द्धानमुपदिशन्' इत्यादेरारब्धत्वेन छान्दोग्येऽपि समानप्रकरणे मूर्द्धचुबुकान्तरालप्रतिष्ठितत्वलभ्यस्यैव प्रादेशमात्रत्वस्य ग्राह्यत्वात् । तस्माद्यद्यपि 'अभिव्यक्तेः' इति सूत्रस्य रूढ्यपरित्यागेनाप्रादेशमात्रोऽप्युपासकानुग्रहार्थं प्रादेशमात्रत्वेनाभिव्यज्यत इत्यर्थान्तरं भाष्ये दर्शितम्, 'अनुस्मृतेः' इति सूत्रस्य च प्रस्थपरिमितयवन्यायानपेक्षणेन अप्रादेशमात्रोऽपि प्रादेशमात्रत्वेनानुस्मरणीय इत्यर्थान्तरं दर्शितम्, तथाऽपि शाखान्तरे वैश्वानरस्य प्रादेशमात्रत्वं यथोपपादितं तथैव छान्दोग्येऽपि तत् ग्रहीतुं युक्तमिति जैमिनिपक्ष एव सिद्धान्तः । अत्र द्युमूर्द्धत्वादिरूपस्य ब्रह्मलिङ्गस्य कल्पनामात्रसिद्धत्वात् प्रादेशमात्रत्वश्रवणेनोपासकमूर्द्धादिषूपसंहृतत्वप्रतीतेः वेदिबर्हिर्गार्हपत्यादिकल्पनप्रतिरुद्धत्वाचास्पष्टता । १. २. ३२ ।

इति वैश्वानराधिकरणम् । ७ ।

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजि

श्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृतौ शारीरकन्यायरक्षामणौ

प्रथमाध्यायस्य द्वितीयः पादः ।



# अथ तृतीयः पादः

### द्युभ्वाद्यायतनं स्वशब्दात् । १ ।

इहाप्यस्पष्टब्रह्मलिङ्गान्येव वाक्यानि विचार्यन्ते । पूर्वः पादः सविशेषप्रधानः । अयन्तु निर्विशेषप्रधान इति पादभेदः । 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः । तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ अमृतस्यैष सेतुः' (मु. २. २. ५.) इत्याथर्वणिकोपनिषन्मन्त्रे द्युपृथिव्यादीनामोतत्ववचनेनावगम्यमानं तेषामायतनं प्रधानम्, ब्रह्म वेति द्युपृथिव्याद्यायतनत्वसाधारणधर्मदर्शनात् संशये

**पूर्वपक्षः** प्रधानमेवैतत्, न ब्रह्म, 'अमृतस्यैष सेतुः' इति अमृतसम्बन्धित्वसेतुत्वव्यपदेशात् । न ह्यमृतमेव सदपारं ब्रह्मामृतसम्बन्धित्वव्यपदेशं सेतुत्वव्यपदेशं वाऽर्हति । तस्मादमृतस्य मुक्तजीवस्य बन्धावस्थायां भोग्यत्वेन सम्बन्धि परिच्छिन्नं प्रधानं द्युभ्वाद्यायतनमिति युक्तम् । ननु प्रधानमपि सेतुशब्दस्य न मुख्योऽर्थः । पारवत्त्वेन गौणार्थस्तत् इति चेत् तर्हि ब्रह्मैव धारकत्वेन गौणार्थोऽस्तु । भवति हि ब्रह्म प्रसिद्धसेतुर्जलस्येव भावप्रधानामृतशब्दार्थस्य मोक्षस्य धारकम् ।

वस्तुतो धारकत्वेन सेतुशब्दस्य ब्रह्मणि गौणतैव युक्ता; 'अथ य आत्मा स सेतुर्विधृतिः' (छा. ८. ४. १)' 'एष सेतुर्विधरणः' (बृ. ४. ४. २२) इत्यादिश्रुत्यन्तरे सेतुशब्दस्य ब्रह्मणि तथा गौणतायाः 'परमतः सेतून्मान' (३. २. ३१) इत्यधिकरणे व्यवस्थापितत्वात्, अमृतत्वस्य धारक इत्यन्वयसंघटनाच्च, न तु पारवत्त्वेन प्रधाने गौणता युक्ता; अमृतस्य पारवानित्यन्वयासंघटनात् । षष्ठ्यन्तनिर्दिष्टस्य तत्प्रतिसम्बन्धितावच्छेदकरूपवत्त्वेन उपस्थित एव ह्यन्वयः । अत एव 'चैत्रस्य पुत्रः' इत्यत्रेव 'चैत्रस्य धनवान्' इत्यत्र नान्वयसंघटना; चैत्रस्य पुत्रत्वेन सम्बन्धी धनवानित्यतिक्लिष्टार्थस्य कल्पनीयत्वात् । तस्मात् अमृतस्य सेतुरित्यन्वयस्वारस्यानुरोधेनामृतशब्दस्याविद्यानिवृत्तिरूपामृतत्वपरत्वं युक्तमेवेति चेत्, मैवम् । सेतुशब्दस्यान्तर्याम्यधिकरणन्यायादाजानसिद्धाविनाभूतपारवत्त्वेन गौणत्वे संभवति कादाचित्केन धारकत्वेन गौणत्वकल्पनाऽयोगात् । न च धारकत्वं कादाचित्कत्वेऽपि शब्दार्थैकदेशत्वेनान्तरङ्गमिति शङ्क्यम् । पारवत्त्वस्यापि तदविशेषात् । पारावारशब्दितपरावरतीरद्वयपर्यन्तानुस्यूतो जलविधारको हि सेतुशब्दार्थः, न तु जलविधारकमात्रम्; जलकुम्भादीनामपि तदर्थत्वप्रसङ्गात् । वस्तुतः पारावारपर्यन्तो जलबन्धनहेतुरेव सेतुशब्दार्थः, न तु तथाभूतो जलविधारकः; 'षिञ् बन्धने' (धा. पा. १२४९) इति धातोः सेतुशब्दव्यु-

त्पत्तेः। न च बन्धनधारणयोरैक्यम्, निगलादेर्बन्धकत्वेऽप्यधारकत्वात्। सेतुस्तु निगलादिवन्न केवलं बध्नाति, किन्तु बद्धं जलं धारयति चेति सेतुशब्दार्थान्तर्गतस्य बन्धनस्य फलमेव धारणम्, न शब्दार्थैकदेशः। पारवत्त्वं तु शब्दार्थैकदेश एव। जलबन्धनहेतुमात्रस्य सेतुशब्दार्थत्वे घटोदरनिस्सरज्जलबन्धनहेतुमधूच्छिष्टादेरपि तदर्थत्वप्रसङ्गेन पारावारमध्यवर्तित्वविशेषणावश्यम्भावात्। तस्मात् सहजत्वात्, शब्दार्थैकदेशत्वाच्च पारवत्त्वेनैव सेतुशब्दस्य गौणता युक्ता। 'अमृतस्य सेतुः' इति तु नान्वयः, किन्तु 'अमृतस्यैष' इति। तावन्मात्रेणैव च 'तस्येदम्' (पा. सू. ४. ३. १२०) इति सूत्र इव षष्ठ्यन्तपदवाच्यसम्बन्धित्वमुच्यते, सेतुशब्देन चामृतपदानन्वितेनैव पारवत्त्वं लक्ष्यत इति न किञ्चिदवद्यम्।

नन्वत्राधिकरणन्यायाल्लक्षकपदेन समभिव्याहृतपदार्थान्तरस्वारस्यानुसार्येव लक्षणीयम्। इह धारकत्वमेव तथा, न पारवत्त्वम्। तथाहि—आत्मश्रुतिस्तावत् ब्रह्मण्येव सङ्गच्छते; तस्य चेतनवाचित्वात्। 'अन्या वाचो विमुञ्चथ' इति वाग्विमोकपूर्वकं विधीयमानं ज्ञेयत्वमपि तत्रैव सङ्गच्छते; तस्य 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायात् बहूञ्छब्दान्वाचो विग्लापनं हि तत्' (बृ. ४. ४. २१) इति श्रुत्यन्तरे ब्रह्मणि प्रतिपन्नत्वात्। तथा द्युभ्वाद्यधिकरणत्वमप्यन्तर्याम्यधिकरणन्यायेन निरपेक्षं ब्रह्मण्येव सङ्गच्छते। तस्मादात्मश्रुत्याद्यनुरोधेन सेतुशब्दे ब्रह्मगतधारकत्वलक्षणैव युक्तेति चेत्, उच्यते—इह द्युभ्वाद्यायतनत्वमनुवाद्यम्, न तु 'सदायतनाः सत्प्रतिष्ठाः' (छा. ६. ८. ४) इत्यत्रेव प्रतिपाद्यम्; 'यस्मिन्' इत्यनुवादलिङ्गदर्शनात्। अनुवादश्च प्राप्तिसापेक्षः। प्राप्तिस्त्वानुमानिक्येव ग्राह्या, न तु श्रुत्यन्तरलभ्या। यत आनुमानिकी प्राप्तिः श्रौतप्राप्तेः शीघ्रतरा। अनुमानस्य प्रत्यक्षमात्रापेक्षा श्रुतेर्व्युत्पत्तिग्रहादावुभयापेक्षेत्यनुमानतः श्रुतेः श्रुतितः श्रौतलिङ्गस्येव विलम्बितप्रवृत्तिकत्वात्। ततः द्युभ्वाद्यायतनत्वेनानुमानगम्यं प्रधानमेव 'यस्मिन्द्यौः' इत्यादिनाऽनूद्यत इति मन्त्रोपक्रमस्य तावत् प्रधान एव स्वारस्यमवगम्यते। तथोपसंहारस्यापि तत्र स्वारस्यमुपपादितम्। एवञ्चोपक्रमोपसंहारानुसारेण प्रतर्दनाधिकरणन्यायान्मध्यपातिन्यात्मश्रुतिः 'अन्या वाचो विमुञ्चथ' इत्युक्तिश्च नेतव्या। अनेकसाधारणी चात्मश्रुतिः 'आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि' इत्यभिधानकोशदर्शनात्, 'रसात्मकस्योडुपतेश्च रश्मयः' (कुमा. स. ५. २२) इत्यादिष्वन्यत्रापि तत्प्रयोगदर्शनाच्च। ननु तद्वदिहात्मशब्दः स्वभावपर इति वक्तुमयुक्तम्; धर्मिपरपदसामानाधिकरण्यात्, वस्तुनिर्देशादेव तत्स्वभावस्य सिद्धत्वेन स्वभावपरत्वे वैयर्थ्यप्रसङ्गाच्चेति चेत्, न। स्वभावपरत्वासम्भवेऽपि देहपरत्वोपपत्तेः। उपपद्यते हि द्युभ्वाद्यायतनमेकमेव युष्माकं देहं जानीध्वम्, स्थूलशरीररूपदेहान्तरविषया देहत्ववाचो विमुञ्चथ इति।

एतदुक्तं भवति—देहविविक्ततया तावदात्मस्वरूपं ज्ञातव्यम् । तदर्थं देहो ज्ञातव्यः । देहश्च स्थूलः पाञ्चभौतिक एव न विवक्षितः; आगमापायिनस्ततो विवेकस्य सुज्ञानत्वात् । किन्त्वव्याकृतदेहः सूक्ष्मो विवक्षितः । यदनुबन्धादनादिरयमखिलानर्थहेतुरहंममाध्यास इति । अस्ति चाव्याकृतेऽपि जीवं प्रति देहत्वव्यवहारः 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु' (क. ३. ३) इति । अत्र शरीरपदनिर्दिष्टस्य उत्तरत्र 'अव्यक्तात्पुरुषः परः' (क. ३. ११) इत्यव्यक्तशब्देन प्रत्यवमर्शादव्याकृतमेव शरीरत्वेन निर्दिष्टमिति अवसीयते । तस्माद्द्युभ्वाद्यायतनं प्रधानमेवेति ।

एवं प्राप्ते **राद्धान्तः**—द्युभ्वाद्यायतनं ब्रह्म; आत्मशब्दात् । अयं हि स्वस्य ब्रह्मण एव शब्दः, न तु प्रधानस्यापि वाचकः । न खल्वयं स्वरूपेण प्रधानं वक्ति, नापि शरीरत्वेन; शक्तिग्राहकाभावात् । अभिधानकोशः शरीरे शक्तिग्राहकोऽस्ति इति चेत्, न । चेतनवाचिनोऽस्य अहंशब्दस्येव शरीरे प्रयोगाणां चेतनतादात्म्याध्यासेनोपपन्नतया तादृक्प्रयोगदर्शनमूलानामचेतनाभिधानकोशानां न्यायविरुद्धशक्तिकल्पनाया-मसामर्थ्यात्, आत्मशब्दस्य शरीरशक्तिसद्भावेऽप्यन्तर्याम्यधिकरणोक्तन्यायेन प्रधानस्य शरीरत्वासिद्धेश्च । श्रुत्यन्तरे शरीरत्वकल्पनस्य प्रसिद्धशरीरविषयत्वात् प्रसिद्धशरीर एवाव्यक्तपदमव्यक्तकार्याभिप्रायमिति 'सूक्ष्मं तु तदर्हत्वात्' (ब्र. सू. १. ४. २) इति सूत्रे वक्ष्यमाणत्वात् । एवमात्मशब्दः प्रधानेऽप्युपपन्न इति शङ्कावारणार्थमेव तस्य प्रधानसाधारण्यव्यावर्तनाय 'स्वशब्दात्' इति सूत्रितम्, अन्यथा हि 'शब्दादेव प्रमितः' (१. ३. २४) इति सूत्र इव 'शब्दात्' इत्येवासूत्रयिष्यत ।

ननु 'द्युभ्वाद्याधार' इति लघुनि सूत्रे कर्तुं शक्ये द्युपृथिवीद्वयनिर्देशेन, आयतनशब्दप्रयोगेण च किमर्थं गुरुसूत्रं कृतम् ? उच्यते—श्रुत्यन्तरे ब्रह्म स्वशब्देनैवायतनं श्रूयते 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः' (छा. ६. ८. ४) इति । इहापि मन्त्रे 'यस्मिन्' इति निर्दिष्टं द्युपृथिव्यादीनामोतत्ववचनादायतनमवगम्यते । तथा च श्रुत्यन्तरगतायतनशब्दरूपब्रह्मपरशब्दपरामर्शापेक्षादायतनत्वप्रत्यभि-ज्ञानादपि द्युभ्वाद्यायतनं ब्रह्मेति सिद्धान्तयुक्त्यन्तरद्योतनार्थमायतनशब्दः । अस्यां युक्तौ 'स्वशब्दात्' इति ल्यब्लोपे पञ्चमी । तथा च श्रुत्यन्तरगतमायतनशब्दरूपं ब्रह्मशब्दं परामृश्य तदुन्मेषितादायतनत्वप्रत्यभि-ज्ञानात् द्युभ्वाद्यायतनं ब्रह्म प्रतिपत्तव्यमिति सूत्रार्थो ग्राह्यः ।

द्युपृथिवीद्वयग्रहणं तु—विषयवाक्ये द्युपृथिव्यायतनत्वकीर्तनेनैव तदुभय(मध्य)वर्तिनोऽन्तरिक्षलोकस्या-प्यायतनं इत्यर्थात् ज्ञातुं शक्यतया मन्त्रगतस्यान्तरिक्षपदस्य वैयर्थ्यपरिहारार्थमव्याकृताकाशपरतया

वक्तव्यत्वात् प्रधानपूर्वपक्षो न सम्भवति; तस्याधेयतया निर्दिष्टत्वात् । अन्तरिक्षपदस्य भूताकाशपरत्वाङ्गीकारेऽपि प्रधानपूर्वपक्षो न सम्भवति; अक्षरब्राह्मणे 'यदूर्ध्वं गार्गि दिवो यदर्वाक् पृथिव्याः' (बृ. ३. ८. ४) इत्यादिना द्यावापृथिव्योस्तदूर्ध्वाधस्तनलोकानां तदन्यस्यापि सर्वस्य जगतस्तावदाधारतया निर्दिष्टस्य भूताकाशस्य चायतनत्वेन ब्रह्मणः प्रतिपादितत्वात्, इहापि 'यस्मिन्द्यौः पृथिवी च' (मु. २. २. ५) इति चकारेण द्युपृथिव्यूर्ध्वाधरलोकानां समुच्चिततया तदर्थप्रत्यभिज्ञानसत्वात् । अक्षरब्राह्मणस्य च प्रशासनादिकीर्तनात् ब्रह्मपरताऽवश्यम्भावेन प्रधानपरत्वासम्भवस्य वक्ष्यमाणत्वादिति सिद्धान्तयुक्त्यन्तरद्योतनार्थम् । १. ३. १ ।

एवमात्मशब्दायतनत्वप्रत्यभिज्ञानाभ्यां साव्याकृतजगदायतनत्वसभूताकाशजगदायतनत्वप्रत्यभिज्ञानान्यतरेण च द्युभ्वाद्यायतनं ब्रह्म न त्वव्याकृतमिति समर्थितम् । हेत्वन्तरेणापि अमुमर्थं समर्थयते—

## मुक्तोपसृप्यव्यपदेशात् । २ ।

'यस्मिन्द्यौः' (मु. २. २. २) इत्यादावाधेयतया निर्दिष्टेन कार्यप्रपञ्चेन मुक्तमेवायतनमुपसृप्यं ज्ञातव्यम्, न तु तद्विशिष्टमिति 'तमेवैकं जानथ' (मु. २. २. ५) इत्यनेन उपदेशादपि द्युभ्वाद्यायतनं ब्रह्म; मूलस्कन्धशाखात्मकत्वेन वृक्षस्येव ब्रह्मणः प्रपञ्चविशिष्टत्वेन प्रतिपत्तौ प्राप्तायां 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (कठ. ४. १०) इति श्रुत्यन्तरे तस्य तथा प्रतिपत्तेर्निन्दितत्वात् । अपि च 'अन्या वाचो विमुञ्चथ' (मु. २. २. ५) इति वाग्विमुक्तिपूर्वकं ज्ञातव्यत्वोपदेशादपि द्युभ्वाद्यायतनं ब्रह्म । तथा ज्ञातव्यत्वस्यापि ब्रह्मणि 'तमेव धीरो विज्ञाय' (बृ. ४. ४. २१) इति श्रुत्यन्तरे प्रसिद्धत्वात् ।

अत्र यदुक्तं पूर्वपक्षिणा प्रधानमेवात्मानं संसारिणां शरीरं जानीत स्थूलदेहादिविषयाः शरीरत्ववाचो विमुञ्चथेत्येवं प्रधानेऽप्येतद्योजयितुं शक्यमिति तत् आत्मशब्दस्य ब्रह्मासाधारणशब्दत्वसमर्थनेन पूर्वसूत्रे शरीरपरत्वासम्भवप्रदर्शनादेव निरस्तम् । किञ्च तथा सति 'तमेवैकं जानथ' इत्यदिकं 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः (तै. सं. ५. २. ९. ४) इतिवदर्थवादमात्रं स्यात्; प्रसिद्धशरीरेष्वशरीरत्ववादस्य गवाश्वव्यतिरिक्तपशुषु अपशुत्ववादस्येव बाधितत्वात् । अतिसूक्ष्मब्रह्मावगतेरत्यन्तचित्तैकाग्र्यसाध्यत्वेन तदर्थमन्यवाग्विमोकपूर्वकं ब्रह्मण ऐकरस्येन ज्ञातव्यत्वोपदेशपरत्वे तु श्रुत्यन्तरप्रसिद्ध्यनुसारेण भूतार्थवादो भवति । न च विशिष्टार्थोपदेशरूपभूतार्थवादत्वे सम्भवति असदर्थावलम्बनार्थवादत्वकल्पनं युक्तम् ।

अपि च 'अमृतस्यैष सेतुः' इत्यन्यवाग्विमोकपूर्वकादैकरस्येन ज्ञानादविद्यादिबन्धमुक्तेः प्राप्यत्वोपदेशादपि द्युभ्वाद्यायतनं ब्रह्म। तथा हि :— 'अमृतस्यैष सेतुः' इत्यत्रैतच्छब्दो नात्मनः परामर्शकः किन्तु विधेयत्वेन प्रधानस्य ज्ञानस्य परामर्शकः। तथा च यथा प्रसिद्धः सेतुः पारस्य प्रापकः, एवमयं द्युभ्वाद्यायतनज्ञानरूपः सेतुः संसारपारस्यामृतस्य ब्रह्मणः प्रापक इति तस्यार्थः।

ननु 'जानथ' इत्याख्यातेन साध्यरूपाभिधायिनोक्तस्य ज्ञानस्य सिद्धरूपाभिधायिना नाम्ना परामर्शो न युक्त इति चेत्, न। 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' (रघु. ५. ५४) इत्यत्र नपुंसकतया प्रकृतस्य स्त्रीलिंगविशिष्टतया परामर्शवत्, 'पाणिर्निकुब्जः प्रसृतिस्तौ युतावञ्जलिः पुमान्' (ना. लिं. अ) इत्यत्रैकत्वविशिष्टतया प्रकृतस्य द्वित्वविशिष्टतया परामर्शवच्च साध्यरूपविशिष्टतया प्रकृतस्यापि तदंशत्यागेन सिद्धरूपविशिष्टतया परामर्शोपपत्तेः। 'श्येनेनाभिचरन्यजेत यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' 'अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावः' (छा. २. ११. १) 'अपोऽश्नाति तन्नेवाशितं नेवानशितम्' इत्यादावाख्यातोक्तस्य नाम्ना परामर्शदर्शनाच्च। तथाऽप्यत्र 'स एषोऽन्तश्चरते' (मु. २. २. ६) 'दिव्ये ब्रह्मपुरे ह्येषः' (मु. २. २. ७) इत्याद्यनन्तरमन्त्राम्नातैतच्छब्दानामात्मपरत्वदर्शनादस्यापि तत्परत्वं युक्तम्' इति चेत्, न। तेषां ज्ञानपरत्वासम्भवेन तद्विषयात्मपरत्वकल्पनेऽप्यस्य तस्मिन्नेव मन्त्रे विधेयत्वेन प्रस्तुते ज्ञाने वृत्तिसम्भवे तदुल्लङ्घनेन तद्विषयपरत्वकल्पनायोगात्। न चैवं सति 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इत्यत्रापि तच्छब्दस्यानयनक्रियापरत्वप्रसङ्गः; तस्य द्रव्यवाच्यामिक्षापदसमानाधिकरणस्य क्रियापरत्वासम्भवेन तत्प्रधानकर्मभूतपयःपरामर्शित्वकल्पनात्। नन्वेवमपि द्युभ्वाद्यायतने मुक्तोपसृप्यत्वहेतुर्न लभ्यते; अमृतस्यैव मुक्तोपसृप्यत्वलाभादिति चेत्—न। अन्यज्ञानादमृतस्य ब्रह्मणः प्राप्त्यसम्भवेन द्युभ्वाद्यायतनज्ञानात् ब्रह्मणः प्राप्यत्वप्रतिपादनादर्थात् द्युभ्वाद्यायतनमेवामृतशब्दोक्तं ब्रह्मेति लाभात्।

एवमस्य सूत्रस्य तिसृषु योजनासु आद्ययोजना भाष्ये प्रथमसूत्रव्याख्यानसमय एवात्मशब्दस्य ब्रह्मासाधारणशब्दत्वसमर्थनानन्तरं तदुपजीवित्वात्तत्रायतनायतनवद्भावश्रवणादित्यादिना दर्शिता। द्वितीययोजना त्वेतत्सूत्रव्याख्यानसमये सूत्रस्य द्वितीयार्थत्वेन दर्शिता। तृतीययोजना तु न स्पष्टं प्रदर्शिता, किन्तु मन्त्रान्तरगतमुक्तोपसृप्यत्वव्यपदेशस्य एतत्सूत्रार्थतया वर्णनेन तत्समानन्यायतया सूचिता। भाष्ये मुण्ड-

कोपनिषद्विवरणे च 'अमृतस्यैष सेतुः' इत्यत्रैतच्छब्दस्य ज्ञानपरामर्शित्वप्रतिपादनेन च किञ्चिदाविष्कृता । १. ३. २ ।

अथ यदुक्तं पूर्वपक्षे द्युभ्वाद्यायतनत्वेनानुमानगम्यं प्रधानमेवानुवाद्यम्, न तु तथात्वेन श्रुतिप्रतिपन्नं ब्रह्मेति, तत्सांख्यानुमानस्याप्रमाणत्वादेव पुरोवादत्वासम्भवेन निरस्तप्रायम्; तथाऽपि दूषणान्तरप्रदर्शनार्थं सूत्रम् —

## नानुमानमतच्छब्दात् । ३ ।

सांख्यानुमानकल्पितं प्रधानमिह न ग्राह्यम्; तत्प्रतिपादकशब्दाभावात् । न हि 'यस्मिन्द्यौः' इत्यादि तत्प्रतिपादकं; तस्यान्तरङ्गश्रुत्यन्तरप्रापितब्रह्मगतद्युभ्वाद्यायतनत्वानुवादकत्वात् । यत्त्वनुमानात् श्रुतिः प्रत्यक्षानुमानसापेक्षत्वेन विलम्बितप्रवृत्तिकेति शीघ्रतरमनुमानमेव प्रापकमित्युक्तम्, तदयुक्तम्; शब्दानां व्युत्पत्तिवेलायामर्थग्राहिमानान्तरापेक्षत्वेऽपि तत्प्रतिपादनवेलायां तदपेक्षत्वाभावेन विलम्बासिद्धेः, अन्यथा 'गामानय' इत्यादिवाक्यानामसन्निकृष्टार्थविषयाणां प्रत्यक्षसाचिव्याभावेन गवानयनादिप्रतिपादकत्वाभावप्रसङ्गात् । उक्तं च वार्तिके 'अर्थबोधेऽनपेक्षत्वान्मानान्तरमनादृतम् । व्युत्पत्त्युपायभूतं यत्तच्च तन्मात्र एव तु' इति । तस्मात् 'यस्मिन्द्यौः' इत्यादि न प्रधानप्रतिपादकम् । नापि 'अमृतस्यैष सेतुः' इत्येतत् तत्प्रतिपादकम्; तस्य विधेयतया प्रकृतं ज्ञानं ब्रह्मणः प्रापकमित्येतदर्थतया वर्णितत्वात् । यथा प्रसिद्धः सेतुः प्रवाहनिरोधेन प्रभूतमुदकं साधयति, एवमिदमात्मज्ञानममृतत्वं साधयतीत्यमृतशब्दस्य भावप्रधानताश्रयणेनात्मज्ञाने साधनत्वपरतयाऽपि सेतुव्यपदेशोपपत्तेश्च । आत्मन्यपि अमृतत्वधारकतया तद्व्यपदेशोपपत्तेश्च । उपक्रमश्रुतब्रह्मगतनिरपेक्षद्युभ्वाद्यायतनत्वलिङ्गेन आत्मश्रुत्या वाग्विमोकपूर्वकमेकरसतया ज्ञातव्यत्वोपदेशेन च विरुद्धस्योपसंहारस्य यथाकथञ्चिन्नयनस्योचितत्वात् । एवं च 'उक्रमोपसंहारानुसारेण मध्यगतमात्मश्रुत्यादिकं यथाकथञ्चित्प्रधाने नेतव्यम्' इत्यपि निरस्तम् ।

सूत्रे 'अनुमानम्' इति कर्मणि ल्युट्प्रत्ययान्तः, आनुमानमिति शैषिकप्रत्ययान्तो वा । उपन्यस्तपूर्वपक्षबीजद्योतनार्थं प्रधानस्यानुमानपदेन ग्रहणम् । 'अतच्छब्दात्' इत्यत्र प्रसज्यप्रतिषेधार्थकस्य नञः समासः । तस्य क्रियासापेक्षत्वेनासामर्थ्येऽपि समासोऽस्तीति 'अकर्तरि च कारके संज्ञायाम्' (पा. सू. ३. ३. १९) इत्यत्र कारकग्रहणेन ज्ञापितत्वात्, 'असूर्यंपश्या राजदाराः' इत्यादिप्रयोगदर्शनाच्च । 'निर्मक्षिकम्' इतिवदर्थाभावेऽव्ययीभावो वा । अतच्छब्दमित्यम्भावस्तु न भवति; 'नाव्ययीभावादतोम् त्वपञ्चम्याः' (पा. सू. २. ४. ८३) इति पञ्चमीपर्युदासात् । १. ३. ३ ।

स्यादेतत्—मा भूत् प्रधानं द्युभ्वाद्यायतनम्, जीवस्तु स्यात्; मनःप्राणसम्बन्धश्रवणात्। न च जीवस्य मनःप्राणैरुपकरणोपकरणिभावसम्बन्ध एव प्रसिद्धो नाश्रयाश्रयिभावः, इह त्वाश्रयाश्रयिभाव एव प्रतीयते; द्युपृथिव्यन्तरिक्षैराश्रयाश्रयिभाववाचकेनैकेनैव ओतशब्देनोपात्तत्वात्, ओतशब्दस्तारस्याचेति वाच्यम्। जीवोपकरणानां तेषां जीवादृष्टायत्तोत्पत्तिस्थितिकत्वेन तदाश्रितत्वव्यपदेशोपपत्तेः। अत एव जीवः 'प्राणभृत्' इति व्यवह्रियते। एवं च जीवे द्युपृथिव्यन्तरिक्षायतनत्वव्यपदेशोऽपि युज्यते; तद्भोग्यभोगस्थानभोगोपकरणभोगायतनरूपाणां तेषां तददृष्टायत्तत्वात्। जीवोपकरणे प्राणेऽपि हि 'यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितम्' (छा. ७. १५. १) इति सर्वाधारत्वं श्रूयते। जीवे तच्छ्रवणस्य काऽनुपपत्तिः? न चात्मशब्दो जीवेऽनुपपन्नः; तस्य द्युभ्वादिसूत्रे ब्रह्मासाधारणत्वप्रतिपादनादिति वाच्यम्। 'स्वशब्दात्' इत्यनेन तस्य प्रधानसाधारण्यमेव हि व्यावर्तितम्, न तु जीवसाधारण्यमपि; तस्य जीववाचकताया अनिवार्यत्वात्' स ब्रह्मवित् स लोकवित् स वेदवित् स देववित् स भूतवित् स आत्मवित्' (बृ. ३. ७. १) इति अन्तर्यामिब्राह्मणे ब्रह्मणि ब्रह्मशब्दवत् जीवे आत्मशब्दस्यासाधारण्येन प्रयोगदर्शनात्। एवं 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः' (श. पँ. १४. ५. ३०) इत्याद्यन्तर्यामिब्राह्मणे 'अयमात्मा ब्रह्म' (बृ. २. २. १९) इत्यादिश्रुत्यन्तरे च तत्र तस्यासाधारण्येन प्रयोगदर्शनात्। 'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' (ब्र. सू. २. ३. १७) 'आत्मनि चैवं विचित्राश्च हि' (ब्र. सू.२. १. २८) इत्यादिसूत्रेष्वपि तस्मिन्विशिष्यात्मशब्दप्रयोगदर्शनाच्च।

यदि 'यथाऽग्नेः क्षुद्रा विष्फुलिङ्गा व्युच्चरन्ति, एवमेतस्मादात्मनः सर्वे प्राणाः लोकाः सर्वे वेदाः सर्वाणि भूतानि व्युच्चरन्ति' (बृ. २. १. २०) 'निस्सरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः। सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि' इत्यादिश्रुतिस्मृतिषु परमात्मन्यप्यात्मशब्दप्रयोगदर्शनात् तस्याप्यसाधारण्येन वाचक इत्युच्यते, यदि वा 'एकदेशेऽपि यो दृष्टः शब्दो जातिनिबन्धनः। तदत्यागान्न तस्यास्ति निमित्तान्तरकल्पना' इति बर्हिराज्याधिकरणोक्तन्यायेन जीवात्मपरमात्मसाधारण्येन चेतनमात्रवाचकः स इत्युच्येत, तदाऽप्यात्मशब्दस्य जीवे नास्त्यनुपपत्तिः। वाग्विमोकपूर्वकमैकरस्येन ज्ञातव्यत्वं तद्ज्ञानस्य ब्रह्मप्रापकत्वं मुक्तिसाधनत्वं तस्यामृतत्वधारकत्वमित्येतत् सर्वमपि जीवात्मन्यपि निर्विशेषदृष्ट्योपपद्यते। तस्मात् जीव एव द्युभ्वाद्यायतनं स्यादित्याशंक्याह—

## प्राणभृच्च। ४।

चकारेण नञो हेतोश्चानुकर्षः। प्राणभृदपि न द्युभ्वाद्यायतनम्; अतच्छब्दादेव। न हि मनःप्राणायतनत्वं तच्छब्दः। तस्य तदुपकरणकत्वत् प्राणभृदसाधारणत्वाभावात्। 'यस्मिन् पञ्च पञ्चजनाः'

(बृ. ४. ४. १७) इत्यादिश्रुत्यन्तरे ब्रह्मण्यपि तत्प्रसिद्धेः। न च द्युपृथिव्यन्तरिक्षमनःप्राणायतनत्वमपि मुख्यं ब्रह्मणि सर्वोपादान इव जीवे सम्भवति। न वा निरपेक्षं तत् ब्रह्मणोऽन्यत्र सम्भवति। तस्मात् तच्छब्दाभावात् तद्विलक्षणस्य ब्रह्मणः प्रतिपादकाच्छब्दादपि न प्राणभृद् द्युभ्वाद्यायतनम्। एवंच 'अतच्छब्दात्' इत्यस्य द्वितीयहेतुपरत्वेन योजनायां पर्युदासार्थस्य नञस्तत्पदेन समासः। उभयसाधारण्यार्थमतच्छब्दादित्युक्तिः। इदं च नैरपेक्ष्यापेक्षं पर्युदासार्थकत्वं पूर्वत्र प्रधाननिराकरणार्थहेतावपि योज्यम्। १. ३. ४।

स्यादेतत्—प्राणभृदेव द्युभ्वाद्यायतनम्; आत्मशब्दात्। आत्मशब्दो हि स्वभावापरपर्याय स्वरूपपरोऽप्यस्ति। इह च 'तमेवैकं जानथ आत्मानम्' इति शिष्यान् प्रति बोधने तस्य स्वरूपपरत्वमेव स्वारसिकम्—तमेवैकं युष्माकं प्रत्यग्भूतं स्वरूपं जानीतेति। एकजीववादे चैकस्याविद्याप्रतिबिम्बस्य सम्भवति बहून् शिष्यान् प्रति स्वरूपत्वबोधनमित्याशंक्याह—

## भेदव्यपदेशात्। ५।

भिद्यतेऽनेनेति भेदो भेदकः 'तमेवैकञ्जानथ' इति कर्मकर्तृभावः, अवधारणलब्धेनैकरस्येन ज्ञेयत्वं च वैलक्षण्यं भेद इति पक्षे तु स एव भेदः। तद्व्यपदेशान्न प्राणभृत् द्युभ्वाद्यायतनम्। मुमुक्षु-प्राणभृज्ज्ञातेन हि निर्विशेषचिन्मात्रैकरसं ब्रह्म ज्ञेयम्, न तु प्राणभृदेव ज्ञाता तेनैव रूपेण ज्ञेयः। तत्र कर्मकर्तृभवविरोधात्, अहङ्कारसुखदुःखरागद्वेषादिसंवलितरूपस्य तस्यैकरस्येन ज्ञेयत्वायोगाच्चेति तदनुरोधे-नात्मशब्दस्य जीवात्मपरत्वे, परमात्मपरत्वे, चेतनसामान्यपरत्वे, स्वरूपपरत्वे वा निर्विशेषचिन्मात्र एव पर्यवसानमभ्युपेयम्; तस्यैव वस्तुतः तत्तद्बोधनीयजीवस्वरूपतया पर्यवसानात्।

न च—बिम्बप्रतिबिम्बरूपयोः सविशेषयोर्जीवब्रह्मणोर्भेदेऽपि तदुभयानुस्यूतस्य निर्विशेषचैतन्यस्य जीवस्य च भेदो नास्ति, अन्यथा 'षडस्माकमनादयः' इति सिद्धान्तविरोधात्, तथा च कथमत्र भेदव्यपदेशो हेतुः स्यात् इति शङ्कनीयम्; परिच्छिन्नापरिच्छिन्नयोस्तयोरपि भेदावश्यम्भावात्। लोकेऽप्यपरिच्छिन्नो महाकाशः परिच्छिन्नो घटाकाश इति भेदव्यपदेशदर्शनात्। षडनादित्वव्यवहारस्तु जीवब्रह्मभेदं ब्रह्मचिन्मात्र-भेदं जीवचिन्मात्रभेदं च भेदराशित्वेनैकीकृत्य। अत एवाहुः 'जीव ईशो विशुद्धा चित् भेदस्तस्यास्तयो-र्द्वयोः। अविद्यातच्चितोर्योगः षडस्माकमनादयः' इति। तस्याः सकाशात्तयोर्जीवेशयोर्भेदः तयोर्द्वयोरन्योन्यं च भेद इत्यर्थः। १. ३. ५।

स्यादेतत्—मा भूदेतन्मन्त्रश्रुतहेतुभिः द्युभ्वाद्यायतनं जीवः; उपरितनमन्त्रश्रुतहेतुभिस्तु स्यात्। उपरितनमन्त्रे हि 'अरा इव रथनाभौ संहता यत्र नाड्यः। स एषोऽन्तश्चरते बहुधा जायमानः' (प्र. ६. ६) इति नाडीसम्बन्धनाड्यन्तस्सञ्चारजायमानत्वानि श्रूयन्ते। तानि च जीवलिङ्गानि। नाडीसम्बन्धः तदन्तस्सञ्चारश्च तावज्जीवस्य प्रसिद्धतरः 'आसु तदा नाडीषु सृप्तो भवति' (छा. ८. ६. ३) 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ. २. २. १९) इत्यादिश्रुतिषु। जायमानत्वं तु तदसाधारणमिति स्पष्टमेव। तस्मात् बहुसाधकान्यथाकरणायोगाज्जीव एव द्युभ्वाद्यायतनं स्यादित्याशंक्याह—

**प्रकरणाच्च। ६।**

प्रकरणमिदं मुण्डकोपनिषदि 'कस्मिन्नु भगवो विज्ञाते' (मु. १. १. ३) इत्युपक्रममारभ्य आसमाप्ति बहुतरश्रुतिलिङ्गादिनियमितं भूतयोनेरक्षरस्य परमात्मनः। तदेतददृश्यत्वाधिकरण एव प्रतिपादितमिति तन्मध्याम्नातस्य 'यस्मिन्द्यौः' (मु. २. २. ५) इति मन्त्रस्य नान्यपरत्वशङ्कावकाशोऽस्ति। न्यायव्युत्पादनार्थं प्रकरणं पिधाय तन्मन्त्रगतैः कैश्चिल्लिङ्गैरन्यपरत्वमाशंक्य तन्मन्त्रगतैरेव श्रुतिलिङ्गैः ब्रह्मपरत्वं साधितं सूत्रपञ्चकेन। अनेन तु सूत्रेण प्राकरणिकमन्त्रान्तरगतलिङ्गैर्जीवपरत्वे शङ्किते प्रकरणमुद्घाट्य प्राकरणिकमन्त्रान्तरगतैः प्रबलैः श्रुतिलिङ्गैस्तद्बाधः प्रदर्श्यते। तत्र कानिचित् श्रुतिलिङ्गान्यदृश्यत्वाधिकरणे प्रदर्शितानि, कानिचिदिहैवाधिकरणे 'स्वशब्दात्' इत्यादिहेतूनामर्थान्तरोपवर्णनव्याजेन भाष्ये प्रदर्शितानि। तत्र हि 'स्वशब्दात्' इत्यस्य 'तपो ब्रह्म परामृतम्' (मु. १. २. १०) 'ब्रह्मैवेदममृतं पुरस्तात्' (मु. २. २. ११) इति पूर्वत्र परत्र च ब्रह्मसंशब्दनमप्यर्थान्तरत्वेन दर्शितम्। १। मुक्तोपसृप्यसूत्रस्य च 'भिद्यते हृदयग्रन्थिः' (मु. २. २. ८) इति मन्त्रे रागद्वेषादिमुक्तैर्ज्ञेयत्वव्यपदेशः 'परात्परं पुरुषमुपैति दिव्यम्' (मु. ३. २. ८) इति मुक्तप्राप्यत्वव्यपदेशश्चार्थान्तरत्वेन दर्शितः। २। 'अतच्छब्दात्' इत्यस्य च 'यः सर्वज्ञः सर्ववित्' इत्यादिषु श्रुतः सर्वज्ञादिशब्दोऽप्यर्थान्तरत्वेन दर्शितः। ३। एवं प्राकरणिकबहुश्रुतिलिङ्गबाधितमुत्तरमन्त्रगतं जीवलिङ्गत्रयमन्यथा नेयम्। तथा हि—नाडीसम्बन्धस्तावन्न जीवलिङ्गम्। नाड्याश्रयत्वं ह्यत्र नाडीसम्बन्धः; अरनाभिदृष्टान्तानुरोधात्, 'यत्र' इति सप्तम्यनुरोधाच्च, न तु नाड्युपकरणत्वम्। नाड्याश्रयत्वं त्वाहत्य हृदयस्यैव श्रुतम् 'अथ या एता हृदयस्य नाड्यः' (छा. ८. ७. १) इत्यादिषु। तदाश्रयत्वं जीवस्यापि हृदयद्वारैव वाच्यम्। तच्च हृदयायतनस्य ब्रह्मणोऽपि सुवचम्। एवं

'अजायमानो बहुधा विजायते' (यजु. सं. ३१. १६) इति श्रुत्यनुसारेणाभिव्यक्तिविशेषवत्त्वरूपं जायमानत्वम्, जीववदन्तःकरणोपहितरूपेण नाड्यन्तस्सञ्चारवत्त्वं च तस्य सुवचमेव । यदि 'लक्षणहेत्वोः क्रियायाः' (पा. सू. ३. २. १२६) इति प्रथमासमानाधिकरणशानज्विधायकसूत्रानुसारेण 'यो जायते सोऽन्तश्चरते' इत्येवमर्थपर्यवसायितया अन्तस्सञ्चरणक्रियालक्षणत्वेनोपन्यस्तं जननं जीवे प्रसिद्धतरं ब्रह्मव्यावृत्तमेव ग्राह्यम्; प्रसिद्धतरस्यैव लक्षकत्वात्, अत एवान्तस्सञ्चरणमपि तेन जननेन लक्षणीयं जीवगतमेव ग्राह्यमित्युच्यते, तदाऽपि नास्त्यनुपपत्तिः; हृदयायतनः परमात्मा जीवरूपेण जायमानः सन् नाडीनामन्तः सञ्चरत इत्यन्वयसौलभ्यात् । एवं प्रसक्तशङ्कानिराकरणार्थस्तुशब्दार्थे सौत्रश्चकारः । १. ३. ६ ।

स्यादेतत्—जीवस्य प्रत्यग्रूपतया लोकानुभवसिद्धात् कर्तृत्वभोक्तृत्वादिविकारशालिनो रूपादन्यन्निर्विकारचिन्मात्रात्मकमपि रूपमस्तीत्यत्र किं प्रमाणम्, येन तत्रात्मशब्दस्य पर्यवसानं तत्रैव प्रसिद्धतरजीवरूपदृष्ट्या जायमानत्ववर्णनं चोपपद्येत । न हि कर्तृत्वभोक्तृत्वादिविशिष्टाज्जीवात् तन्नियन्तुरीश्वराच्चान्यदसङ्गोदासीनमात्मस्वरूपं श्रुतिषु प्रसिद्धमस्तीत्याशंक्य तत्र प्रमाणप्रदर्शनार्थं 'प्रकरणात्' इत्यनेन परिगृहीतमपि हेतुं शृङ्गग्राहिकयोपादाय दर्शयति—

## स्थित्यदनाभ्यां च । ७ ।

द्युभ्वाद्यायतनं प्रकृत्याऽऽम्नाते 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' (मु. ३. १. १) इति मन्त्रे स्थित्यदने निर्दिश्येते । 'अनश्नन्' इत्यौदासीन्येन स्थितिः, 'अत्ति' इति कर्मफलादनम्, आभ्यां स्थित्यदनाभ्यां कर्मफलात्तुस्सकाशादन्यस्यासङ्गोदासीनचैतन्यस्वरूपस्य सिद्धेस्तत्रात्मशब्दपर्यवसानादिवर्णनं युक्तमेव । ननु 'अनश्नन्नन्यः' इति सविशेषस्य परमेश्वरस्य निर्देशः किं न स्यात् ? उच्यते—पैङ्गिरहस्यब्राह्मणेन मन्त्रोऽयमित्थं व्याख्यातः—'तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वम्, अनश्नन्नन्यो अभिचाकशीतीति क्षेत्रज्ञः' इति । सत्त्वक्षेत्रज्ञशब्दावपि तत्रैव व्याख्यातौ 'तदेतत्सत्त्वं येन स्वप्नं पश्यति । अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः' इति । एवमत्त्नश्नतोरन्तःकरणशुद्धजीवरूपतयाऽन्यत्र व्याख्यातत्वादनश्नन्नीश्वर इति वक्तुं न युक्तम् ।

ननु जीवेश्वरपर एवायं मन्त्रः; अनेन तुल्यार्थतया प्रत्यभिज्ञायमाने 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' (मु. ३. १. २)

इत्यनन्तरमन्त्रे तयोः प्रतिपादनात् । अस्य खल्वयमर्थः—समाने वृक्षे जीवेश्वरसाधारणे शरीरे निमग्नः पुरुषः अनीशया अनीश्वरया प्रकृत्या परवशीकृतो मुह्यन्नविवेकं प्राप्तः सन् शोचति । जुष्टं योगमार्गैर्निषेवितं स्वस्मादन्यमीशम्, अस्य ईशस्य इति महिमानं प्रसिद्धप्रकारं माहात्म्यं च यदा पश्यति, तदा वीतशोको भवतीति । अत्र पुरुषो जीव एव ग्राह्यः, न त्वचेतनमन्तःकरणम् । न हि तत्र पुरुषश्रुतेः, 'शोचति' 'मुह्यमानः' 'पश्यति' 'वीतशोकः' इति विशेषणानां वा सम्भवोऽस्ति । अन्यस्त्वीशशब्दोक्तत्वादीश्वर एव ।

अपि चास्मिन्नेव मन्त्रे भोक्तृत्वाभोक्तृत्वश्रवणादप्ययं जीवेश्वरपरः । न ह्यन्तःकरणस्य भोक्तृत्वं जीवस्य देहपरिष्वङ्गदशायामभोक्तृत्वं वोपपद्यते । पैङ्गिश्रुत्यामपि सत्वक्षेत्रज्ञशब्दभ्यां जीवेश्वरावेवोच्येते;

'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । सत्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः' ॥ (भ.गी.१८.४०)
योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते । यः करोति तु कर्माणि स भूतात्मेति चोच्यते' ॥

इत्यादिस्मृतिषु तयोः सत्वक्षेत्रज्ञपदप्रयोगदर्शनात् । 'येन स्वप्नम्' इत्यत्र न करणे तृतीया, यतः स्वप्नद्रष्टिकरणे, अन्तःकरणे सत्वशब्दः स्यात् किं त्वित्थंभावे । ततश्च येन जीवेन विशिष्टः परमेश्वरः स्वप्नं पश्यति स जीवः सत्वमित्यर्थोऽस्तु; स्वप्नद्रष्टृत्वस्य जीवगतस्यापि जीवद्वारा परमात्मविशेषण-त्वोपपत्तेः । 'काठिन्यवान् यो बिभर्ति' इत्यत्र पृथिवीद्वारा काठिन्यस्य तद्विशेषणत्वदर्शनात् । शारीर-शब्दश्चान्तर्यामितया सर्वशरीरेषु स्थिते परमात्मन्युपपद्यत एवेति चेत्—

अत्र ब्रूमः—'समाने वृक्षे' इति मन्त्रो नोक्तरीत्या जीवेश्वरपरः, अनीशया प्रकृत्येति विशेष्याध्या-हारगौरवात्, किन्तु तस्यैवमर्थः—समाने वृक्षे—देहाख्ये, निमग्नः—तादात्म्याध्यासेन निमग्नवदविविक्त-तामापन्नः पुरुषो भोक्ता जीवो मुह्यमानः शरीरादिगतैरनर्थजातैरात्मानमेव तद्वन्तं मन्यमानः सन् अनीशया—अनैश्वर्येण 'कृशोऽहमन्धोऽहमस्मि, किं मे जीवितेन' इत्येवं दीनभावेनाध्यासमूलेन शोचति । यदा तु देहादिभ्योऽनर्थाश्रयेभ्योऽन्यं अत एव ईशं देहादितादात्म्याध्यासमूलदैन्यानास्पदमात्मानमिति महिमानं अस्य प्रसिद्धप्रकारं महत्त्वं च त्रिविधपरिच्छेदराहित्यरूपं पश्यति, तदा वीतशोको भवतीति । अथवा वीतशोकः सन् अस्य महिमानं तद्भावम्, इति प्राप्नोति इति । 'इति' इत्याख्याते 'संज्ञापूर्वको विधिरनित्यः' (व्या.प.६४) इति गुणाभावः । 'ईश ऐश्वर्ये' (या. पा. १०२०) इति धातोः 'गुरोश्च हलः' (पा. सू. ३. ३.१०३) इति स्त्र्यधिकारविहिताकारप्रत्ययान्तेन ईशाशब्देनैश्वर्यवाचिना नञः समासे सत्यनीशयेति रूपम् । न च

प्राधान्येन प्रस्तुतस्य पुरुषस्यान्यं प्रति प्रतियोगित्वसम्भवे अप्राधान्येन प्रस्तुतस्य शरीरस्य तत्प्रतियोगिकत्वक-ल्पनमयुक्तमिति वाच्यम् । यद्विषयभ्रमस्य शोकनिदानत्वमभिप्रेत्य समाने वृक्षे निमग्नो मुह्यमान इति च विशेषणं कृतं तद्विरुद्धदर्शनस्य शोकविगमहेतुत्वमित्याशयेनान्यत्वविशेषणमिति ह्येषां विशेषणानां साफल्य-मुपपादनीयम् । न च 'समाने वृक्षे निमग्नः' इति 'मुह्यमानः' इति च जीवेश्वराभेदभ्रम उक्त इति वक्तुं शक्यम्, येन जीवादीश्वरस्यान्यत्वं तद्विरुद्धं स्यात् । शक्यं तु देहतादात्म्याध्यासस्तद्धर्माध्यासश्च उक्त इति वक्तुम् । अतोऽर्थानुसारेणान्यत्वस्याप्रधानप्रतियोगिकत्वं न दोषः । अत एव 'अन्यमीशम्' इत्यस्य स्वात्मान-मिति विशेष्याध्याहारोऽपि न दोषः, स्वानैश्वर्यप्रयुक्तशोकस्य पुरुषस्यान्यैश्वर्यदर्शनेन वीतशोकत्वापत्तिवर्णना-योगाच्च । तस्मादनन्तरमन्त्रानुरेण 'द्वा सुपर्णा' इति मन्त्रस्य जीवेश्वरपरत्वमिति तावदयुक्तम् ।

नापि भोक्तृत्वाभोक्तृत्वश्रवणात्तदुभयपरत्वमिति युक्तम्; आध्यासिकदेहपरिष्वङ्गदशायामपि वस्तुतो निर्विशेषस्य जीवस्य जलाध्यासदशायामपि मरुमरीचिकानामनार्द्रत्ववदभोक्तृत्वस्योपपत्तेः, अन्तःकरणस्य च वस्तुतो भोक्तृत्वाभावेऽपि तत्रारोप्य भोक्तृत्वव्यपदेशोपपत्तेः । न ह्ययं मन्त्रो वस्तुतो भोक्तृत्वं प्रति-पादयति, किन्तु जीवस्य भोक्तृत्वाभावं प्रतिपादयितुं प्रवृत्तः सन् का तर्हि भोक्तृत्वानुभवस्य गतिरित्या-काङ्क्षायामन्तःकरणसंवलनोपाधिकमाध्यासिकं जीवस्य भोक्तृत्वमुपाधिमस्तके निक्षिपति । वस्तुविचारणायां त्वचेतनत्वात्, कूटस्थत्वाच्च नान्तःकरणं, न वा चैतन्यं भोक्त्रिति परमार्थः, व्यवहारदृष्ट्या तु 'आत्मेन्द्रिय-मनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (क. ३. ४) इति श्रुतेराध्यासिकान्तः करणादितादात्म्यापन्नश्चैतन्यं भोक्तृ । अयं चार्थः 'समाने वृक्षे' इत्यनन्तरमन्त्रे स्फुटीकृतः ।

यत्तु 'येन स्वप्नं पश्यति' इत्यत्र इत्थंभावे तृतीयेति, तत्तुच्छम्; उपपदविभक्तितः कारकवि-भक्तेर्बलीयस्त्वेन (व्या. प. ६९) तस्याः करणार्थतौचित्यात्, सत्वशब्देन जीवस्य विवक्षितत्वे 'यः स्वप्नं पश्यति' इत्यार्जवेन कर्तव्यतया वक्रोक्त्ययोगाच्च । न हि गन्धवत्त्वेन पृथिव्यां लिलक्षयिषितायां 'गन्धवती पृथिवी' इत्युक्तिं विहाय 'यद्द्वारा परमात्मा गन्धवान्, सा पृथिवी' इत्युक्तिर्युज्यते । शारीर ईश्वर इत्यप्य-युक्तम्; 'अनुपपत्तेस्तु न शारीरः' (ब्र.सू.१. २. ३) इत्यादिषु शारीरशब्दस्य जीव एव प्रसिद्धत्वात् । यद्यपि 'अस्य गोर्द्वितीयोऽन्वेष्टव्यः' इत्यादिगुहाऽधिकरणदर्शितन्यायेन 'द्वा सुपर्णा' इत्यत्रापि चेतनस्य द्वितीयेन चेतनेन भाव्यम्, तथाऽपि 'येन स्वप्नम्' इत्यादिव्याख्यानरूपश्रुतिविरोधान्न तादृक् न्यायोऽत्रावतरति ।

अत एव तस्मिन्नधिकरणे श्रीभगवत्पादैरस्यापि मन्त्रस्य तन्न्यायविषयत्वं कृत्वाचिन्तारूपेण दर्शयित्वा 'अपर आह' इत्यादिना कृत्वाचिन्तोद्घाटनं कृतम्। तस्मात् 'द्वा सुपर्णा' इति मंत्रोऽहङ्कारविविक्ते निर्विशेषचिदेकरसे प्रत्यगात्मनि प्रमाणमिति निरवद्यम्। सूत्रगतेन चकारेण 'अथातोऽहङ्कारादेशः' (छा. ७. २५. १) इत्यहङ्कारादेशानन्तरं 'अथात आत्मादेशः' (छा. ७. २५. २) इत्यात्मोपदेशोऽन्यच्चैतादृशं वाक्यजातमिह प्रमाणत्वेनानुसंहितम्। अत्र प्रकरणं पिधाय कृत्वाचिन्तारूपेणाधिकरणप्रवृत्तेर्विषयवाक्यस्यात्मशब्दस्य स्वभावादिसाधारण्याचास्पष्टब्रह्मलिङ्गता बोद्धव्या। १. ३. ७।

इति द्युभ्वाद्यधिकरणम्। १।

(२ अधिकरणम्)

## भूमा संप्रसादादध्युपदेशात्। ८।

इदमामनन्ति च्छन्दोगाः—'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्' (छा. ७. २४. १) इति। अत्र संशयः—भूमा प्राणः, परमात्मा वेति। कुतोऽयं संशय इति चेत्—उच्यते। भूमशब्दस्तावत् बहुशब्दादिमनिच्प्रत्यये पृथ्वादिविहिते सति 'बहोर्लोपो भू च बहोः' (पा. सू. ६. ४. १५८) इति प्रकृतिप्रत्यययोर्विकारे च सति निष्पन्नो बहुत्ववाची। बहुत्वं चात्र वैपुल्यम्, न संख्याविशेषः। बहुशब्दस्य 'बहुषु बहुवचनम्' (पा. सू. १. ४. २१) इत्यादौ संख्यायामिव 'बहुलं पच्यते यत्र' इत्यादौ वैपुल्येऽपि प्रयोगदर्शनात्। इह च 'यत्रान्यत् पश्यति' इत्युत्तरवाक्ये च बहुत्वसंख्यायुक्तस्याप्यल्पस्य भूतप्रतियोगित्वेनोपादानात्, नामादिभ्योऽधिकसंख्याहीने वागादौ 'वाग्वाव नाम्नो भूयसी' (छा. ७. २. १) 'आकाशो वाव तेजसो भूयान्' (छा. ७. १२. १) इत्यादौ बहुशब्दनिष्पन्नभूयश्शब्दप्रयोगदर्शनाच्च। उक्तहेतुभ्यां वैपुल्याश्रयधर्मिपर्यन्तश्चायं भूमशब्दो न वैपुल्यमात्रपरः। 'यो वै भूमा तदमृतम्' (छा. ७. २४. १) 'यो वै भूमा तत्सुखम्' (छा. ७. २३. १) इति धर्मिसामानाधिकरण्याच्च। यद्यपि भूमशब्दो भावप्रत्ययान्तत्वात् 'तत्सिद्धिजातिसारूप्यप्रशंसा भूमलिङ्गसमवायात्' (जै. सू. १. ४. २८) 'न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमाह्यस्मिन्' (ब्र. सू. १. १. २९) 'सम्भूयैव सुखानि चेतसि परं भूमानमातन्वत' इत्यादिषु धर्मे प्रयुक्तत्वाच्च धर्मवाचकः, तथापि 'स य एषोऽणिमैतदात्म्यमिदं सर्वम्' (छा. ६. ८. ७) 'धातुः प्रसादान्महिमानमीशम्' इत्यादावणिममहिमादिशब्दस्येव लक्षणया धर्मिपर्यन्तत्वं नानुपपन्नम्।

एवं च सामान्यतो भूमा विपुल इत्यवसिते तद्विशेषाकाङ्क्षायां 'प्राणो वा आशाया भूयान्' (छा. ७. १५. १) इति प्राणप्रकरणात् प्राणो भूमेति प्राप्नोति, 'तरति शोकमात्मवित्' (छा. ७. १. ३) इति परमात्मप्रकरणाच्च परमात्मा भूमेति; ततो विशेषानवधारणात् संशयः ।

ननु परमात्मन एव प्रकरणं 'तरति शोकमात्मवित्' (छा. ७. १. ३) 'आत्मैवेदं सर्वम्' (छा. ७. २५. २) इत्युपक्रमोपसंहारैकरूप्यात् । प्राणस्य तु सन्निधानमात्रम् । प्रकरणसन्निधानाभ्यां च प्रबलदुर्बलाभ्यां संशयो न युक्त इति चेत्, उच्यते । पूर्वपक्षे प्राणस्यैव प्रकरणम् परमात्मनः सन्निधानमात्रम् । सिद्धान्ते परमात्मन एव प्रकरणम्, प्राणस्य सन्निधानमात्रम् । एतच्च पूर्वपक्षसिद्धान्तयोः स्फुटीकरिष्यते । एवं च प्राणः प्रकरणीति स भूमशब्दोक्तविपुलविशेषतया व्यवतिष्ठतामुत परमात्मा प्रकरणीति स एव तथा व्यवतिष्ठतामिति युक्तः संशयः ।

तत्र पूर्वपक्षवादी मन्यते—'प्राणो वा आशाया भूयान्' (छा. ७. १५. १) इत्यारभ्य प्राणवायोः प्रकरणमिति तावदभ्युपेयम्; प्राणशब्दस्य तत्र रूढत्वात् । न च 'एष तु वा अतिवदति' (छा. ७. १६. १) इत्यारभ्य प्रवृत्ते भूमप्रतिपादने तद्विच्छेदोऽस्ति । पूर्वं नामादिप्राणपर्यन्तेषु पूर्वपूर्वप्रकरणावसानोत्तरोत्तरप्रकरणारम्भमध्यदृष्टयोः प्रश्नप्रतिवचनयोरिहादर्शनात् । इहापि प्रकरणान्तरविवक्षायां 'अस्ति भगवो नाम्नो भूयः' (छा. ७. १. ५) इति 'वाग्वाव नाम्नो भूयसी' (छा. ७. २. १) इत्यादिवत् 'अस्ति भगवः प्राणात् भूयः' इति 'अदो वाव प्राणाद्भूयः' इति प्रश्नप्रतिवचने निबध्येयाताम् । न च ते निबद्धे दृश्येते। प्रत्युत 'अतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' (छा. ७. १५.४) इति प्राणविद्व्रतत्वेनोक्तस्यातिवादित्वस्य 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा. ७. १६. १) इत्यनुकर्षणात् प्राणप्रकरणानुवृत्तिरेवावसीयते ।

न च—तत्र तुशब्देन, सत्यशब्देन च प्राणातिवादिनोऽन्यस्ततोऽधिकः सत्यातिवादी प्रतीयते । सत्यशब्दार्थश्च परमात्मेति स एव भूमा न प्राणः; प्राणप्रकरणविच्छेदात्, तत्प्रकरणानुवृत्तेश्चेति वाच्यम् । तत्र प्रकृतः प्राणातिवाद्येव नामाद्यतिवादिनोऽधिकः प्रतिपाद्यते इत्युपपत्तेः । 'प्राणा वै सत्यम्' (बृ. २. १. २०) इत्यादौ प्राणविषयस्यापि सत्यशब्दस्य श्रवणात् । 'एष तु वा अग्निहोत्री यः सत्यं वदति' इत्युक्तौ प्रसिद्धाग्निहोत्रिण इव प्रस्तुतप्राणातिवादिन एव सत्यवदनरूपाङ्गविधिरित्युपपत्तेश्च । तथा सति 'यःसत्यं वदति'

इति निर्देशः स्यात् 'यः सत्येनातिवदति' इति निर्देशो न स्यादिति चेत्, न। 'यः सत्येनातिवदति' इत्यनेन निर्दिष्टस्यार्थस्य 'यदा वै विजानाति अथ सत्यं वदति' (छा. ७. १७. १) इत्यादिपुनर्निर्देशदर्शनेन तस्यापि तत्रैवार्थे पर्यवसानस्य वक्तव्यतया सत्येन सत्यवचनेन सह योऽतिवदतीत्यर्थकल्पनोपपत्तेः।

सत्यशब्दस्य सत्यवचनपरत्वे तस्य लोकप्रसिद्धत्वात् 'सत्यं त्वेव विजिज्ञासितव्यम्' इति 'सत्यं भगवो विजिज्ञासे' इति चानुपपन्नं स्यादिति चेत्, न। लोकप्रसिद्धेष्वपि विज्ञानमतिश्रद्धानिष्ठाकृतिषु 'विज्ञानं त्वेव विजिज्ञासितव्यं विज्ञानं भगवो विजिज्ञासे' (छा. ७. १७. १) इत्यादिगुरुशिष्यवचनदर्शनेन तद्वत् सत्यवचनेऽपि तयोरुपपत्तेः। ननु विज्ञानादिषु 'विजिज्ञासितव्यम्' इत्यस्य सम्पादनीयमित्यर्थः; अग्रे 'यदा वै मनुतेऽथ विजानाति, यदा वै श्रद्दधात्यथ मनुते' (छा. ७. १८. १) इत्यादितदुपायकीर्तनदर्शनादिति चेत्; तर्हि सत्येऽपि तस्य स एवार्थोऽस्तु। अग्रे 'यदा वै विजानाति' (छा. ७. १७. १) इत्यादिना तदुपायकीर्तनदर्शनादिति तुल्यम्। तस्मात् प्राणप्रकरणाविच्छेदात् स एव भूमेति युक्तम्। प्राणे च 'यत्र नान्यत् पश्यति' (छा. ७. २४. १) इत्यादि भूम्नो लक्षणं तत्प्रधानायां सुषुप्तावस्थायां दर्शनादिव्यवहार-निवृत्तिदर्शनादुपपन्नम्। यत्तु भूम्नः सुखत्वममृतत्वंच, श्रुतं तदप्यविरुद्धम्। 'अत्रैष देवः स्वप्नान्न पश्यत्यथ-तदैतस्मिन् शरीरे सुखं भवति' (प्र. ४. ६) इति प्राणप्रधानायां सुषुप्तावस्थायां सुखश्रवणात्, 'प्राणो वा अमृतम्' (बृ. १. ६. ३) इति श्रवणाच्च।

नन्वेवं प्राणो भूमेत्युपगमे 'श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित्' (छा. ७. १. ३) इति प्रश्नमुपक्रम्य प्रवृत्तमात्मप्रकरणं विरुध्येतेति चेत्, न। तदुत्तरे 'नामोपास्स्व', 'वाचमुपास्स्व' इत्याद्यनात्म-विद्याविधीनामेव दर्शनेन प्रश्नस्यापि तद्विषयत्वस्य वक्तव्यतया आत्मप्रकरणासिद्धेः। अनात्मनोऽपि प्राणस्याग्रे 'प्राणो ह पिता प्राणो माता' (छा. ७. १५. १) इत्यादिना सर्वात्मत्वाभिधानात्, तदभिप्रायेण 'आत्म-वित्' इत्युपक्रमस्य 'आत्मैवेदं सर्वम्' (छा. ७. २५. २) इत्युपसंहारस्य चोपपत्तेः। नामादिविद्या-विधित्सायां प्राणोपक्रमोऽपि न युक्त इति चेत्, न। नामाद्युपासनानामेव 'स यो नाम ब्रह्मेत्युपास्ते' इत्यादिफलार्थवादगतविशेषश्रवणानुसारेण नामादिषु प्रतीकेषु ब्रह्मशब्दोदितप्राणदृष्टिरूपतया तदुपपत्तेः। प्राणो ह्यस्मिन् प्रकरणे अरनाभिदृष्टान्तोपन्यासपूर्वकं सर्वप्रतिष्ठात्वेन, सर्वात्मत्वेन च ब्रह्मलिङ्गेनोपरिसंकीर्त्यते। न च तत्संकीर्तनं नामादिष्विव प्राणेऽपि पृथग्विद्याविधानार्थम्; 'यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति' (छा. ७. १. ५) इत्यादिना नामाद्युपासनफलसंकीर्तनवत् प्राणविद्याफलसंकीर्तनस्यादर्शनात्। तस्मात्

प्राणे ब्रह्मगुणकीर्तनं तद्विशिष्टप्राणदृष्ट्या नामाद्युपासनासिद्ध्यर्थमित्येव व्यवतिष्ठते। एवं च 'स यो नाम ब्रह्मेत्युपास्ते' (छा. ७. १. ५) इत्यादिषु प्राणे ब्रह्मशब्दप्रयोगोऽग्रे संकीर्तयिष्यमाणब्रह्मगुणविशिष्ट-प्राणदृष्टिलाभार्थ इति न तस्य काचिदनुपपत्तिः। नापि तस्मिन्नात्मशब्दप्रयोगानुपपत्तिरिति सर्वं समञ्जसम्।

यद्वा नामादिषु ब्रह्मदृष्टिविधिरेवास्तु। आत्मशब्दोऽपि तद्विषयोऽस्तु। न चैतावता दृष्टिविशेषणतया उपसर्जनस्य तस्य प्रकरणित्वम्, किन्तु तद्दृष्ट्योपासनीयतया प्रधानभूतानां नामादीनामेव। सन्निधानमात्रं तु तस्य स्यात्। तत्तु सदपि प्रकरणाद्दुर्बलम्। अथवाऽस्तु परमात्मनो महाप्रकरणम्, तथाऽपि 'प्राणो वा आशाया भूयान्' (छा. ७. १५. १) इत्यारभ्यावान्तरप्रकरणं तावदभ्युपेयम्। तच्च 'एष तु वा अतिवदति' (छा. ७. १६. १) इत्यादावप्यतिवादित्वप्रत्यभिज्ञानादनुवर्तमानं न बाध्यते। अतस्तस्य 'अथातोऽहङ्कारादेशः' (छा. ७. २१. १) इत्येतत्पर्यन्ते भूमनिरूपणेऽप्यनुवृत्तत्वात् भूमा प्राण एवेति न भूमलक्षणमुखेनाद्वितीयब्रह्मसिद्धिः। महाप्रकरणिनस्तु परमात्मनः कामं 'अथात आत्मादेशः' (छा. ७. २५. २) इत्यारभ्य निरूपणमस्तु। भूम्न एव परमात्मत्वे 'स एवाधस्तात्' (छा. ७. २५. १) इत्यादिना तस्य सर्वगतत्वनिरूपणानन्तरं 'आत्मैवाधस्तात्' (छा. ७. २५. २) इत्यादिना पुनः सर्वगत-त्वनिरूपणमपि पुनरुक्ततयाऽनुपपन्नं स्यात्।

ननु 'अथात आत्मादेशः' इत्यारभ्य जीवोपदेशः प्रकरणिनो भूम्नस्तदनन्यत्वप्रदर्शनार्थः। उभयोरपि हि 'स एवेदं सर्वम्' (छा. ७. २५. १) 'आत्मैवेदं सर्वम्' (छा. ७. २५. २) इति सार्वात्म्यमुपदिष्टम्। अत उभयोर्भिन्नयोः सार्वात्म्यायोगादभेदः सिध्यतीति चेत्; न। 'अथातोऽहङ्कारादेशः' इत्यारभ्य 'अहमेवेदं सर्वम्' इत्यन्तेन जीवस्योपदिष्टतया पुनस्तदुपदेशवैयर्थ्यात्। अतः 'स एवेदं सर्वम्' इत्यन्तः प्राणोपदेशः। 'अथातोऽहङ्कारादेशः' (छा. ७. २५. १) इत्यारभ्य जीवोपदेशः। 'अथात आत्मादेशः' (छा. ७. २५. २) इत्यारभ्य महाप्रकरणिनः परमात्मन उपदेशः। तस्माद्यथा परमात्म-प्रकरणानुवृत्त्या द्युभ्वाद्यायतनं परमात्मा, एवं प्राणप्रकरणानुवृत्त्या भूमा प्राण इति।

एवं प्राप्ते **सिद्धान्तः**—भूमा परमात्मा, न प्राणः; प्राणादूर्ध्वमुपदेशात्। न च तदसिद्धिः; 'एष तु वा' (छा. ७. १६. १) इत्यादौ तुशब्दसत्यश्रुतिभ्यां प्राणातिवादिनोऽन्यस्य ततोऽधिकस्य सत्या-तिवादिताप्रतीतेः। न च तत्र प्राणातिवादिन एव नामाद्यतिवादिभ्यो विशेषप्रदर्शनम्; प्राण इव नामा-

दिष्यतिवादिनोऽनुक्तेः, सत्यशब्दस्य परमार्थे ब्रह्मणि मुख्यस्य तद्विषयत्वे सम्भवति प्राणविषयत्वकल्पनायोगाच्च। अत एव प्राणातिवादिनः सत्यवचनरूपाङ्गविधायकत्वकल्पनमप्ययुक्तम्; परमार्थे रूढस्य सत्यशब्दस्य तद्विषये वचसि लक्षणया प्रयोगोपपत्तौ तत्र तस्य शक्त्यन्तरकल्पनायोगात्, 'सत्येन' इति तृतीयाया ब्रह्मण्यतिवदननिमित्ततारूपकरणत्वपरतया कारकविभक्तित्वोपपत्तौ सहार्थविषयतयोपपदविभक्तित्वकल्पनायोगाच्च। न चाग्रे 'अथ सत्यं वदति' इत्यादिदर्शनात्तथा कल्प्यम्; अभ्यस्तातिवदनोपक्रमगतसत्यपदरूढ्यनुसारेण 'सत्यं वदति' इत्यस्यापि परब्रह्मातिवदनपरत्वात्। सत्यस्यातिवदने निमित्तत्वविवक्षया तृतीयावत् तद्विषयत्वविवक्षया द्वितीयाया अप्युपपत्तेः।

'एष तु वा अग्निहोत्री' इति न्यायस्त्वत्र न प्रवर्तते। तत्र द्रव्यदेवतान्तराभावेनाग्निहोत्रान्तराप्रतीतेः तुशब्दस्वारस्यभङ्गः, इह तु प्रकृतातिवादनिमित्तप्राणव्यतिरिक्तसत्यशब्दोक्तपरब्रह्मरूपातिवादनिमित्तप्रतीतेः तत्स्वारस्यभङ्गो न युक्तः। तुशब्देन ह्यतिवाद्यन्तरमवसीयते, सत्यशब्देन निमित्तान्तरम्, कुतस्तदुभयस्वारस्यभङ्गेन प्रकृतातिवादविषयत्वकल्पनावकाशः? तस्मात् तुशब्दप्रत्यायितातिवाद्यन्तरनिमित्ततयोपात्तसत्यशब्दोदितः परमात्मेति तत्प्रकरणाविच्छेदात् भूमा परमात्मैव; 'तरति शोकमात्मवित्' (छा. ७. १. ३) इति परमोपक्रमप्रस्तावितपरमात्मप्रकरणाविच्छेदाच्च। न चाग्रे नामादीनां तदुपासनानां चोपदेशादात्मप्रकरणासिद्धिः; नामाद्युत्तरोत्तरोत्कृष्टवस्तूपदेशानां परमोत्कृष्टब्रह्मप्रतिपत्त्यर्थत्वेन, तेषु ब्रह्मदृष्टिविधीनां गोदोहनवदाश्रित्यविधिरूपत्वेन च तत्प्रकरणाविरोधित्वात्। न च तथाऽपि सन्निधिना, अवान्तरप्रकरणेन वा 'एष तु वा' (छा. ७, १६. १) इत्यादेः प्राणान्वयः शङ्कनीयः। आत्मप्रकरणेन, तुशब्देन, सत्यश्रुत्या च तद्बाधात्, अभिक्रमणवत् पूर्वोत्तरसन्दंशाभावेनावान्तरप्रकरणासिद्धेश्च। न च भूम्नः परमात्मत्वे 'स एवाधस्तात्' (छा. ७. २५. १) इत्याद्युपदेशानन्तरं 'आत्मैवाधस्तात्' (छा. ७. २५. २) इत्युपदेशवैयर्थ्यम्। भूम्नः स इति परोक्षनिर्देशेन नित्यापरोक्षाद्द्रष्टुरन्यत्वशङ्का स्यादिति तदनन्यत्वप्रदर्शनार्थत्वात्।

न चाहङ्कारोपदेशेन, आत्मोपदेशेन वा तदनन्यत्वप्रदर्शनसिद्धावन्यतरवैयर्थ्यम्। परमात्मनो हि जीवेनान्तःकरणावच्छिन्नेन तदुपाधिकर्तृत्वभोक्तृत्वपरिच्छेदादिमता अहंपदवाच्येन रूपेणैक्यं नाभिमतम्, किन्तु ततो निष्कृष्टेन शुद्धेनाहंपदलक्ष्येण रूपेण। तच्च न लोकतो विदितम्, किन्तु श्रुत्यैव। तदपि

रूपं प्रत्याय्य तदैक्यं भूम्नः प्रदर्शनीयम् । तत्र यदि केवलमहङ्कारादेशः, आत्मादेश इति वा क्रियेत, तदा लोके अहंपदवाच्यस्यैवाहमर्थत्वेनात्मत्वेन च प्रसिद्धत्वात्तदादेश एवायमिति भ्रान्तिः स्यात् । तत्र 'अहमेवाधस्तात्' (छा.७.२५.१) इत्यादिकमनुपपन्नमित्यपि शङ्का स्यात् । अतः स्थूलारुन्धतीन्यायेन प्रथममहं पदवाच्येनैक्यं प्रदर्श्य तत्प्रसक्तशङ्कानिराकरणेन वस्तुतत्त्वावबोधनाय तदनन्तरं तन्निष्कृष्टशुद्धरूपविवेचनपूर्वकं तदैक्यं प्रदर्शयितुमात्मादेश इति न कस्यापि वैयर्थ्यम् । अत एव 'अहङ्कारस्यात्मैकत्वेन प्रत्यक्षसिद्धस्य पृथगुपदेशो भेदार्थः, भूमात्मनोर्भिन्नत्वेन प्रत्यक्षासिद्धयोः पृथगुपदेश ऐक्यार्थः, द्वयोः सार्वात्म्यायोगत्' इति विवरणकारा वदन्ति ।

यदत्र चोदयन्ति—अहमर्थादन्यस्यात्मनो भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात् तयोरुपदेशो भेदार्थः, अहमर्थस्य तु ब्रह्मभिन्नत्वेन प्रत्यक्षसिद्धत्वात्तयोरुपदेश ऐक्यार्थ इति वैपरीत्यमपि वक्तुं शक्यम् । सार्वात्म्योपदेशश्चासिद्धः । 'स एवेदं सर्वम्' (छा. ७. २५. १) 'अहमेवेदं सर्वम्' (छा. ५. २. ६) 'आत्मैवेदं सर्वम्' (छा. ७. २५. २) इत्युपसंहाराणां 'स एवाधस्तात्' (छा. ७. २५. १) इत्याद्युपक्रमानुसारेण सर्वगतत्वपरत्वात् । सर्वगतत्वं च बहूनां सम्भवतीति न तत्सामर्थ्यादैक्यासिद्धिः । तत्सिद्धौ वा भूमात्मोपदेशाभ्यामेव तत्सिद्धिसम्भवेन मध्ये अहङ्कारोपदेशवैयर्थ्यं च—इति ।

तत्राहंकारोपदेशवैयर्थ्यं तावत् परिहृतम् । यथा हि 'अस्त्यरुन्धती नाम वसिष्ठस्य पत्नयति सूक्ष्मताराऽरूपा' इति वस्तुविशेषसद्भावमुपदिश्य ताराविशेषे तदभेदं बोधयितुकामः समीपवर्तिस्थूलताराभिभूततया विविच्याप्रकाशमाने तस्मिन्नाहत्य तदभेदं बोधनीयो बोद्धुं न प्रभवेदिति प्रथमं तामेव स्थूलतारां 'इयमतिसूक्ष्माऽरुन्धती' इत्युपदिश्य तत्र प्रसक्तसौक्ष्म्यानुपपत्तिशङ्कावारणेन वस्तुतत्त्वबोधनार्थं 'इयन्त्वति सूक्ष्माऽरुन्धती' इति स्थूलताराविवेचनेन सूक्ष्मताराविशेषं ग्राहयित्वा तत्रारुन्धत्यभेदमुपदिशतीति न तत्र स्थूलतारोपदेशवैयर्थ्यम्; तद्विवेकेन सूक्ष्मताराग्रहणसौकर्यार्थत्वात्; एवमिहापीति ।

न च सार्वात्म्योपदेशासिद्धिः; 'स एवाधस्तात्' (छा. ७. २५. २) इत्युपक्रमाणामप्यवधारणैः तद्व्यतिरिक्तवस्त्वभावप्रतिपादनेन सार्वात्म्यपर्यवसायित्वात् । नापि भूमाहमर्थोपदेशयोरैक्यार्थत्वं, भूमात्मोपदेशयोर्भेदार्थत्वं चेति वैपरीत्यं वक्तुं शक्यम्; अहमर्थोपदेशस्य स्थूलारुन्धतीन्यायेन भूमात्मैक्यार्थत्ववर्णनया प्रमाणान्तराविरुद्धनयनसम्भवे तत्कर्तृत्वभोक्तृत्वपरिच्छिन्नत्वादिग्राहकप्रमाणान्तरविरुद्धभूमाहमर्थैक्यार्थ-

त्वकल्पनायोगात् । भूमात्मनोरैक्यस्याप्रसक्तत्वेन तयोरुपदेशस्य ऐक्यनिषेधात्मकभेदार्थत्वायोगात् । न हि विधिवन्निषेधोऽपि स्वविषयप्रमाणान्तराप्रवृत्तिमात्रेण चरितार्थः, किन्तु प्रतियोगिप्रसक्तिमप्यपेक्षत एव । तस्मादुपक्रमोपसंहारैकरूप्यावगमात् प्रकरणादपि भूमा परमात्मा; न प्राणः ।

सूत्रे सम्प्रसादशब्दः सुषुप्त्यवस्थावाचकस्तदवस्थाप्रधानस्य प्राणस्येह लक्षकतया प्रयुक्तः । यद्यपि सम्प्रसादशब्दः 'य एष सम्प्रसादोऽस्मात्' (मै. २. २) इत्यादिश्रुतिषु जीवे प्रसिद्धः, तथाऽपि 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा' (बृ. ४. ३. १७) इत्यादिश्रुतिप्रयोगात् 'सम्यक् प्रसीदत्यस्यामवस्थायां जीवः' इति व्युत्पत्त्या सुषुप्तावेव रूढो जीवस्यापि लक्षक एव । अत एव सुषुप्त्यवस्थायोगिनि जीवे 'सुप्तः समस्तः सम्प्रसन्नः' इति सम्प्रसन्नशब्दप्रयोगः । ततश्च जीव इव प्राणेऽपि लक्षणया तस्य प्रयोगो न विरुध्यते । अस्ति च सम्प्रसादशब्देन प्राणवायुलक्षणया तस्य 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' (प्र. ४. ३) इति श्रुत्या, लोकतश्च सिद्धस्य सर्वकरणप्रत्यस्तमयरूपायां सुषुप्तौ जागरणस्योद्घाटनेन प्राणो भूमेति पूर्वपक्षे तास्मिन् 'यत्र नान्यत्पश्यति' (छा. ७. २४. १) इत्यादिभूमलक्षणस्य, सुखत्वामृतत्वयोश्च उपपादनं फलम् । ततश्च प्राणादूर्ध्वमुपदेशादिति सौत्रो हेतुः । 'प्रकरणात्' इति हेत्वन्तरं तु उत्तरसूत्रे चशब्दसंगृहीतमनागतावेक्षणन्यायेन दर्शितम् ।

नन्वयं सौत्रो हेतुः परमात्मत्वे सिद्धान्तसाध्ये, उत प्राणत्वाभावे पूर्वपक्षनिरासे ? नाद्यः । आनन्दमयप्रकरणे मनोमयादिषु व्यभिचारात्, भूमप्रकरणे च विज्ञानमतिश्रद्धादिषु व्यभिचारात् । स्यादेतत्; 'सम्प्रसादादध्युपदेशात्' इत्यस्य प्राणादधिकत्वेन उपदेशादित्यर्थः । न चैवं सति मनोमयादिषु व्यभिचारः; तत्र प्राणान्तरत्वादिनोपदेशेऽपि तदधिकत्वेनोपदेशाभावात् । न चात्र तदसिद्धिः; इह प्रकरणे पूर्वनिर्दिष्टादूर्ध्वमभिधानं तदधिकस्यैवेति वागादिषु दृष्टत्वेन प्राणादूर्ध्वमभिहिते भूम्नि तदधिकत्वसिद्धेः, 'वाग्वाव नाम्नो भूयसी' (छा. ७. २. १) इत्यादौ भूयश्शब्दवदिहाधिक्यपरस्य भूमशब्दस्य प्रयोगाच्च । तस्य सङ्कोचकाभावेन सर्वत आधिक्यपरत्वेऽपि पूर्वनिर्दिष्टप्राणाधिक्यसिद्धेरसन्दिग्धत्वात् । अपि च 'एष तु वा अतिवदति यः सत्येनातिवदति' (छा. ७. १६. १) इत्यत्र, 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इत्यत्र गोअश्वेषु अन्येभ्यः प्राशस्त्यवत् सत्यातिवादिनि प्राणातिवादिनः प्राशस्त्यं तावत् प्रतीयते । ततः एतस्य प्राशस्त्यं च तदतिवदननिमित्तात् प्राणादेतदतिवदननिमित्तस्य सत्यस्याधिक्यकृतमेवावसीयत इति ततोऽपि

प्राणादाधिक्यासिद्धिः इति चेत्। नैवम्, एतावताऽपि वाचनिकस्य प्राणादाधिक्योपदेशस्यानिर्व्यूढत्वात्, अर्थादाधिक्यसिद्धेश्च प्राणादान्तरत्वेनोपदिष्टेषु मनोमयादिषु व्यभिचारात्, 'मन एव पिता वाङ् माता प्राणः प्रजा' (बृ. १. ५. ७) 'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च' (छा. ३. १८. ४) 'पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमः' (छा. ५. ७. १) इत्यादिश्रुतिभिर्वाङ्मनसवायुपुरुषादिषु प्राणादाधिक्यसिद्धिसत्त्वेन व्यभिचाराच्च। तस्मात् सिद्धान्तसाध्ये नायं हेतुः, नापि पूर्वपक्षनिरासे; समन्वयसूत्रात् सिद्धान्तसाध्यस्यैव पूर्वपक्षनिराससाध्यस्य क्वचिन्निर्दिष्टस्य प्रत्यधिकरणमनुवृत्त्यभावेन 'नेतरोऽनुपपत्तेः' (ब्र. सू. १. १. १६) इत्यादाविवात्रापि निर्देशप्रसङ्गात्, प्रथमवक्तव्यं सिद्धान्तहेतुमनुक्त्वा पूर्वपक्षनिरासहेतूक्त्ययोगात्, 'धर्मोपपत्तेः' इत्युत्तरसूत्रहेतोः सिद्धान्तसाध्यविषयत्वेनास्यापि तदेकविषयतौचित्याच्चेति चेत्।

उच्यते—पूर्वपक्षनिरासे साध्येऽयं हेतुः। तस्य च साध्यस्य 'नानुमानम्' इति सूत्रगतेन नञा सह 'प्राणभृत्' इति सूत्रस्थस्य प्राणपदस्यानुवर्तनेन लाभः। तत्र हि जीवे प्राणभृत्पदप्रयोगस्य तस्मिन् 'ओतं मनः सह प्राणैश्च सर्वैः' इति श्रुतप्राणाश्रयत्वोपपादनेन पूर्वपक्षसमर्थनवदिहानुषङ्गलाभोऽपि प्रयोजनम्। प्रथममिह पूर्वपक्षनिरासहेतूक्तिः तत्सामर्थ्यादेव सिद्धान्तहेतुरपि लभ्यत इति लाघवप्रतिसन्धानात्। पूर्वपक्षनिरासको हि सौत्रो हेतुः परमात्मनि रूढां सत्यश्रुतिमपेक्ष्य समर्थनीयः। ततश्च तयैव सत्यं प्रकृत्याम्नातो भूमा परमात्मा इत्यपि सिध्यति। न च सत्यश्रुतिमनपेक्ष्य तुशब्दमात्रेण प्रकरणविच्छेदो लभ्यत इति वाच्यम्; 'एष तु वा अग्निहोत्री' इति वाक्यवैषम्यहेतुतया तत्राग्निहोत्रान्तरोपपादकद्रव्यदेवतान्तरं नास्ति, अत्र त्वतिवादान्तरनिमित्तं सत्यशब्दोदितं ब्रह्मास्तीति प्रदर्शनीयत्वात्।

ननु सत्यश्रुत्या भूम्नः परमात्मत्वे साधिते तदधीनात्मलाभः तस्य प्राणत्वनिरासहेतुः प्राणादूर्ध्वमुपदेशोऽर्थात् सिध्यतीति वैपरीत्यमपि सम्भवतीति चेत्, उच्यते। सत्यश्रुत्या भूमा परमात्मेति सिद्धिमात्रेण प्राणो न भूमेति न सिध्यति। भूमवत् प्राणोऽपि परमात्मैव; भूम्नः परमात्मत्वे सत्यश्रुतिभूमलक्षणमहाप्रकरणवत् प्राणस्य परमात्मत्वेऽपि सर्वप्रतिष्ठात्वसर्वात्मत्वलिङ्गसत्त्वात्। अतो भूमा प्राण एव; 'एष तु वा' इत्यादेर्नामाद्यतिवादिभ्यः प्राणरूपपरमात्मातिवादिनो विशेषप्रदर्शनार्थत्वस्य तस्यैव सत्यवदनरूपाङ्गविधनार्थत्वस्य (वा) चोपपत्तेरिति शङ्कान्तरावकाशात्। अतस्तस्यापि निवर्तनमभिप्रेत्य पूर्वपक्षनिरासकः 'संप्रसादादध्युपदेशात्' इति हेतुर्मुखत उक्तः। तेन प्राणादूर्ध्वं भूम्न उपदेशस्य सिद्धवदुपादाय हेतूकरणमहिम्ना प्राणभूम्नोः परमात्मभावेनापि ऐक्यं निराकृतं भवति। तन्निराकरणं च पूर्वत्र प्राणशब्दस्य प्राणवायावुत्तरत्र सत्यशब्दस्य परमार्थे ब्रह्मणि च रूढत्वादतिवदनीयभेदेन तदुपपादकतुशब्दमहिम्ना चेति पूर्वोक्तरीत्यैवानुसन्धेयम्।

प्राणे यथा सर्वप्रतिष्ठात्वं सर्वात्मत्वं च ब्रह्मलिङ्गं दृश्यते, तथा 'यद्यप्येनानुत्क्रान्तप्राणान्' (छा. ७. १५. ३) इत्युत्क्रमणं प्राणस्थितितदस्थित्योर्हननाहननप्रथाऽनुवादरूपं च प्राणलिङ्गमपि दृश्यते। न हि प्राणवायोरिव सर्वगतस्य परमात्मनो मुख्यमुत्क्रमणं सम्भवति, न वा 'स यदि पितरं वा मातरं वा भ्रातरं वा' (छा. ७. १५. २) इत्यादिना प्रदर्शितो हननाहननप्रथानुवादः। अयं हि लौकिकप्रथाऽनुवादः। लौकिकाश्च श्वाससञ्चारसत्त्वासत्त्वाभ्यां प्राणवायोरेव स्थित्यस्थिती ज्ञातुं शक्नुवन्ति, न तदतिरिक्तस्य जीवस्यापि, दूरे परमात्मनः। अतिरिक्तजीवाभिज्ञानां परीक्षकाणामपि प्राणवायुस्थित्यस्थितिभ्यामेव जीवस्यापि ते ज्ञातव्ये। अतः सर्ववेद्यप्रथमोपस्थितप्राणवायुसत्त्वासत्त्वनिबन्धनावेव हिंसोपक्रोशतदभावौ लौकिकानामिति तदनुवादः प्राणवायावेव सङ्गच्छते। एवं 'प्राणो ह पिता' (छा. ७. १५. १) इत्यादौ पितृत्वादिना प्रशंसनमपि प्राणवायुविषयमेव व्यवतिष्ठते। प्राणस्य पितृत्वादिकमन्वयव्यतिरेकाभ्यामुपपादयितुं प्रवृत्तस्य 'पितृहा वै त्वमसि' (छा. ७. १५. २) इत्यादेस्तत्रैव बहुधाऽभ्यस्तायाः प्राणश्रुतेरनुग्रहाच्च। ततश्च सर्वप्रतिष्ठात्वलिङ्गमपि तदनुरोधेनैव नेतव्यम्। एवं प्राणस्य भूमशब्दितात् प्रकरणिनः परमात्मनो भिन्नत्वे सत्येवाग्रे 'आत्मतः प्राणः' (छा. ७. २६. १) इति ततः प्राणस्योत्पत्तिवचनमुपपद्यते।

न च 'स्याच्चैकस्य ब्रह्मशब्दवत्' (ब्र. सू. २. ३. ५) इति न्यायेन 'प्राणो वा आशायाः' (छा. ७. १५. १) इत्यत्र प्राणशब्दस्य ब्रह्मपरत्वेऽपि 'आत्मतः प्राणः' (छा. ७. २६. १) इत्यत्र स वायुपरः स्यादिति वाच्यम्। नामादिप्राणान्ताः येन क्रमेणोत्तरोत्तरमुत्कृष्टा दर्शितास्तद्व्युत्क्रमेणैव 'आत्मतः प्राणः' (छा. ७. २६. १) 'आत्मत आशा' (छा. ७. २६. १) 'आत्मतः स्मरः' (छा. ७ २६. १) इत्यादेः प्रवृत्तत्वेनोभयोरपि प्राणशब्दयोरेकविषयत्वावश्यम्भावात्।

ननु भूमैव प्रकरणी परमात्मा, न प्राण इति सिद्धान्ते भूम्नः सर्वतो भूयस्त्वार्थमेव नामादिप्राणान्तानामुत्तरोत्तरभूयस्त्वेनानुक्रमणमिति वक्तव्यमभिमतं च। न च तद्युज्यते। तथा च सति प्राणाद्भूम्न्यपि भूयस्त्वविषययोः प्रश्नप्रतिवचनयोर्दर्शनापत्तेः। न च यदर्थमन्यत् प्रक्रान्तं तदनुक्तिर्युक्तेति चेत्, मैवम्। प्रश्नप्रतिवचनाभावेऽपि प्रकृतासम्बन्धनिमित्ततुशब्दसत्यश्रुतिभ्यां प्राणभूमभेदस्यावर्जनीयत्वात्। पूर्वपर्यायेष्वनुक्तस्यातिवादित्वस्य प्राणपर्याये 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति' (छा. ७. १५. ४) इति वचनेन प्राणस्य सर्वप्रतिष्ठात्वाद्युपन्यासेन च उपक्रान्तामोपदेशः प्राण एव

समाप्त इति मत्वा नारदे भूयोऽपृच्छति सनत्कुमारः प्राणविज्ञानमपि विकारानृतविषयमिति न तेन सम्यगति-वादित्वम्; किन्तु सत्येनैवेति सत्यविज्ञानं स्वयमेवोपचिक्षेप। ततः 'सोऽहं भगवः सत्येनातिवदानि' (छा. ७. १६. १) इति पृष्टवते विज्ञानादिसाधनपरंपरया तमेव सत्यं परमात्मानं भूमानमुपदिदेशेति प्रश्नप्रतिवचनाभावस्यान्यथोपपत्तेश्च। तस्मात् प्राणभूम्नोः परमात्मभावेनैक्यमिति शङ्कान्तरस्य नावकाशः। तदिदं शङ्कान्तरनिराकरणं सूचयितुं मुखतः पूर्वपक्षनिरासहेतुमुक्त्वा तेन सिद्धान्तहेतुर्गर्भीकृतः। तेनैव सिद्धान्तहेतुना 'धर्मोपपत्तेः' (१. ३. ९) इत्युत्तरसूत्रगतहेतोरेकविषयत्वम्। न च तत्र चशब्दः सूत्रद्वयोक्त-हेतुसमुच्चयार्थः, किंत्वनुक्तप्रकरणसमुच्चयार्थः इत्युक्तम्। तस्मात् सर्वमनाकुलम्। १. ३. ८।

## धर्मोपपत्तेश्च। ९।

दर्शनादिव्यवहाराभावनिरुपाधिकसुखत्वामृतत्वस्वमहिमप्रतिष्ठत्वसर्वगतत्वसर्वात्मत्वादीनां भूम्नि श्रूय-माणानां धर्माणां परमात्मन्येवोपपत्तेश्च भूमा परमात्मा। न ह्येतेषां निर्विशेषं परमात्मानमपहायान्यत्राऽऽञ्जस्य-मस्ति। दर्शनादिव्यवहाराभावस्तावत् 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' (बृ. ४. ५. १५) इत्यादिश्रुत्यादिषु तत्रैव प्रसिद्धः। न च 'न शृणोति न पश्यति' (प्र. ४. २) इत्यादिना सर्वकरणव्यापार-प्रत्यस्तमयरूपां सुषुप्तावस्थां प्रस्तुत्य 'प्राणाग्नय एवैतस्मिन् पुरे जाग्रति' (प्र. ४. ३) इत्याम्नानात् प्राणेऽपि तत्प्रसिद्धिरस्तीति वाच्यम्। परमात्मप्रकरणानुरोधेन तस्याः श्रुतेरात्मनोऽसङ्गत्वविवक्षया प्रवृत्ततया प्राणे दर्श-नाद्यभावपरत्वाभावात्। न हि तत्र प्राणविषयस्य, प्राणाधारस्य वा दर्शनादेरभावः कीर्त्यते, किन्तु सुषुप्ता-वात्मनो घटादिदर्शनाभावमात्रम्। न च प्राणे विद्यमाने दर्शनाद्यभावकीर्तनं तावदस्ति, तदेवेह लक्षणमिति वाच्यम्। सुषुप्तौ प्राणवद्देहस्यापि विद्यमानतया तन्मात्रस्य लक्षणत्वानुपपत्तेः। एतेन—सुषुप्तौ प्राणे जाग्रति दर्शनाद्यभावो लोकत एवावसित इत्यपि निरस्तम्। तस्मात् भूमलक्षणं तावत्परमात्मन्येव समञ्जसम्। एवं निरतिशयसुखत्वमपि। सुषुप्तौ सुखवचनमपि ह्यात्मन एव सुखरूपत्वविवक्षया प्रवृत्तम्। अमृतत्वमपि प्राणस्यापेक्षिकमेव, 'अतोऽन्यदार्तम्' (बृ. ३. ४. २) इति श्रुतेः। तस्माद्वाक्यशेषगतानां धर्माणां निर्वि-शेषपरमात्मन्येवोपपत्तिः।

न च वाक्यशेषगतमेव भूमविदः सर्वदर्शनकीर्तनं 'सर्वेषु लोकेषु कामचारो भवति' इति वैषयिक-फलकीर्तनं च तत्रानुपपन्नमिति वाच्यम्। सर्वदर्शनकीर्तनस्य 'यत्र नान्यत्पश्यति' (छा. ७, २४, १) इति

प्रथमश्रुतलक्षणानुसारतः सर्वविवर्ताधिष्ठानभावेन परमात्मदर्शनपरत्वात् । सार्वलौकिकफलकीर्तनस्य च 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः' (छा. ७. २५. २) इति स्रगाद्युद्यानादिवनिताविभूतिरूपविषयकृतसुखात्मकानां रतिक्रीडामिथुनानन्दानामात्मानतिरेकोक्त्या ब्रह्मानुभवितुर्मुक्तस्य तदतिरिक्तरत्यादिनिषेधपरप्रथमश्रुतवाक्यानुसारेण सर्वलोकसाध्यनिखिलसुखकणिकानां महाब्धिस्थानीयब्रह्मसुखानुभवपरत्वाच्च । तस्माद्धर्मोपपत्तेरपि भूमा परमात्मेति सुष्ठूक्तम् । अत्रोपक्रमोपसंहारैकरूप्यावगतस्य ब्रह्मप्रकरणस्य, तद्गतब्रह्मलिङ्गानां च भूमानन्वयेन पूर्वपक्षीकरणादस्पष्टब्रह्मलिङ्गता । १. ३. ९ ।

इति भूमाधिकरणम् । २ ।

(३ अधिकरणम्)

## अक्षरमम्बरान्तधृतेः । १० ।

बृहदारण्यके 'यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतञ्च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतञ्च प्रोतञ्च' (बृ. ३. ८. ३) इति गार्ग्या पृष्टेन याज्ञवल्क्येन 'आकाश एव तदोतं च प्रोतं च' (बृ. ३. ८. ४) इत्युत्तरिते 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ. ३. ८. ७) इति पुनस्तया पृष्टस्य तस्य वचनमाम्नायते 'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ. ३. ८. ८) इत्यादि 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. ३. ८. ११) इत्यन्तम् । अत्राक्षरं प्रणवात्मको वर्णः, परमात्मा वेति संशये प्राप्तं तावत् वर्ण एवाक्षरमिति । 'अक्षरसमाम्नायः' इत्यादौ वर्णेष्वक्षरशब्ददर्शनात् । ननु 'यया तदक्षरमधिगम्यते' (मु. १. १. ५) इत्यादिश्रुतिषु परमात्मन्यपि स दृष्टः । सत्यं दृष्टः । लौकिकवैदिकप्रसिध्यतिशयसत्त्वात् वर्णेषु तत्प्रयोगो रूढ्या । परमात्मनि तु नित्यसर्वगते 'न क्षरति, अश्नुते वा' इति योगेन । रूढिश्च योगात् बलीयसी । नन्वाकाशान्तसकलजगद्धारकत्वलिङ्गमनुपपन्नं वर्णे । न च लिङ्गादक्षरश्रुतिर्बलीयसीति वाच्यम् । 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ. ३. ८. ७) इति 'एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. ३. ८. ११) इति प्रश्नोत्तररूपाभ्यामुपक्रमोपसंहाराभ्यां प्रतिपिपादयिषितत्वेन 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतस्तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतं श्रोत्रमतं मन्तृविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति

श्रोतृ नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ' इति श्रुतप्रशासितृत्वद्रष्टृत्वश्रोतृत्वमन्तृत्वविज्ञातृत्वद्रष्टृत्वादिरूपजीवाभेदात्मकबहुलिङ्गसहकृतत्वेन चास्य लिङ्गस्य श्रुतेः प्रबलत्वादिति चेत् ।

उच्यते—जगद्धारकत्वं वर्ण्यमानं नास्ति । न खल्वत्रौतप्रोतशब्दाभ्यामक्षरस्य जगतश्चाधाराधेय भावः प्रतिपाद्यते; पूर्वत्र गार्गीब्राह्मणे 'यदिदं सर्वमप्स्वोतञ्च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्च' (बृ. ३. ६. १) इत्यादिभिर्गार्ग्याः प्रश्नैः 'वायौ गार्गि' (बृ. ३. ६. १) इत्यादिभिर्याज्ञवल्क्यस्योत्तरैश्च परिदृश्यमानपार्थिवधातुजातसलिलवाय्वन्तरिक्षलोकगन्धर्वलोकादित्यलोकचन्द्रलोकनक्षत्रलोकदेवलोकेन्द्रलोकप्रजापतिलोकब्रह्मलोकानां पूर्वपूर्वस्योत्तरोत्तरस्मिन्नोतप्रोतत्ववर्णनात् । तत्रानुक्रान्तानामन्तरिक्षलोकादीनां तत्तदुपरितनगन्धर्वलोकाद्याधारत्वायोगात् । अतस्तत्र पूर्वपूर्वलोकेभ्यः उत्तरोत्तरलोकानां कयाचिद्विवक्षयोत्कर्षमभिप्रेत्य ओतत्वप्रोतत्ववर्णनमिति नेतव्यम् । सम्भवति हि यथा पटे दीर्घतिर्यक्तन्तव ओतप्रोतास्तस्यैकदेशा एवं गन्धर्वलोकानां भूतौ दृश्यमानायामन्तरिक्षलोका विभूतितस्तदेकदेशप्राया इति विवक्षया सादृश्यादोतप्रोतत्ववर्णनस्योत्कर्षपर्यवसानम् । अतस्तदुपरितनप्रश्नोत्तरसन्दर्भरूपाक्षरब्राह्मणगतौतप्रोतत्ववर्णनमपि तथैव नेतुं युक्तम् । तच्चोपपद्यत एव प्रणवे । 'ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानम् । एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा. १. १–३) इति श्रुत्यन्तरे तस्य सर्वोत्कृष्टत्वप्रसिद्धिसत्त्वात् । तत्र कयाचिद्विवक्षया पृथिवीजलौषध्यादिक्रमेणोत्तरोत्तरमुत्कर्ष उक्तः, इह तु विवक्षान्तरेण पृथिवीजलवाय्वादिक्रमेणेति एतावानेव विशेषः पर्यवस्यतीति न प्रणवे ओतप्रोतत्ववर्णनस्यानुपपत्तिः । यदि चौतप्रोतशब्दाभ्यां तस्य तस्य तत्र तत्र वर्तमानत्वमेवोच्यते, तथाऽपि प्रणवे जगदाधाराकाशौतत्वप्रोतत्ववर्णनस्य न काचिदनुपपत्तिः । जगदाधार आकाशः परमात्मा हृदयादित्यमण्डलादिवदुपासनस्थाने प्रणवे वर्तत इति सामञ्जस्यात् । न चान्याश्रितत्वोक्तिस्वारस्यादिहाकाशः प्रसिद्ध एव ग्राह्य इति वाच्यम्; पूर्वसन्दर्भविरोधात् ।

एवं ह्युपाख्यायते बृहदारण्यके—जनकस्य यज्ञे कुरुपाञ्चालदेशागतेषु ब्राह्मणेष्वभिसमेतेषु 'कः स्विदेतेषां ब्रह्मिष्ठः' इति जिज्ञासुना जनकेन शृङ्गद्वयाबद्धपलपरिमितसुवर्णालङ्काराः सहस्रं गाः समानीय 'ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजताम्' (बृ. ३. १. २) इत्युक्ते तेषु ब्राह्मणेष्वधृष्टतया

स्थितेषु, याज्ञवल्क्यः स्वशिष्यमुवाच 'एताः सोम्य उदज सामश्रवा' (बृ. ३. १. २) इति । ततस्तेषु ब्राह्मणेषु क्रुद्धेषु तमाश्वलः पप्रच्छ 'त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसि' (बृ. ३. १. २) इति । 'नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयं स्मः' (बृ. ३. १. २) इति याज्ञवल्क्यस्योक्तिभंग्या तस्य ब्रह्मिष्ठत्वाभिमानमधिकं सन्तमवधार्य तद्विजिगीषया आश्वलादिषु केषुचित् तं पृष्टवत्सु, तेन च सदुत्तराक्त्या जितेषु, 'अथ हैनं गार्गी वाचक्नवी पप्रच्छ' (बृ. ३. ६. १) इत्यादि गार्गीब्राह्मणं प्रवृत्तम् । तत्र गार्ग्या 'यदिदं सर्वमप्स्वोतं च प्रोतञ्च' (बृ. ३. ६. १) इत्यादिना तत्तदुत्तरानन्तरं पुनः पुनः पृष्टस्य याज्ञवल्क्यस्य क्रमेण 'ब्रह्मलोकेषु गार्गि' (बृ. ३. ६. १) इत्युत्तरे सति 'कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च' (बृ. ३. ६. १) इति पुनः पृष्टेन याज्ञवल्क्येन 'गार्गि माऽतिप्राक्षीर्मा ते मूर्द्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि माऽतिप्राक्षीः' (बृ. ३. ६. १) इति सक्रोधमुक्ते भीता गार्गी उपरराम । ततः उद्दालके प्रसिद्धे ब्रह्मविदि सूत्रमन्तर्यामिणं च पृष्टवति याज्ञवल्क्येन जिते पुनर्गार्गी सर्वेषां ब्राह्मणानां पराजयो जायत इति शङ्कया याज्ञवल्क्यस्य क्रोधं ब्राह्मणानामनुज्ञयैवाकिञ्चित्करतामापाद्य प्राक् 'माऽतिप्राक्षीः' इति निवारितं प्रश्नं पुनः करिष्यामीत्याशयवती 'ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेत् मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेता' (बृ. ३. ८. १) इति तेषामनुज्ञां याचित्वा 'पृच्छ गार्गि' (बृ. ३. ८. १) इति तैरनुज्ञाता 'अहं वै त्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ शरौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहि' (बृ. ३. ८. १) इति द्वितीयप्रश्ननिवारणपरिजिहीर्षया प्रश्नद्वयानुज्ञां पृष्ट्वा 'पृछ' इति तदनुज्ञाता 'यदूर्ध्वं याज्ञवल्क्य दिवः' (बृ. ३. ८. ३) इत्यादिना सर्वदेशकालानुवृत्तसकलप्रपञ्चाधारं पृष्ट्वा 'आकाशे तदोतं च प्रोतं च' (बृ. ३. ८. ४) इत्युत्तरिते 'नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचः' (बृ. ३. ८. ५) इति तं प्रशस्य इतः परं द्वितीयप्रश्नस्योत्तरमशक्यमित्याशयेन 'अपरस्मै धारयस्व' (बृ. ३. ८. ५) इत्युक्त्वा 'पृच्छ' इति तेनोक्ते प्रथमप्रश्नोत्तरस्थिरीकरणार्थं पुनरपि 'यदूर्ध्वं याज्ञवल्क्य दिवः' (बृ. ३. ८. ६) इत्यादिना प्राक् पृष्टमेव पृष्ट्वा याज्ञवल्क्येन 'यदूर्ध्वं गार्गि' इत्यादिना तदुक्तं सर्वमनूद्य 'आकाश एव तदोतं च प्रोतं च' (बृ. ३. ८. ७) इति प्राचीनोत्तर एवावधारणेन दृढीकृते तदनन्तरं कृतस्य 'कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च' (बृ. ३. ८. ७) इति द्वितीयप्रश्नस्यो-

त्तरतया 'एतद्वै तदक्षरम्' (बृ. ३. ८. ८) इत्यारभ्य 'एतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च' (बृ. ३. ८. ११) इत्यन्तं कृत्स्नमक्षरब्राह्मणं प्रवृत्तमिति ।

अत्र गार्गीब्राह्मणान्ते याज्ञवल्क्येन यः प्रश्नः सक्रोधं निवारितः, स एव खलु गार्ग्या सर्वेषां पराजयो भविष्यतीति भीतया तस्य क्रोधमविगणय्य पुनरवतारितः । तस्य प्रश्नस्य परमात्मनि पर्यवसानं गार्गीब्राह्मण एव 'अनतिप्रश्न्यां वै देवतामतिपृच्छसि' (बृ. ३. ६. १) इति याज्ञवल्क्यवचनेन स्फुटमिति तदनुसारेण तदुत्तरगतस्याकाशशब्दस्य परमात्मपरत्वमेव युक्तम् । अत एव प्रश्ननिवारणभंग्यैव याज्ञवल्क्यः प्रथमप्रश्नस्योत्तरं वक्तुं जानातीत्यवगत्य द्वितीयप्रश्न एव भारं निधाय युगपत् प्रश्नद्वयानुज्ञामर्थितवतीति सङ्गच्छते । प्रथमप्रश्नोत्तरप्रशंसामिव कृत्वा सर्वाधारस्य परमात्मनः केनचित् प्रकारेण कश्चिदाधारोऽस्तीति ज्ञात्वा वक्तुमयं न पारयिष्यतीत्याशयेन 'अपरस्मै धारयस्व' इति धृष्टमुक्तवतीत्यपि सङ्गच्छते । प्रणवस्य परमात्मोपासनास्थानतया तदधिकरणत्वेनोत्तरमपि सङ्गच्छते । प्रसिद्धं हि हृदयादिषु प्रणवं विचिन्त्य तन्मध्यवर्तित्वेन परमात्मोपासनं श्रुतिस्मृतिपुराणागमेषु । यदि चाकाशः प्रसिद्धाकाशः, तथाऽपि प्रणवे तदाधारत्वस्य नानुपपत्तिः । अवकाशात्मके प्रसिद्धाकाशे सर्वं वस्तु विश्रान्तम् । सोऽपि स्वकारणे शब्द-तन्मात्रे प्रणवसूक्ष्मावस्थारूपत्वेन प्रसिद्धे प्रतिष्ठित इति सामञ्जस्यात् । यदि चाकाशस्य तत्रौतप्रोतत्वेन वर्णितस्य जगतश्चाक्षरमाधारत्वेन वक्तव्यमिति निर्बन्धः, तस्यापि नास्त्यनुपपत्तिः प्रणवे; आकाशद्वारा तस्य तदन्यजगदाधारत्वोपपत्तेः ।

आकाशस्य जगतश्च द्वारद्वारिभावं विनैव ओतप्रोतत्वमक्षरे वक्तव्यमिति निर्बन्धेऽपि नानुपपत्तिः; 'ओंकार एवेदं सर्वम्' (छा २. २३. ३) इति श्रुत्यन्तरे प्रणवस्य सर्वात्मत्वश्रवणात् । तदनुसारेणात्रापि तादात्म्येन सर्वमोतप्रोतं प्रणव इति तात्पर्यवर्णनोपपत्तेः । न च—श्रुत्यन्तरं ब्रह्मप्रतिपत्तिसाधने प्रणवे ब्रह्म-गतासार्वात्म्यमारोप्य स्तुतिमात्रपरम्; प्रणवस्य वस्तुतः सार्वात्म्यायोगात्, इह तन्मात्रमवलम्ब्योपक्रमोप-संहाराभ्यां प्रतिपिपादयिषितं लिङ्गमन्यथा नेतुमयुक्तम्—इति वाच्यम्; प्रणवेऽपि मुख्यसार्वात्म्योपपत्तेः । अर्थानां 'घटोऽयं पटोऽयम्' इत्यादिप्रतिभासेषु शब्दतादात्म्योपलम्भेन तत्तद्वाचकशब्दाश्रयत्वात् । शब्दानां च सर्वेषां 'तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा' (छा. २. २३. ३) इति श्रुत्या प्रणवात्मकत्वावगमात् ।

ननु 'घटोऽयम्' इत्यादि शब्दार्थसामानाधिकरण्यं 'मृद्घटः' 'नीलो घटः' इत्यादिवत् तादात्म्येनाश्रयिभावतो न भवति; शब्दानामार्थाश्रयत्वमर्थानां शब्दाश्रयत्वं वेत्यत्र विनिगमनाविरहात्, शब्दानामर्थानां च व्यवस्थितेन्द्रियग्राह्यत्वव्यवस्थितकार्यकरत्वादिवैलक्षण्यदर्शनेन भेदावश्यम्भावाच्च, किन्तु ज्ञाप्यज्ञापकभावतः। न च—ज्ञाप्यज्ञापकभावो न सामानाधिकरण्यप्रयोजकः; 'धूमो वह्निः' इति सामानाधिकरण्यादर्शनात्, ऐन्द्रियिकलैङ्गिकज्ञानेषु शब्दाजन्येष्वपि 'घटोऽयं पटोऽयम्' इत्यादिशब्दसामानाधिकरण्यानुभवाच्चेति वाच्यम्। ज्ञाप्यज्ञापकभावमात्रात् प्रत्यक्षतो दृश्यमानासु लिपिषु 'ककारोऽयम्' इत्यादिश्रूयमाणककारादिसामानाधिकरण्यानुभवदर्शनेन तद्वदिहाप्युपपत्तेः। वस्तुतो 'घटोऽयम्' इत्यादिप्रतिभासेषु पुरोवर्तिव्यक्तिषु घटशब्दादितादात्म्यं न स्फुरति, किन्तु घटशब्दादिसमर्पिततत्तदर्थतादात्म्यमेव। न हि 'घटोऽयम्' इत्यादीनां घटशब्दोऽयमित्यादिरर्थ इति कश्चिदप्यभिमन्यते, अन्यथा सर्वेषां शब्दानां स्वस्वरूपसमर्पणमात्रपरत्वे तत्तदर्थविशेषानवगतिप्रसङ्गादिति चेत्।

अत्र ब्रूमः—विनिगमनाविरहोक्तिस्तावदनुपपन्ना; 'स भूरिति व्याहरत् भूमिमसृजत स भुव इति व्यवहरत् सोऽन्तरिक्षमसृजत' (तै. ब्रा. २. २. ४. २) इत्यादिश्रुतिभिः 'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनां चकार सः' इत्यादिस्मृतिभिश्चार्थानां शब्दप्रभवत्वावधारणेन शब्दानामाश्रयत्वमर्थानामाश्रयित्वमित्यत्रोपादनोपादेयभावस्य विनिगमकस्य सत्त्वात्। ज्ञाप्यज्ञापकभावकृतं सामानाधिकरण्यमित्यप्ययुक्तम्; 'घटोऽयम्' इत्यादिसामानाधिकरण्यानुभवस्य 'मृद्घटः' इत्यादिवत् प्रमाणसिद्धोपादानोपादेयभावमूलतया प्रमारूपत्वसम्भवे लिपिषु 'ककारोऽयम्' इत्यादिवत् भ्रमरूपत्वस्य, औपचारिकत्वस्य वा कल्पनायोगात्। न च ज्ञाप्यज्ञापकभावस्यापि सामानाधिकरण्यप्रयोजकत्वाभ्युपगमात् लिपिषु 'ककारोऽयम्' इत्यादिरपि प्रमारूप एवेति वाच्यम्। तथा सति 'धूमो वह्निः' इत्यपि सामानाधिकरण्यानुभवप्रसङ्गेन ज्ञाप्यज्ञापकभावस्य तत्प्रयोजकत्वाभ्युपगमायोगात्। लिप्यक्षरगतज्ञाप्यज्ञापकभावमात्रस्य सामानाधिकरण्यानुभवप्रयोजकत्वमभ्युपगम्य तत्प्रमात्वसमर्थने तु नास्ति तस्य प्रकृतोपयोगः; तावता 'घटोऽयम्' इत्यादिसामानाधिकरण्यानुभवप्रमात्वानिर्वाहात्।

यत्तु 'घटोऽयम्' इत्यादौ शब्दार्थयोः सामानाधिकरण्यानुभव एवासिद्धः; पदद्वयार्पितयोरर्थयोरेव परस्परान्वयादिति। तत्रेदमुच्यते। 'डित्थोऽयं ब्राह्मणः' इत्यादौ डित्थादिशब्दानामेवार्थान्वयः इति तावदङ्गी-

कर्तव्यम्; यदृच्छाशब्दाभिधेयानां संज्ञाशब्दानां समर्पणीयार्थाभावात्। न च तेषामपि तत्तदसाधारणकृतिविशेषादय एवार्थाः समर्पणीयाः स्युरिति वाच्यम्। तत्तदाकृतिविशेषानभिज्ञानां डित्थो नाम कश्चिदस्तीत्यादिमात्रमवगच्छतामपि 'डित्थः कीदृशः' इत्यादिप्रश्नदर्शनात्, 'एतादृशाकृतिविशेषशाली डित्थः' इत्याद्युत्तरवाक्येषु तत्तदाकृतिविशेषादीनां शब्दान्तरेणोपादानाच्च। एवं 'पृथिवीत्ववती पृथिवी' 'प्रमाकरणं प्रमाणम्' इत्यादिलक्षणवाक्येषु जात्युपाधिशब्दानामपि स्वरूपत एवार्थान्वयो वाच्यः; तत्समर्पणीयपृथिवीत्वादीनां शब्दान्तरेण समर्पितत्वात्। न च द्विविधेऽप्युदाहरणे डित्थपृथिव्यादिशब्दानां लक्षणया तत्तच्छब्दवाच्यत्वमर्थ इति शङ्कनीयम्; शब्दानामर्थानाञ्च श्रुतिसिद्धोपादानोपादेयभावमूलतादात्म्यसत्त्वेन डित्थादिशब्दमात्रलक्षणया डित्थादिशब्दानामेव तादात्म्येन विशेषणत्वोपपत्तौ तेषां तत्तच्छब्दवाच्यत्वपर्यन्तलक्षणाकल्पनस्यायुक्तत्वात्। प्रत्यक्षोपस्थितानामेव वा तेषां मन्त्राणां नियोगभावनान्वयवत् स्वस्वार्थान्वयस्योपपत्तौ लक्षणाकल्पनस्यैवा युक्तत्वात्।

अपि च शब्दसमर्पकाः शब्दा यत्रार्थेषु प्रयुज्यन्ते, तत्र प्रयुक्तशब्दसमर्पिततत्तच्छब्दतादात्म्यप्रतीतिरर्थेष्वङ्गीकर्तव्या। यथा 'दशपूर्वरथः' 'हस्त्युपपदगिरिः' इत्यादिप्रयोगेषु प्रयुक्तशब्दसमर्पितदशरथ हस्तिगिरिप्रमुखशब्दात्मताप्रतीतिर्नृपतिपर्वतविशेषादिषु। यथा वा द्विरेफादिशब्दप्रयोगेषु तत्समर्पितभ्रमरशब्दादितादात्म्यप्रतीतिर्मधुकरादिषु। यथा च ईक्षतिपरीष्टिगम्यादिशब्दप्रयोगेषु तत्समर्पिततत्तद्धातुतादात्म्यप्रतीतिस्तत्तद्धात्वर्थेषु। न च त्रिविधेऽप्युदाहरणे शब्दवाचकशब्दानां स्वार्थरूपशब्दसम्बन्धिष्वर्थेषु गङ्गादिशब्दानां तीरादिष्विव लक्षणा स्यादिति वाच्यम्। प्रवाहतीरादिभेदेन तत्र लक्षणाऽपेक्षायामप्यत्र श्रुतिसिद्धोपादानोपादेयताप्रयुक्ताभेदसत्त्वेन लक्षणाऽनपेक्षणात्। लक्षणायामपि लक्ष्यस्याभिधेयाभेदप्रतीतिसत्त्वेनात्र लक्षणाभ्युपगमेऽपि शब्दार्थाभेदप्रतीतेरनिवार्यत्वाच्च। 'गङ्गायां घोषः' 'गङ्गायां तपोधनः' इत्यादिव्यवहारेष्वपि घोषतपोधनादिवासस्थलस्य प्रवाहादिगतातिशयितशैत्यपावनत्वादिद्योतनार्थं प्रवाहाद्यभेदबोधनायैव हि गङ्गादिशब्दप्रयोगः, अन्यथा स्वायत्तत्वाच्छब्दप्रयोगस्य यत्र गङ्गातीरग्रामे घोषस्तपोधनो वा वसति तद्ग्रामनाम्न्येव लघूपाये वक्तुं शक्ये गुरूपायभूतलक्षकपदप्रयोगस्य निष्फलत्वापत्तेः। एवं लक्ष्यस्याभिधेयतादात्म्यप्रतीतिसत्त्वादेव 'जाता लता हि शैले जातु लतायां न जायते शैलः। सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम्' (कुव. ८८) इत्यादिकविता सांगत्यं प्रतिपद्यतेऽ, अन्यथा वनिताङ्गयष्टौ वल्लीतादात्म्याध्यवसायस्य तत्पयोधरयोः पर्वततादात्म्याध्यवसायस्य चाभावे 'सम्प्रति तद्विपरीतम्' इत्येतन्न संगच्छते।

ननु तथाऽपि घटादिनिष्पत्तिसमये तत्कारणचक्रान्तर्गतानां कुलालाद्युच्चार्यमाणानां घटादिशब्दानामभावात् मनसा तदनुसन्धानकल्पनेऽपि घटकलशकुम्भाद्येकैकपर्यायाभिज्ञकुलालनिर्मितघटेषु उपादानव्यवस्थित्यविनिगमप्रसङ्गात्, तेषां यावद्घटावस्थित्यवस्थानासम्भवाच्च कथं शब्दानामर्थोपादानत्वमुपपद्यत इति चेत्। उच्यते। क्रमविशेषविशिष्टघकारादिसमुदायात्मकः शब्दो घटवाचक इति नेष्यते, किन्तु तथाभूतनादाभिव्यंग्यस्फोटात्मकशब्द इति तस्य नित्यत्वेन घटोत्पत्तिसमये सन्निधानान्न तत्कारणत्वे काचिदनुपपत्तिः।

पदेषु श्रूयमाणवर्णव्यतिरेकेण तदभिव्यंग्यस्फोटसद्भावे किं मानमिति चेत्— 'घट इत्येतदेकं पदम्' इति धीर्मानम्। न हीयमेकत्वधीर्वर्णविषयेति युक्तम्; वर्णानामनेकत्वात्। न च सेनावनादिन्यायादौपाधिकमेकत्वं तद्विषयः; एकत्वोपाधेरनिरूपणात्। तदनिरूपणं चानुपदमेव स्फुटीभविष्यति। तथा शब्दानामर्थवाचकत्वान्यथानुपपत्तिरपि वर्णातिरिक्तस्फोटसद्भावे मानम्; वर्णानां वाचकत्वासम्भवेनान्यथोपपत्त्यभावात्। तथा हि—घकारादयो वर्णाः प्रत्येकं घटमभिदधीरन् मिलिता वा? नाद्यः। एकवर्णोच्चारणानन्तरमर्थप्रत्ययादर्शनात्, वर्णान्तरोच्चारणानर्थक्यप्रसङ्गाच्च। न द्वितीयः। एकवक्तृप्रयुज्यमानानां क्रमिकाणामाशुतरविनाशिनां वर्णानां मेलनायोगात्।

ननु च वर्णा नित्या एव, नाशुतरविनाशिनः; उच्चारणान्तरे 'सोऽयं गकारः' इत्यादिप्रत्यभिज्ञया पूर्वश्रुतगकाराद्यभेदावगाहिन्या स्थायित्वसिद्धौ 'तावत्कालं स्थितं चैनं कः पश्चान्नाशयिष्यति' इति न्यायेन तस्यास्तन्नित्यत्वपर्यवसानात्। न च—प्रतिपूरुषं वर्णवैलक्षण्यदर्शनात्, एकपुरुषोच्चारितवर्णेष्वपि सानुनासिकानिरनुनासिकोदात्तानुदात्तस्वरिततारमन्द्रादिवैलक्षण्यदर्शनाच्च प्रत्युच्चारणं भिन्ना एव वर्णाः। तेषु 'सोऽयं गकारः' इत्याद्यभेदप्रत्यभिज्ञा गत्वादिसामान्योपाधिनिबन्धना इति वाच्यम्। वैलक्षण्यानुभवानां प्रतिपूरुषं विजातीयेषु प्रत्युच्चारणं स्थानप्रयत्नवैचित्र्याद्विलक्षणेषु च तत्तदुच्चारणजन्येषु वर्णाभिव्यञ्जकेषु ध्वनिष्वनुभूयमानस्य वैलक्षण्यस्य ध्वनिवर्णविवेकाग्रहेण वर्णगतत्वाभिमानरूपतोपपत्तेः। अभेदप्रत्यभिज्ञाया गत्वादिविषयत्वकल्पनस्य सर्वकालसर्वपुरुषगतगकाराद्यभेदवाद्यसंमतगत्वादिजातिकल्पनापेक्षत्वेन दुर्बलत्वात्। दूरगतकोलाहलश्रवणे वर्णातिरिक्तध्वन्यनुभवसत्त्वेन वर्णगतभेदप्रत्ययोपाधीनां ध्वनीनां क्लृप्तत्वात्। अतो नित्यानां वर्णानां मेलनं सम्भवतीति चेत्।

मैवम्। नित्यत्वाभ्युपगमे सदा विद्यमानानामनभिव्यक्तानां तेषामर्थधीहेतुत्वाभावेन तत्तदुच्चारणविशेषजन्यध्वनिविशेषकृताभिव्यक्तिविशिष्टानामर्थधीहेतुत्वस्य वक्तव्यतयाऽभिव्यक्तिरूपविशेषणानामाशुतरविना-

शित्वेन तद्विशिष्टवर्णानां मेलनायोगात् । न च—पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितान्त्यवर्णानुभवोऽर्थधीहेतु-रिष्यते, ततश्च पूर्ववर्णानां संस्कारद्वारा अन्त्यवर्णस्य स्वतश्चाभिव्यक्तिविशिष्टतया मेलनमस्तीति वाच्यम्; संस्काराणां पूर्वानुभवविषयगोचरस्मृतिजननमात्रशक्तत्वेन वर्णानुभवजन्यसंस्कारैरर्थस्मरणायोगात्, पूर्वपूर्ववर्णा-नुभवजनितानीन्द्रियसंस्कारविशिष्टान्तिमवर्णस्याभिधायकत्वपर्यवसानेन ज्ञातकरणतया वक्तव्यस्य तस्यार्थप्रत्ययात् प्राक् ज्ञानोपायाभावाच्च । अर्थप्रत्ययादेव तदनुमितौ परस्पराश्रयापत्तेः ।

न च प्रत्येकवर्णानुभवजनितसंस्कारबृन्दजन्यैकस्मृतिविषयीभूतो घकारादिवर्णसमुदायोऽभिधाय-कः स्यादिति वाच्यम् । तथा सति 'रसः सरः पिकः कपिः' इत्यादिप्रयोगेषु समूहालम्बनस्मृतेस्तुल्यविषयत्वेन पदविशेषप्रतीत्यभावप्रसंगात् । न चैकस्मृतिविषयः क्रमविशेषविशिष्टवर्णसमुदायोऽभिधायकः स्यादिति वाच्यम् । वर्णानां स्थैर्यं व्यापकत्वं चाभ्युपगच्छतः सिद्धान्तिनस्तेषु कालतो देशतो वा क्रमाभावात् । न च क्रमिकोच्चरणविषयत्वमेव तेषु क्रमः; लिप्यक्षरानुमितश्लोकैरनुच्चरितैरर्थावगमे तदभावात् । न चोच्चारणपदस्था-नेऽनुसन्धानपदनिवेशनेऽपि निर्वाहः; समूहालम्बनावगतैर्लिप्यक्षरैर्युगपद्वर्णानुमितावनुसन्धानक्रमस्याप्यभावात् । तस्माद्वर्णानां प्रत्येकं मिलितानां वा वाचकत्वस्योपपादयितुमशक्यत्वात्तेषु स्वरूपेणैकार्थवाचकत्वोपाधिना वा 'एकं पदम्' इति बुद्धेरुपपादयितुमशक्यत्वाच्च गकारादिव्यतिरिक्तस्तदभिव्यंग्य एकः स्फोटात्मा घटादिवाचकः शब्दोऽभ्युपेयः ।

न च तस्यापि धकारादिप्रत्येकसमुदायाभिव्यंग्यत्वपक्षयोरुक्तदोषानुषङ्गः; यतो घकारादयः प्रत्येकमेव तमभिव्यञ्जयन्तीत्यङ्गीक्रियते, किन्तु द्रागेव विशदतरं नाभिव्यञ्जयन्ति । कथं तर्हि? बहुशः श्रवणानि श्लोकमिव पुनःपुनर्निरीक्षणानि रत्नतत्त्वमिव उत्क्षेपणत्वादिजात्याश्रयानेककर्मव्यक्तिदर्शनानि तत्त-ज्जातिमिव च क्रमेण विशदतरमवभासयन्ति । विशदतरमवभास्यमान एव स्फोटोऽर्थप्रत्ययहेतुः इति न प्रथमादिवर्णैरविशदतया स्फोटाभिव्यक्त्याऽर्थधीप्रसङ्गः । न चैवं वर्णाः प्रत्येकमेवार्थधियं जनयन्ति, अन्तिमवर्णस्तु तां विशदतरां जनयति, विशदतरैवार्थधीः स्वकार्योपयोगिनीति वक्तुं शक्यम्; प्रत्यक्षस्फोटावभास इव परोक्षे शब्दार्थप्रत्यये विशदाविशदविभागासम्भवात् । प्रत्यक्षज्ञानधर्मो हि स्पष्टास्पष्टविभागो न तु शाब्दज्ञानधर्मोऽपि । वस्तुतो घटादिवाचकस्फोटावभासे घकारादिक्रम-विशेषविशिष्टतयाऽनुसन्धीयमानोऽन्तिमवर्ण एव हेतुः; पदान्तर्गतवर्णावगतीनां पूर्वपूर्ववर्णक्रमविशेषितोत्तरोत्तर-

वर्णाविषयत्वाभ्युपगमात् । अतः प्रथमादिवर्णैरविशदस्फोटावगतिरनुभवसिद्धा नेति दोषस्य नावकाशः। नापि विपरीतक्रमोच्चारणे विशदतरस्फोटावभासप्रसङ्गः। घकारादिक्रमश्च न तदुच्चारणक्रमस्तदनुसन्धानक्रमो वा, किन्तु स्वाभाविको घकारादिगत एव; घत्वादीनामुदात्तानुदात्तह्रस्वदीर्घत्वादीनामिव तत्तदुच्चारणजन्यध्वनिधर्मत्वाङ्गीकारात् । वर्णाभिव्यञ्जकत्वेन वर्णवाद्यभिमतैर्ध्वनिभिः साक्षादेव स्फोटाभिव्यक्तिसम्भवे ध्वनिस्फोटमध्ये नित्यवर्णाङ्गीकारे गौरवात् । दूरगतकोलाहलश्रवणे घत्वादीनां श्रूयमाणध्वनिगतानामेव दूरत्वादिदोषेणानभिव्यक्तिसम्भवात् । 'सोऽयं गकारः' इत्यादिप्रत्यभिज्ञानां गत्वाद्यधिकरणध्वन्याभिव्यक्तेषु दर्पणमुखवदाभिव्यञ्जकधर्मरूषिततया प्रतीयमानेषु वर्णस्फोटेष्वेव विश्रान्तेः । एवं च 'तदेवेदं घट इति पदम्' 'तदेवेदं घटमानयेति वाक्यम्' इत्यादिरूपा पदवाक्यप्रत्यभिज्ञाऽपि पदवाक्यस्फोटविषयत्वेन समर्थिता भवति । स्फोटमनभ्युपगच्छतां तु वर्णनित्यत्वाभ्युपगमेन वर्णप्रत्यभिज्ञैव सालम्बना स्यात्, न तु पदवाक्यप्रत्यभिज्ञाऽपि । न च तुल्ये प्रत्यभिज्ञानेऽर्धजरतीयं युक्तम् । समूहालम्बनावगतलिप्यक्षरैर्युगपद्वर्णानुमितिस्थले विवक्षितवर्णक्रमानुसारिणा लेखनक्रमेण विशिष्टतयाऽवगतैर्लिप्यक्षरैः क्रमविशेषविशिष्टानामेव वर्णानामनुमितिरिति तत्रापि पूर्वपूर्ववर्णक्रमविशिष्टान्तिमवर्णानुभवसत्त्वान्न स्फोटावभासे काचिदनुपपत्तिः ।

ननु घकारश्रवणे घत्वाधारव्यतिरेकेण तदनाधारो वर्णस्फोटो वा घटपदश्रवणे वर्णसमुदायव्यतिरेकेणाखण्डः पदस्फोटो वा 'घटमानय' इति वाक्यश्रवणे पदसमुदायव्यतिरेकेणाखण्डो वाक्यस्फोटो वा नानुभूयते, कथमेषां कल्पनमिति चेत्; तर्हि उदात्तानुदात्तह्रस्वदीर्घत्वादिधर्माधारव्यतिरेकेण वर्णावयवव्यतिरेकेण च वर्णा नानुभूयन्त इत्युदात्तत्वाद्यनाधाराखण्डवर्णकल्पनमपि न स्यात् । अनुभूयन्ते हि पदवाक्ययोर्वर्णपदरूपावयवा इव वर्णेष्वपि तदवयवाः । तद्यथा ऋकारे रेफः, ऌकारे लकारः, एकारैकारयोरकार इकारश्च, ओकारौकारयोरकार उकारश्च, दीर्घेष्वाकारादिषु ह्रस्वा अकारादयः ।

तत्रैते वर्णावयवा अपि वर्णा इति केषाञ्चिद्दर्शनम् । नैते वर्णाः, किन्तु तत्तद्वर्णसमानाकृतयोऽवयवा इत्यन्येषां दर्शनम् । तत्र मीमांसकैः पूर्व (वर्ण) पक्षमाश्रित्य 'सामप्रदेशे विकारस्तदपेक्षः' (जै. सू. ९. २. ९) इति सामोहाधिकरणे ऋक्षु सतां सन्ध्यक्षराणां गीतिकाले वृद्धत्वं प्राप्तानां ये आइभावाः आउभावाश्च न ते स्तोभवत् वर्णान्तरागमरूपाः, किन्तु वृद्धेषु सन्ध्यक्षरेषु संश्लिष्टतया स्थिता

नामेव अवर्णेवर्णोवर्णानां गानकाले विश्लेषणमात्रं गीत्युपायतया ऋग्गततत्तत्सन्ध्यक्षराभिव्यञ्जकमित्युक्तम् । आश्वलायनेनापि 'विविच्य सन्ध्यक्षराणामकारम्' इति याज्यान्ते स्थितानां सन्ध्यक्षराणामकारं विश्लिष्य तं प्लावयेत् इति विदधानेनायमेव पक्षोऽङ्गीकृतः । पाणिनिनाऽपि 'प्लुतावैच इदुतौ' (पा. सू. ८. २. १०६) इति सूत्रेण 'ऐ ३ तिकायन' 'औ ३ पगव' इत्याद्युदाहरणेषु 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' (पा. सू. ८. २. ८६) इत्यादिसूत्रैरैचः प्लुतप्रसङ्गे तस्यान्त्यावयवा विकारोकारौ प्लवेते, न तु तदाद्यावयववोऽकारोपीति विदधानेनायं पक्षोऽङ्गीकृतः, किन्तु तेन 'एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्यादुत्तरस्येदुतौ' (पा. सू. ८. २. १०७) इति सूत्रेण एचः अप्रगृह्यस्य दूराद्धूतव्यतिरिक्ते 'प्रत्यभिवादेऽशूद्रे' (पा. सू. ८. २. ८३) 'विचार्यमाणानाम्' (पा. सू. ८. २. ९७) 'याज्यान्तः' (पा. सू. ८. २. ९०) इत्यादिसूत्रप्राप्तप्लुतविषये पूर्वस्यार्धस्याकारादेशो भवति स च प्लुतो भवति, उत्तरस्यार्धस्य इकारोकारावादेशौ भवत इति विदधानेन वर्णावयवा न वर्णा इत्यपि पक्षान्तरं सूचितम्, अन्यथा एचि विद्यमानानामवर्णेवर्णोवर्णानां विश्लेषणमात्रमवर्णस्य प्लुतेन सह विदध्यात्, न तु तान् पूर्वोत्तरार्धयोरादेशरूपान् । एवं पक्षद्वयसद्भावादेव भगवता पतञ्जलिना कात्यायनेन च 'एऔच्' इति सूत्रे वर्णैकदेशानां वस्तुतो वर्णतया वर्णग्रहणेन ग्रहणे 'अग्न इन्द्र' 'वायो उदकम्' इत्यत्र सवर्णदीर्घः प्राप्नोति, 'आल्ङ्य' 'प्रल्ङ्य' इत्यत्र हलाश्रयस्तुक् प्राप्नोतीत्यादिदोषं प्रदर्श्य तेषां वर्णैकदेशतया वर्णग्रहणेनाग्रहणे च 'आनृधतुः' 'आनृधुः' इत्यत्र 'आनर्च' 'आनर्चतुः' इत्यत्रेव 'तस्मान्नुड् द्विहलः' (पा. सू. ७. ४. ७१) इति नुट् प्राप्नोति, 'कॢप्तः' 'कॢप्तवान्' इत्यत्र 'कल्पिता' 'कल्प्ता' इत्यत्रेव 'कृपो रोलः' (पा. सू. ८. २. १८) इति लत्वं न प्राप्नोतीत्यादिदोषं प्रदर्श्य पक्षद्वयमपि महता प्रयत्नेन दोषजातं समाधाय समर्थितम् । सन्तु ऋकारादिषु रेफादयो वर्णाः, सन्त्ववर्णा एव वा वर्णसमानाकृतयोऽवयवाः, उभयथाऽपि ऋकारादिष रश्रुत्यादिरूपा अवयवाः सन्तीत्यविप्रतिपन्नमेव । किं बहुना, सर्वेष्वप्यवर्णादिषु ह्रस्वदीर्घप्लुतरूपेषु स्वरितेषु पूर्वोत्तरभागावङ्गीकृत्य पाणिनिना 'तस्यादित उदात्तमर्धह्रस्वम्' (पा. सू. १. २. ३२) इति सूत्रेण आदितः स्वरितस्यार्धमात्रिको भाग उदात्तः अवशिष्टो भागोऽनुदात्तः इति वर्णितम् । एवं वर्णपदावलीव्यतिरिक्तखण्डपदवाक्यापलापे उदात्तत्वादिधर्माधारवर्णावलिव्यतिरिक्ताखण्डवर्णापलापोऽपि स्यादिति दुस्तरा प्रतिबन्दी ।

अत्रैवं वर्णवादिभिर्वक्तव्यम् । वर्णानामुदात्तानुदात्तत्वैकमात्रत्रिमात्रत्वाद्याधाराकारेकारोकारादि-स्वरूपक्रमिकावयवसमुदायरूपत्वे 'एकार एको वर्णः' 'ओकार एको वर्णः' इत्याद्येकत्वप्रत्ययस्य 'स एवाय-मेकारः' 'स एवायमोकारः' इत्याद्यभेदप्रत्यभिज्ञानस्य चानुपपत्तेरखण्डा एव वर्णाः । तेष्ववयवसमुदायरूपताऽवभासस्तु तदुच्चारणविशेषजन्यतत्तद्वर्णसमानाकारक्रमिकध्वनिविशेषसन्तानोपरागोपाधिक इत्यभ्युपेयमिति । एवमेव स्फोटवादिभिरपि वक्तुं शक्यम् । पदानां वाक्यानां च क्रमिकवर्णपदरूपावयवसमुदायरूपत्वे 'इदमेकं पदम्' 'इदमेकं वाक्यम्' इत्येकत्वप्रत्ययस्य 'तदेवेदं पदम्' 'तदेवेदं वाक्यम्' इत्यभेदप्रत्यभिज्ञानस्य चानुपपत्तेरखण्डान्येव पदानि वाक्यानि च । तेषु वर्णपदरूपावयवसमुदायात्मताऽवभासस्तत्तदुच्चारणविशेष-जन्यवर्णतत्सङ्घातरूपध्वनिविशेषोपरागोपाधिक इत्यभ्युपेयम् । अतो न परमार्थतो वर्णस्फोटेषु वर्णावयवा न पदस्फोटेषु वर्णा न वाक्यस्फोटेषु पदानि । किन्तु यथैकत्वादिसंख्यातिरिक्तायामखण्डायां शतसंख्यायां सत्यामपि तस्यां तद्ग्रहणोपायभूततावदेकत्वसमुदायरूपताभ्रान्तिर्बालानामेवमिहापि वर्णपदवाक्यस्फोटेषु तत्तदभिव्यञ्जक-क्रमिकध्वनिविशेषात्मकवर्णावयववर्णपदसमुदायरूपताभ्रान्तिमात्रमित्येवाविशेषेण कल्पयितुमुचितमिति ।

तस्मादस्ति तावत् वर्णावलीव्यतिरिक्तो घटवाचकः स्फोटः । स तु यावन्तो घटशब्दपर्यायाः तैः सर्वैरप्येक एवाभिव्यज्यते; प्रतिपर्यायं स्फोटभेदे प्रमाणाभावात् । अतस्तस्यैकस्य घटकारणतया नाव्यवस्थित्य-विनिगमदोषापादनावकाशः । एवमन्येषामपि पदस्फोटानां स्वस्वार्थकारणत्वं द्रष्टव्यम् । सर्वे चैते स्फोटाः प्रणवस्फोटप्रकृतिकास्तदात्मकाः; 'ओंकारेण सर्वा वाक् सन्तृण्णा' (छा. २. २३. ३) इति श्रुतेस्तद्विषय-त्वात् । अतस्तस्मिन् प्रणवस्फोटरूपे शब्दब्रह्मणि जगद्धारकत्वं तावत् अञ्जसैव उपपद्यते । 'अस्थूलमनण्व-ह्रस्वमदीर्घम्' (बृ. ३. ८. ८) इति तारमन्द्रत्वैकमात्रद्विमात्रत्वनिषेधाः । तेऽप्यञ्जसोपपद्यन्ते; ध्वनिधर्माणां तारत्वादीनां तस्मिन् भ्रमरूपप्रसक्तिसत्त्वात् । 'अलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धम-चक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन' (बृ. ३. ८. ८) इति पाञ्चभौतिकशरीरतद्धर्माणां निषेधः, तत्र 'अवाय्वनाकाशमरसमगन्धमतेजस्कम्' (बृ. ३. ८. ८) इति पञ्चभूतात्मकत्वनिषेधः, अलोहितमस्नेहम्' इत्यसृङ्मज्जोपलक्षितानामस्थिमांसादीना-मपि निषेधः, 'अचक्षुष्कम्' इत्यादिना चक्षुराद्युपलक्षितसकलज्ञानेन्द्रियकर्मेन्द्रियाभ्यन्तरवायुनिषेधः, 'अमुखम्' इति खेददूषिकादिनिस्सरणनिषेधः । 'मुखं निस्सरणे वक्त्रे प्रारम्भोपाययोरपि' इति नैखण्डुकाः । 'अमात्रम्'

इति सूक्ष्मशरीरनिषेधः, 'असङ्गम्' इति दोषलेपनिषेधः, 'अनन्तरमबाह्यं न तदश्नाति किञ्चन' इति बाह्याभ्यन्तरसकलभोगनिषेधः ।

यद्वा 'न तदश्नाति' इत्यनेनैव भोगनिषेधे भोगोपयुक्तानां बाह्याभ्यन्तरेन्द्रियादीनां 'अनन्तरमबाह्यम्' इति सामान्येन निषेधः । 'न तदश्नाति कश्चन' इति 'तं देवा भक्षयन्ति' इति श्रुतकर्मपरतन्त्रभोगिवदन्य-परतन्त्रत्वस्य निषेधः । अत्र किञ्चित्किञ्चिन्निषेधेनार्थसिद्धनिषेधानामन्येषां विशिष्य निषेधप्रयासः प्रणवस्या-पाञ्चभौतिकं शुद्धसत्वारब्धं ज्योतिर्मयतया छायातमोविरोधि कर्मपारतन्त्र्यभोगापेक्षे विना केवलं भक्तदर्शनो-पासनालम्बनं भवत्विति कृपापरिगृहीततया बाह्यसौन्दर्योपयुक्तावयवान्विना भोगाद्युपयुक्तप्राणेन्द्रियादिरहितं अतिनिर्मलं शरीरमस्तीति तदस्तित्वस्थिरीकरणार्थम् । तत् यद्यपि स्फोटात्मकस्य प्रणवस्य स्वतो नास्ति, तथाऽपि तद्वाच्यस्य तस्मिन् प्रतीके उपासनीयस्य तदभिमानिदेवतारूपस्य च ब्रह्मणोऽस्ति 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' (छा. १. ६. ६) इत्यादिश्रुतिप्रसिद्धमिति तस्य शरीरेण प्रणवस्य शरीरवत्त्वं व्यपदेष्टुं शक्यम्; ब्रह्मप्रणवयोरभेदोपचारस्य—

'शिवो वा प्रणवो ह्येषः प्रणवो वा शिवः स्मृतः । वाच्यवाचकयोर्भेदो नात्यन्तं विद्यते क्वचित् ॥
तस्मादेकाक्षरं देवमाहुरागमपारगाः । वाच्यवाचकयोरैक्यं मन्यमाना मनीषिणः ॥'

इत्यादिपुराणप्रसिद्धत्वात्, 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' (महाना. ८. १८) इत्यादितैत्तिरीयोपनिषन्मन्त्रे च वेदाद्यन्तयोः प्रतिष्ठितं स्वरमोङ्कार-मुपक्षिप्य तस्यैव निर्विशेषब्रह्माभेदोपचारेण प्रकृतावविद्यायां निमग्नतया जीवभावमुक्त्वा तस्य जीवस्य यः परो नियन्ता स महेश्वरः सगुणः परमेश्वर इति प्रतिपादनाच्च ।

'यं वेदादौ स्वरं प्राहुर्वाच्यवाचकभावतः । वेदैकवेद्यं यथार्थ्याद्वेदान्ते च प्रतिष्ठितम् ॥
स एव प्रकृतौ लीनो भोक्ता यः प्रकृतेर्मतः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' ॥

इति शिवपुराणे अस्य मन्त्रस्य उक्तार्थपरतयोपबृंहणात् । अथर्वशिरसि 'य ओङ्कारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तो योऽनन्तस्तत्तारं यत्तारं तत्सूक्ष्मं यत्सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्मेति स एकः स एको रुद्रः स ईशानः स भगवान् स महेश्वरः स महादेवः' (अथर्वशिरस् ३) इति ब्रह्मप्रणवाभेदोपचाराश्रयणेन तदुभयनाम्नामेकनामत्वेन परिगणनपूर्वकम् 'अथ कस्मा-

दुच्यत ओङ्कारो यस्मादुच्चार्यमाण एव सर्वं शरीरमूर्ध्वमुन्नामयति तस्मादुच्यत ओङ्कारः' इत्यारभ्य 'अथ कस्मादुच्यते महादेवः यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः' (अथर्वशिरस्. ४) इत्यन्तेन तत्तद्व्यवस्थितयोगेनैव निर्वचनाच्च। एतेन—प्रशासितृत्वादीन्यपि ब्रह्मलिङ्गानि प्रणवे व्याख्यातानि। 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तत् भवति' (बृ. ३. ८. २०) इत्येतदपि प्रणवे युज्यते। 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १. १. १०) इत्युद्गीथरूपप्रणवविदः क्रतूनां वीर्यवत्तरत्ववदक्षररूपप्रणवविदो यागादीनामनन्तफलकत्वोपपत्तेः। 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात् प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात् प्रैति स ब्राह्मणः' (बृ. ३. ८. १०) इत्येतदपि तस्मिन्नुपपद्यते; ब्राह्मणानां प्रणवस्वरूपपरिज्ञानस्यावश्यकत्वात्। तस्मादिह प्रणव एवाक्षरमिति **पूर्वः पक्षः**।

एवं प्राप्ते **सिद्धान्तमाह**—'अक्षरमम्बरान्तधृतेः'। यदुक्तमोतप्रोतशब्दाभ्यामक्षरस्योत्कृष्टत्वं प्रतिपाद्यत इति, तदयुक्तम्; 'एतस्मिन् खल्वक्षरे' इत्यधिकरणनिर्देशसहिताभ्यां 'यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः' (मु. २. २. ५) 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' (भा. गी. ७. ७) इत्यादिश्रुतिस्मृतिष्वाधेये दृष्टप्रयोगाभ्यामोतप्रोतशब्दाभ्यां धृतेरेव प्रतिपादयितुमुचितत्वात्। न चास्मिन्नेव प्रकरणे 'कस्मिन् खल्वन्तरिक्षलोका ओताश्च प्रोताश्च' इति 'गन्धर्वलोकेषु गार्गि' (बृ. ३. ६. १) इत्यादिप्रश्नोत्तरेषु तयोरुत्कृष्टत्वे दृष्टः प्रयोग इति वाच्यम्। तत्राप्यधिकरणसप्तम्या ओतप्रोतशब्दयोश्च स्वारस्यानुसारेण धृतेरेव प्रतिपादनाङ्गीकारात्। वचनबलादुपरितनानामपि गन्धर्वलोकादीनामन्तरिक्षलोकादिधारकत्वस्य, पर्वतानां क्षितिधारकत्वस्येव, ध्रुवस्य ज्योतिश्चक्रधारकत्वस्येवाधःप्रसृतमूलपाशाद्यवयवकल्पनयोपपादनीयत्वात्। श्रुतोपपादनार्थं ह्यश्रुतमपि कल्पनीयम्, न त्वश्रुतकल्पनाभिया श्रुतं परित्याज्यम्; स्वर्गकामादिवाक्यबाधप्रसङ्गात्। वस्तुतोऽन्तरिक्षलोकादीनां क्रमेण गन्धर्वलोकादिष्वोतप्रोतत्वे श्रुतेर्नास्ति तात्पर्यम्, किन्तु अवाक्यभेदाय चरमनिर्देश्ये सर्वस्यौतप्रोतत्व एवेत्यनुपदमेव दर्शयिष्यते। एवमस्य पक्षस्य दूषणं 'धृतेः' इति सूत्रावयवेन सूचितम्।

यदुक्तम्—जगदाधार आकाशः परमात्मा तदधिकरणमक्षरं तदुपासनास्थानभूतः प्रणव इति, तदप्ययुक्तम्; आकाशशब्दस्य रूढ्या वाच्यं प्रसिद्धाकाशं विहाय परमात्मपरत्वकल्पने कारणाभावात्। न च

पूर्वसन्दर्भानुसारेण तथा कल्पनम्; 'अनतिप्रश्न्यां वै देवतामतिपृच्छसि' (बृ. ३. ६. १) इति परदेवताविषयप्रश्न-निवारणमेकान्तरितप्रश्नस्तद्विषयो भविष्यतीति दूरदृष्टिमता याज्ञवल्क्येनात्रैव कृतमित्युपपत्तेः। अक्षरब्राह्मणारम्भेऽपि द्वितीयप्रश्न एव परमात्मविषयो भविष्यतीति जानत्याऽपि चिकीर्षितस्य तस्य निवारणपरिजिहीर्षया युगपत् प्रश्नद्वयानुज्ञा पृष्टेत्युपपत्तेः। प्रथमप्रश्नानन्तरं याज्ञवल्क्यप्रशंसापूर्वकधार्ष्ट्यवचनस्यापि द्वितीयप्रश्नोत्तरे पतिष्य-तीत्यभिमानेनोपपत्तेः। वादिनो हि कक्ष्यान्तरेऽवश्यं प्रतिवादी पतिष्यति इति निश्चयवन्तः प्रतिवादिनः पूर्व कक्ष्यायां श्लाघामासं कुर्वन्तीति लोके प्रसिद्धम्। एवमन्यथाप्युपपन्ने पूर्वसन्दर्भे तदनुसारेणाकाशः परमात्मा अक्षरं प्रणव इत्यङ्गीकृत्याक्षरे श्रुतानां ब्रह्मलिङ्गानां तदभेदोपचाराश्रयेण नयनं न युक्तम्। एवमस्य पक्षस्य दूषणं सूत्रे विषयवाक्यगतमाकाशशब्दं विहायाम्बरशब्दप्रयोगेण सूचितम्।

यदुक्तम्—आकाशो भूताकाश एवास्तु, तदाधारत्वं शब्दतन्मात्ररूपे प्रणवे सम्भवति इति, तदप्ययुक्तम्। न ह्याकाशं प्रत्येवाक्षरस्याधारत्वमुच्यते, किन्त्वाकाशान्तस्य सकलस्य जगतः। कुत एतदव सीयते इति चेत्—'आध्यानाय प्रयोजनाभावात्' (ब्र. सू. ३. ३. १४) इत्यधिकरणन्यायादित्यवेहि। तत्र खल्वधिकरणे 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः' (क. ३. १०) इत्यादिकठवल्लीमन्त्रेष्विन्द्रियार्थमनः प्रभृतीनामुत्तरोत्तरपरत्वं न प्रतिपाद्यम्; तत्प्रतिपादने वाक्यभेदप्रसङ्गात्। 'अव्यक्तात् पुरुषः परः। पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (क. ३. ११) इत्यग्रे निर्देश्यस्य पुरुषस्येन्द्रियार्थमनःप्रभृतिभ्यः सर्वेभ्यः परत्वमेव प्रतिपाद्यमिति निर्णीतम्। एवमत्रापि भूगोळकादिब्रह्मलोकान्तानामुत्तरोत्तरस्य पूर्वपूर्वाधारतायां न तात्पर्यम्; किन्त्वग्रे निर्देश्यस्याक्षरस्याकाशान्तसकलाधारतायामेव। अत एव भूगोळकादिब्रह्मलोकान्ता-नामुत्तरोत्तरस्य पूर्वपूर्वाधारत्वे प्रतिपादितेऽपि 'यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्याः' (बृ. ३. ८. ६) इत्यादिप्रश्नेन सर्वाणि तानि यत्रोतप्रोतानि, तस्मिन् वस्तुनि पृष्टे तावदाधारत्वेनोत्तरे' आकाशो निर्दिष्टः। अयं न्याय आकाशादुपरिनिर्दिष्टे अक्षरेऽपि योजनीयः।

एवं तर्हि ब्रह्मलोकान्तजगदाधारत्वमाकाशे आकाशान्तजगदाधारत्वमक्षरे च प्रतिपाद्यम्, इत्येवमपि वाक्यभेदः स्यादिति चेत्; मैवम्। पूर्वपूर्ववाक्योदिताधाराधेयपरम्पराया वस्तुतोऽक्षरस्यैव सर्वाधार-त्वप्रतिपादने विश्रान्तावपि पूर्वसन्दर्भतोऽप्राप्तमप्युत्तरे निर्देक्ष्यमाणस्य प्रसिद्धाकाशस्य ब्रह्मलोकान्तजगदा-धारत्वमवकाशप्रदत्वेन लोकप्रसिद्धमेवावलम्ब्य पूर्वसन्दर्भतो न्यायप्राप्तं चरमनिर्देश्ये सर्वाधारत्वं ब्रह्मलोका-

धार एव गार्ग्या समापितामिति याज्ञवल्क्यस्य भ्रान्त्युत्पादनेन तस्याप्याधारान्तरप्रश्ने निरुत्तरो भूत्वा तस्याधारान्तरं नास्तीत्युक्त्वा वा पराजितो भवत्वित्यभिसन्धाय तत्र वाक्यसन्दर्भतात्पर्यविषयभूतमेव प्राङ्निर्दिष्टसर्वाधारत्वं गार्ग्योपन्यस्तमित्युपपत्तेः। एवमस्य पक्षस्य दूषणं सूत्रे अन्तग्रहणेन सूचितम्।

यदुक्तं द्वारद्वारिभावेन सर्वाधारत्वं शब्दतन्मात्ररूपे प्रणवे सङ्घटत इति, तदप्युक्तयुक्त्यैव निरस्तम्; साक्षादेव सर्वाधारत्वमाथ्यानाधिकरणन्यायप्राप्तं 'यदूर्ध्वं याज्ञवल्क्य दिवः' (बृ. ३. ८. ३) इत्यादिसर्वाधारप्रश्नलिङ्गान्वितं चान्तग्रहणेन सूचितमिति व्याख्यातत्वात्। अथ यदुक्तम्—सर्वाधारत्वं प्रणवे साक्षादेव संभवति; 'ओङ्कार एवेदं सर्वम्' (छा. २. २३. ८) इति श्रुतेरर्थवादत्वेन नयनसंभवेऽपि स्फोटात्मनि प्रणवे सर्वाधारतायां प्रमाणदर्शनादिति, तदप्ययुक्तम्; वर्णेष्वेवाक्षरशब्दस्य रूढत्वेन तदभिव्यंग्यत्वेन पूर्वपक्षिकल्पिते स्फोटे तत्प्रसिध्यभावात्, अक्षरशब्दरूढ्यवलंबनस्य पूर्वपक्षस्य स्फोटे प्रवर्तयितुमशक्यत्वात्। तदेतदभिसन्धाय भामत्यामुक्तं 'न च वर्णातिरिक्ते स्फोटात्मन्यलौकिके अक्षरपदप्रसिद्धिरस्ति' इति। एवमस्य पक्षस्य दूषणं सूत्रे धर्मिनिर्देशकेनाक्षरपदेनैव सूचितम्। १. ३. १०।

स्यादेतत्—अक्षरपदस्य स्फोटे रूढ्यभावेऽप्यभिव्यंग्याभिव्यञ्जकभावसंबन्धेन रूढिपूर्विका लक्षणा संभवति। ब्रह्मणि तु 'न क्षरति' इति नित्यत्वेन 'अश्नोति' इति व्यापकत्वेन वा योगः कल्पनीयः। योगाच्च रूढिपूर्वकलक्षणा बलीयसी; लक्षणायाः शक्यसम्बन्धरूपाया रूढिघटितव्यापारान्तररूपत्वेन प्रथमोपस्थितरूढित्यागापेक्षाद्योगात् बलीयस्त्वात्। अत एव 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य' इत्यध्वर्युप्रैषे उद्गातृशब्दस्य क्वचिदृत्विग्विशेषे रूढस्य बहुवचननिर्वाहार्थं 'उद्गायन्ति इत्युद्गातारः' इत्युचैर्गायत्सु सर्वेष्वपि योगवृत्तिर्नाश्रयणीया, किन्तु सदसि स्तोत्रकर्तृत्वेनोद्गात्रा सह तदन्तरङ्गसंबन्धवतोः प्रस्तोतृप्रतिहर्त्रोरेव रूढिपूर्वकलक्षणाऽऽश्रयणीयेति निर्णीतं 'उद्गातृचमसमेकस्य श्रुतिसंयोगात्' (जै. सू. ३. ५. ८) इति पूर्वतन्त्राधिकरणे। एवंचोपक्रमगताभ्यस्तश्रुतितुल्याक्षरपदप्राबल्यानुसारेण वाक्यशेषगतानां प्रशासितृत्वादिलिङ्गानामन्यत्र दृष्टेन ब्रह्माभेदोपचाराश्रयणेन नयनं युक्तम्। उपक्रमोपसंहाराभ्यां प्रतिपिपादयिषितं जगदाधारत्वलिङ्गं स्फोटेऽप्युपपद्यते इति समर्थितत्वात्‌ तद्बलादक्षरशब्दस्य योगाश्रयणं कार्यमित्याशङ्‌क्याह—

## सा च प्रशासनात् । ११ ।

स्यादेवं ब्रह्माभेदाश्रयणेन प्रणवे प्रशासितृत्वनयनं यदि प्रशासनवाक्ये तन्मात्रमुक्तं स्यात । न त्वेवम्, किन्तु 'एतस्यैवाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः एतस्यैवाक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः' (बृ. ३. ८. ९) इति प्रशासनाधीना धृतिरुच्यते । प्रशासनाधीना धृतिश्च सैव, याऽत्रोपक्रमोपसंहाराभ्यां प्रतिपिपादयिषिताऽम्बरान्तधृतिः । सैव हि स्थालीपुलाकन्यायेन किञ्चित्किञ्चिद्धृतिमुदाहृत्य प्रशासनाधीनतया वर्णितेति युक्तम्; प्रकृतप्रत्यभिज्ञाने तदन्यविषयत्वकल्पनायोगात् । एवं चोपक्रमोपसंहाराभ्यां प्रतिपिपादयिषिताम्बरान्तधृतिरेव वाक्यशेषसमर्पितप्रशासनाधीना जातेति तस्या अचेतने स्फोटेऽनुपपन्नत्वात् प्रतिपिपादयिषितलिङ्गानुसारेणाक्षरशब्दस्य ब्रह्मणि योगवृत्तिराश्रयणीया । सूत्रे चकार एवकारार्थः । या अम्बरान्तधृतिः पूर्वसूत्रे निर्दिष्टा, सैव प्रशासनहेतुका नान्येति सूत्रार्थः १. ३. ११ ।

स्यादेतत्—स्फोटं चेतनमपि केचिदभ्युपगच्छन्ति शब्दब्रह्माद्वैतवादिनः, तन्मतानुसारेण प्रशासनमपि स्फोटस्योपपद्यत इत्याशङ्क्याह—

## अन्यभावव्यावृत्तेश्च ।१२।

एवं चेत् ब्रह्म स्फोट इति नाममात्रे भेदः स्यान्न वस्तुनि; मुक्त्यन्वयिसकलजीवाभेदं जडप्रपञ्चराहित्यं चानभ्युपगम्य स्फोटाद्वैतोपपादनायोगात् । अन्यभावोऽन्यत्वं, तस्य व्यावृत्तिरभावः । स्फोटाद्वैताभ्युपगमे तस्य ब्रह्मान्यत्वाभावात् स्फोटोऽक्षरमिति वदता ब्रह्माक्षरमित्येवोक्तं स्याद् इति तेन सह न विवाद इति सूत्रार्थः ।

स्यादेतत्—स्फोटस्य चेतनस्यापि जडप्रपञ्चमात्रकारणस्य तदभेद एवाभ्युपगम्यते, अतस्तस्य सिद्धान्त्यभिमतब्रह्मरूपत्वाभावादस्ति विवादावकाश इति चेत्; एवं तर्हि स्फोटावलम्बनसकलक्षुद्रोपद्रवपरिहारार्थं घटादिवाचकशब्दस्य घकारादिवर्णसमुदायातिरिक्तत्वं नास्तीति प्रतिपादयिष्यामः । 'एकं पदम्' इत्येकत्वप्रत्ययस्य 'तदेवेदं पदम्' इति प्रत्यभिज्ञानस्य च निर्वाहार्थं खलु वर्णावयवातिरिक्तवर्णप्रतिबन्ध्या वर्णावलीव्यतिरिक्तस्तदभिव्यंग्योऽखण्डः पदस्फोटः साधितः ।

तत्रेदं पृच्छामः—घादिवर्णावली तत्तदर्थविशेषेणागृहीतसम्बन्धाऽपि केवलं वर्णविशेषरूषितक्रमविशेषरूपेण गृहीता घटादिवाचकस्फोटनदेकत्वाभेदानभिव्यञ्जयेत्, उत तैर्गृहीतसम्बन्धैव ? आद्ये काल्प-

श्लोकादिश्रवणे तदन्तर्गतशब्दानां तत्तदर्थैरगृहीसम्बन्धस्यापि पुंसः 'इदमेकं पदमिदमेकं पदम्' इत्यादिक्रमेण एतावन्त्यत्र श्लोके पदानीत्यवधारणं स्यात्। 'प्रजापतेर्हृदयेनापि पक्षं प्रत्युपतिष्ठन्ते सत्रस्यर्ध्याहवनीयस्याग्रेस्तुवन्ति' इत्यादिषु प्रजापतेर्हृदयादिशब्दानां सामविशेषादिषु रूढिमजानतामपि 'प्रजापतेर्हृदयेन' इत्येकं पदमित्यवधारणं स्यात्। श्रूयमाणे शब्दे किमयं हालाहलशब्दो हलाहलशब्दो वा, मरकतशब्दो मरतकशब्दो वेत्यादिवर्णक्रमविशेषसन्देहे सत्युभयथाऽपि गरलविशेषवाचकोऽयं, रत्नविशेषवाचकोऽयमित्यादिनिश्चयवतां 'इदमेकं पदम्' इत्यवधारणं न स्यात्; तद्विषयस्य स्फोटस्याभिव्यञ्जकवर्णावलीसन्देहेनानभिव्यक्तेः। तस्मात् द्वितीयपक्ष एवोररीकर्तव्यः। ततश्च स्फोटवादिनाऽपि वर्णावल्यां तत्तदर्थसम्बन्धं शक्तिरूपमङ्गीकृत्य धक्कारादिवर्णावलीश्रवणकाले प्रत्येकवर्णानुभवैः पूर्वपूर्ववर्णक्रमविशिष्टान्तिमवर्णानुभवेन वोपायान्तरेण वाऽभिव्यक्तिरित्यपि समर्थनीयम्। एवं च स्फोटाऽभिव्यक्तेः प्रागेवावभासमानेनैकेन सम्बन्धेन क्रोडीकृतानां वर्णानामेवैकदेशस्थत्वेन क्रोडीकृतानां वृक्षाणामेव 'एकं वनम्' इति बुद्धिगोचरत्ववत् 'एकं पदम्' इति बुद्धिगोचरत्वोपपत्तौ किमतिरिक्तपदस्फोटकल्पनया? वर्णेष्वेकत्वप्रत्ययस्त्वेकाक्षरानिखण्डुपर्यालोचनादिरहितानां तत्तदर्थैरगृहीतसम्बन्धानामपि जायत इति वर्णावयवेष्वेकत्वोपाधेरनिरूपणायुक्तं तस्य तदतिरिक्तवर्णाविषयत्वम्।

ननु वर्णनित्यत्ववादिभिः स्फोटवादिभिरिव वर्णेषु क्रमो निरूपयितुं न शक्यते। स्फोटवादिनां ह्यनित्या ध्वनय एव वर्णाः, न तु ध्वनिस्फोटमध्ये नित्यवर्णाङ्गीकारे प्रमाणमस्तीत्युक्तमिति चेत्; सत्यम्। वर्णनित्यत्ववादिनामप्यनुसन्धानक्रमः संभवत्येव। मौनिलिखितलिप्यक्षरैर्युगपद्वर्णानुमितिस्थलेऽपि क्रामिकलिपिभिर्लेखकानुसन्धानक्रमविशेषितवर्णानुमितिः संभवतीति न कदाचिदनुपपत्तिः। ननु तथापि 'तदेवेदं पदम्' इति प्रत्यभिज्ञानं वर्णवादिनामनुपपन्नम्; क्रमभेदेन पदभेदावश्यंभावादिति चेत्, सत्यम्। तत्तु केशनखदीपादिष्विव सादृश्येनोपपादनीयम्, अन्यथा लूनपुनर्जातकेशनखनिर्वापितारोपितदीपादिष्वपि प्रसिद्धकेशसन्तानाबभिव्यंग्याखण्डकेशादिकल्पनं स्यात्। तदतिरिक्तकेशादिकमनुभवानारूढं इति चेत्, समं प्रकृतेऽपि। न हि गौरित्यत्र गकारौकारविसर्जनीयातिरेकेणाखण्डं स्फोटमनुभूयमानं कश्चिदप्यभिमन्यते।

नन्वेवं सति वर्णप्रत्यभिज्ञाऽपि तज्जातीयत्वविषया संभवतीति किमर्थं वर्णनित्यत्वाभ्युपगमः? उच्यते—गकारादिरेक एव सर्वदेशकालसंबन्धीति वादिनां मते तद्विषयत्वकल्पनं गत्वादिजातितद्व्यक्त्यनेकत्वकल्पना-

पेक्षम् । वर्णावल्यां तु सादृश्यं संप्रतिपन्नमिति पदप्रत्यभिज्ञाया एव सादृश्यविषत्वं, न तु वर्णप्रत्यभिज्ञायास्तज्जातीयविषयत्वमित्यभ्युपगम्यते । सन्तु वा वर्णा अप्यनित्याः; का नो हानिः ? अत एव भाष्यकारैर्देवताऽधिकरणे तदनित्यत्वपक्षोऽपि दर्शितः । वेदनित्यत्वं तु वर्णानामनित्यत्वेऽपि प्रकारान्तरेण तत्रैव समर्थयिष्यते । एवं स्फोटप्रतिक्षेपेऽपि 'अन्यभावव्यावृत्तेः' इति सूत्रमेव योजनीयम् । तत्र घटादिवाचकस्य वर्णावल्यतिरिक्तत्वाभावादिति सूत्रार्थः ।

यत्तु भाष्ये 'सा च प्रशासनात्' (ब्र. सू. १. ३. ११) इति सूत्रस्याक्षरमव्याकृतमिति पक्षनिराकरणार्थत्वेन, 'अन्यभावव्यावृत्तेः' इति सूत्रस्याक्षरं जीव इति पक्षनिराकरणार्थत्वेन योजनम्, तत्--अयमप्यर्थः सम्भवतीत्यभिप्रेत्य, न त्वयमेवार्थ इत्यभिप्रेत्य । द्वितीयसूत्रस्याव्याकृतनिराकरणमात्रपरत्वे हि 'प्रशासनात्' इत्येव सूत्रणीयं स्यात् । तावतैवाक्षरशब्दरूढ्यविषयस्याव्याकृतस्य निराकरणसम्भवात् । पूर्वसूत्रनिर्दिष्टाया अम्बरान्तधृतेरेव प्रशासनाधीनत्वमित्येतावत्पर्यन्तं न वक्तव्यं स्यात् । 'अन्यभावव्यावृत्तेः' इति तृतीयसूत्रमप्यस्पष्टविवक्षितार्थमनेकत्रयोजनाऽनुकूलं विश्वतोमुखं न वक्तव्यं स्यात् । भाष्ये तु 'अन्यभावव्यावृत्तेः' इति सूत्रार्थतया अत्रैव स्फुटं कर्तव्यमपि स्फोटनिराकरणं देवताधिकरणे(१.३.८ अधि) कृतम् । अत्र तन्निराकरणे कृतेऽपि देवताधिकरणे 'शब्द इति चेन्नातः प्रभवात्' (ब्र.सू. १. ३. २८) इति सूत्रं जगतः स्फोटात्मकशब्दप्रभवत्वार्थकम्; अनित्यानां वर्णानां जगत्कारणत्वानुपपत्तेः । अतः सूत्राभिमतस्य स्फोटस्य निराकरणमयुक्तमिति शङ्कोत्थाने सति पुनरपि तत्प्रसङ्गो भविष्यतीति तत्रैव निराकरणे यत्नलाघवदर्शनात् । १. ३. १२ ।

इत्यक्षराधिकरणम् । ३ ।

(४ अधिकरणम् )

## ईक्षतिकर्मव्यपदेशात्सः । १३ ।

अक्षरादम्बराधारात्प्रणवः पर्युदासितः । तद्ध्येयमपरं किं वा परमित्यत्र चिन्त्यते ।

एषा प्रसङ्गसङ्गतिः । बुद्धिस्थस्य निरूपणार्हत्वं प्रसङ्गः । आथर्वणिकानामुपनिषदि 'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयति' (प्र. ५. १) इति सत्यकामप्रश्ने 'एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' (प्र. ५. २)

इति परापरब्रह्मदृष्ट्या प्रणवोपासनमुपक्रम्य एकमात्रं प्रणवमुपासीनस्य तत्प्रथममात्रात्मकऋग्वेदप्रापणीयमनुष्य-लोकप्राप्तिफलम्, द्विमात्रं प्रणवमुपासीनस्य तद्द्वितीयमात्रात्मकयजुर्वेदप्रापणीयान्तरिक्षलोकप्राप्तिफलं चाभि-हितम् । तदनन्तरमिदमाम्नायते 'यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात्परं पुरिशयं पुरुषमीक्षते' (प्र. ५. ५) इति । अत्र त्रिमात्रे प्रणवे उपासनीयं किमपरं हिरण्यगर्भाख्यं ब्रह्म, उत परं ब्रह्मेति संशये 'स सामभिरुन्नीयते ब्रह्मलोकम्' इति देशपरिच्छिन्नफलश्रवणादपरं ब्रह्मेति **पूर्वः पक्षः** ।

ननु कथमत्रैवं पूर्वपक्षावकाशः ? 'परं चापरं च (प्र. ५. २) इति परापरब्रह्मदृष्ट्या प्रणवो-पासनमुपक्रम्यात्र 'परं पुरुषम्' (प्र. ५. ५) इति परविशेषणदानेन परं ब्रह्मोपास्यमिति स्पष्टमेव प्रतीतेः । देशपरिच्छिन्नफलश्रवणलिङ्गानुसारादपरब्रह्मण्येव परपदमापेक्षिकपरत्वपरतया योजनीयमित्यपि न युक्तम्; पर-ब्रह्मोपासनानामपि कासाञ्चित् 'चक्षुष्यश्श्रुतो भवति' (छा. १. १३. ३) इत्यादिक्षुद्रफलश्रवणात्, सर्वा-सामेव परब्रह्मोपासनानां कार्यब्रह्मलोकावाप्तिफलकत्वस्य 'कार्यं बादरिरस्य गत्युपपत्तेः' (ब्र.सू ४.३.२) इत्यधि-करणे व्यवस्थापयिष्यमाणत्वाच्च ।

न च वाच्यम्—सगुणविषयाणामेवाहंग्रहोपासनानां तत्फलकत्वं तस्मिन्नधिकरणे व्यवस्थापयि-ष्यते, इह तु परं ब्रह्मोपासनीयं चेत्तन्निर्गुणमेव पर्यवस्येत्, दहरशाण्डिल्यविद्यादिष्विवात्र ब्रह्मणि गुणा-श्रवणात्, निर्गुणोपासनस्य तु देशपरिच्छिन्नं फलं न युक्तम् — इति । यतोऽत्रापि ब्रह्माभेददृष्ट्योपासनीय-प्रणवगुणैरेव त्रिमात्रत्वादिभिर्ब्रह्म सगुणं सम्भवति, अन्यथोपास्यत्वायोगात्, 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' (के. १. ५. ९) इति निर्गुणस्योपास्यत्वनिषेधात् । ननु 'त्रिमात्रेणोंकारेण' (प्र. ५. ५) इति ब्रह्माभिधानस्य प्रणवस्य ब्रह्मोपासने साधनत्वमेव तृतीयाश्रुत्योक्तम्, न तु तदभेददृ-ष्ट्योपास्यत्वमिति चेत्, न । 'परं चापरं च ब्रह्म' (प्र. ५. ५) इत्यभेददृष्ट्युपक्रमानुसारेण तृतीयाया द्वितीयार्थतौचित्यात् । तस्मादुपक्रमं परामृशतां नास्ति पूर्वपक्षमिदमधिकरणमिति चेत्; उपक्रमं परामृशता-मेवास्ति पूर्वपक्षमिदमधिकरणमिति ब्रूमः । उपक्रम एव हि 'तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति' (प्र. ५.२) इत्यपरब्रह्मदृष्ट्या प्रणवोपासनस्यापरब्रह्मप्राप्तिः, परब्रह्मदृष्ट्या तदुपासनस्य परब्रह्मप्राप्तिः

फलमिति विभज्य दर्शितम् । ततश्चान्यत्र परब्रह्मोपासनानां ब्रह्मलोकावाप्तिफलकत्वसंभवेऽप्यत्र विवक्षितायां परब्रह्मोपासनायां तत्फलकत्वं न युक्तम्, किन्त्वपरब्रह्मोपासनायामेव तद्युक्तम् । तस्मादुपक्रमानुसारेणात्र ब्रह्मलोकावाप्तिफलस्यापरब्रह्मलिङ्गत्वादपरमेव ब्रह्मोपास्यमिति ततोऽवधार्यते ।

ननु 'पुरिशयं पुरुषमीक्षते' (प्र. ५. ५) इति ध्यातव्यपुरुषस्येक्षणं ब्रह्मलोके श्रुतम् । ईक्षणस्य च तत्त्वविषयत्वं नियतम् । ततस्तत्रेक्षणीयः पुरुषः परमेव ब्रह्मेति निश्चिते ध्यातव्यमपि तदेव स्यात्; ईक्षणध्यानयोः कार्यकारणयोरेकविषयत्वनियमात् । एवं च परब्रह्मसाक्षात्कारसाध्या तदवाप्तिरेव फलत्वेन विवक्षितेति निर्णये ब्रह्मलोकावाप्तिरफलभूताऽपि सूर्यसम्पत्तिवत् फलद्वारत्वेन वर्णिता नेतव्येति न तल्लिङ्गविरोधोऽपीति चेत्; स्यादेतदेवं यदीक्षणस्य तत्त्वविषयत्वं नियतं स्यात्, न त्वेतदेवम् । ईक्षणं हि दर्शनम् । तस्र्ऽपि स्रज्जुरजतभ्रमादिषु प्रातिभासिकानामपि साधारणं दृष्टम् । तथाऽपीक्षणस्य तत्त्वविषयत्व-मौत्सर्गिकम्, बाधकाभावे चौत्सर्गिकमेव ग्राह्यमिति चेत्, न । यत् प्रायिकं तदेवौत्सर्गिकम् । हिरण्य-गर्भमप्यतात्त्विकं वदतः सकलविशेषरहितं परं ब्रह्मैकमेव तात्त्विकमिति वदतस्तव तद्दर्शनमेकमेव तत्त्वविषयं स्यात् । तद्विरलम् । प्रपञ्चान्तर्गतपदार्थदर्शनानि तु भूयांसि इति स्पष्टमेव । अतो विचारणायामीक्षणस्या-तत्त्वविषयत्वमौत्सर्गिकमित्येव युक्तम् । ननु तथाऽपि ध्यानपूर्वकस्येक्षणस्य तत्त्वविषयत्वं नियतमिति चेत्; न । विधुरपरिभावितकामिनीसाक्षात्कारे व्यभिचारात्, 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे. १. ३) इति मन्त्रोक्ताविद्याशक्तिदर्शने व्यभिचाराच्च । अयं मन्त्रोऽप्यविद्याशक्तिदर्शन-परः इति भगवत्पादैरेव व्याख्यातः ।

अस्तु वेक्षणस्य तत्त्वविषयतानियमेनात्र तस्य परब्रह्मविषयता; तावता ध्यानस्य तद्विषयता कुतः ? ध्यानेक्षणयोरेकविषयत्वनियमात् इति चेत्, न । तदसिद्धेः; 'वासुदेवो हि भगवान् ध्यायन् बिल्वोदके-श्वरम् । अलब्ध मायाच्छन्नस्य निकुम्भस्य निरीक्षणम् ।' तथाप्यौत्सर्गिकं तत् इति चेत्, न । औत्सर्गिक-स्यापि तस्यात्र त्वया त्यक्तव्यत्वात् । ध्यानं हि सर्वत्र तव आरोपितगुणविशिष्टविषयम्; निर्विशेषस्य त्रिका-लाबाध्यस्य समन्वयसूत्रे भगवत्पादैरेवोपास्यत्वस्य निषिद्धत्वात् । तथा च ध्यानमतत्त्वविषयम्, ईक्षणं तत्त्वविषय-मिति च नियमद्वयमभ्युपगच्छता कथं तयोरेकविषयत्वं क्वचिदप्यभ्युपगन्तुं शक्यम् ? व्याघातापत्तेः । यत्तु ब्रह्म-लोकावाप्तिर्द्वारमात्रं न फलमित्युक्तम्, तदपि न; 'कतमं वाव स तेन लोकं जयति' (प्र. ५. १) इति उपक्रम-गतप्रश्नानुसारेण तस्याः फलत्वे तात्पर्यस्य वर्णनीयत्वात् ।

ननु यद्ययं त्रिमात्रोपासनाविधिरपरब्रह्मविषयः, तदा परब्रह्मप्राप्तिफलकत्वेनादावुपक्षिप्ता परब्रह्मोपासना क्व निरूपिताऽस्त्विति चेत्; उत्तरत्रेति ब्रूमः। उत्तरत्र हि त्रिमात्रप्रणवोपासनेनैवाजरामृतत्वादिविशेषित परब्रह्मप्राप्तिरपि श्रूयते 'ऋग्भिरेतं यजुर्भिरन्तरिक्षं स सामभिर्यत्तत्कवयो वेदयन्ते तमोंकारेणान्वेति विद्वान्यत्तच्छान्तमजरममृतमभयं परं च (प्र. ५. ७) इति। अत्र यत्तत् कवयः उपासकाः लभन्ते, तमपरब्रह्मलोकमोंकारेणान्वेतीति प्रागुक्तैव अपरब्रह्मोपासना तल्लोकप्राप्तिफलोपसंहृता। 'यत्तच्छान्तमजरममृतमभयं परं च तदप्योंकारेणान्वेति विद्वान्' इति परब्रह्मोपासना तत्प्राप्तिफला प्रतिपादिता। परब्रह्म नोपासनीयमिति मते प्रणवेन तद्वेदनं तत्प्राप्तिफलं प्रतिपादितम्। प्रत्युत सिद्धान्तिन एवादावुपक्षिप्ताया आपरब्रह्मोपासनाया निरूपणं नास्तीति न्यूनताऽऽपद्यते। न च तन्मते एकमात्रद्विमात्रोपासने एवापरब्रह्मोपासनं स्यादिति वाच्यम्। तयोर्मनुष्यलोकान्तारिक्षलोकप्राप्तिफलकत्वेनोक्तत्वात्, अपरब्रह्मोपासनस्य च तल्लोकावाप्तिफलकत्वेनादावुपक्षिप्तत्वात्। तस्मादपरब्रह्मलोकावाप्तिफलकत्रिमात्रोपासनाकर्म अपरं ब्रह्मेति युक्तम्।

एवं प्राप्ते **राद्धान्तः**—ईक्षतिकर्म तावत् परं ब्रह्म; 'पुरिशयं पुरुषमीक्षते' (प्र. ५. ५) इति तस्येक्षतिकर्मत्वेन व्यपदेशादपरब्रह्मभावव्यावृत्तेः। न हि तस्यापरब्रह्मत्वे तथा व्यपदेशोऽर्थवान्। तल्लोक प्राप्तस्तमीक्षत इत्यस्यार्थसिद्धत्वात्। नन्वीक्षतिकर्म परं ब्रह्मेति पक्षेऽपि तथा व्यपदेशो निरर्थकः; ब्रह्मलोकं प्राप्तास्तत्र क्रमेण परब्रह्मदर्शनं प्राप्नुवन्तीत्यस्याप्यर्थसिद्धत्वात्, अन्यथा 'एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते' (छा. ४. १५. ६) इति श्रुतिविरोधादिति चेत्, मैवम्। ब्रह्मलोकं प्राप्ता नावर्तन्त इति नायं नियमः; महाभिषक्प्रभृतीनामावृत्तिस्मरणात्, 'इमं मानवमावर्तम्' इति श्रुताविममिति विशेषणेन वर्तमानमन्वन्तरमात्रावृत्तिनिषेधाच्च, किन्तु यासामुपासनानां ब्रह्मलोकप्राप्तिद्वारा क्रममुक्तिफलकत्वे किञ्चित् प्रमाणमस्ति ताभिर्ब्रह्मलोकं प्राप्ता एव नावर्तन्त इति नियमः। अतोऽस्या उपासनायाः क्रममुक्तिफलकत्वज्ञापनार्थं सार्थकं 'पुरुषमीक्षते' इति श्रवणम्।

ननु तथाऽपि 'स सामभिरुन्नीयते ब्रह्मलोकम्' (प्र. ५. ५) इति ब्रह्मलोकप्राप्तिवचनं निरर्थकमनुवादमात्रमित्यवश्यमङ्गीकर्तव्यम्; 'तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्ति' (छा. ५. १०. १) इत्यादिश्रुत्यन्तरे सर्वासामपि परब्रह्मोपासनानां ब्रह्मलोकप्रापकत्वस्य वर्णितत्वेन तत एवास्या अपि तत्प्रापकत्वस्य सिद्धेः। तस्मादिह ब्रह्मलोकप्राप्तिवचनस्यानुवादत्वात् तद्वदिदमपि 'पुरुषमीक्षते'

इति श्रवणं लोकाधिपतेरपरब्रह्मणो दर्शनपरं सदनुवादमात्रं स्यात्, अनुवादप्रायपाठादिति चेत्; मैवम्। प्रणवे ब्रह्माभेददृष्टिरूपस्य प्रकृतोपासनस्य प्रतीकोपासनात्वेन श्रुत्यन्तरादस्य ब्रह्मलोकप्राप्तिफलकत्वासिद्धेः। 'अप्रतीकालम्बनान्नयतीति बादरायणः' (ब्र.सू. ४. ३. ६) इत्यधिकरणे प्रतीकविशेषणत्वं विना प्राधान्येन ब्रह्मोपासकानामेवार्चिरादिमार्गेण ब्रह्मलोकप्राप्तावुदाहृतश्रुतेस्तात्पर्यस्य वर्णितत्वात्। तस्मादिह ब्रह्मलोकप्राप्तिवचनं विशिष्टोपदेशरूपं नानुवादमात्रमिति 'पुरुषमीक्षते' इति श्रवणमपि तथैव निर्वहणीयम्। तथा निर्वाहश्चेक्षतिकर्म परं ब्रह्मेत्यभ्युपगम एव घटते, न त्वपरब्रह्मेत्यभ्युपगमे।

अपि च श्रुतिरेव साक्षादीक्षतिविषयं पुरुषमपरब्रह्मभावाद्व्यावर्तयति 'एतस्माज्जीवघनात् परात्परम्' इति। अत्र 'एतस्मात्' इति 'स सामभिरुन्नीयते ब्रह्मलोकम्' इत्यत्र लोकाधिपतित्वेन सन्निहितमपरं ब्रह्म परामृश्यते; सर्वनाम्नां सन्निहितपरामर्शित्वस्वाभाव्यात्, तस्यैव च सन्निहिततरत्वात्। न च तत्र ततोऽपि सन्निहितो लोकः परामृश्यतामिति वाच्यम्। चेतनस्य हि चेतनान्तरादुत्कर्षवर्णनमुत्कर्षाय भवति, न त्वचेतनादुत्कर्षवर्णनम्। अतो लोकमतिक्रम्य लोकाधिपतेरेव समासे न्यग्भूतस्यापि परामर्शः; 'सर्वनाम्नाऽनुसन्धिर्वृत्तिच्छन्नस्य' (काव्य. सू. ५. १. ११) इति वामनसूत्रे सर्वनाम्नां कृत्तद्धितसमासरूपवृत्त्युपसर्जनपरामर्शित्वस्य व्युत्पत्तिसिद्धताया उक्तत्वात्। ननु भाष्ये 'एतस्माज्जीवघनात्' इत्यस्य लोकपरत्वपक्षोऽपि दर्शितः? सत्यम्। 'अपर आह' इत्युपक्रमेणैव तस्मिन् पक्षेऽस्वारस्यमपि तत्रैव ध्वनितम्। तस्मादीक्षतिकर्म तावत्परं ब्रह्म। एवं च परस्य ब्रह्मण ईक्षतिकर्मत्वेन व्यपदेशात् तथा व्यपदिश्यमानः स एव परब्रह्मभूतः पुरुषो ध्यायतिकर्म; उभयत्र 'परं पुरुषम्' इति श्रवणेन उभयोरैक्यप्रत्यभिज्ञानात्।

ननु च ध्यानवाक्ये 'परं पुरुषम्' इति श्रूयते। ईक्षणवाक्ये 'परात्परं पुरुषम्' इति श्रूयते। अतो नास्ति प्रत्यभिज्ञेति चेत्; मैवम्। ध्यानवाक्येऽपि हि परशब्दस्यापरब्रह्मापेक्षया परत्वमेवार्थः। 'एतद्वै सत्यकाम परं चा परं च ब्रह्म यदोङ्कारः' (प्र. ५. २) इत्युपक्रमे अपरब्रह्मणः सन्निहितनिर्दिष्टतया तस्यैव परभावापेक्षितप्रतियोगितयाऽन्वयौचित्यात्। ईक्षणवाक्येऽपि तस्मादपरब्रह्मण एव परत्वमुच्यत इति अस्त्येव दृढतरा प्रत्यभिज्ञा।

ननु तथाऽपि स्थलद्वयपरामर्शसापेक्षा प्रत्यभिज्ञा लिङ्गतो दुर्बला। अतोऽपरब्रह्मप्राप्तिलिङ्गेन ध्यायतिकर्मापरं ब्रह्म स्यादिति चेत्; न। इदमपि लिङ्गं लिङ्गत्वसिध्यर्थमुपक्रमपरामर्शसापेक्षमिति हि त्वयैव

दर्शितम् । अतः कथमेवमत्र लिङ्गस्य बलवत्ताऽवकाश इति लिङ्गादिह परपुरुषश्रुतिप्रत्यभिज्ञैव बलीयसी । ननु यदि प्रत्यभिज्ञया अत्र लिङ्गबाधः, तर्ह्युपक्रमोपक्षिप्तमपरब्रह्मोपासनं तत्प्राप्तिफलकं नोक्तं स्यादिति चेत्; नैष दोषः, किन्तु प्रकरणस्य परब्रह्मोपासनामात्रपरतयैकवाक्यतापादकत्वात् गुण एव ।

ननु तथाऽपि एकमात्रद्विमात्रोपासनाविधिसत्वाद्वाक्यभेदोऽवश्यमाश्रयणीयः । अतो वाक्यभेदस्यापरिहार्यत्वात्, उपक्रमे अपरब्रह्मोपासनोपक्षेपस्य वैयर्थ्यप्रसङ्गाच्चापरब्रह्मोपासनाविधिरपि क्वचिदाश्रयणीयः । स चात्रैव स्यात्; तल्लोकावाप्तिलिङ्गसत्त्वात् । दुर्बलस्यापि लिङ्गस्य 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेनात्र बलवत्त्वादिति चेत्, न । सर्वस्यापि परब्रह्माभेददृष्टिविशिष्टत्रिमात्रोपासनाविध्यर्थवादतयाऽन्वयेनानर्थक्यस्यैकवाक्यताभङ्गस्य चाप्रसरात् । तथा हि—ओंकारस्यायं महिमा, यदपरब्रह्मतयोपास्यमानोऽपि तत्प्राप्तिफलको भवति । मात्रावैगुण्येनोपास्यमानोऽपि मनुष्यलोकान्तरिक्षलोकप्राप्तिफलको भवति । तस्मादेवंभूतमहिमाऽयमोंकारो हेयमल्पफलमपरं ब्रह्म विहाय परब्रह्मतया त्रिमात्र एवोपासनीय इत्येवमेकवाक्यतया सर्वस्याप्यर्थवत्त्वसम्भवे वाक्यभेदाश्रयणं न युक्तम् । तस्मादेकवाक्यतासाकाङ्क्षपरब्रह्मप्रकरणानुगृहीतश्रुतिप्रत्यभिज्ञाबलादीक्षतिकर्म पुरुष एव ध्यायतिकर्म, ईक्षतिध्यायत्योः एकविषयत्वनियमाच्च । यद्यप्यन्यध्यानमपि अन्येक्षणजनकम्, तथाऽपि तददृष्टद्वारकम् । समानविषयत्वे त्वीक्षणध्यानयोः कार्यकारणभावो दृष्टद्वारकः; कामिनीं भावयतः कामिनीसाक्षात्कारदर्शनात् । न चात्र दृष्टद्वारसम्भवे अदृष्टद्वारमाश्रयणीयम् । एतेन—ध्याने प्रणवानुप्रवेशाद्विषयैक्यं नास्तीति शङ्काऽपि निरस्ता । भावनाप्रचयस्य साक्षात्कारजनकत्वे हि तद्विषयविषयत्वं तन्त्रम्, न तु तदन्याविषयत्वमपि; गौरवात् । तस्मादीक्षणध्यानयोरेकविषयत्वनियमादपीक्षतिकर्म पुरुष एव ध्यायतिकर्म ।

अत्र दर्शितस्य सर्वस्यापि सिद्धान्तस्य सूत्रारूढत्वमुपपाद्यते । ईक्षतिकर्म परं ब्रह्म; ईक्षतिकर्मव्यपदेशात् । 'पुरुषमीक्षते' इतीक्षतिकर्मत्वव्यपदेशादित्यर्थः । हेतावपेक्षितोऽपि त्वप्रत्ययः पक्षसमर्पकतया 'ईक्षतिकर्म' इत्यस्य पृथक्पदत्वमप्यस्तीति ज्ञापनार्थं न प्रयुक्तः । नन्वीक्षतिकर्मत्वव्यपदेशोऽपरब्रह्मण्यपि घटते; तल्लोकं प्राप्तेन तस्य द्रष्टुं शक्यत्वादिति हेतूपमर्दशङ्कायां 'अन्यभावव्यावृत्तेः' (१. ३. १२) इति पूर्वाधिकरणसूत्रमनुषञ्जनीयम् । यतस्तल्लोकं प्राप्तस्य तद्दर्शनमर्थसिद्धम् अतस्तदुपदेशो व्यर्थः स्यादिति

तदुपदेशारम्भसामर्थ्यादीक्षतिकर्मणः पुरुषस्यापरब्रह्मभावाद्व्यावृत्तेरित्यर्थः । अपरब्रह्मव्यावर्तकविशेषणश्रवणादपीक्षतिकर्म परं ब्रह्मेति हेत्वन्तरेऽपि 'अन्यभावव्यावृत्तेः' इति सूत्रमनुषञ्जनीयम् । तत्रेक्षतिकर्मणोऽपरब्रह्मभावव्यावर्तकतत्परत्वविशेषणसत्त्वादित्यर्थः । अस्मिन् पक्षे व्यावृत्तिशब्दो ण्यर्थान्तर्भावेण व्यावर्तकपरः । एवमीक्षतिकर्मणः परब्रह्मभावे सिद्धे तदेवेक्षतिकर्म ध्यायतिकर्मेत्यत्र साध्ये ध्यायतिकर्मणाऽर्थात् परब्रह्मभावसिद्धिफलके पक्षो हेतुश्चेत्युभयं 'स' इत्यनेन प्रदर्श्यते । तत्रेक्षतिकर्माणि पक्षे तदिति नपुंसकनिर्देशं विहाय पुंलिङ्गनिर्देश ईक्षणवाक्यस्थपुरुषपदानुसारेण । तदनुसारश्च परपुरुषश्रुतिप्रत्यभिज्ञारूपहेतुप्रदर्शनार्थः । ध्यायतिकर्मेति साध्यं त्वौचित्यादध्याहर्तव्यम् । ईक्षणध्यानविषययोरेकत्वरूपहेतुप्रदर्शनार्थं तु 'अन्यभावव्यावृत्तेश्च' इति कृत्स्नसूत्रमनुषञ्जनीयम् । ध्यायतीक्षतिकर्मणोर्भिन्नत्वे ध्यानस्यादृष्टद्वाराश्रयणप्रसङ्गेन तयोर्भिन्नत्वव्यावृत्तेरित्यर्थः । चकारस्स इति पक्षनिर्देशेनैवैकस्मिन् हेतौ लब्धे इदं हेत्वन्तरमिति ज्ञापनार्थः । १. ३. १३ ।

इति ईक्षतिकर्माधिकरणम् । ४ ।



(५ अधिकरणम् )

## दहर उत्तरेभ्यः । १४ ।

छान्दोग्ये श्रूयते । 'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम्', इति 'तं चेत् ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम् (छा.८.१–३) इत्यादि । अत्र दहराकाशो भूताकाशः, परं ब्रह्म वेति लौकिकरूढिश्रौतनिरूढिभ्यां संशये रूढेः प्रबलत्वादाकाशश्रुतिबलात् भूताकाश इति **पूर्वः पक्षः** ।

ननु दहराकाशस्य भूताकाशत्वे 'यावान्वा' इत्यादौ तस्य भूताकाशोपमेयनिर्देशो नोपपद्यते । तथा हि—अभेदे उपमानोपमेयभावनिर्देशो द्वेधा, उपमानभावे उपमेयभावे च परस्परव्यावर्तकविशेषणरहितः, तत्सहितश्च । तत्राद्योऽनन्वयालङ्कारविषयः, यथा –

'गगनं गगनाकारं सागरः सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिव' (रामा. यु. का. १०७. ५०) । इह गगनादीनां गगनादिभिः सादृश्यं निबध्यमानमुपमानोपमेयभेदापेक्षं सत् वास्तवस्य तद्भेदस्याभावाद्विशेषणोपाधिकृतस्य च तस्य परस्परव्यावर्तकविशेषणप्रयोगाभावादप्रतीतेः नान्वेतीत्यन्वर्थनामाऽनन्वयः । अनन्वयिनोऽपि स्वमहिमप्रतिष्ठत्वस्येव स्वसादृश्यस्य निबन्धनमन्यस्य प्रतिष्ठावस्तुन इव उपमानस्याभावद्योतनाय । एवं गगनस्य वैपुल्ये गगनमेवोपमानं नान्यदित्येवमादिप्रकारेणानुपमत्वद्योतनफलतयोत्कर्षावहः काव्यशोभाकर एव 'गगनं गगनाकारम्' इत्यादिप्रयोगः, न त्वगत्या कथञ्चिन्निर्वहणीयः । द्वितीयस्तूपमाप्रभेदः यथा :—

'उपाददे तस्य सहस्ररश्मिः त्वष्ट्रा नवं निर्मितमातपत्रम् । स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे' ।
(कुमा. ७. ४१)

अत्रोपमानस्य शिवस्यैवोपमेयत्वेऽप्युत्तमाङ्गपतद्गङ्गाप्रवाहत्वच्छत्रदुकूलसन्निकृष्टमौलित्वरूपविशेषणोपाधिकृतभेदसत्त्वान्निबध्यमानं सादृश्यमन्वेतीति नानन्वयः, किन्तूपमाप्रभेदः । एवं च सति अत्र दहराकाशस्य भूताकाशत्वे तस्यैव तदुपमेयत्वनिर्देशोऽयमनन्वयरूपो वा स्यात्, उपमाप्रभेदरूपो वा । नाद्यः; 'अयम्' इति, 'एषोऽन्तर्हृदय' इति च बाह्यत्वान्तरत्वरूपपरस्परव्यावर्तकविशेषणश्रवणात् । न च 'अयम्' इत्यनेनाप्यान्तरस्यैव निर्देशोऽस्त्विति वाच्यम् । तथा सति आक्षेपबीजतया श्रोतृबुद्धिस्थस्य सौक्ष्म्यस्यैव यावानित्यनेन परामर्शनीयतयाऽनन्वयस्य निरुपमसौक्ष्म्यपर्यवसायित्वापत्तेः । न चेष्टापत्तिः; इह कृताक्षेपसमाधानलाभाय वैपुल्यप्रतिपादनस्यैवापेक्षितत्वात् । आक्षेपप्रकारस्त्वग्रे स्पष्टीभविष्यति । न द्वितीयः; आन्तरस्य बाह्यवद्व्यापकत्वाभावात् । न च—हृदयपुण्डरीकावच्छिन्नाकाशस्य सूक्ष्मत्वेऽपि हृदयपुण्डरीकान्तर्गतान्तःकरणप्रतिबिम्बरूप आकाशो बाह्याकाशवद्व्यापको भवेत्, उपाधेः सौक्ष्म्येऽपि प्रतिबिम्बस्य बिम्बसमानरूपपरिमाणतया जानुदघ्नकूपजलगतदूरविशालाकाशप्रतिबिम्बे दर्शनात्—इति वाच्यम् । शरीरव्यवहितस्य बाह्याकाशस्य हृदयपुण्डरीकप्रविष्टेऽन्तःकरणे प्रतिबिम्बासम्भवात् । तस्माद्दहराकाशः परमात्मेति युक्तम् ।

तथा सति 'आकाशवत् सर्वगतः' इति श्रुत्यामिवात्रापि तस्य भूताकाशोपमेयत्वं युज्यते; हृदयावच्छिन्नरूपेण तस्य व्यापकत्वाभावेऽपि स्वरूपेण व्यापकत्वात् । न च स्वरूपेण व्यापकतामात्रविवक्षायां

'एषोऽन्तर्हृदये' इति तद्विशेषणस्य व्यापकतावच्छेदकत्वेनान्वयाभावान्निष्प्रयोजनत्वं दोषः; स्वरूपकथनार्थत्वोपपत्तेः। 'एष म आत्माऽन्तर्हृदये अणीयान्व्रीहेर्वा यवाद्वा' (छा. ३. १४. ३) इत्यादिश्रुतौ ब्रह्मणो हृदयावच्छेदोपाधिकाणीयस्त्वोक्त्यनन्तरं 'एष म आत्माऽन्तर्हृदये ज्यायान् दिवो ज्यायानन्तरिक्षात्' (छा. ३. १४. ३) इत्यादि स्वाभाविकव्यापकत्वोक्तावपि 'अन्तर्हृदये' इति विशेषणदर्शनात् 'अयम्' इति विशेषणस्य भूताकाश उपमानमिति उपमानविशेषलाभार्थतयेव प्रकृतः परब्रह्मरूपदहराकाश उपमेय इति उपमेयविशेषलाभार्थतया तस्य सप्रयोजनत्वाच्च।

अपि च वाक्यशेषे 'एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः' (छा. ८. १. ५) इत्यात्मश्रुतिरपहतपाप्मत्वादीनि ब्रह्मलिङ्गानि च श्रूयन्ते।

तथा 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' (छा. ८. ३. २) इति जीवानामहरहर्दहराकाशप्राप्तिः श्रूयते। सापि ब्रह्मलिङ्गम्; 'सता सोम्य तदा सम्पन्नो भवति' (छा. ८. ८. १) इति श्रुत्यन्तरे जीवानां सुषुप्तौ ब्रह्मसम्पत्तिश्रवणात्। ब्रह्मलोकशब्दश्च तत्र श्रूयते। सोऽपि ब्रह्मणि व्यवतिष्ठते, ब्रह्मैव लोक्यमानतया लोक इति व्युत्पत्तेः; निषादस्थपतिन्यायेन षष्ठीसमासात् कर्मधारयस्य ज्यायस्त्वात्; जीवानामहरहश्चतुर्मुखलोकगमनाभावेन षष्ठीसमासासम्भवाच्च।

तथा 'अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय' (छा ८. ४. १) इति दहराकाशस्य जगद्विधारकत्वमुच्यते। तदपि ब्रह्मलिङ्गम्; 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ. ४. ४. २२) इति श्रुत्यन्तरदर्शनात्। न चैषामुदाहृतश्रुतिलिङ्गानां दहराकाशादन्यत्रान्वयः शक्यशङ्कः; 'एष आत्मा' इत्यादि वाक्यश्रुतपुंलिङ्गैकवचनान्तैतदादिशब्दपरामर्शयोग्यस्यान्यस्य प्रकृतस्याभावात्। 'उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते' (छा. ८. १. ३) इति दहराकाशस्य, 'अस्मिन् कामास्समाहिताः' इति अपहतपाप्मत्वादिगुणकस्यात्मनश्च समाधानाधारत्वेनैक्यप्रत्यभिज्ञानाच्च। तस्मादुपक्रमगताया अप्येकस्या आकाशश्रुतेर्वाक्यशेषगतानि बहूनि श्रुतिलिङ्गानि बलवन्तीति तैर्दहराकाशः परं ब्रह्मेति युक्तम्। आकाशशब्दस्य श्रुत्यन्तरेषु तस्मिन्नपि प्रसिद्धत्वात्। अपि च 'ब्रह्मपुरे' इत्युपक्रमानुसारेणापि दहराकाशः परं ब्रह्मेति लभ्यते। देहस्य ब्रह्मपुरत्वोक्त्यैव देहान्तर्वर्तित्वेन ब्रह्मोपासनाविधित्सयेदं प्रकरणमारभ्यत इत्यवगमात्।

स्यादेतत्—'चैत्रगृहे मैत्रस्तिष्ठति' इत्यन्यगृहत्वेन निर्दिष्टेऽप्यन्यावस्थानमुच्यते, तथेहाप्यस्तु। न च वाच्यम्—तत्र 'मैत्र' इति विशिष्याधेयनिर्देशात्तथा भवतु नाम, इह त्वनिर्दिष्टाधेयविशेषे वाक्ये तद्विशेषाकाङ्क्षायां यस्य पुरत्वेन देहो निर्दिष्टः, तत् ब्रह्मैवाधेयविशेषत्वेन सम्बन्धुं युक्तम्—इति। अत्राप्याकाशश्रुत्या विशिष्य भूताकाशस्याधेयत्वेन निर्दिष्टत्वात्, इति चेत्; मैवम्। इह ब्रह्मपुरत्वेन देहोक्तेर्दे-हान्तर्वृत्तिब्रह्मोपासनाविधित्साऽभावे वैयर्थ्यप्रसङ्गात्। न हि मैत्रान्वेषिणं प्रति 'चैत्रगृहे मैत्रस्तिष्ठति इति वाक्ये चैत्रगृहत्वोक्तिः देवदत्तगृहादिव्यावर्तनेनेवात्र ब्रह्मपुरत्वोक्तिः प्रकारान्तरेण साफल्यमश्नुवीत। तस्माद्यथा 'प्रजापतिर्वरुणायाश्वमनयत्' इत्याद्युपक्रमगतार्थवादेन अश्वदातुः किञ्चिद्विधास्यत इत्यवगमात् तदनन्तरश्रुतं 'यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वरुणांश्चतुष्कपालान्निर्वपेत्' इति वाक्यमश्वप्रतिग्रहीतुरिष्टिविधायकतयाऽवभासमानमप्यश्वदातुस्तद्विधायकमिति योज्यते, एवमिहाप्युपक्रमे देहस्य ब्रह्मपुरत्वोक्त्या देहस्यान्तः किञ्चित् (काचित्) ब्रह्मोपासना विधास्यत इत्यवगमात् तदनन्तरश्रुतं दहराकाशवाक्यं भूताकाशप्रतिपादकतयाऽवभासमानमपि ब्रह्मप्रतिपादकमिति योजनीयम्। तस्मान्निरालम्बनो भूताकाशपूर्वपक्ष इति चेत्;

अत्र ब्रूमः —

'यावान्वा अयमि'त्यादौ बाह्याभ्यन्तरभेदतः। उदमानोपमेयत्वं भूताकाशे समञ्जसम्॥
सूक्ष्मेऽप्यभ्यन्तराकाशे वैपुल्यमुपपद्यते। मानसं मानसार्थानां समाधानाय काङ्क्षितम्॥
यच्चास्येत्यत्र पित्राद्या वर्ण्यास्सङ्कल्पसम्भवाः। साकं द्यावापृथिव्याद्यैस्ते स्वाप्ना इव मानसाः॥
नैवात्र दहराकाशः श्रुत्योपास्यो विधीयते। किन्तत्वन्तर्वृत्ति तस्यान्यदिदं श्रुत्यैव दर्शितम्॥
तत्र द्यावापृथिव्यादिवर्ण्यवस्तुकरम्बिते। ब्रह्मण्यशेषाधिष्ठाने ब्रह्मश्रुत्यादिसङ्गतिः॥

तथाहि—'यच्चास्येहास्ति' इत्यादेरयमर्थः—यदस्य देहिनः इह लोके विद्यते, यच्चेह लोके इदानीं न विद्यते नष्टं भविष्यद्वा, तत्सर्वमस्मिन् दहराकाशे समाहितमिति। तच्चात्र दहरोपासनया ब्रह्मलोकं प्राप्तस्याग्रे 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छा. ८. २. १) इत्यादिना वर्णयिष्यमाणं स्वसङ्कल्पसमुत्थितप्राचीनानन्तजन्मसम्बन्धिदिदृक्षितपितृभ्रातृपुत्रकलत्रगीतवादित्रादिभोग्यवस्तुजा-तरूपम्; अग्रे 'यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते अथ ये चास्य जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते' (छा. ८. ३. १, २) इति श्रुत्यैव तथा विवृतत्वात्। तच्च ब्राह्मलौकिकं

सङ्कल्पजपित्रादिभोग्यजातं न स्थूलपार्थिवाप्यादिरूपम्, किन्तु स्वप्नदृष्टस्त्रीपुरुषादिवन्मनोविकारात्मकम्। अत एव 'मनसैतान् कामान् पश्यन्रमते य एते ब्रह्मलोके' (छा. ८. १२. ५, १) इति तस्य मनोमात्र भोग्यत्वश्रुतिः, मनोमयानि ब्रह्मलोके शरीरादीनि' इति पुराणञ्च। एवञ्च तत्प्रायपाठात् द्यावापृथिव्यादिकमपि दहरोपासकस्य स्वयन्नपानगीतवादित्रादिवत् भोगोपयुक्तं मानसमेव ग्राह्यमिति तस्य सर्वस्याप्यन्तस्समाधानाय दहराकाशस्य बाह्याकाशवत् व्यापकत्वमपि मानसमेवापेक्षितम्। तदेव स्वल्पापवरकदेशनिद्राणपुरुषदृश्यमानै कैककोणविश्रान्तानेकगिरिनदीसमुद्रादियुक्ताकाशवैपुल्यवत् मुहूर्तमात्रशयितपुरुषानुभूयमानविवाहपुत्रोत्पादन तदुपलालनाद्यनेकव्यापारयुक्तस्वाप्नकालदैर्घ्यवच्च वास्तवसूक्ष्मत्वाविरोधि 'यावान्वा' इत्यादिना वर्ण्यत इति किमत्रासमञ्जसम्?

ननु द्यावापृथिव्यादिकमिह वर्ण्यमानं मानसञ्चेत्तत्स्वप्नदृष्टगिरिसमुद्रादिवद्वस्तुतः सूक्ष्मेऽपि मातुं शक्नोतीत्येव शिष्याणामाक्षेपे परिहर्तुं शक्ये किमर्थं प्रातिभासिकवैपुल्याभिप्रायेण 'यावान्वा अयम्' इत्युक्तमिति चेत्; सत्यम्। वस्तुतः सूक्ष्म एवास्य द्यावापृथिव्यादेः समाधानमुपपादयितुं शक्यमिति। अत एव तैत्तिरीयोपनिषदि 'तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितम्' (महानारा. ११. ९) इति सूक्ष्म एव हृदयसुषिररूपे भूताकाशे सर्वस्य समाधानमुक्तम्। छान्दोग्यभाष्ये च सूक्ष्मे दहराकाशे समाधानान्यथानुपपत्त्यैव ब्राह्मलौकिकपित्रादिभोग्यजातस्य मानसत्वं प्रसाधितम्। तथाऽप्यत्रात्यल्पीयसो दहराकाशस्यान्तरतिसूक्ष्ममपि वस्तूपास्यं न सम्भवतीत्याक्षिप्तवतां शिष्याणां हृदि अतिविपुलं द्यावापृथिव्यादिकं तदन्तः समाहितमित्युत्तरं न प्रविशेदिति मत्वा यक्षानुरूपबलिन्यायेन मनोविकाररूपद्यावापृथिव्यादिसमाधानोचितं मनोविकाररूपमेव वैपुल्यं दर्शितमित्युपपद्यतेतराम्।

अवश्यञ्च दहराकाशः परं ब्रह्मेति वदताऽपि 'यावान्वा अयमाकाशः' इत्यादिना दहराकाशस्य सूक्ष्मत्वाविरोधि मनोविकारात्मकं वैपुल्यं वर्णितमित्ययमेव पन्थाः समाश्रयणीयः। कथम्? तेन खल्वाकाशशब्दस्य ब्रह्मणि गौणी वृत्तिरेष्टव्या। तस्याश्च 'आकाशवत् सर्वगतः' इति श्रुत्यन्तरप्रसिद्ध भूताकाशसादृश्यं निमित्ततयाऽवतिष्ठते। तथाचोपमेयनिर्देशकेनाकाशशब्देनैव भूताकाशसादृश्ये प्रतिपादिते वाक्येन प्रतिपाद्यमानं तत्सादृश्यं कथमन्वेतु? न हि 'यत् भूताकाशवद्व्यापकं ब्रह्म तत् भूताकाशवद्व्यापकम्' इति वाक्यं समञ्जसं भवति, किन्तु 'गङ्गायां घोषः' इति लाक्षणिकेन गङ्गापदेनैव तीरस्य गङ्गासम्बन्धित्वे लब्धे 'गङ्गाया गङ्गायां घोषः' इति प्रयोगवदसमञ्ज



समेव भवेत् । तस्मात् ब्रह्मणस्स्वरूपेण भूताकाशवद्व्यापकत्वे 'आकाशवत्सर्वगतः' इति श्रुतिप्रतिपादिते गौणेनाकाशपदेन बोध्यमानेऽपि हृदयपुण्डरीकावच्छिन्नरूपेणापि तद्व्यापकत्वं प्रतिपादयितुं 'यावान्वा' इत्यादिवाक्यम् । यथा 'अमावास्यायाममावास्यया यजेत' 'पौर्णमास्यां पौर्णमास्या यजेत' इति वाक्ययोराग्नेयादीनां षण्णां यागानां स्वरूपेणामावास्यापौर्णमासीकालकर्तव्यत्वे तत्तदुत्पत्तिवाक्यविहिते तेषु गौणाभ्यां तृतीयान्तामावास्यापौर्णमासीपदाभ्यां बोध्यमानेऽपि तेषां त्रिशस्त्रिशः प्राच्योदीच्यसकलाङ्गसाहित्येनापि तत्तत्कालकर्तव्यत्वं प्रतिपादयितुं तद्वाक्यद्वयमित्येव समर्थनीयम् ।

अत एवैकादशे तस्य वाक्यद्वयस्य साफल्यं तथैव समर्थितम्—तद्वाक्यद्वयाभावे 'दशपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्येनैकफलसाधनत्वेन बोधितानां षण्णां यागानां प्रयोगैक्यस्यौत्सर्गिकत्वात् पौर्णमास्यां प्राच्यांगानुष्ठानपूर्वकं पौर्णमासत्रिकमनुष्ठाय अमावास्यायां प्राप्तायाममावास्यात्रिकमनुष्ठायोदीच्यांगसमापनं कर्तव्यं प्रसज्येत इति । आचार्यवाचस्पतिनाऽपि ब्रह्मण्याकाशपदस्य गौणत्वे तेनैव भूताकाशवद्व्यापकत्वस्य लब्धतया पुनस्तत्र वाक्येन तत्प्रतिपादनमनन्वितमित्याशंक्य 'तत्किमिदानीं पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्ययेत्यसाधुर्वैदिकप्रयोगः ?' इति वदता तद्वाक्यद्वयदृष्टान्तावष्टम्भेन ब्रह्मणः स्वरूपेण भूताकाशवद्व्यापकत्वे गौणपदलब्धेऽपि हृदयावच्छिन्नरूपेणापि तद्व्यापकत्वं प्रतिपादयितुं 'यावान्वा' इत्यादि वाक्यमित्येव दर्शितम् । एवञ्च हृदयावच्छिन्नरूपेण सूक्ष्मस्य ब्रह्मणस्तेनैव रूपेण वैपुल्यं मानसपदार्थसमाधानोचितं मानसं वर्णितमित्येव सिद्धान्तिनाऽप्युपपदनीयं गत्यन्तराभावादित्यलं विस्तरेण ।

'एष आत्मा अपहतपाप्मा' इत्यादिवाक्यशेषगतब्रह्मलिङ्गानां तु न दहराकाशेऽन्वयः, किन्तु तस्यान्तरुपास्यत्वेन निर्दिष्टं यत् द्यावापृथिव्यादि तदवच्छिन्ने, तत्प्रतीके वा ब्रह्मण्यन्वयः । द्यावापृथिव्यादिसमाधानोपन्यासानन्तरं 'एतत् सत्यं ब्रह्मपुरम्' इति प्रकृतद्यावापृथिव्यादिपरैतत्पदसमानाधिकरणेन 'सत्यं ब्रह्मपुरम्' इत्यनेन द्यावापृथिव्याद्यवच्छिन्नं, तत्प्रतीकं वा ब्रह्म निर्दिश्य 'अस्मिन् कामास्समाहिताः' इत्युपासकस्य कमनीयानां केषाञ्चित् गुणानां ब्रह्मणि समाधानमुक्त्वा तदनन्तरं 'एष आत्माऽपहतपाप्मा' इत्यादिना तेषां गुणानामपहतपाप्मत्वादिरूपतया विवृतत्वात् । ननु 'एतत् सत्यं ब्रह्मपुरम्' इत्यत्र एतत्पदं दहराकाशपरामर्शि, 'उभे अस्मिन्द्यावापृथिवी' इत्यादिप्राचीनवाक्येषु सर्वनाम्नां तत्परामर्शित्वदर्शनात्; 'एतत्' इति नपुंसकलिङ्गस्य सत्यब्रह्मपुरशब्दसामानाधिकरण्यानुरोधेन सङ्गतत्वात्तस्य द्यावापृथिव्यादिपरामर्शित्वे

एकवचनानुपपत्तेश्च । तस्मात् 'सत्यं ब्रह्मपुरम्' त्यारभ्य श्रुतानां सर्वेषां ब्रह्मश्रुतिलिङ्गानां दहराकाश एव समन्वय इति चेत् ; मैवम् । 'उभे अस्मिन्' इत्यादिवाक्येषु प्राधान्येन प्रथमाविभक्त्या निर्दिष्टस्य द्यावा-पृथिव्यादेरेव 'प्रजापतिर्वरुणायाश्वमनयत् स स्वां देवतामार्च्छत्' इत्यत्र प्रजापतेरिव सर्वनाम्ना. परामष्टुं युक्तत्वात् । तस्य द्यावापृथिव्यादिपरामर्शित्वेऽपि 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' इति व्याकरणानु-शिष्टस्य नपुंसकलिङ्गस्यैकवचनस्य चोपपत्तेः, 'सर्वं तदस्मिन् समाहितम्' इत्यन्तेन दहराकाशे द्यावापृथि-व्यादिसमाधानोपन्यासानन्तरं प्रवृत्ते 'तच्चेत् ब्रूयुः अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरा वाऽऽप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' इत्याक्षेपतदुत्तरसन्दर्भे श्रुतयोः 'एतत्' इति पदयोर्नपुंसकलिङ्गसामानाधिकरण्याभावेन शरीरनाशात्तदाश्रितमूर्तद्रव्यजातस्येव तदवच्छिन्नस्याकाशस्य हानिशङ्कानुदयेन च दहराकाशपरामर्शित्वस्यानुं-पपन्नतया अस्मदुक्तरीत्या द्यावापृथिव्यादिपरामर्शित्वस्यावश्यवक्तव्यत्वेन तदनन्तरश्रुत 'एतत्सत्यं ब्रह्मपुरम्' इति वाक्यगतैतत्पदस्यापि तत्परामर्शित्वस्यैवाङ्गीकर्तव्यत्वाच्च ।

यत्तु 'अस्मिन् कामास्समाहिताः' इति समाधानाधारत्वप्रत्यभिज्ञया दहराकाशस्य ब्रह्मपुरशब्दो-दितस्य ब्रह्मणश्चैक्यमवगम्यते इति, तत्तुच्छम् ; प्रकृतपरामर्शकसर्वनामान्तरेण भेदेऽवगम्यमाने समाधानाधारत्व-प्रत्यभिज्ञामात्रस्याकिञ्चित्करत्वात् , अन्यथा 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' इत्यत्र 'ब्रह्मपुरे' इति 'अस्मिन्' इति च सप्तमीनिर्दिष्टाधारप्रत्यभिज्ञया ब्रह्मपुरदहरपुण्डरीकयोरप्यैक्यप्रसङ्गात् । तस्माद्युक्तमुक्तं वाक्यशेषगतब्रह्मश्रुतिलिङ्गानां द्यावापृथिव्याद्यवच्छिन्ने, तत्प्रतीके वा ब्रह्मण्यन्वय इति । एवञ्च—उपक्रम एव देहस्य ब्रह्मपुरत्वोक्त्या ब्रह्मोपासनाविधित्साऽवगमाद्दहराकाशो ब्रह्मेत्यवगम्यत इत्येतदपि निरस्तम् ; दहराकाशस्योपास्यत्वेनानिर्दिष्टत्वात् । तदन्तरुपास्यत्वेन निर्दिष्टं यद्द्यावापृथिव्यादि तदुपासनस्य ब्रह्मोपासनरूपतायाः समर्थितत्वाच्च । एवमेतेषां ब्रह्मश्रुतिलिङ्गानां पूर्वपक्षे दहराकाशान्तरुपास्यान्वयेन साङ्गत्यमभिप्रेत्योक्तं भाष्ये 'न चात्र दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वञ्च श्रूयते; तस्मिन् यदन्तरिति परविशेषणत्वेनोपादानात्' इति ।

यदि चैतेषां ब्रह्मश्रुतिलिङ्गानां दहराकाश एवान्वयो वक्तव्यः, तदाऽपि नानुपपत्तिः; उपक्रम-गताभ्यस्ताकाशश्रुत्यनुसारेण ब्रह्मात्मश्रुतीनां बृहत्त्वातत्त्वयोगेन भूताकाशे वृत्त्युपपत्तेः; उपास्यस्य भूताकाशस्य

ब्रह्मात्मशब्दाभ्यां परब्रह्मरूपतया स्तुत्युपपत्तेश्च । 'यद्वै तत् ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः। यो वै स बहिर्धा पुरुषादाकाशोऽयं वाव स यो यमन्तःपुरुष आकाशः । यो वै सोऽन्तःपुरुष आकाशोऽयं वाव स योऽयमन्तर्हृदय आकाशः । यो वै सोऽन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद' (छा. ३. १२. ७—९) इति श्रुतौ पूर्णत्वादिगुणेन उपास्यस्य भूताकाशस्यैव 'यद्वै तत् ब्रह्मेतीदं वाव तत्' इति ब्रह्मरूपतया स्तुतिदर्शनात् । अपहतपाप्मत्वं अपहतो निरस्तः जीवस्य पाप्मा येन यस्मिन्निति वा व्युत्पत्त्या हृदयान्तर्गते भूताकाशेऽप्युपपद्यते; 'तद्यत्रैतत् सुप्तस्समस्तस्संप्रसन्नस्स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तन्न कश्चन पाप्मा स्पृशति' (छा. ८. ६. ३) इति नाडीमार्गेण हृदयावकाशं प्रविष्टस्य जीवस्य पाप्मास्पर्शश्रवणात् । एतावतैव 'दह्रं विपाप्मं परवेश्मभूतं यत् पुण्डरीकं पुरमध्यसंस्थम्' (महानारा. १०. ७) इति दहरपुण्डरीकेऽपि विपाप्मत्वोक्तिदर्शनात् । 'विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः' (छा. ८. १. ५) इत्यचेतने भूताकाशे जराद्यप्रसक्तेरुपपद्यते ।

एतेषामप्रसक्तप्रतिषेधरूपत्वं ब्रह्मान्वयपक्षेऽपि वक्तव्यमेव; 'अपहतपाप्मा' इत्यस्य तस्मिन्पक्षे सर्वपाप्मोदितत्वपरतया पापराहित्योक्त्यैव पापमूलजराद्यभावस्याप्यर्थतस्सिद्धत्वात् , अत्रैव प्रकरणे 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते' (छा. ८. ४. १) इति पाप्मशब्दस्य जरादिसाधारणतया विवृतत्वेन 'अपहतपाप्मा' इत्यनेन जराद्यभावस्य शब्दतोऽपि सिद्धत्वाच्च । 'सत्यकामस्सत्यसङ्कल्पः' इति च सति ब्रह्मणि कामनासङ्कल्पराहित्येन घटते; तयोर्निषेधरूपगुणप्रायपाठेन निषेधरूपत्वस्योचितत्वात् । अहरहर्गतिश्रवणमपि तस्मिन्हार्दे भूताकाशे संगच्छते; सुषुप्तौ जीवानां हृदयपुण्डरीकावकाशप्रवेशसत्त्वात् । ब्रह्मलोकशब्दोऽपि ब्रह्मोपलब्धिस्थाने तस्मिन्नुपपद्यते; लोक्यतेऽस्मिन्निति व्युत्पत्त्या लोकशब्दस्योपलब्धिस्थानपरत्वात् । विधारकत्वं तु स्वरूपेण भूताकाशस्याक्षरब्राह्मणोदितं विशिष्य च हृदयावच्छिन्नरूपेणात्रैव 'उभे अस्मिन्द्यावापृथिवी' इत्यादिना प्रतिपादितं तस्मिन्नुपपद्यत इति स्पष्टमेव । देहस्य ब्रह्मपुरत्वेन उपक्रमस्तु देहान्तर्वर्तिहार्दभूताकाशोपास्तिविधित्सायामपि जाह्नवीतीरसूक्तिकोक्तिन्यायेन तस्यैव स्तुत्यर्थतयोपपद्यते । 'तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. ८. ४ ३) इत्यादिवाक्यशेषोक्तं महाफलमपि वचनबलात् भूताकाशोपासनस्य

युज्यते। पूर्वाधिकरणे प्रतीकोपासनस्य वचनबलेन सर्वपापविनिर्धूननपूर्वकब्रह्मलोकप्राप्तिद्वारकपरममुक्तिफलकत्वस्योक्तत्वात्। तस्मात् भूताकाश एव दहर इति।

एवं प्राप्ते **राद्धान्तमाह**—'दहर उत्तरेभ्यः'—दहराकाशः परमात्मा उत्तरेभ्यस्तदीयश्रुतिलिङ्गेभ्यः। न च तेषां दहराकाशानन्वयः शङ्कनीयः; पूर्वसन्दर्भस्वारस्यानुरोधेनापततस्तदन्वयस्यापरिहार्यत्वात्। तथाहि—उपासकभोगस्थानभोगोपकरणभोग्यजातरूपद्यावापृथिव्यादिसर्वसमाधानोक्त्यनन्तरं प्राक् ब्रह्मपुरशब्देनोक्ते देह एव तस्य सर्वस्य समाधानमुक्तमापाद्य देहे जीर्णे, नष्टे वा, जीर्णे कुसूलादौ भारधारणाक्षमे तदन्तर्निहितं व्रीह्यादिकमिव, नष्टे घटे तदन्तर्निहितं दध्यादिकमिव च तत्किमपि नावतिष्ठेतेत्यन्तेवासिभिराक्षिप्तम्। तत्र दहराकाशे वर्णितं सर्वसमाधानं देह एव वर्णितमिति आपादनस्य द्वेधाऽभिप्रायः सम्भाव्यते—यथा घटाद्यन्तराकाशे निहितस्य दध्यादेर्वस्तुतो घटादिरेव धारकः, आकाशः परमवकाशात्मनोपकरोति, एवमिहापि दहराकाशस्य स्वतः सर्वधारकत्वेऽपि तस्य देहजराप्रध्वंसानुपदभाविजराप्रध्वंसत्वाद्यावद्देहस्य भारधारणानुकूलं बलं तावत्पर्यन्तमेव दहराकाशस्य तद्धारकत्वमिति फलतो देह एव तस्य सर्वस्य धारकः पर्यवस्यति इति वा; यथा राजानुसार्यैश्वर्यदारिद्र्येण राजभृत्येन पोष्यमाणस्य तद्भृत्यवर्गस्य फलतो राजैव पोषकः पर्यवस्यति तद्वदिति वा। तत्र द्वितीयाभिप्रायावलम्बनाक्षेपसमाधानार्थं 'नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते' (छा. ८. १. ५) इत्युक्तम्। यद्यपि देहान्तर्गत आकाशो देहस्य जरादौ सति जरादिना न स्पृश्यत इति स्पष्टमेव, न हि कुसुलाद्यन्तर्गत आकाशोऽपि तज्जरादौ सति जरादिना स्पृश्यते, तथाऽपि प्रथमाभिप्रायमूलत्वमेवाक्षेपस्य युक्तमिति परिशेषयित्वा तत्समाधानं वक्तुं मन्दशिष्यानुग्रहाय स्पष्टमप्युक्तम्। प्रथमाभिप्रायावलंबनाक्षेपसमाधानार्थं 'एतत्सत्यं ब्रह्मपुरमस्मिन्कामास्समाहिताः' (छा. ८. १. ५) इत्युक्तम्। तत्र 'अस्मिन्कामास्समाहिताः' इत्यनेन येषां कामानां सङ्कल्पजपितृमातृभ्रातृसखिस्त्र्यन्नपानगन्धमाल्यगीतवादित्रादिरूपाणां देहे समाधानमुक्तमापाद्याक्षिप्तं ते तत्र न समाहिताः, किन्त्वस्मिन्दहराकाशे, अतः स एव तेषां धारको, न देह इत्याक्षेपमूलोन्मूलनं कृतम्। तत्र कामग्रहणमाक्षेपे देहसमाहितत्वेनापाद्यानूदितानां सर्वेषामुपलक्षणम्।

ननु घटाकाशो दध्यादेरिव दहराकाशो द्यावापृथिव्यादेर्न धारक इत्याशंक्योक्तं 'एतत्सत्यं ब्रह्मपुरम्' इति। न हि घटाकाश इव दहराकाशोऽयं भूताकाशः, किन्तु ब्रह्म। तत्तु पुरमिव उपासका-

पेक्षितविविधभोगोपकरणचेतनाचेतनात्मकभोग्यजातपूर्णं तद्धारकमेव यतः तत् सत्यं सकलप्रपञ्चनियामकमिति तस्यार्थः । सत्यपदं हि नित्यानित्यात्मकचेतनाचेतनसकलप्रपञ्चनियन्तृत्वपरं ब्रह्मनामेत्यत्रैव प्रकरणे वर्णितं 'तस्य हवा एतस्य ब्रह्मणो नाम सत्यमिति, तानि ह वा एतानि त्रीण्यक्षराणि स ति यमिति । तद्यत्स त्तदमृतम्, अथ यत्ति तन्मर्त्यम्, अथ यद्यं तेनोभे यच्छति' (छा. ८. ३. ४५) इति । नियन्तृत्वञ्च धारकत्वव्याप्तं 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ. ४. ४. २२) इत्यादिश्रुतेः । एवंकृता क्षेपसमाधानसिध्यानुगुण्येन समाधानवाक्यगतयोरेतदितिपदयोर्दहराकाशपरत्वं वक्तव्यमिति तयोर्द्यावापृथिव्यादिपरत्ववर्णनमसमञ्जसमेव । न हि तदानीं कृतस्याक्षेपस्य समाधानं लभ्यते; माभूद्देहजरादिना द्यावापृथिव्यादेस्तदाश्रितस्य जरादि, तथाऽपि यथा कुसूलादेर्जरादौ सति तदनुविधायिजरादिरहितमपि व्रीह्यादि तत्र नावतिष्ठते, एवमिदमपि नावतिष्ठेतेत्याक्षेपस्य तादवस्थ्यात् । तदनन्तरं द्यावापृथिव्याद्यवच्छिन्नस्य, तत्प्रतीकस्य वा ब्रह्मण उपास्यत्वप्रतिपादनेन वा तस्मिन्ब्रह्मणि वक्ष्यमाणा अपहतपाप्मत्वादिगुणाः सन्तीति प्रतिपादनेन वा तत्समाधानालाभाच्च । न चैतत्पदयोर्द्यावापृथिव्यादिपरत्वेऽपि यथाऽऽक्षेपः समाधातुं शक्य स्तथा कश्चित्तत्प्रकारो वर्ण्यतामिति वाच्यम् । दहराकाशाश्रितत्वेनोक्तस्य द्यावापृथिव्यादेर्देहाश्रितत्वमुक्तमित्यापाद्यानुवादे किञ्चिदभिप्रायवतो द्यावापृथिव्यादेर्जराद्यस्पर्शोक्त्या तदवच्छिन्नतत्प्रतीकोपास्यब्रह्मप्रतिपादनेन समाधातुं शक्यस्य कस्यचिदाक्षेपप्रकारस्यैवं समञ्जसस्यानुपलम्भात् । तस्माद्यथा 'विष्णुरुपांशु यष्टव्यः' इत्यादिषु विध्यंगीकारे तव्यप्रत्ययस्वारस्ये सत्यपि तेषु विधानेनोपक्रान्तजामितादोषनिर्हरणालाभात्तल्लाभाय वर्तमानापदेशयुक्तेऽप्यन्तरावाक्य एव विधिरङ्गीक्रियते, एवमिहाप्येतत्पदयोर्द्यावापृथिव्यादिपरत्वाङ्गीकारे विभक्त्यैकरूप्यस्वारस्यलाभे सत्यपि तत्परत्वे कृताक्षेपसमाधानालाभात् तल्लाभाय दहराकाशपरत्वमेवाङ्गीकर्तव्यम् ।

किञ्च 'अस्मिन्कामाः समाहिताः' इत्यत्र कामशब्देन सङ्कल्पजाः पित्रादय एव वक्तव्याः; तेषामाक्षेपवाक्ये कामशब्देनाभिहितत्वात्, अग्रेऽपि 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छा. ८. २. १) इत्यादिना सङ्कल्पजान् पित्रादीनभिधाय तेषामेव 'त इमे सत्याः कामाः' इति कामशब्देनाभिधास्यमानत्वाच्च, न त्वपहतपाप्मत्वादिगुणाः; प्राक् पश्चाद्वा तेषां कामशब्देनाभिधानाभावात्, 'एष आत्माऽपहतपाप्मा' इत्यादिवाक्ये आत्मविशेषणत्वेनोक्तिं विना तेषां क्वचिदपि प्राधान्येनो-

क्त्यभावाच्च। पित्रादयश्च प्राक् 'यच्चास्येहास्ति' इति वाक्ये दहराकाशाश्रितत्वेनोक्ताः। अत एव समनन्तर-प्रवृत्ताक्षेपवाक्ये 'सर्वे च कामाः' इति तेषां समाधानमुक्तमित्यनुवादः। तथा च तत्समाधानाधारत्वप्रत्य-भिज्ञया 'अस्मिन् कामास्समाहिताः' इत्यत्रत्यस्यापि 'अस्मिन्' इति पदस्य दहराकाशपरत्वे सन्दंशन्यायेन मध्यगतयोरेतत्पदयोरपि तत्परत्वमपरिहार्यम्।

न च नपुंसकलिङ्गविरोधः; 'व्यत्ययो बहुलम्' (पा. सू. ३. १. ८५) इति लिङ्गव्यत्ययो-पपत्तेः। त्वयाऽपि द्यावापृथिव्यादिषु नपुंसकमेकवचनञ्च 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' (पा. सू. १. २. ६९) इति विधिद्वयमपेक्ष्य समर्थनीयम्। तदपेक्षयैकविध्यपेक्षणमेव लघु। किञ्च नपुंसकनिर्वाहार्थं तावदपि नापेक्षणीयम्, नपुंसकलिङ्गं स्त्रीलिङ्गपुल्लिङ्गानुगतं सामान्यम्, न तु विशेषान्तर-मिति शाब्दिकैरङ्गीकृतत्वेन लिङ्गान्तरनिर्दिष्टे नपुंसकलिंगानुपपत्तिशङ्काऽनवकाशात्, 'मुखनासिकावचनोऽनुनासिकः' (पा. सू. १. १. ८) 'द्विगुरेकवचनम्' (पा. सू. २. ४. १) इत्यादौ स्त्रीलिङ्गपुल्लिङ्गविशेषण-योर्नपुंसकलिङ्गदर्शनाच्च। अपिच 'सुपां सुलुक्' (पा. सू. ७. १. ३९) इत्यादिसूत्रेण विभक्तेर्लुकि पुल्लिङ्गेऽप्येतदित्येव रूपं भवति। तस्माद्द्वितीयाक्षेपसमाधाने श्रुत्यैव दहराकाशस्य ब्रह्मरूपतया विवृतत्वात् तावतापि दहराकाशः परमात्मेति सिध्यति। तदनन्तरस्य 'एष आत्मा' इत्यादिसन्दर्भस्यान्यपरत्वशङ्कानव-काशात्तद्गतश्रुतिलिङ्गैरपि प्रागुदाहृतैस्तथा सिध्यतीत्यनवद्यम्।

स्यादेतत्—'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यादित्यमंडलादिवदुपास्या-धारत्वेनोपन्यस्ते दहराकाशे वाक्यशेषगतानामुपास्यगुणानामन्वयो न युक्त इति चेत्; किं कुर्मः? 'उभे अस्मिन्' इत्यारभ्य 'एष आत्मा' इत्यन्तेषु वाक्येषु श्रुतानामिदमेतच्छब्दानां दहराकाशपरत्वात् तेषां तदनन्वयः परिहर्तुं न शक्यत इत्युक्तम्। ननु 'यावान्वा' इत्यादिवाक्यं यावानयं बाह्याकाशोऽस्ति, तावान् सर्वोऽप्यन्तर्हृदय आकाशे दहराकाशे वर्तत इत्येवमर्थतया पृष्टदहराकाशान्तर्वर्त्युपास्यविशेषनिर्धारणपरमस्तु। तत्र द्वितीयाकाशशब्दस्य सप्तम्यन्तत्वाश्रयणेन पृष्टाकांक्षितार्थनिर्धारणार्थत्वे सम्भवति तस्य प्रथमान्तत्वाश्रयणेन तदनाकांक्षितार्थपरत्वकल्पनानौचित्यात्। तथा च तस्यैव दहराकाशान्तरुपास्यतया विहितस्य व्यापकाका-शस्याग्रेतनैरिदमेतच्छब्दैः परामर्शः सम्भवतीति चेत्; मैवम्; आकाशस्य दहरपुण्डरीके तदवच्छिन्नतया सूक्ष्मत्वेनावस्थितस्य स्वोपरिव्यापकत्वेनाप्यवस्थानायोगात्, 'तावनेषोऽन्तर्हृदय आकाशः' इत्यस्य द्वितीया-

काशशब्दविशेषणतया तदनुरोधेन तस्यापि प्रथमान्तत्वनिश्चयाच्च। न ह्येष इतिशब्दः प्रथमा(न्ता) काशशब्दस्य विशेषणम्; तत्रायमिति विशेषणस्य सत्त्वेन तत्पौनरुक्त्यापत्तेः।

एतेन—यत् केचन दहराकाशो भूताकाशः तदन्तर्वर्त्युपास्यं ब्रह्मेति मन्यमानाः 'यावान्वा' इत्यादिसन्दर्भं योजयन्ति—तदपि निरस्तम्। ते खल्वेवमाहुः—शरीरपुण्डरीकयोर्ब्रह्म प्रति पुरत्ववेश्मत्वोक्त्यैव शरीरान्तर्वर्तिनि पुण्डरीके ब्रह्मोपासना विधित्सितेत्यवगमात् 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्येतावतैव हृत्पुण्डरीकस्थदहराकाशगतं ब्रह्मोपास्यमिति निर्धारितम्। अतः 'किं तदत्र विद्यते' इति प्रश्नः किंप्रकारं ब्रह्म तत्र वर्तत इति प्रकारमात्रविषयः। तत्प्रकारनिरूपणं 'यावान्वा' इत्यादि। यावानयमाकाशस्तावान् सर्वोऽप्यन्वेष्टव्यस्य ब्रह्मणोऽन्तर्हृदये वर्तते द्यावापृथिव्यादिकञ्चास्मिन् समाहितमित्याकाशादिसर्वाश्रयत्वमन्वेष्टव्यस्य ब्रह्मणः प्रकार इति तेनोक्तं भवति। यदि त्वन्यपुरवेश्मनोरन्यावस्थानसम्भवात् ब्रह्मपुरत्वाद्युपक्रममात्रेण ब्रह्मोपासनाविधित्सा नावगम्यते, तदा 'किन्तदत्र विद्यते' इति दहराकाशान्तर्वर्त्युपास्यस्वरूपप्रश्नः। तस्योत्तरं 'अन्तर्हृदय आकाशः' इति; अन्तर्हृदयशब्दोक्ते दहराकाशे आकाशो ब्रह्म वर्तत इति तस्यार्थः। 'तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयम्' इत्यत्रैव प्रकरणे हृद्यननिमित्तकत्वेन निरुक्तस्य हृदयशब्दस्य हृदयवर्तिनि दहराकाशे वृत्त्युपपत्तेः, आकाशशब्दस्य 'तल्लिङ्गात्' इति न्यायेन ब्रह्मणि वृत्त्युपपत्तेश्च। 'यावान्वा अयमाकाशस्तावानेषु' इति तु वाक्यान्तरम्। तेन ब्रह्मणो भूताकाशवद्व्यापकत्वमुच्यते, अग्रेतनवाक्यैर्ब्रह्मणि द्यावापृथिव्यादीनां समाधानमुच्यत इति।

अत्राद्यपक्षे 'एष' इति 'आकाश' इति च पुनरुक्तमिति स्पष्टमेव। 'किन्तदत्र वर्तते' इति आश्रयाश्रयिणोः वैयधिकरण्येन निर्देशवतः प्रश्नस्य 'उभे अस्मिन्' इत्यादि तादृशमेवोत्तरमिति वक्तुं शक्ये तत्र वर्तमानं ब्रह्म किम्प्रकारमिति प्रश्नस्यार्थः ब्रह्मणोऽन्तर्हृदये आकाशो वर्तत इत्यादि तदुत्तरमिति क्लिष्टकल्पनमपि न युक्तम्। द्वितीयपक्षे दहराकाशे किं वर्तत इति प्रश्नस्याकाशो वर्तत इत्येतावत्युत्तरे वक्तव्ये 'अन्तर्हृदये' इति शब्दान्तरेण दहराकाशस्य तत्र प्रतिनिर्देश इति कल्पनं क्लिष्टम्। न च हृदयशब्दो हृदि वर्तमाने सर्वत्र निरुक्तः, किन्त्वात्मन्येव। 'स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयम्' इति श्रवणात्। वाक्यभेददोषश्चात्र स्पष्टः। तस्मात् 'यावान्वा' इत्यादि दहराकाशस्य भूताकाशवद्व्यापकत्वप्रतिपादनपरमित्येव युक्तम्। न च तदनाकाङ्क्षितार्थप्रतिपादनम्; तस्यैवाकाङ्क्षितत्वात्।

तथाहि 'तञ्चेत् ब्रूयुः' इत्याक्षेपावतारो, न तु प्रश्नावतारः। प्रश्ने 'किन्तदत्र वर्तते' इत्येतावत एव वक्तव्यत्वेन 'यदिदमस्मिन् ब्रह्मपुरे' इत्याद्यनुवादवैयर्थ्यात्, आक्षेप एव देहान्तर्गतं पुण्डरीकमेव तावदत्यल्पं, ततोऽत्यन्तमल्पीयान् तदन्तर्गताकाशः पुण्डरीकस्य दहरत्वोक्त्यैव तदन्तर्गताकाशस्य दहरत्वे सिद्धे सूचीरन्ध्रवदतिसूक्ष्मसुषिररूपत्वद्योतनाय हि पुनस्तस्य दहरत्वोक्तिः। तत्र किं सम्भाव्यते यदन्वेष्टव्यमुपदिश्यत इति तदन्तर्वर्त्यसम्भवस्फोरणार्थतया सार्थकत्वात्।

एवमाक्षेपे तदन्तर्वर्तिसम्भावनाय प्रथमं तदुपयोगिवैपुल्यप्रतिपादनमेवाकाङ्क्षितम्। न च तथापि ब्रह्मणि गौणेनाकाशशब्देनैव तस्य भूताकाशवद्व्यापकत्वमवगतमिति तत्प्रतिपादनं नाकाङ्क्षितमिति वाच्यम्। न हि 'दहरोऽस्मिन्नन्तराकाशः' इत्युक्तिमात्रेणाकाशशब्दोदितं भूताकाशवद्व्यापकं ब्रह्मेति श्रोतृभिरवगतम्; आकाशशब्दरूढ्या झटिति भूताकाशस्यैव प्रतीतेः। किन्तु यथा उपकोसलविद्यायां 'कं ब्रह्म खं ब्रह्म' (छा. ४. १०. ५) इत्युपदिष्टे वैषयिकसुखं पञ्चमभूतञ्च ब्रह्मेत्येतन्न विजानामीत्युपकोसलस्य प्रश्नानन्तरं 'यद्वाव कम्' (छा. ४. १०. ५) इत्याचार्यवाक्येन क ख शब्दोदितमपरिच्छिन्नसुखात्मकं ब्रह्मेति तेनावगतमेवमिहापि द्वितीयाक्षेपस्याप्यनन्तरं 'एतत् सत्यं ब्रह्मपुरम्' इत्याचार्योक्त्या दहराकाशो ब्रह्मेति तैरवगंस्यते। 'यावान्वा' इत्यादेः प्रथमाक्षेपसमाधानरूपायाः आचार्योक्तेरान्तरस्यापि भूताकाशस्य वक्ष्यमाणमानसपदार्थसमाधानानुकूलं मानसं बाह्यभूताकाशवद्व्यापकत्वमस्तीत्येतत्परत्वेनाप्युपपन्नतया ततोपि तथावगत्यसम्भवात्। दहराकाशे समाधानान्यथानुपपत्त्या वक्ष्यमाणपदार्थानां मानसत्वस्य च्छान्दोग्यभाष्ये समर्थितत्वात्।

अथवा श्रीमद्भाष्यरीत्या ततोपि दहराकाशो ब्रह्मेत्यवगतिरस्तु। तस्यैवमभिप्रायः—वक्ष्यमाणा द्यावापृथिव्यादयः पदार्था न केवलं मानसाः, किन्तु बाह्या अपि सन्ति। उपासकस्य ब्रह्मलोकं प्राप्तस्याशरीरत्वावस्थायां ये सङ्कल्पजास्त एव स्वाप्नवन्मानसाः। सशरीरत्वावस्थायां सङ्कल्पजास्तु जाग्रद्भोगप्रदपदार्थवत् बाह्या इत्यस्यार्थस्य 'अभावं बादरिः' (ब्र. सू. ४. ४. १०) इत्यधिकरणे 'तन्वभावे सन्ध्यवदुपपत्तेः' (ब्र. सू. ४. ४. १३) 'भावे जाग्रद्वत्' (ब्र. सू. ४. ४. १४) इति सूत्राभ्यां व्यवस्थापयिष्यमाणत्वात्। न च द्यावापृथिव्यादिपदानामसङ्कोचेनोपासकप्रेप्सितसर्वविधस्वार्थपरत्वे सम्भवति मानसमात्रपरत्वेन सङ्कोचकल्पनं युक्तम्। एवञ्च बाह्यपदार्थानां मानसवैपुल्यवत्यपि हृदयाकाशे समाधानासम्भवात् 'यावान्वा'

इत्यादिहृदयावच्छिन्नस्यैव भूताकाशस्य बाह्यभूताकाशवद्व्यापकत्वं व्यावहारिकसूक्ष्मत्वाविरोधि स्वाप्नवन्मानसं प्रदर्शयितुं प्रवृत्तं न भवति, किन्तु तस्य हृदयावच्छिन्नरूपेण सूक्ष्मत्वेपि स्वरूपेण व्यापकत्वमस्ति, तथाच हृदयावच्छेदेन तदन्तर्वर्त्यसम्भवेपि स्वरूपेण तदन्तर्वर्तिसम्भवेन तदभिप्रायेणैव तस्मिन्यदन्तरित्युक्तमिति प्रदर्शयितुम् । स्वरूपेण व्यापकत्वप्रतिपादनञ्च 'यावान्वा अयमाकाशः' इत्युपमाननिर्देशपूर्वकमेतदनन्वय-विधयोपमाविधया वा भूताकाशे न सङ्गच्छते । सङ्गच्छते तु ब्रह्मण्युपमाविधया; यथाऽयं भूताकाशो व्याप-कस्तथा यस्यान्तर्वर्त्यन्वेष्टव्यमुक्तं, एष हृदयाकाशो व्यापक एव, सौक्ष्म्यं तु हृदयावच्छेदकृतमुक्तम्, न स्वाभाविकमिति । न च – ब्रह्मण्यपि न सङ्गच्छते, उद्देश्यतावच्छेदकविधेययोरैक्यापत्तेरिति वाच्यम् । एतद्वा-क्यार्थबोधदशायामाकाशशब्दो ब्रह्मणि गौण इत्यनवगतत्वात्तदनन्तरमेतद्वाक्यप्रतिपादितभूताकाशसादृश्यलिङ्गेन भूताकाशे अनुपपन्नेन दहराकाशो ब्रह्मेति निश्चये सति तत्र तस्य गौणताया अवगन्तव्यत्वात् ।

एवञ्च यथा 'दहेदयं ग्राममशेषमेव क्षणात् प्रभूतोग्निरिवाणुरग्निः' इत्युक्तौ परस्परव्यावर्तक-विशेषणोपादानेनानन्वयस्य सूक्ष्मावस्थास्याग्नेरशेषग्रामदग्धृत्वायोगेनाभिन्नोपमायाश्चासम्भवादेतद्वाक्यप्रतिपादिता-ग्निसादृश्यलिङ्गेन तद्व्यतिरिक्तः क्षुद्रपुरुषः कश्चिदिहाणुरग्निरिति निश्चये सति तत्राग्निशब्दस्य गौणवृत्तौ वस्तुतः क्षुद्रपुरुषगतग्रामानिष्टकारित्वाभेदेनाध्यवसितस्य दग्धृत्वस्य निमित्तत्वेऽपि नोद्देश्यतावच्छेदकविधेयैक्येनासा-मञ्जस्यम्, एवमिहापि नासामञ्जस्यं किञ्चिदिति । एवञ्चास्मिन् पक्षे भूताकाशोपमेयत्वलिङ्गेन दहराकाशो ब्रह्मेति श्रोतृणामवगतिसत्वेपि तस्य गौणाकाशपदाविषयत्वालिङ्गेन भूताकाशतुल्यत्वावगमात्तद्वदेव सोऽपि केवल-मवकाशात्मनाऽवतिष्ठेत न स्वयं धारकः स्यादिति द्वितीयाक्षेपस्य प्रथमाभिप्रायो वर्णनीयः । नन्वेवं दहरा-काशो ब्रह्मेति निर्धारणे 'दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इति कथमुपपद्यते ? काऽत्रानु-पपत्तिः ? उपपद्यत एव हि दहराकाशरूपे ब्रह्मणि समाहितत्वेन वक्ष्यमाणद्यावापृथिव्यादिसङ्कल्पजपित्रा-द्यन्तमुपासकप्रेप्सितभोगस्थानभोगोपकरणभोग्यजातरूपं तत्क्रतुन्यायेनोपासनीयमिति ।

अथ किं तदाश्रयस्य ब्रह्मणो नास्त्युपासनाविधिः ? अस्त्येवाक्षिप्तः पृष्ठगतसर्वताविध्याक्षिप्त इव पृष्ठविधिः । न हि ब्रह्मानुपासीनस्तदाश्रितत्वेनान्यदुपासितुं शक्नोति । तर्हि प्राधान्येन ब्रह्मणि समाहितमेवोपास्यं स्यान्न ब्रह्मेति चेत् ब्रह्मापि प्राधान्येनोपास्यमेव; 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' इत्युपसंहारगतफलवाक्ये प्राधान्येन ब्रह्मोपासनाया अप्यनुवादर्शनेनोपक्रमगत-

स्योपासनाविधेस्तत्रापि तात्पर्यवर्णनौचित्यात्। उक्तञ्च भाष्ये '''अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' (छा. ८. १. ६) इति समुच्चयार्थेन चशब्देन आत्मानञ्च कामाधारमाश्रितांश्च कामान्विज्ञेयान् वाक्यशेषो दर्शयति। तस्माद्वाक्योपक्रमेऽपि दहर एवाकाशो हृदयपुण्डरीकाधिष्ठानस्सहान्तस्समाहितैः पृथिव्यादिभिस्सत्यैश्च कामैर्विज्ञेय इति गम्यते'' इति।

तस्यायमाशयः—'तस्मिन्यदन्तः' इत्यादेर्दहराकाशरूपब्रह्मान्तस्समाहितद्यावापृथिव्यादिमात्रोपासनाविधायकत्वे उदाहृतवाक्यशेषः कथमुपपादनीयः? न ह्यप्राप्तं गुण्युपासनं फलसम्बन्धविधानायानुवदितुं शक्यम्। नापि प्राप्तं गुणोपासनं विधातुं शक्यम्। गुण्यंशे फलसम्बन्धविशिष्टोपासनाविधिः गुणांशे फलसम्बन्धमात्रविधिरिति कल्पने वैरूप्यम्। तस्मादन्यत्रोपसंहारस्योपक्रमाद्दुर्बलत्वेप्यत्रानन्यथासिद्धः उपसंहारस्ततः प्रबलः; दहराकाशान्वय्यपहतपाप्मत्वाद्यनेकोपास्यगुणभरितत्वाच्च। अतस्तदनुसारेण 'तदन्वेष्टव्यम्' इति उपासनाविधिवाक्ये स इत्यध्याहरणीयम्। तथाच तत् दहराकाशान्तर्वर्ति स च दहराकाशश्चान्वेष्टव्यमित्युक्तं भवति। अन्वेष्टव्यमिति च नपुंसकशेषैकवद्भावाभ्यामुपासनाविधायकं कार्यम्। केचित्—तस्मिन्यदन्तरित्यत्र य इत्यध्याहृत्य यो दहराकाशो यच्च तदन्तर्वर्त्ति तदन्वेष्टव्यमिति तत्पदं नपुंसकशेषैकवद्भावाभ्यामुभयपरं वर्णयन्ति। आचार्यवाचस्पतिमिश्रास्तु उदाहृतभाष्यभाववर्णनसमये प्रकारान्तरं प्रत्यपादयन्—'तदनेन क्रमेण तस्मिन्यदन्तरित्यत्र तच्छब्दोऽनन्तरमप्याकाशमतिलंघ्य हृत्पुण्डरीकं परामृशतीत्युक्तं भवति; तस्मिन् हृत्पुण्डरीके यदन्तराकाशं तदन्वेष्टव्यमित्यर्थः' इति।

नन्विदमनुपपन्नं तस्मिन्नित्यस्याव्यवहिते दहराकाशे स्थिते व्यवहितपुण्डरीकपरामर्शित्वकल्पनायोगात्। दहराकाशस्य हृत्पुण्डरीकस्थतायाः दहरोस्मिन्नन्तराकाश इत्युक्ततया पुनस्तत्कीर्तनवैयर्थ्याच्च। तञ्चेत् ब्रूयुरित्यादिवाक्ये दहरोस्मिन्नन्तराकाश इति स्वयमप्यनूद्य पुनः किन्तदत्र वर्तत इत्याक्षेपस्यानवकाशाच्च। यत्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यं किन्तदत्रेति नपुंसकलिङ्गानां प्राक् पुल्लिङ्गनिर्दिष्टे दहराकाशे अनन्वयाच्च इति चेत्—

उच्यते—सर्वनाम्नामव्यवहितपरत्वसम्भवे व्यवहितपरत्वं न कल्पनीयम्। तदसम्भवे तु कल्पनीयमेव। अत एव साकमेधीये 'एतद्ब्राह्मण एककपालो यद्ब्राह्मण इतरः' इति वाक्ये श्रुतमेतत्पदं सन्निहितस्य वारुणप्रघासिकैककपालब्राह्मणस्य परामर्शसम्भवात् तस्यैव परामर्शकम्, न तु व्यवहितस्य वैश्वदेविकैककपाल-

ब्राह्मणस्येति सप्तमे वर्णितम् । 'तस्य द्वादशतं दक्षिणा' इत्यत्र तस्येति पदमव्यवहितेषु माषेषु वृत्त्यसम्भवाद्व्य-वहितगोद्रव्ये वर्तत इत्यङ्गीकृतं दशमे । तस्मिन्यदन्तरित्यत्र यत्पदं वक्ष्यमाणद्यावापृथिव्यादिसकलविशेषण-विशिष्टदहराकाशपरम्, अन्यथा दहराकाशविशेषणानां मध्ये क्वचित् 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान्' इति फलवाक्ये सत्यकामशब्दोदितानां सङ्कल्पजपित्रादीनां विशिष्य ग्रहणादन्यत्र 'तद्य एवैता-वरश्च ण्यश्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. ८. ५. ४) इति फलवाक्ये ब्राह्मलौकिकयोररण्यशब्दवाच्ययोरर्णवयोर्विशिष्यग्रहणात्तेषां विशिष्य ग्रहणस्येतरपरिसंख्यार्थत्वादितराणि द्यावापृथिव्यादीन्यपहतपाप्मत्वादीनि च केवलं स्तुत्यर्थं वर्णितानि, न तूपास्यकोटिप्रविष्टानीति शङ्कया तेषामुपासना न सिध्येत् । अतस्तावद्विशेषणविशिष्टस्य दहराकाशस्योपासना-नुप्रवेशसिद्धये 'तस्मिन्यदन्तः' इति पुनः कीर्तनमिति न तद्वैयर्थ्यम् । अत एव 'किन्तदत्र विद्यते' इत्यप्यु-पपद्यते । तस्य दहराकाशे किं विशेष (ण) जातं वर्तत इत्येतत्परत्वात् । नपुंसकानुपपत्तिशङ्का तु प्रागेव दत्तोत्तरा । तस्मादयमपि प्रकारो युक्त एव । एवञ्च यद्यपि दहराकाश उपास्यं ब्रह्मेत्यङ्गीकृत्य वर्णितेऽस्मिन् प्रकारत्रयेऽपि 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यत्र अध्याहारादिरूपः कियान् क्लेशोऽस्ति, तथापि तदन्तर्वर्त्यु-पास्यं ब्रह्मेत्यङ्गीकृत्य कैश्चित्प्रदर्शिते प्रकारद्वये शिष्यवचने प्रश्नत्वाङ्गीकारादनुवादवैयर्थ्यमित्यादयो दोषाः, आचार्यवचने 'एष आकाशः' इति पदवैयर्थ्यमित्यादयो दोषाः । एवं वाक्यद्वयेप्यचिकित्स्या बहवो दोषाः प्रादुष्ष्युरिति विशेषो विद्वद्भिरनुसन्धेयः ।

वस्तुतस्तु--दहराकाशः उपास्यं ब्रह्मेत्यस्मिन् पक्षे 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यत्र नाध्या-हारव्यवहितयोजनादिक्लेशोऽपेक्षणीयः । न हीदमुपासनाविधिवाक्यम्, किन्तूपास्ये ब्रह्मणि यत् गुणजात-मुपासनीयमस्ति तद्विचाररूपे तदन्वेषणे उपासनाविध्यर्थाक्षिप्ते विधिसरूपं वाक्यम् । 'तद्वाव विजिज्ञासितव्यम्' इत्यप्युपासनाफलरूपे तत्साक्षात्कारे विधिसरूपं वाक्यम् । अत एव छान्दोग्यभाष्यम्—'तस्मिन्नाकाशाख्ये ब्रह्मणि यदन्तर्मध्ये तद्वाव तदेव विशेषेण जिज्ञासितव्यं ज्ञातुमेष्टव्यं गुर्वाश्रयणाद्युपायैरन्विष्य साक्षात्करणीय-मित्यर्थः' इति । 'अथ य इहात्मानम्' इत्यादि फलवाक्यमेव गुणगुणिविशेषयोरुपासनास्वरूपस्यापि विधायकम् । इदन्तु विधिसरूपं वाक्यद्वयं ब्रह्मान्तर्गतगुणोपासनाविधित्सावगमकं तदर्थवादरूपम् । न च विधिना यावदन्वितं तत्सर्वमर्थवादेपि योजनीयमिति नियमः । द्रव्यदेवताविशिष्टयागविध्यर्थवादानां केवल-

द्रव्यविषयाणां 'स आत्मनो वपामुदक्खिदत्तामग्नौ प्रागृह्णात्ततोऽजस्तूपरस्समभवत्' इत्यादीनां, केवलदेवताविषयाणां 'अग्निं वा एतस्य शरीरं गच्छति सोमं रसः' इत्यादीनाञ्च तत्तद्द्रव्यदेवतासम्बन्धिकर्मविधित्सावगमकानां बहुलमुपलम्भात्। न च गुणप्रधानतया विध्यन्वितयोः प्रधानविषय एवार्थवाद इति नियमः। द्रव्यप्राधान्यवादिनां कर्ममीमांसकानां देवताविषयार्थवादे, देवताप्राधान्यवादिनां ब्रह्ममीमांसकानां द्रव्यविषयार्थवादे च व्यभिचारात्, इह गुणिनो गुणानाञ्च समप्राधान्येनोपास्यत्वाच्च। तस्माद्वाक्यशेषानुसारेणोपक्रमेऽपि दहराकाशस्योपासनाऽवगम्यत इति।

यदुक्तं श्रीमद्भाष्ये, तत् 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' इत्यत्र उपासनाविधिं तस्य विधिसरूपार्थवादत्वेऽपि दहराकाशोपासनाविध्यर्थवादस्य दहराकाशविषयत्वनियमं वाङ्गीकृत्य तद्वाक्यं दहराकाशस्याप्युपासनाविधायकतया, तत्साधारणविचारविधिसरूपार्थवादतया वा योजयितुं शक्यमिति प्रौढिमवलम्ब्योक्तम्। भाष्याभिप्रेततद्योजनाप्रकार एवाध्याहारव्यवहितयोजनादिरूपः प्रदर्शितो व्याख्यातृभिरिति सर्वमनवद्यम्। तस्माद्वाक्यशेषगतश्रुतिलिङ्गानां दहराकाशेऽन्वयो न तदन्तर्वर्तिनीति दहराकाश एवोपास्यं ब्रह्म।

यत्तु—तस्य भूताकाशत्वेऽपि ब्रह्मात्मश्रुतिस्तत्र यौगिकतया स्तावकतया वोपपद्यते। आकाशसादृश्यापहतपाप्मत्वादयश्च तेन तेन प्रकारेणोपपद्यन्ते—इति अत्र ब्रूमः—आकाशसादृश्यप्रतिपादनं तावद्वैपुल्यपर्यवसाय्येव प्रथमाक्षेपस्योत्तरं भवेत्। तत्पर्यवसानं तु भूताकाशविषयतायां नोपपद्यत इति श्रीमद्भाष्योक्तरीत्या समर्थितम् प्राक्। 'एतत्सत्यं ब्रह्मपुरम्' इत्येतच्च वस्तुतो दहराकाशस्य ब्रह्मरूपतापरत्व एव द्वितीयाक्षेपस्योत्तरं भवेदित्यपि समर्थितम्। अपहतपाप्मत्वं द्वेधा सम्भवति—'दहं विपाप्मम्' इति श्रुताचेतनासाधारणान्यदीयपाप्मस्पर्शविरोधित्वरूपं आदित्यमण्डलान्तर्वर्तिनः परमपुरुषस्य उदितिनाम्नि प्रवृत्तिनिमित्ततया 'तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदितः' (छा. १. ६. ७) इति श्रुतसर्वपाप्मराहित्यरूपं वा। अत्र द्वितीयमेव ग्राह्यम्; 'नैनं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः' (छा. ८. ४. १) इत्यत्रैव प्रकरणे श्रवणात्। अत्र हि दहराकाशस्य लोकसिद्धपाप्महेतुसम्भवेऽपि पाप्मानस्तमप्राप्यैव निवर्तन्ते, यतोऽयं पाप्मरहितस्वभावः। न हि रूपरहितस्वभावे वाय्वाग्निसंयोगसहस्रमपि घटादाविव रक्तिमादिकमाधातुं शक्नोतीत्ययमर्थ उच्यते।

अन्यदीयपाप्मस्पर्शविरोधित्वादेवं पाप्मानो न स्पृशन्ति इत्ययमर्थ उच्यतामिति चेत्; न । सामान्यतो विशेषतो वा तथा नियमाभावात् । अन्यदीयरोगनिवर्तकानामपि स्वयमुत्कटपापादीनामनिवर्त्यरोगवतां भिषजां, यष्टृदातृगतपाप्मस्पर्शविरोधिनां स्वयं पापमार्जयतां याजकप्रतिग्रहीतॄणाञ्च दर्शनात् । तस्मादपहतपाप्मत्वमपि फलतस्सम्भूततद्धेतुकतया वर्ण्यमानेन पापास्पृश्यत्वेन प्रसक्तप्रतिषेधरूपं न भूताकाशे सम्भवति । न चाप्रसक्तप्रतिषेधतैवास्तु; सिद्धान्ते विजरत्वादीनां तथात्वाभ्युपगमावश्यम्भावादिति वाच्यम् । 'अपहतपाप्मा' इत्यतः पाप्मशब्दलक्ष्याणां पाप्महेतुकजरादीनामभावसिद्धावपि यथा ब्रह्मणि सुकृतहेतुक आनन्दस्तथा दुष्कृतहेतुकं जरादिकमस्त्वित्येवं जरादिप्रसक्तौ तदभावबोधनात् ।

हार्दे ब्रह्मणि अहरहर्गतिसत्त्वे यद्यपि हृदयावच्छिन्न आकाशेऽपि सा निवारयितुं न शक्या, तथाऽपि ब्रह्मणि 'सता सोम्य' (छा. ६. ८. १) इत्यादिश्रुत्यन्तरप्रसिद्धा भूताकाशे युक्तिकल्पनीयायाश्शीघ्रं बुद्धिमारोहतीति ब्रह्मगतैवात्र ग्रहीतुं युक्ता । ब्रह्मलोकशब्दोऽत्र प्रकरणे क्वचित् सत्यलोकपरो दृष्टः 'अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके' इति । क्वचिद्ब्रह्मपरो दृष्टः 'अपहतपाप्मा ह्येष ब्रह्मलोकः' इति । तत्र गतिवाक्यस्थब्रह्मलोकशब्दस्य अहरहर्गतिलिङ्गविरोधेन सत्यलोकपरत्वासम्भवे परिशेषात् समानाधिकरणसमासलाभाच्च ब्रह्मपरत्वमेव भवति, न तु ब्रह्मोपलब्धिस्थानहृदयावच्छिन्नभूताकाशपरत्वम् । विधारकत्वमात्रं यद्यपि भूताकाशेऽपि श्रुतमास्ति श्रुत्यन्तरे, तथाप्यत्र विधारकत्वं सकलमर्यादाव्यवस्थापकत्वसहितं श्रुतम् । अयञ्च पारमैश्वर्यरूपो महिमा ब्रह्मण्येव श्रुत्यन्तरेषूपलब्धः 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ. ४. ४. २२) 'यस्सर्वज्ञस्सर्वविद्यस्यैष महिमा भुवि' (मु. २. २. ७) इत्यादिषु । तस्मादेतैर्वाक्यशेषगतैः श्रुतिलिङ्गैर्दहराकाशो ब्रह्मेति निश्चीयते । उपक्रमगताया अभ्यस्ताया अप्येकस्याः श्रुतेर्वाक्यशेषगतबहुश्रुतिलिङ्गानां बलवत्त्वादत्र ब्रह्मश्रुत्याकाशोपमेयत्वलिङ्गादीनामनन्यथासिद्धत्वाच्च ।

अथोक्तस्सर्वोऽपि सिद्धान्तस्सूत्रारूढः क्रियते—दहराकाशो ब्रह्म, उत्तरेभ्यः पाश्चात्येभ्यो वाक्यशेषगतश्रुतिलिङ्गेभ्यः । तेषामुपसंहारगतत्वेऽपि 'भूयसां स्यात्सधर्मत्वम्' (जै. सू. १२. २. २२) इति न्यायात् भूयस्त्वेन प्राबल्यं सूचयितुं बहुवचनम् । ननु दहराकाशान्तर्वर्तिद्यावापृथिव्यादिकमुक्तलिङ्गान्वयि,

न तु दहराकाश इत्याशङ्कायामपि सूत्रमेवोत्तरम्—दहराकाशो वाक्यशेषगतश्रुलिङ्गान्वयी; प्रथमद्वितीयाक्षेपोत्तरवाक्येभ्यः। यद्यपि प्रथमाक्षेपं प्रति 'यावान्वा' इत्यादि 'समाहितम्' इत्यन्तमेवोत्तरम्; द्वितीयाक्षेपं प्रति च 'नास्य जरयैतत्' इत्यादि 'समाहिता' इत्यन्तमेकमेव उत्तरम्; तथाऽपि तदन्तर्गतावान्तरवाक्यबाहुल्याभिप्रायं बहुवचनम्। द्वितीयाक्षेपाभिप्रायविषययावदवान्तरवाक्यार्थपर्यालोचने प्रथमद्वितीयाक्षेपोत्तरगतकामसमाधानाधारत्वप्रत्यभिज्ञापकवाक्यद्वयार्थपर्यालोचने च सत्येव हि द्वितीयाक्षेपतदुत्तरगतैतदिदंपदानां द्यावापृथिव्याद्याधारदहराकाशपरत्वनिश्चयात् 'एष आत्मा' इत्यग्रे तमेवानुकृष्य प्रवृत्तानां ब्रह्मश्रुतिलिङ्गानां तदन्वयो लभ्यते।

'ननूदाहृतोत्तरपर्यालोचनेनाक्षेपतदुत्तरगतान्येतादिदंपदानि न द्यावापृथिव्यादिपराणि, किन्तु तदाधारपराणीत्येतावल्लभ्यते। तदाधारस्तु दहराकाशो न भवति, अपितु तदन्तर्वर्त्यैन्वेष्टव्यं ब्रह्म। तथा च तदेवाक्षेपसमाधानगतैस्तैः पदैः परामर्शनीयं वाक्यशेषगतब्रह्मश्रुतिलिङ्गान्वयि इत्याशङ्कायामपि सूत्रमेवोत्तरम्—दहराकाशो द्यावापृथिव्यादिसमाधानाधारः; प्रथमाक्षेपोत्तरेभ्यः। अत्राप्यवान्तरवाक्याभिप्रायं बहुवचनम्। 'यावान्वा' इत्यादिवाक्ये द्वितीयाकाशपदस्य प्रथमान्तत्वं दहराकाशपरत्वञ्चावगत्य द्यावापृथिव्यादिवाक्येषु श्रुतस्यानुषक्तस्य च प्रकृतदहराकाशपरामर्शिनः 'अस्मिन्' इति पदस्य सद्भावञ्चावगत्य हि दहराकाशस्य द्यावापृथिव्याद्याधारत्वं निश्चेतव्यम्।

एवञ्च सूत्रस्य द्वितीयतृतीययोजनयोर्विभक्तधनेषु भ्रातृषु विभक्तपदवदुत्तरावयववाक्येषूत्तरपदमुत्तरपदलोपेन द्रष्टव्यम्। यत्तु—'भूतकाशेऽपि वाक्यशेषगतब्रह्मश्रुतिलिङ्गानि योजयितुं शक्यानि। 'यद्वै तद्ब्रह्मेतीदं वाव तत्' इत्यादिदर्शनात्। अतस्तान्युपक्रमगताकाशश्रुत्यभ्यासानुसारेण तथैव योजनीयानि; अन्यथासिद्धेषु भूयस्त्वन्यायाप्रवृत्तेः' इत्युक्तं तत्रापि सूत्रमेवोत्तरं तत्र श्रीमद्भाष्यदर्शितया रीत्या समर्थितम्। भूताकाशोपमेयत्वलिङ्गं द्वितीयाक्षेपसमाधाननिर्वाहाय वृत्त्यन्तरासहिष्णुर्ब्रह्मश्रुतिश्चेत्युभयमाकाशश्रुत्यपेक्षया उत्तरं श्रेष्ठं वृत्त्यन्तरसहिष्णुत्वेनान्यथासिद्धाया आकाशश्रुतेरन्यथासिद्धत्वेन प्रबलमिति यावत्। अपहतपाप्मत्वादिकं उदः उदितिनाम्नः, तरं प्रवृत्तिनिमित्ततया प्राप्तं इति षष्ठीसमासे उत्तरम्। तरतिधातुः 'नैनं सेतुमहोरात्रे तरतः' इति 'एतं सेतुं तीर्त्वा' इति च श्रुतौ दहराकाशप्रकरण एव प्राप्त्यर्थे प्रयुक्तः। एवञ्च श्रेष्ठवाचक-

योरुत्तरोत्तरशब्दयोरुन्नामप्रवृत्तिनिमित्तवाचकस्योत्तरशब्दस्य च 'नपुंसकमनपुंसकेन' (पा. सू. १. २. ६९) इत्येकशेषो द्रष्टव्यः। १. ३. १४।

अथ गतिश्रवणब्रह्मलोकशब्दयोरन्यथासिद्धत्वशङ्कापरिहारार्थं सूत्रम्—

**गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च।१५।**

पूर्वसूत्रक्रोडीकृतहेतूनां मध्ये प्रजानामहरहर्दहराकाशगतिं दहराकाशे ब्रह्मलोकशब्दञ्च 'गतिशब्दाभ्याम्' इत्यनूद्य 'तथाहि दृष्टम्' इत्यनेन 'तदुभयं वाक्यान्तरे ब्रह्मणि दृष्टम्, न भूताकाशे इत्यतस्तदुभयमिह ब्रह्मगतमेव ग्राह्यम्; वाक्यान्तरप्रसिद्धत्वात्, न भूताकाशगतम्; कल्पनीयत्वेन विलम्बितोपस्थितिकत्वात्' इति दर्शितम्। ननु ब्रह्मलोकशब्दस्सत्यलोके वाक्यान्तरेषु स्मृतिपुराणादिषु च प्रसिद्धतरः; प्रसिद्धतरषष्ठीसमासे च शब्दे नरपतिराजकुमारादिशब्द इव न निषादस्थपतिन्यायावतारः, इत्याशङ्कायां निषादस्थपतिन्यायानवतारेप्यहरहर्गतिः समानाधिकरणसमासपरिग्रहे लिङ्गमस्तीति लिङ्गमित्यनेनोक्तम्।

ननु नेदं लिङ्गम्, 'अहरहर्वा एवं वित्स्वर्गं लोकमेति' इति वदहरहश्श्रवणस्यार्थवादत्वसम्भवात्, इति शङ्कायामहरहर्गमनं सदपि ब्रह्म प्रजा न विन्दन्तीति तदज्ञानोक्तेः, तदज्ञानस्य 'तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्दन्ति' (छा. ८. ३. २) इति 'अनृतेन हि प्रत्यूढाः' (छा. ८. ३. २) इति च हेतुदृष्टान्ताभ्यामुपपादनाच्च नेदमर्थवादमात्रं, किन्तु लिंगमेवेत्यवधारणार्थेन चकारेण दर्शितम्। दृष्टान्तोऽप्यसिद्धः तत्राहरहःश्रवणस्य 'एवंवित्' इत्यनेनान्वयात्। अतोऽपि लिङ्गमेवेत्यपि तेन सूचितम्। सूत्रे दृष्टशब्दः 'तथा चेतोऽर्पणानिगदात्तथाहि दर्शनम्' (ब्र. सू. १. १. २५) इति सूत्रे दर्शनशब्द इव भावप्रत्ययान्तः, न तु कर्मणि निष्ठान्तः। तथा च दृष्टशब्दस्य गतिशब्दौ प्रति विशेषणतया पुल्लिङ्गेन द्विवचनेन च भाव्यमिति शङ्काया नावकाशः।

यत्तु भाष्ये 'तथाह्यहरहर्जीवानां सुषुप्तावस्थायां ब्रह्मविषयं गमनं दृष्टम्' इत्यादि गतेर्ब्रह्मणि दर्शनप्रदर्शकं वाक्यं, यच्च 'तथा ब्रह्मलोकशब्दोऽपि' इत्यादि 'दृष्टः श्रुत्यन्तरे' इत्यध्याहारेण पूरणीयं 'ननु कमलासनलोकमपि' इत्यादेस्सौत्रलिङ्गपदावतारिकातः प्राचीनं वाक्यं तत्रोभयत्रापि दृष्टशब्दस्य कर्मणि

निष्ठान्ततया गतिशब्दविशेषणत्वेन निवेशनं फलितार्थप्रदर्शनपरम्, न सौत्रदहपदयोजनापरमिति न विरोधः। अस्तु वा कर्मणि निष्ठान्तः, तथापि न विरोधः विशेष्यस्य पुंल्लिगद्विवचनान्तनिर्दिष्टत्वेऽपि पाणिनीये 'द्विगुरेकवचनम्' (पा. सू. २. ४. १५) इति सूत्रे लिङ्गसामान्यविवक्षया पुंल्लिङ्गविशेषणे नपुंसकलिङ्गवत्, 'कर्मणो रोमन्थतपोभ्यां वर्तिचरोः' (पा. सू. ३. १. १५) इति सूत्रे विशेष्यद्वयगतप्रातिस्विकैकत्वविवक्षया द्विवचनान्तविशेषणे एकवचनवच्चात्र विशेषणे नपुंसकस्य एकवचनस्य चोपपत्तेः। १. ३. १५।

ननु विधारकत्वं भूताकाशेऽपि श्रुत्यन्तरप्रसिद्धमस्तीत्यधिकाशङ्कायां तस्य हेतुत्वोपपादनार्थं सूत्रम्—

**धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः।१६।**

नात्र भूताकाशसाधारणं विधारकत्वमात्रं श्रूयते, किन्तु विधारणलक्षणः कोऽपि महिमा श्रूयते। लोकानामसम्भेदाय सेतुरिति विशेषणात्। ननु तेन विशेषणेन यथा जलमध्ये निबद्धस्सेतुर्जलराशिद्वयस्यासङ्कराय भवति, एवमयमपि लोकबृन्दस्येत्येतावत् प्रतिपाद्यते। इदं भूताकाशसाधारणमेव। यदि हि लोकानामन्तराऽन्तराऽवकाशात्मको भूताकाशो न स्यात्, तदा तेषां सङ्करः स्यादेव, इति शङ्कापाकरणाय त्वर्थे चशब्दः। 'सेतुर्विधृतिः' इत्यादिना स्थावरजङ्गमात्मकसर्वलोकव्यवस्थिततत्तत्स्वरूपस्वभावकृत्यायसङ्करापादकसर्वनियमनशक्तिमत्त्वरूपपारमेश्वर्याधीनविधारकत्वरूपो महिमा प्रतिपाद्यते। कुत एतदवगम्यते? इह हि नास्ति सेतुत्वविधारणयोरैश्वर्याधीनत्वविशेषणम्; इत्याशंक्योक्तं 'अस्यास्मिन्नुपलब्धेः' इति। अस्योक्तरूपस्य महिम्नोऽस्मिन् ब्रह्मणि 'एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ. ४. ४. २२) इति बृहदारण्यके दर्शनादित्यर्थः। अत्र हि सर्वेश्वरादिपदैर्निरतिशयैश्वर्यादिवर्णनं सेतुत्वविशेषितविधारकत्वोपयोगितयैव; 'एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः....द्यावापृथिव्यौ विधृते तिष्ठतः....प्राच्योऽन्या नद्यस्स्यन्दन्ते प्रतीच्योऽन्याः' (बृ. ३. ८. ९) इत्यक्षरब्राह्मणे दर्शनात्। स एवेह बृहदारण्यकोक्तः पारमैश्वर्याधीनविधारकत्वरूपो महिमाऽत्र प्रतिपाद्यः प्रत्यभिज्ञायते।

नन्वस्तु नामैवम्; तथाऽपि नायं महिमा दहराकाशे वर्ण्यते। 'अथ य आत्मा स सेतुर्विधृतिः' इत्यथशब्देन दहराकाशप्रकरणविच्छेदात्, इत्याशङ्कायामपि 'अस्यास्मिन्नुपलब्धेः' इत्येवोत्तरम्; अस्य

महिम्नोऽस्मिन्दहराकाश एवोपलब्धेः प्रकृतपरामर्शिनो यत्पदस्य दहराकाशे प्राक् प्रयुक्तस्यात्मशब्दस्य च विद्यमानतया सेतुत्वादिवर्णनस्य तदन्यविषयत्वयोगेनाथशब्दस्य पूर्वप्रकृतापेक्षार्थत्वकल्पनोपपत्तेः । तदर्थत्व कल्पनस्य च प्राङ्निर्दिष्टा निर्देक्ष्यमाणा गुणाः परस्परापेक्षया समुच्चित्योपास्या इति सूचनार्थत्वेन सफलत्वात् । अन्यथा 'एतांश्च सत्यान् कामान्' इत्यस्य गुणान्तरपरिसंख्यार्थत्वशङ्कया सर्वेषामुपास्यत्वासिद्धेः ।

एवं 'अस्यास्मिन्नुपलब्धेः' इति सूत्रखण्डस्य शङ्कान्तरोत्तरत्वेन द्वितीययोजना 'कथम्' इत्यादिना 'निर्दिशति' इत्यन्तेन विषयवाक्यावतारिकाभाष्येण सूचिता । तत्र 'अनतिवृत्तप्रकरणम्' इत्येननात्राथशब्दः प्रकरणविच्छेदको न भवतीति दर्शितम् । तत्र हेतू 'दहरोऽस्मिन्नन्तराकाश इति हि- प्रकृत्यास्मिन्नेव चात्मशब्दं प्रयुज्य' इति विशेषणाभ्यां दर्शितौ । 'आकाशौपम्यपूर्वकं तस्मिन् सर्वसमाधान- मुक्त्वा अपहतपाप्मत्वादिगुणयोगं चोपदिश्य' इति विशेषणाभ्यां निर्दिष्टगुणानुवादरूपाभ्यां पूर्वप्रकृतापेक्षार्थ- स्याथशब्दस्योक्तवक्ष्यमाणगुणानां परस्परापेक्षया समुच्चित्योपास्यत्वसिद्धिः फलमिति दर्शितम् ।

यद्यपि सूत्रे 'महिम्नः' इत्येतावदेवोक्तरूपाविधारकत्वोपस्थापने पर्याप्तम्; 'यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि' (मु. २. २. ७) इत्याथर्वणे पारमेश्वरगुणकलापे केवलस्य महिमशब्दस्य प्रयोगात्, अथापि हेतुविशेषस्फुटीकरणार्थं 'धृतेः' इति विशेषितम् । एवमस्य सूत्रद्वयस्य प्रथमसूत्रक्रोडीकृतहेतूनां मध्ये केषाञ्चिदहेतुत्वशङ्कानिराकरणार्थतया प्रथमसूत्रशेषत्वं 'त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्त' इति पूर्वसूत्रावतारिकाभाष्येण दर्शितम् । १. ३. १६ ।

स्यादेतत्—भवतु नाम वाक्यशेषगतब्रह्मश्रुतिलिङ्गैर्ब्रह्मेह प्रतिपाद्यमिति, ब्रह्म तु दहराकाशो न भवति, किन्तु तदन्तर्वर्त्येव; 'तस्मिन्यदन्तः' इत्यादिस्वारस्यात्, पूर्वसूत्रोदाहृतस्य 'एष सर्वेश्वरः' इत्या- देरधस्तने 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः' (बृ. ४. ४. २२) इति वाक्ये 'यस्यैष महिमा भुवि' इत्यस्योपरितने 'दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः' (मु. २. २. ७) इति वाक्ये च ब्रह्मणो हृदयाकाशान्तर्वर्तित्वप्रसिद्धेश्च । ततश्च तदनुसारात् 'यावान्वा' इत्यादिवाक्यस्य क्लिष्टयोजना न दोषायेत्याशंक्याह—

प्रसिद्धेश्च । १७ ।

ब्रह्मणो हृदयाकाशान्तर्वर्तित्वप्रसिद्धिवद्धृदयान्तर्वर्तित्वप्रसिद्धिरप्यस्त्येव 'एष म आत्माऽन्तर्हृदये' (छा. ३. १५. ३) इत्यादिश्रुत्यन्तरेषु । किञ्चात्रापि वाक्यशेषे हृदयान्तर्वर्तित्वं श्रूयते । 'स वा एष आत्मा हृदीति तस्यैतदेव निरुक्तं हृदयमिति तस्माद्धृदयम्' (छा. ८. ३. ३) इति नामनिर्वचनरूपेणार्थवादेन तात्पर्यविषयतया ज्ञाप्यते । एवञ्च ब्रह्मणो हृदयान्तर्वर्तित्वस्य, हृदयाकाशान्तर्वर्तित्वस्य च श्रुत्यन्तरप्रसिद्धितौल्यात् पक्षद्वयेऽपि प्रकृतविषयवाक्यस्य क्वचित्क्वचित् क्लिष्टयोजनावश्यम्भावे च सति 'सन्दिग्धे तु (षु) वाक्यशेषात्' (जै. सू. १. ४. २४) इति न्यायादर्थवादावगमिततात्पर्येण वाक्यशेषेण दहराकाशो ब्रह्मेति निर्णीयते । अथापि तदन्तर्वर्ति ब्रह्म स्यात् यद्याकाशशब्दस्य क्वचिदपि ब्रह्मणि प्रसिद्धिर्न स्यात् । अस्ति तस्य तत्र प्रसिद्धिः 'आकाश इति होवाच' (छा. १. ९. १) इत्यादिश्रुत्यन्तरेषु । किञ्च माभूदन्यत्र तत्र तस्य प्रसिद्धिः, इहैवाकाशशब्दोक्तं ब्रह्मेति निर्णेतुं शक्यम्; तदन्तर्वर्ति ब्रह्मेत्यभ्युपगमे वाक्ययोजनाक्लेशातिशयसद्भावात् । सूत्रे 'प्रसिद्धेः' इत्यस्य ब्रह्मणो हृदयान्तर्वर्तित्वप्रसिद्धेरित्येकोऽर्थः । तत्र चकारो वाक्यशेषसमुच्चार्थः । ब्रह्मण्याकाशशब्दप्रसिद्धेरिति द्वितीयोऽर्थः । तत्र चकारः पूर्वपक्षे वाक्ययोजनाक्लेशातिशयस्य समुच्चयार्थः । १. ३. १७ ।

स्यादेतत्—माभूद्दहरो भूताकाशः, जीवस्तु स्यात्; 'अथ य एष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच' (छा. ८. २. ४) इति वाक्यशेषे जीवपरामर्शात् । सम्प्रसादशब्दस्सुषुप्त्यवस्थावाचकस्तद्वति जीवे वर्तितुं शक्नोति, न ब्रह्मणि । शरीरात् समुत्थानञ्च तदाश्रयस्य जीवस्यैवोपपद्यते । ब्रह्मप्राप्त्या स्वरूपाविर्भावश्च तस्यैवोपपद्यत इत्याशङ्कामुद्भाव्यापहतपाप्मत्वाद्यसम्भवान्नैवमिति परिहरति—

इतरपरामर्शात् स इति चेन्नासम्भवात् ।१८।

यद्यपि अपहतपाप्मत्वाद्यसम्भवो जीवे स्पष्ट एव; तथापि तत्सम्भवशङ्कां काञ्चिन्निराकर्तुमुपोद्घातरूपमिदं सूत्रम् । १. ३. १८ ।

तामेव शङ्कामुद्भाट्य निराकरोति—

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ।१९।

जीवस्याप्यपहतपाप्मत्वादिगुणान् दहरवाक्यादुत्तरस्मात् 'य आत्माऽपहतपाप्मा विजरो विमृत्यु-र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पस्सोऽन्वेष्टव्यस्स विजिज्ञासितव्यस्स सर्वांश्च लोकाना-प्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' (छा. ८. ६. १) इति प्रजापतिवाक्यादवगच्छामः । न च तदपि ब्रह्मविषयम्; तदुपरि 'य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मा' (छा. ८. ६. ४) इति 'य एष स्वप्ने महीयमानश्चरत्येष आत्मा' (छा. ८. १०. १) इति तद्यत्रैतत्सुप्तस्समस्तस्सम्प्रसन्नस्स्वप्नं न विजानात्येष आत्मा' (छा. ८. ११. १) इति च जागरितस्वप्नसुषुप्त्यवस्थावर्णनेन, 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा. ८. १२. ३) इति श्रवणेन च तस्य जीवविषयत्वनिश्चयात् । ननु तत्र 'स्वेन रूपेणाभिनिष्पद्यते' इति जीवस्योपासना-विशेषरूपसाधनसाध्यापहतपाप्मत्वादिस्वरूपाविर्भाव उच्यते, दहरवाक्ये तु साधनाधीनं पापध्वंसादिमत्स्वरूपम-पहतपाप्मत्वादिकं न ग्राह्यम्; किन्तु पापात्यन्ताभाववत्स्वरूपम्; 'नैतं सेतुमहोरात्रे तरतः' (छा. ८. ४. १) इत्यादिदहरवाक्यशेषे पाप्मनामप्राप्तिवर्णनात् इति चेत्; तर्हि प्रजापतिवाक्येऽपि 'अपहतपाप्मा विजरो विमृत्युः' इत्यादिदहरवाक्यस्थपदानामेवावर्तनेन तथैव तदर्थः स्वीकरणीयः ।

एवं तर्हि प्रजापतिवाक्यं जीवस्य जैवेन रूपेणापहतपाप्मत्वादिकं न प्रतिपादयति; तत्र तस्य मानान्तरविरुद्धत्वात्, किन्तु यदस्य पारमार्थिकं मुक्तिप्राप्यं ब्रह्मस्वरूपं तद्रूपेणेति ब्रह्मण एव ततस्तत्सिद्धिः स्यात्; न संसारित्वावस्थापन्नस्य जीवशब्दितस्य । 'परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' इति च जीवस्य मुक्तिकाले पारमार्थिकब्रह्मभावाविर्भावाभिप्रायं स्यात् इति चेत्; उच्यते—न मुक्तौ जीवस्य सविशेषब्रह्मभवः सम्भवति । निर्विशेषब्रह्मभावाभ्युपगमे तु सत्यकामत्वं सत्यसङ्कल्पत्वञ्च न सम्भवति । निर्विशेषब्रह्मभावं प्राप्तस्य मुक्तस्य च 'स तत्र पर्येति जक्षत् क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा' (छा. ८. १२. ३) इत्यादिवाक्यशेषोक्तं फलं न सम्भवति । 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्त-मात्मानमनुविद्य विजानाति' (छा. ८. ७. १) इत्युपक्रमेण तथैवोपसंहारेण च प्रतिपिपादयिषितं सर्वलोक-कामावाप्तिफलञ्च न सम्भवति । तस्मादत्र 'य आत्माऽपहतपाप्मा' (छा. ८. ७. १) इत्यादिना संसारित्वाव-स्थापन्नो जीव एवानृततिरोहितापहतपाप्मत्वसत्यकामत्वादिमानुच्यते । तस्यैवोक्तरूपजीवोपासनामनुष्ठितवतः

'परं ज्योतिरुपसम्पद्य' इत्यादिना ब्रह्मलोकस्थसविशेषब्रह्मावाप्तिपूर्वकः सत्यकामत्वादिस्वरूपाविर्भाव उच्यते इत्येव युक्तम्; 'मनसैतान् कामान् पश्यन्रमते य एते ब्रह्मलोके' (छा. ८. १२. ५) इति वाक्यशेषात्, पञ्चाग्निविद्यावत् शरीरेन्द्रियविविक्तजीवविषयया‌ऽपि प्राजापत्यविद्यया 'तं वा एते (तं) देवाः आत्मानमुपासते तस्मात्तेषां सर्वे च लोका आप्ताः सर्वे च कामाः' (छा. ८. १२. ६) इत्युपासनारूपत्वेन श्रुतया ब्रह्मलोकावाप्तिसम्भवाच्च ।

ननु तथाऽपि दहराकाशे वर्णितमतिरोहितस्वभावमपहतपाप्मत्वादिकं जीवस्य न सम्भवतीति चेत्; क एवमुपदिदेश ? तिरोहितमेव हि तत् तत्रोपदिष्टम् । तथा हि—'स यदि पितृलोककामो भवति' (छा. ८. २. १) इत्यादिना सङ्कल्पमात्रेण पित्रादिसृष्ट्या जीवस्य सत्यसङ्कल्पत्वं प्रपञ्चेनोपवर्ण्य 'त इमे सत्याः कामा' (छा. ८. ३. १) इति त इमे पित्रादयः काम्यमानतया कामशब्दोक्ताः केवलं सांकल्पिकत्वेऽपि नोपभोगाक्षमा वितथाः, किन्तु सत्या इत्युक्तम् । तथा च 'सत्यकामस्सत्यसङ्कल्पः' इत्यत्र तत्प्रकरणकृतव्याख्यानानुसारेणावितथसङ्कल्पजपित्रादिमत्त्वमेवार्थो ग्राह्यः । तेषाञ्च पित्रादीनां 'त इमे सत्याः कामाः' इति परामर्शानन्तरं 'अनृतापिधानाः' इति तेषां सत्यानामनृतमपिधानमिति 'यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते' (छा. ८. ३. १) इति च इहलोके स्थितौ तिरोहितत्वं स्पष्टमेवोक्तम् । अथ 'ये चास्य जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते' (छा. ८. ३. २.) इति ब्रह्मलोकगमनानन्तरं तदाविर्भावश्चोक्तः । एवं सङ्कल्पजपित्रादीनां तिरोहितत्वोक्त्यैव सत्यसङ्कल्पत्वस्य तिरोहितत्वमर्थसिद्धम् । पाप्मजरामरणशोकादीनां तु स्थूलसूक्ष्मदेहधर्माणामभावस्य देहेन्द्रियतादात्म्याध्याससमये तिरोहितत्वं रजताध्याससमये शुक्तौ रजतत्वाभावस्येव स्पष्टमेव । अतः सत्यकामत्वमात्रस्य तिरोधानमुक्तम् ।

एतेन—प्रजापतिवाक्ये संसारदशायामविद्यातिरोहितमपहतपाप्मत्वादिकमुक्तं 'स्वेन रूपेणाभिनिष्पद्यते' इति मुक्तिदशायां तदाविर्भावश्रवणात्, दहरवाक्ये त्वतिरोहितस्वभावमेव तदुक्तं तिरोधानाश्रवणात्—इति निरस्तम् । दहरवाक्यान्तर्गतेऽपि 'य एष सम्प्रसाद' इति वाक्ये 'स्वेन रूपेणाभिनिष्पद्यते' इति श्रवणाच्च । तस्मादपहतपाप्मत्वादिकं जीवे सम्भवत्येव, प्रत्युत ब्रह्मण्येव स्वसङ्कल्पसमुत्थितातीतनिजपित्रादिमत्त्वरूपं सत्यकामत्वं न सम्भवति । किञ्च 'ब्रह्मपुरे' इत्युपक्रमोऽपि दहराकाशो जीव इति पक्ष एव स्वारसिकः; जीवस्यैव सप्तमीनिर्दिष्टाधारं प्रत्याधेयत्वस्य भोक्तृभोगायतनभावरूपसमासान्तर्वर्तिषष्ठ्युक्तासाधारण-

शरीरसम्बन्धवत्त्वस्य चोपपत्तेः । ब्रह्मणि तु नाधेयत्वं न वा शरीरेण विशेषसम्बन्धवत्त्वम्; कारणत्वेन सम्बन्धस्य सर्वविकारसाधारण्यात् । असाधारण्येन हि व्यपदेशा भवन्ति; तद्यथा क्षितिसलिलबीजादिजन्माऽप्यङ्कुरोऽसाधारणेन शालिबीजेन व्यपदिश्यते 'शाल्यंकुर' इति न तु कार्यान्तरसाधारणैः क्षित्यादिभिः । तस्मात् ब्रह्मशब्दस्य रूढिं परित्यज्य बृंहयति देहमन्नपानादिभिरिति जीवे योगस्स्वीकर्तुं युक्तः ।

तथा भूताकाशोपमेयत्वमपि जीवे सम्भवति; अत्रापि मानसवैपुल्यसद्भावात्, तस्यान्तःकरणावच्छिन्नरूपेणाव्यापकत्वेऽप्यविद्योपहितेन रूपेण सर्वशरीरानुस्यूतेन व्यापकत्वाच्च । वस्तुतस्तु मानसमेव वैपुल्यमिह 'यावान्वा' इत्यादिवाक्यार्थतया ग्राह्यम्; स्वरूपेण व्यापकत्वर्णनस्य प्रकृतानुपयोगित्वात्, 'तस्मिन्यदन्तः' इत्यत्रान्तश्शब्देन, 'अन्तरेव समाहिते' (छा. ८. १. ३) इत्यत्र सावधारणेनान्तश्शब्देन, 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वे च कामाः' (छा. ८. १. ४) इत्यत्र देहान्तर्गतहृदयपुण्डरीकान्तर्वर्तिनि दहराकाशे सर्वसमाधानोक्त्या देह एव सर्वसमाधानमुक्तं स्यादित्यनुवादेन च, हृदयान्तःप्रदेशावच्छेदेन दहराकाशवैपुल्यप्रतिपादनस्यैवाकांक्षितत्वात् । एवञ्च द्यावापृथिव्यादयोऽप्यत्र हृदयपुण्डरीकावच्छिन्ने दहराकाशे समाहिता मानसा एव ग्राह्या इति तदाधारत्वं जीवस्य नानुपपन्नम्; स्वप्नदृष्टानामिवान्येषामपि मानसानां जीव एवाध्यासात् । 'एतत्सत्यं ब्रह्मपुरम्' इत्येतदपि देहाख्यं ब्रह्मपुरमनृतम्, इदं तु सत्यं देहबृंहणत्वात् ब्रह्म सकलकामाधारत्वात् पुरमिति जीवे सङ्गच्छते । अहरहर्गतिश्रवणमपि जीव एवाविद्यामात्रोपहितरूपे युज्यते; स्वप्नजागरयोरन्तः करणोपधानेन स्थितस्य तस्य सुषुप्तावन्तःकरणलये सति अविद्यामात्रोपहितमात्ररूपापत्तिसत्वात् । जगद्विधारकत्वश्रवणमपि सत्यसङ्कल्पजवस्तुविधारकत्वाभिप्रायम्, ब्रह्माभेदाभिप्रायं वा जीवे योजयितुं शक्यम् । यद्यप्याकाशशब्दस्य श्रुत्यन्तरे नास्ति जीवे प्रसिद्धिः, तथाऽप्यत्रैव सत्यकामादितद्धर्मसमभिव्याहारात् तद्विषयत्वं कल्प्यते, अन्यथा लोके तस्य ब्रह्मविषयत्वादर्शनात् ब्रह्मधर्मसमभिव्याहृतश्रुत्यन्तरे ब्रह्मविषयत्वकल्पनमपि तस्य न स्यात् । तस्माज्जीव एव दहराकाश इति **पूर्वः पक्षः** ।

**अत्रोत्तरम्**—'आविर्भूतस्वरूपस्तु' इति । दहरवाक्यादुत्तरस्मिन् प्रजापतिवाक्ये जीवस्यापहतपाप्मत्वादिकोक्तेर्दहरो जीव इति शङ्का न कार्या । यतस्तत्राविर्भूतपरब्रह्मस्वरूप एव जीवोऽपहतपाप्मत्वादि-

रूपः प्रतिपाद्य इति, तेन ब्रह्मण एवापहतपाप्मत्वादिकमुक्तं भवति। तत्र हि 'य एषोऽक्षाणि' इत्यादिषु त्रिष्वपि जागरस्वप्नसुषुप्तिपर्यायेषु 'एष आत्मा' इति 'एतदमृतमभयमेतत् ब्रह्म' इति च जीवस्य ब्रह्मभावः श्रूयते। तत्र 'एष आत्मा' इत्यपहतपाप्मत्वादिधर्मकान्वेष्टव्यात्मरूपत्वं 'अमृतम्' इति भूमाख्यानिरतिशयानन्दरूपत्वं 'अभयम्' इति रागद्वेषादिकलुषसंसाराख्यमहाभयराहित्यञ्चोक्त्वा ब्रह्मण एव हि तत्प्रसिद्धम्, तत् कथञ्जीवस्योच्यत इति तटस्थशङ्कायां 'एतत् ब्रह्म' इति चोक्तम्। तत्र यद्यपि जागराद्यवस्थावत्स्वरूपं जीवलिङ्गं प्रथमश्रुतम्; तथाऽपि अमृतत्वाभयत्वाभ्यां ब्रह्मलिङ्गाभ्यां ब्रह्मश्रुत्या चैकैकमनुवाद्यं जीवलिङ्गं बहुतृणन्यायेन, अंगुष्ठाधिकरणन्यायेन चोपमृद्य तत्तदवस्थोपलक्षितस्य जीवस्य ब्रह्मभावो विधीयते। एवञ्च 'एवमेवैष सम्प्रसादः' इत्यादि चतुर्थपर्यायवाक्यं जीवस्य शरीरद्वयविवेकावधारणरूपत्वंपदार्थशोधनपूर्वकेण ब्रह्मात्मभावसाक्षात्कारेणावस्थात्रयानुवृत्तत्वेऽप्यनृततिरोहितस्यापहतपाप्मत्वादिधर्मकानिरस्तानिखिलसंसारमहाभयनिरतिशयानन्दरूपब्रह्मात्मभावस्याविर्भावं प्रतिपादयतीत्येव वक्तव्यम्। निर्गुणविद्यायां सविशेषब्रह्मलोकावाप्तिकथनस्यानुपयोगात् मुक्तानां यावत्सर्वमुक्ति बिम्बेश्वरभावापत्तिरस्तीत्यस्माभिस्सिद्धान्तलेशसंग्रहे समर्थितत्वेनाविर्भूतस्वरूपस्य सत्यकामत्वं सत्यसङ्कल्पत्वञ्चोपपद्यते। तस्य शुद्धचैतन्यभावापत्त्यभ्युपगमेऽप्युपपद्यत एव; शुद्धचैतन्यस्य जीवेश्वरानुस्यूतचैतन्यसामान्यात्मनाऽवस्थानात्।

शुद्धचैतन्यं हि यावत्सर्वमुक्ति जीवेश्वरानुस्यूतचैतन्यसामान्यात्मनाऽवतिष्ठते, न तु तृतीयकोटितया पृथगवतिष्ठते। न हि शुद्धमुखं बिम्बप्रतिबिम्बानुस्यूतमुखसामान्यात्मना विना पृथगवतिष्ठमानं दृश्यते। अत एव साक्षात्कृतब्रह्मणां यावत्सर्वमुक्ति सर्वात्मतापत्तिरस्तीति वामदेवस्य मनुसूर्यादिभावप्रतिपत्तिः श्रूयते। शुकस्य च सर्वभूतमयत्वापत्तिः स्मर्यते। एवञ्च मुक्तस्य सार्वभौमादिमानुषात्मना, इन्द्रादिलोकपालात्मना, दहरोपासनादिफलानुभवितृपुरुषात्मना च जक्षणादिकं सर्वलोककामावाप्तिमत्त्वं ब्रह्मलोकसमाहितसत्यकामानुभवितृत्वञ्च व्यपदेष्टुं शक्यमिति जक्षणादिश्रवणमप्युपपद्यते। न चैवं मुक्तस्य सर्वात्मतापत्त्या तत्तद्दुःखभोक्तृत्वस्यापि व्यपदेशप्रसङ्गः; मुक्तस्य निरस्ताविद्यस्य जक्षणादिजन्यसुखवृत्त्यवच्छिन्नस्वप्रकाशानन्दरूपतापत्तिवदाविद्यकदुःखितापत्तेरभावात्। अन्यदिह प्रजापतिविद्यायामुपपादनीयं सर्वं 'ज्योतिर्दर्शनात्' (१. ३. ४०) इत्यधिकरणे चिन्तयिष्यते।

यत्तु दहरविद्याप्रकरण एव स्वसङ्कल्पसमुत्थितातीतानिजपित्रादिमत्वरूपतयोपवर्णितं सत्यकामत्वं ब्रह्मणि न संभवतीत्युक्तं—अत्र ब्रूमः । द्वयमिह सत्यकामत्वं निरूपितम् । एकमुपास्यस्य तदुपासनाविषयतया 'एष आत्माऽपहतपाप्मा' इत्यादावुक्तम् । द्वितीयमुपासकस्य तदुपासनाफलतया 'स यदि पितृलोककामो भवति' इत्यदावुक्तम् । तत्र द्वितीयमेव संकुचितं स्वसङ्कल्पसमुत्थितपित्रादिमत्वरूपं, न त्वाद्यमपि; तत्सङ्कोचकाभावात् । नन्विदमेव तस्यापि सङ्कोचकम्, अन्यथा तत्क्रतुन्यायविरोधापत्तेरिति चेत्; न । तत्क्रतुन्यायस्यैव सत्यकामत्वविषये सङ्कोचोपपत्तेः । यद्यप्युपास्यस्य सर्वेऽपि कामनाविषयाः सङ्कल्पमात्रसृष्टाः साधारणप्रपञ्चान्तर्गता वियदादयोऽपि सत्याः, न तु वितथा मनोराज्यविजृंभितप्रातिभासिकवस्तुवद्भोगानुपयुक्ताः, तथाऽप्युपासकस्य संकल्पसमुत्थिताः स्वासाधारणभोगोपयुक्ताः पित्रादय एव सत्या न तु वियदादयोऽपीति तावन्मात्र एव सत्यकामत्वविषयतत्क्रतुन्यायावतार इति ।

नन्वेतदनुसारेणोपास्यगतं सत्यकामत्वं न सङ्कोचनीयम्; किन्तु तत्क्रतुन्याय एवेत्यत्र किं विनिगमकमिति चेत्; उच्यते । सत्यकामत्वसङ्कोचे सत्यसङ्कल्पत्वमपि सङ्कोचनीयम्ः 'सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' इयादिनोपासकगतसत्यसङ्कल्पत्वस्यापि सङ्कोचितत्वात् । ततो वरमेकस्यैव तत्क्रतुन्यायस्य गुणद्वयविषयेऽपि सङ्कोचकल्पनम् । किञ्च सर्वेश्वरत्वगुणविशिष्टोपासनायां तत्क्रतुन्यायस्यावश्यकः संकोचः । न च तथोपासनैव नास्ति; 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्ये' इत्यथर्वशिखायां श्रवणात् । तस्मात् तत्क्रतुन्यायस्यैव क्वचिद्गुणे क्लृप्तः सङ्कोचोऽन्यत्रापि स्वीकार्यः । एतेनेदमपि निरस्तम्—दहरविद्यायां वर्णितं गुणाष्टकं तिरोहितमेव ग्राह्यं प्रजापतिविद्यायामिवात्रापि 'स्वेन रूपेणाभिनिष्पद्यते' इति ब्रह्मज्ञानेन तस्याविर्भाववर्णनात्, विशिष्य सत्यकामत्वतिरोधानवर्णनाच्च, तत्तु जीवस्यैव संभवति, न ब्रह्मण इति । यतस्तत्र उपासनाफलस्याविर्भावतिरोभाववर्णनम्, न तूपासनीयस्य । तत्त्वतिरोहितं नित्याविर्भूतमेव ग्राह्यम्; तिरोधानावचनात् । वस्तुतस्त्विदानीं सङ्कल्पसृज्या अनृततिरोहितास्सत्याः कामा जीवनामतीतवर्तमानपितृपुत्रादयो न सन्त्येव । दहराकाशे इदानीं सतामेव तेषामनृततिरोहितत्वश्रवणं तु दहरोपासनासिद्धानां ब्रह्मलोकप्राप्त्यनन्तरमयत्नलभ्यत्वप्रतिपत्त्यर्थमतिशयोक्तिमात्रम् ।

ननु स भूतार्थवाद एव किं न स्यात् 'अत्र ह्येते सत्याः कामाः तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्य-

नृतेन हि प्रत्यूढाः' (छा. ८. ३. २) इति हिरण्यनिधिदृष्टान्तेनोपपादनस्य तात्पर्यलिङ्गस्य सत्त्वात्, धनलोलुपानां धनान्धानां धनविषयमनोराज्यरूपेण सङ्कल्पेन शुक्रस्य धनगृहे धनं सृज्यत इति भारत-रामायणादिवचनप्रामाण्यादङ्गीकर्तव्यत्वेन तद्वत् सर्वेषामपि सङ्कल्पेन दहराकाशे पितृपुत्रादिबान्धवान्नपान-गीतवादित्रादिभोग्यसृष्टिसम्भवाच्चेति चेत् —

नैवम् । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ति' (छा. ८. २. १) इत्यादिपूर्वखण्डे 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामान् तेषां सर्वेषु लोकेषु कामचारो भवति' (छा. ८. १. ६) इति तत्पूर्वप्रकृतं दहरोपासनया ब्रह्मलोकगतं स इति परामृश्य तत्सङ्कल्पेन पित्रादिसृष्ट्युक्त्यनन्तरं 'त इमे सत्याः कामाः' इति तानेव पित्रादीन् परामृश्यानृततिरोहितत्वस्योच्यमान-तया तेषामिदानीमसत्त्वस्य स्पष्टत्वात् । 'अनुविद्य व्रजन्ति' इत्यस्य दहराकाशमुपास्य ब्रह्मलोकं प्रयान्तीत्ये-तावत्पर्यन्तमर्थं स्वीकृत्य दहरोपासकानामिहैव कालेन सत्याः कामा निष्पद्यन्ते तेषाञ्चानृततिरोहित-त्ववचनमपेक्षितमिति तिरोधानवचनश्रद्धया समर्थनेऽपि दहरोपासनारम्भात् पूर्वं सत्यकामत्वाद्यभावात्तद्वत्तया न जीवस्योपास्यत्वसिद्धिः । सिद्धसाध्यधर्मग्रहणसंशये च सिद्धग्रहणं न्याय्यमित्यलं विस्तरेण ।

यत्तु—जीवस्य देहेनासाधारणसम्बन्धोऽस्तीति तत्र तस्य पुरमिति व्यपदेशो युक्तः, न तु ब्रह्मणः—इति तत्तुच्छम्; ब्रह्मणोऽप्यसाधारणतयोपलब्धिस्थाने तस्मिन् तत्पुरमिति व्यपदेशोपपत्तेः, ब्रह्मप्रातिपदिकार्थस्य प्रधानतया तद्विशेषणभूतषष्ठ्यर्थस्य तदनुसारेण नेतव्यत्वाच्च । यच्चोक्तमन्तश्शब्दादि-स्वारस्यानुरोधेन द्यावापृथिव्यादयो मानसा एव ग्राह्या इति तेषां जीव एव समाधानोक्तिर्युक्ता, न ब्रह्मणि; स्वाप्नानामिव मानसानां जीवेऽध्यस्तत्वादिति तदपि तुच्छम्; उपाधिपरिच्छिन्नस्य जीवस्यापि ब्रह्मणि समाहितत्वेन तत्राध्यस्तानां मानसानां ब्रह्मणि समाधानानिवारणात्, अन्यथा ब्रह्मणः सर्वाधारत्वश्रुतीनां व्याकोपप्रसङ्गात् ।

वस्तुतस्तु द्यावापृथिव्यादयो मानसा एव ग्राह्या इत्ययुक्तम्; द्यावापृथिव्यादिश्रुतिसङ्कोचापत्तेः । उपर्यधश्चापारस्य ब्रह्मणोऽन्तरेव सर्वं समाहितमित्यभिप्रायेण 'यस्यान्तस्स्थानि भूतानि' इतिवदन्तश्शब्दाव-धारणयोरुपपत्तेः । 'अस्मिंश्चेदिदं ब्रह्मपुरे सर्वं समाहितम्' इति शङ्कावाक्यगतानुवादस्य हृदयावच्छिन्न एव दहराकाशे सर्वसमाधानमुक्तमिति भ्रान्त्या 'योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एषः'

(छा. ८. ७. ४) इतीन्द्रविरोचनयोः प्रश्नस्य प्रजापतिना छायापुरुष उपदिष्ट इति भ्रान्त्यैवोपपन्नत्वात्। मानसमात्रग्रहणपक्षेऽपि 'यदैनं जरा वाऽऽप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यते' (छा. ८. १. ४) इति शङ्कांशे भ्रान्तिमूलत्वकल्पनाया आवश्यकत्वात्। न हि स्थूलानामिव मानसानां द्यावापृथिव्यादीनां देहान्तस्समाहितत्वेऽपि जरत्कुसूलान्तर्निहितव्रीह्यादिन्यायेन देहस्य जरादौ सति भ्रंशशङ्काऽवकाशं लभते। एवञ्च सति 'एतत्सत्यं ब्रह्मपुरमस्मिन्कामास्समाहिताः' इत्याचार्यवाक्यमप्यन्तेवासिगणभ्रान्तिवारणार्थतयैव व्याख्येयम्। न हि देहरूपासत्यब्रह्मपुरावच्छिन्ने दहराकाशे द्यावापृथिव्यादयस्समाहिताः येनार्थतस्तस्मिन्नवच्छेदक एव समाहितत्वमापद्यते। किन्तु तदवच्छेदमनपेक्ष्य अस्मिन् स्वरूपेण भूताकाशवद्व्यापकतयोक्ते दहराकाश एव समाहिताः—इदन्तु सत्यमवितथं ब्रह्माख्यं पुरं पुरवत्सर्वेषां विभक्ततयाऽवस्थानभूमिरिति। अत एवोक्तमापस्तम्बेन परमात्मानं प्रकृत्य 'स वै वैभाजनं पुरम्' (आ. ध. १. ८. २२. ७) इति। तस्मादसङ्कुचितद्यावापृथिव्यादिसर्वाधारत्वातिरोहितासंकुचितगुणाष्टकप्रभृतिहेतुभिर्दहराकाशः ब्रह्म, न तु जीव इति सिद्धम्।

सूत्रस्य—प्रजापतिविद्यावलम्बनशङ्कायामयमर्थः—उत्तरात् प्रजापतिवाक्यात् जीवस्यापि अपहतपाप्मत्वादिकं सम्भवतीति चेत्—आविर्भूतस्वरूपो जीवस्तत्रापहतपाप्मत्वादिमत्तया प्रतिपाद्यते स त्वपेजीवभवो ब्रह्मैवेति न जीवस्य जैवेन रूपेणापहतपाप्मत्वादिसम्भव इति। दहरविद्याप्रकरणगतसत्यकामत्वावलम्बनशङ्कायामयमर्थः—उत्तरात् 'त इमे सत्याः कामा अनृतापिधानाः' इति सङ्कुचिततिरोहितसत्यकामत्वप्रतिपादनलिङ्गात् दहराकाशो जीव इति चेत्—दहराकाशस्तिरोहितसत्यकामत्वादिस्वरूपो न प्रतिपाद्यते, किं त्वाविर्भूतसत्यकामत्वादिस्वरूप एव; सत्यकामत्वादितिरोधानं तु तत्क्रतुन्यायेन उपासनाफलं लभमानस्योपासकस्योक्तम्, इति। तुश्शब्दो ब्रह्मपुरशब्दाद्यवलम्बनशङ्कान्तरव्यावृत्त्यर्थः। १. ३. १९।

यदि दहराकाशो न जीवः, तर्हि 'य एष सम्प्रसाद' इत्यादौ जीवपरामर्शः किमर्थः? तत्राह—

**अन्यार्थश्च परामर्शः ।२०।**

जीवस्य उपास्यदहराकाशरूपताप्रतिपत्त्यर्थो न जीवपरामर्शः, किन्त्वन्यार्थः। कथम्? 'एवं वित्स्वर्गं लोकमेति' (छा. ८. ३. ३) इति प्रकृतो विद्वान् 'य एष सम्प्रसाद' (छा. ८. ३. ४) इति परामृश्यते। सोऽथ इ

शरीरं हित्वा ब्रह्मलोकप्राप्त्यनन्तरमस्माच्छरीरात्समुत्थाय क्रमेण शरीरद्वयविविक्तब्रह्मात्मभावसाक्षात्कारप्राप्त्या देहात्मभावं परित्यज्य परंज्योतिरुपसम्पद्य परमेश्वररूपपरब्रह्मभावं प्राप्य स्वेन रूपेण निरतिशयसुखात्मना रूपेणाविर्भवति, यत्परं ज्योतिरुपसम्पत्तव्यमित्युक्तम्, एष आत्माऽपहतपाप्मत्वादिगुणक उपास्यः, एतदेवा- भयममृतं ब्रह्म इति दहराकाशपरमेश्वरोपासनस्य क्रममुक्तिफलकत्वप्रतिपत्त्यर्थ इति। अयं छान्दोग्य भाष्य- स्वरससिद्धोऽर्थः।

यद्वा 'य एष सम्प्रसादः' इति सामान्यतो जीव उच्यते। स जागरे स्थूलदेहाभिमानी सन् बाह्यपदार्थाननुभूय स्वप्ने सूक्ष्मदेहाभिमानी भूत्वा वासनामयपदर्थाननुभूयाथ सुषुप्तावस्थायामुभयविधशरीरा- भिमानं परित्यज्य दहराकाशरूपं परं ब्रह्मोपसम्पद्य स्वेन रूपेण विशेषविज्ञानकृतकालुष्यरहितेन चैतन्यात्मनाऽ वतिष्ठते, यत् परंज्योतिस्सुषुप्तावुपसम्पत्तव्यम्; एष आत्माऽपहतपाप्मत्वादिगुणक उपास्यः इति दहरा- काशरूपपरमेश्वरस्योपास्यस्य जागरितस्वप्नपरिश्रान्तजीवजातसमाश्रयणीयत्वमहिमप्रतिपत्त्यर्थो जीवपरामर्शः। अयं श्रीमद्भाष्यस्वरससिद्धोऽर्थः।

अथवा य एष सम्प्रसादः श्रीमद्भाष्यदर्शितरीत्याऽवस्थात्रयवान्, एष एवापहतपाप्मत्वादिगुणक आत्मा अमृतमभयं ब्रह्म चेति जीवस्यावस्थात्रयविलयेन पारमार्थिकब्रह्मभावोपदेशार्थो जीवपरामर्शः। अयं भामतीस्वरससिद्धोऽर्थः। अस्मिन् पक्षे अस्य वाक्यस्य वक्ष्यमाणायां प्रजापतिविद्यायां शिष्याणां जिज्ञा- साजननार्थं तदर्थसङ्क्षेपरूपत्वम्, एवञ्च 'इति होवाच' (छा. ८. ३. ४) इत्येतत् इति प्रजापतिरुवा- चेत्येवमर्थकं, न तु 'स ब्रूयात्' इतिवदाचार्यवचनप्रतिपादकमिति द्रष्टव्यम्। सूत्रे चकारेण जीवेत्थम्भाव- प्रतिपत्त्यर्थोऽपि भवति जीवपरामर्श इति समुच्चीयते। प्रतिपन्ने हि जीवस्येत्थम्भावे क्रममुक्तिफलिकायां जागराद्यावर्तमानसंसारक्लेशपरिपन्थिन्यामस्यामुपासनायां प्रवृत्तिर्भवेदिति। १. ३. २०।

एवं वाक्यशेषगतहेत्वाश्रयां जीवाशङ्कां परिहृत्य वाक्योपक्रमगतहेत्वाश्रयां तामुद्भाव्य परिहरति—

अल्पश्रुतेरिति चेत्तदुक्तम्। २१।

दहर इत्यल्पपरिमाणश्रुतेराराग्रोपमितो जीवो दहराकाशो भवितुमर्हतीति चेत्तत्र यत्वक्तव्यमुत्तरं प्रागेवोक्तं 'निचाय्यत्वादेवं व्योमवच्च' (ब्र. सू. १. २. ७) इति। श्रुत्या चोक्तं 'तावानेषोऽन्तर्हृदय

आकाश' इति । शाण्डिल्यविद्यायामणीयस्त्वं नोपक्रमगतम्; इह दहरत्वमुपक्रमगतमित्यधिकाशङ्का । वाक्यशेषगतबहुश्रुतिलिङ्गविरोधादुपक्रमगतमपि नादरणीयमित्यधिकपरिहारः । इह ब्रह्मलिङ्गानां स्पष्टत्वेऽपि दहराकाशान्तर्वर्त्यन्वयावभासाद्दहराकाशान्वयित्वेनास्पष्टता द्रष्टव्या । १. ३. २१ ।

इति दहराधिकरणम् । ५ ।



(६ अधिकरणम्)

## अनुकृतेस्तस्य च । २२ ।

आथर्वणिकाः समामनन्ति 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (मु. २. २. १०) इति । अत्र 'तत्र' इति सर्वनाम्ना निर्दिष्टो लौकिकः कश्चित् तेजोधातुः, परं ब्रह्म वेति सप्तम्याः सति, विषये च साधारण्यात् संशये, **पूर्वः पक्षः**—बलीयसा हि सौरेण लौकिकतेजसा मन्देतेजश्चन्द्रतारकादि अभिभूयमानं दृष्टम् । तद्यस्मिन् सति सर्वमिदं तेजोऽभिभूयते, तत् किञ्चित् सर्वातिशायि लौकिकं तेज इति युक्तम् । न च—तत्रेति सतिसप्तमी माभूत्, विषयसप्तम्यस्तु, तथा सति सूर्याद्यप्रकाश्यत्वं ब्रह्मणि सम्भवतीति वाच्यम् । तं विषयं सूर्यो न भासयतीति णिजर्थाध्याहारापत्तेः । न च तथाऽपि सूर्यदीपादितेजोऽभिभावकघनकुड्यादिवदतेजस्त्वोपपत्तिः; घनकुड्यादीनां सूर्यदीपाद्यभिभावकत्वाभावात्, घनकुड्याद्यावरणे सति चक्षुस्सन्निकर्षाभावादेव सूर्याद्यग्रहणोपपत्तेः । न चैवमपि सुवर्णरूपतेजोऽभिभावकपार्थिवभागवदतेजस्त्वोपपत्तिः । पीतिमगुरुत्वाश्रयपार्थिवातिरिक्तसुवर्णानङ्गीकारात्, प्रकाशकस्य सतस्तेजोऽभिभावकस्य तेजस्त्वनियमाङ्गीकाराच्च । तथा 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' इति सर्वशब्दोक्तस्य प्रकृतस्य सूर्यादितेजसोऽनुभानरूपात्तदनुकारादपि तत्सजातीयं तेज इति युक्तम् । समानेष्वेव ह्यनुकरणं दृष्टं 'गच्छन्तमनुगच्छति' इति यथा ।

नन्वभिभवलिङ्गं तावदसिद्धम्; मानान्तरविरोधात् । न हीदानीं भात्येव सूर्यादौ न भातीत्येतदन्वेति । कालान्तरे तस्मिन् तेजसि सति न भास्यतीत्यर्थ इति चेत्, तर्हि विषयसप्तम्येवास्तु । क्वचन णिजर्थस्यान्यत्र भविष्यदर्थस्याध्याहार इति तौल्यात् । यदि व्यत्ययानुशासनाल्लटैव भविष्यदर्थलाभ इति

नाध्याहारः, तर्हीहापि विषयसप्तमीबलाद्विषयित्वेन न भातीति सामर्थ्येन णिजर्थलाभ इति नाध्याहारः। एवमनुकारलिङ्गमप्यसिद्धम्; पूर्वापरविरोधात्। न हि यस्मिन् सति यन्न भाति, तत्तदनुभातीति युक्तम्। न खलु यस्मिन् गच्छति यो न गच्छति, स तमनुगच्छति। उच्यते—अनुभातीत्यत्र तदपेक्षया निकृष्टभानत्व-मुच्यते। अतो 'न भाति' इत्यत्र न मानान्तरविरोधः; तेजोन्तराभिभूतस्य सूर्यादेर्नीहाराद्यावृतस्येव सर्वात्मना भानानिषेधात्। 'अनुभाति' इत्यत्रापि न पूर्वापरविरोधः; निकृष्टभानवचनात्। एवमुभयसामञ्जस्यसम्भवे व्यत्ययानुशासनमाश्रित्य भविष्यदर्थलाभ इति वा, विषयोक्तिसामार्थ्यमवलम्ब्य णिजर्थलाभ इति वा क्लेशो नाश्रयणीयः।

ननु 'तस्य भासा सर्वमिदं विभाति' इत्युक्तं सर्वप्रकाशकत्वं तेजसि न सम्भवतिः, तेजसश्चक्षु-र्विषयमात्रप्रकाशकत्वात्। न च तत्रापि सर्वशब्दः प्रकृतसूर्यादिमात्रपरः; सूर्यादितेजःप्रकाशे चक्षुर्व्यतिरिक्तभा समानतेजोन्तरानपेक्षणात्। यदि तेजोन्तरादृष्टमपि सर्वप्रकाशकत्वं सूर्यादिप्रकाशकत्वं वा कचित्तेजसि कल्प्यते, तर्हि तेजस्साजात्याभावेऽपि सूर्यादीनां ब्रह्मणैवाभिभवस्तदनुकरणञ्च कल्प्यताम्। न च—ब्रह्मपक्षे द्वयं अप्रसिद्धं कल्पनीयम्, तेजःपक्षे त्वेकमेवेति वाच्यम्; तेजःपक्षे तथाभूतस्य धर्मिणस्तेजसोऽप्यप्रासिद्धस्य कल्पनीयत्वात्। उच्यते—तेजसस्तेजःप्रकाशकत्वं नादृष्टचरम्; लाघवेन चाक्षुषत्वावच्छिन्ने तेजोऽपेक्षाङ्गी-कारात्, दीपे तत्संयुक्तस्यालोके परस्परसंयुक्तानेककिरणात्मके तत्तत्संयुक्तकिरणस्य च तेजसः सद्भावात्, अन्ततस्सर्वत्र तत्तदवयवावयवसद्भावाच्च, तद्रहितस्यापि त्रिसरेण्वादेः जालान्तरगतालोके एव भानात्। एवञ्चाभिभवानुकारलिङ्गद्वयबलात्, तेजःप्रकाशकत्वाविरोधाच्च तेजोधातुरेव कश्चिन्मन्त्रप्रतिपाद्य इति निश्चये सति भूतयोनिब्रह्मप्रकरणं नादरणीयम्; लिङ्गाभ्यां तस्य बाधात्। न च तत्रेत्यादिसर्वनाम्नां प्रकृतपरत्व-निर्बन्धोऽस्ति; 'तेन रक्तं रागात्' (पा. सू. ४. २. १) इत्यादावप्रकृतपराणामपि तेषां दर्शनात्।

ननु 'तेन रक्तं रागात्' 'तस्यापत्यम्'(पा.सू.४.१.९२)इत्यादिसूत्रोदाहरणेषु 'माहारजनं' 'औप गवः' इत्यादिषु तद्धितार्थे 'महारजनेन रक्तम्' 'उपगोरपत्यम्' इत्यादिवाक्यैर्व्याख्यायमाने महारजनादेःप्रकृत्यर्थस्य शब्दतः प्रकृतत्वमस्तीति तस्य 'तेन' 'तस्य' इत्यादिसर्वनामभिः परामर्शो युक्त इति चेत्। यद्येतावता तृप्तिस्तर्ही-हाप्यभिभवादिलिङ्गमालोच्य सूर्याद्यभिभावकं तत उत्कृष्टप्रकाशं तत्प्रकाशकञ्च तेजोऽस्य मन्त्रस्य प्रतिपाद्यमिति

व्याख्यायमाने तेजसः शब्दतः प्रकृतत्वमस्तीति सन्तुष्यताम्। तस्मात्तेज एव किञ्चिदुपासनीयं मन्त्रप्रतिपाद्यं न तु ज्ञेयं ब्रह्म। ब्रह्मपक्षे चाचाक्षुषे ब्रह्मणि सूर्यादिप्रकाश्यत्वनिषेधस्याप्रसक्तनिषेधता स्यात्। भारूपे तस्मिन् 'भान्तम्' इति शतृप्रत्ययस्य 'तस्य भासा' इति षष्ठ्याश्च निर्विषयता स्यात्। प्रपञ्चब्रह्मभानान्यभानाभावेन 'अनुभाति' इत्यस्य निर्विषयता स्यात्। 'गच्छन्तमनुगच्छति' इत्यादौ गमनभेदे सत्येव ह्यनुशब्दो दृष्टः। न च श्रुतिदृष्टोऽयं व्यपदेशो 'वह्निं दहन्तमयोऽनुदहति' इति लौकिकव्यपदेशवदारोपितभेदनिमित्तो व्याख्यातुमुचित इति।

**अत्र राद्धान्तः**—तेजो मन्त्रप्रतिपाद्यमिति पक्षे प्रसिद्धविलक्षणं किञ्चित्तेजस्तावदनुमन्तव्यम्। तत्प्रतिपादनवैयर्थ्याय तदुपासनविधिस्तत्फलञ्चेत्युभयं कल्पनीयम्। ब्रह्मप्रकरणञ्च बाधनीयम्। प्रकृतपरामर्शिन्यः सर्वनामश्रुतयश्चातिलङ्घनीयाः। न च तासामुक्तनिर्वाहो युक्तः। द्विविधा हि सर्वनामशब्दाः—समभिव्याहृतपराः, व्यवस्थितैकार्थपराश्च। तत्र 'तस्यापत्यम्' 'तद्वति तत्प्रकारकज्ञानं प्रमा' इत्यादिषु व्यवस्थितैकार्थशून्याः समभिव्याहृतपरसर्वनामशब्दा एव तत्तदभिमतार्थपरव्याख्यानशब्दसमर्पितानुपगवादिघटत्वादिरूपार्थानासाद्य निर्वहन्ति, न तु व्यवस्थितैकार्थपराः। ते तु तस्मिन्नेव सन्दर्भे पूर्वप्रकृतमपेक्ष्य तदभावे प्रकरिष्यमाणमपेक्ष्योभयाभावेऽन्यतः प्रसिद्धिमपेक्ष्य वा भवन्ति। यथा 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' (छा. ८. १. १) इति 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' (छा. ८. ७. १) इति 'इत्थं प्रच्छन्नपापस्य स एव तत्र शासिता' इति। इह 'तत्र' इत्यादयो व्यवस्थितैकार्थपराः। नात्र सन्दर्भे तेजः पूर्वप्रकृतमस्ति। नापि प्रकरिष्यमाणम्। न च तथाभूतस्य तेजसोऽन्यतः प्रसिद्धिरस्ति। तस्मादिह सर्वनामश्रुतीनां प्रकृतब्रह्मपरत्वमवर्जनीयमिति : तदतिलङ्घनदोषोऽपि स्यादेव।

एवमपि तेजो मन्त्रप्रतिपाद्यमिति कथञ्चिदभ्युपगम्येत यदि तस्मिन्नुपासनाशेषत्वेनाभिमते मानान्तरविरोधो न स्यात्। तस्मिन्नपि सति कथं तदभ्युपगमः? यदि हि सूर्यादितेजोऽभिभावकं ततोऽधिकप्रकाशं तस्य सर्वस्यापि प्रकाशकतया व्याप्य सर्वदा स्थितं च किञ्चित्तेजस्स्यात् कथं तन्नानुभूयेत? कथं च सौरचान्द्रादितेजसामभावेऽपि घटादिप्रकाशो न स्यात्? न च मणिप्रभान्यायेन सूर्यचन्द्रदीपावनु-

विधाय्येव तत्तेजः, तदीयत्वारोपाच्च सूर्यादितेजोऽभिभावकमिदमन्यत्तेजस्सूर्यादीनां सहजं निकृष्टं तेजः किञ्चित्प्रकाशमानमपि तत्करम्बितमित्येवं विवेकग्रहवैधुर्यमूलात्तदनुभवाभावाभिमानः; तथा सति दीपनिर्वापणे सति दीपप्रभामण्डलस्येव तस्यापि नाश इत्युपगमापत्तेः। न चेष्टापत्तिः; प्रतिदीपव्यक्ति तत्तदभिभावकतेजोन्तराभ्युपगमस्य निर्मूलत्वात्। मन्त्रे तत्र तस्य तमिति पदगतैरेकवचनैरेकस्यैव प्रतीतेः। तस्मात् प्रकृतं ब्रह्मैवात्र सर्वनामश्रुतिसमर्पितं मन्त्रप्रतिपाद्यम्; अनुकृतेः—अनुभानादित्यर्थः।

एतदुक्तं भवति—यदेतत् 'तमेव भान्तमनुभाति सर्वम्' इत्यनुभानं तद्ब्रह्मपरिग्रहेऽवकल्पते, न तेजःपरिग्रहे। न ह्यत्र 'गच्छन्तमनुगच्छति' इत्यत्र तद्गमनानुकारिगमनान्तरवत्त्वमिव तद्भानानुकारिभानान्तरवत्त्वमुच्यते; 'तमेव भान्तम्' इति तस्यैव भानवत्त्वोक्तिविरोधात्। न हि यत्र क्रियाभेदोऽस्ति तत्र 'तमेव गच्छन्तमनुगच्छति' इत्युच्यते। उच्यते तु क्रियाभेदाभावस्थले वह्निमेव दहन्तं तमायःपिण्डोऽप्यनुदहतीति। तथाच भारूपे ब्रह्मण्यध्यस्तानां सूर्यादीनां तत्सत्तयैव सत्त्ववत्, तत्प्रियतयैव प्रियत्ववच्च तद्भानेनैव भानवत्त्वमित्यपि सङ्गच्छते। यदाहुः—

'अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम्। आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम्' इति।

तेजसि तु न सङ्गच्छते; तेजोधातूनां समत्वेनान्योन्यानपेक्षत्वात्। न हि प्रदीपः प्रदीपान्तरभानेन भानवत्तानुपलभ्यते। किञ्च 'तस्य भासा सर्वमिदं विभाति' इत्यत्र सर्वशब्दः सकलप्रपञ्चपरः; सङ्कोचकारणाभावात्। न च सकलप्रपञ्चभासकत्वं तेजस उपपद्यते; तस्य चाक्षुषमात्रभासकत्वात्, सर्वप्रपञ्चभासककिञ्चिल्लौकिकतेजोऽभ्युपगमे तमसि कस्याप्यनुपलम्भाभावप्रसङ्गात्। ब्रह्मणि तूपपद्यते; तस्य स्वाध्यस्तसकलानुभवरूपत्वात्। तस्मात् ब्रह्मण्येव मन्त्रोऽयं व्याख्येयः। तस्मिन् रूपादिमत्त्वभ्रान्त्या प्रसक्तस्य सूर्यादिप्रकाश्यत्वस्य 'न चक्षुषा पश्यति कश्चिदेनम्' इति चाक्षुषत्वस्येव निषेधः सङ्गच्छते। भारूपे तस्मिन् 'भान्त' इति व्यपदेशोऽपि प्रकाशान्तरमनपेक्ष्य स्वयंप्रकाशरूपत्वाभिप्रायेण 'सविता प्रकाशते' 'गुरुसन्निधिमात्रेण शिष्ये ज्ञानं प्रकाशते' इत्यादिव्यपदेशवदुपपद्यते। 'तस्य भासा' इति भेदव्यपदेशोऽपि विषयावच्छिन्नरूपाभिप्रायेणोपपद्यते।

सूत्रे 'अनुभानात्' वक्तव्ये 'अनुकृतेः' इति सामान्योक्तिर्ब्रह्माध्यस्तं सूर्यादि ब्रह्मसत्तयैवास्तीतिवत् ब्रह्मस्फुरणेनैव (तेजः) स्फुरतीति युक्तम्; शुक्त्यध्यस्तरङ्गरजतादीनामधिष्ठानभास्वररूपेणैव भास्वरत्वा

पपत्त्या प्रत्यध्यासम्भास्वररूपान्तरस्येवात्रापि प्रतिवस्तु अनुभवव्यक्त्यन्तरस्याकल्पनीयत्वादिति श्रौतावधारणा नुग्राहकोपपत्तिसूचनार्थम् । 'तस्य' इति मन्त्रगतचतुर्थपादस्य ग्रहणं तदर्थस्य सर्वप्रपञ्चभासकत्वस्य हेत्वन्तरस्य प्रदर्शनार्थम् । पञ्चम्यभावात्तस्येत्यस्य हेत्वन्तरपरत्वमस्फुटमिति तत्तात्पर्यस्फुटीकरणाय स्फुटोक्त-हेतुना तत्समुच्चयार्थश्चकारः । विषयवाक्ये प्राणाकाशादिपदवत् सर्वनामातिरिक्तस्य ब्रह्मणि प्रयुक्तस्य पदस्याभावात् 'अत एव प्राणः' (१. १. १३) इत्यादाविव पक्षानिर्देशः । हेतुसामर्थ्यात् पक्ष उन्नेय इति तात्पर्यम् । १. ३. २२ ।

स्यादेतत्—'न तत्र सूर्यो भाति' इत्यादिना सूर्यादीनामभिभव उच्यत इत्येव वक्तव्यम्; 'कुतोऽयमग्निः' इति कैमुतिकन्यायात् । येन महता तेजसा सूर्योऽप्यभिभूयते, तेनाग्निरभिभूयते इति किमु वक्तव्यमिति हि कैमुतिकन्यायोपन्यासः शोभते । न तु—यत्र रूपादिहीने ब्रह्मणि द्रष्टव्ये सूर्यो न कारणम्, तत्राग्निर्न कारणमिति किमु वक्तव्यमिति । न हि यत्र पटे जननीये मृत्पिण्डो न कारणम्, तत्र मृत्कणो न कारणमिति किमु वक्तव्यमिति कैमुतिकन्यायः प्रवर्तते । एवमभिभवलिङ्गेन तेजसि निश्चिते तत्रैव 'तमेव भान्तम्' इत्येतदपि तत्तेजोऽनुप्रवेशेन सूर्यादीनां तेजस्वित्वमित्येतदाशयं योज्यम् । न च तेजसोः समत्वा-दनपेक्षा; श्रुतिबलादेवाङ्गीकारोपपत्तेः । अङ्गीक्रियते हि ज्योतिश्शास्त्रबलात् चन्द्रमण्डलस्य सौरतेजोऽनुप्र-वेशादेव तेजस्वित्वमिति । एवञ्च 'सर्वमिदं विभाति' इत्येदपि प्रकृतस्य सूर्यादिप्रकाशस्य सर्वस्य तत्तेजः-प्रकाश्यत्वाभिप्रायं योज्यमित्याशंक्याह—

**अपि च स्मर्यते । २३ ।**

'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'
(भ. गी. १५. ६)

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्'
(भ. गी. १५. १२)

इति भगवद्गीतासु स्मर्यते । तथाचोपबृंहणानुसारेण 'न तत्र सूर्यः' इत्यादेर्ब्रह्मणस्सूर्याद्यभा-स्यत्वमेवार्थः । 'तमेव भान्तम्' इत्यादेर्ब्रह्मतेजोऽनुप्रवेशेन सूर्यादीनां तेजस्वित्वमित्येवार्थः । अपिशब्देन

कठवल्लिष्वयं मन्त्रः परब्रह्मप्रकरणे श्रूयत इत्यतोऽपि परब्रह्मपर इति समुच्चीयते । न च तत्रापि तुल्या शङ्का 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' इत्यानुमानिकाधिकरणसूत्रे कठवल्लिषु त्रयाणामग्निजीवब्रह्मणामेव प्रतिपादनम्, नान्यस्येति वर्णयिष्यमाणत्वात् । कैमुतिकन्यायोपन्यासस्त्वतिसौक्ष्म्येण दुर्दर्शत्वाभिप्रायेण योज्यः । यत्खलु अतिसूक्ष्मं वस्तु सौरातपेनापि न प्रकाश्यते, तत् दीपः प्रकाशयितुं नेष्ट इति किमु वक्तव्यमित्युक्तिर्युक्तैव । कठवल्लिषु ब्रह्मणो दुर्दर्शत्वमेव प्रकृतं 'तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् । कथं नु तद्विजानीयां किमु भाति विभाति वा' (क. ५. १४) इति । आथर्वणे तु 'हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः' (मु. २. २. ९) इति पूर्वमन्त्रे ब्रह्म ज्योतिषां ज्योतिरित्युक्तम्; तत्कथमित्याकाङ्क्षायां ब्रह्मैव सूर्यादीनामपि भासकमित्येतत्प्रदर्शनार्थत्वेनायं मन्त्रः पठ्यते । एवमुभयत्रापि प्रकृतस्य दुर्दर्शत्वस्य ज्योतिषां ज्योतिष्ट्वस्य चोपपादनार्थत्वेन एतन्मन्त्रपाठस्य दृष्टार्थत्वोपपत्तावप्रसिद्धतेजःकल्पनापेक्षोपासनाविध्यर्थत्वेनादृष्टार्थत्वकल्पनमनुचितमेव । इयमपि युक्तिः सौत्रेणापिशब्देन समुच्चीयते ।

ननु पूर्वसूत्रे ब्रह्माध्यस्तस्य सूर्यादेर्ब्रह्मभानेनैव भानमनुभानं सूर्यादिविषयस्य अस्मदाद्यनुभवस्य ब्रह्मचैतन्यरूपत्वं पर्यवसितमिति व्याख्यातम् । कथमस्मिन्सूत्रे 'यदादित्यगतं तेजः' इति गीतावचनमनुसृत्य जगद्भासकं सूर्यादिगतं तेजो ब्राह्ममेव, न तु सूर्यादेरन्यत्तेजोऽस्तीत्येवं ब्राह्मतेजोऽनुप्रवेशेन तेजस्वित्वमनुभानमिति व्याख्यायते ? उच्यते—यदि कस्यचित्तेजसोऽनुप्रवेशेन तेजस्वित्वमनुभानमित्याशङ्क्यते, तदाऽपि पूर्वपक्ष्यभिमतं लौकिकं किञ्चित्सूर्याद्यभिभावकं तेजो मन्त्रप्रतिपाद्यं न सेत्स्यति, किन्तु 'यदादित्यगतं तेजः' इति स्मृत्यनुसारेण ब्रह्मैव मन्त्रप्रतिपाद्यं सेत्स्यतीत्युद्घाटयितुं 'न तद्भासयते सूर्यः' इति सूत्रितस्मृत्युदाहरणप्रसङ्गाद्भाष्ये 'यदादित्यगतं तेजः' इति स्मृतिरप्युदाहृता । वस्तुतस्तु 'सर्वमिदं विभाति' इत्यत्र सर्वशब्दसङ्कोचे कारणाभावाद्ब्रह्मणो वाऽन्यस्य वा कस्यचिद्ब्राह्मतेजोरूपया प्रभया सर्वमिदं विभातीत्यर्थस्य प्रत्यक्षपराहतत्वात् ब्रह्मणश्चैतन्यप्रभया स्वाध्यस्तसर्वप्रपञ्चभासकत्वं तदर्थ इति 'तमेव भान्तम्' इत्यत्रापि सूर्याद्यभास्यत्वेनोक्तस्य ब्रह्मणश्चैतन्यप्रभयैव सूर्यादिभासकत्वमर्थो ग्राह्यः । 'यदादित्यगतं तेजः' इति स्मृतौ तु सूर्यादितेजसां ब्रह्मशक्त्यधिष्ठितत्वाद्रूपादिव्यञ्जकत्वमिति ब्रह्मशक्त्यधीनत्वमात्रमुच्यते । 'तापनी पावनी चैव

शोषणी च प्रकाशिनी । नैव राजन्नवेः शक्तिः शक्तिर्नारायणस्य सा' इति भारतवचनानुरोधादिति युक्तम् । अत्रानुभानस्य ब्रह्मलिङ्गस्यास्पष्टता स्पष्टैव । 'परञ्ज्योतिरुपसंपद्य' (छा. ८. ३. ४) इत्यादिवाक्यार्थ-विचारप्रसङ्गात् 'तच्छुभ्रञ्ज्योतिषाञ्ज्योतिः' (मु. २. २. ९) इति वाक्योक्तपरज्योतिष्ट्वसाधको 'न तत्र सूर्यः' इत्यादिमन्त्रो विचारित इति पूर्वाधिकरणसङ्गतिः । १. ३. २३ ।

इत्यनुकृत्यधिकरणम् । ६ ।

---

(७ अधिकरणम्)

## शब्दादेव प्रमितः । २४ ।

'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (क. २. १. १२) इति 'अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः । ईशानो भूतभव्यस्य स एवाद्य स उ श्वः एतद्वै तत्' (२. १. १३) इति च कठवल्लीमन्त्रश्रुतः पुरुषो जीवो वा, ब्रह्म वेति अल्पपरिमाणलिङ्गेशानश्रुतिभ्यां प्रथमचरमश्रुताभ्यां संशये—

**पूर्वपक्षः**—अल्पपरिमाणात् जीवलिङ्गाज्जीवोऽयम्, ईशानशब्दस्य ब्रह्माभिधानश्रुतित्वेऽपि प्राथम्येन जीवलिङ्गस्य प्रबलत्वात्, स्वभावबलादपि प्राथम्यबलस्याधिकत्वात्; अत एवोपक्रमाधिकरणे विधेः प्राधान्यबलमविगणय्यार्थवादस्य प्राथम्यबलमनुसृतम् । किञ्चात्र ईशानशब्दो न ब्रह्मणोऽभिधानश्रुतिः; 'भूतभव्यस्य' इत्यैश्वर्यप्रतिसंबन्ध्युपादानेन तस्य भूतभव्येशितृत्वरूपकेवलयौगिकार्थपरत्वात्, योगरूढिमतां शब्दानां यौगिकार्थप्रतिसंबन्ध्युपादाने रूढ्यनुन्मेषात्, 'पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः' (कुमा. १. १६) इति श्लोके सरःप्रतिसंबन्ध्यग्रोपादानवति सरोरुहशब्दे स्थितेऽपि पद्मशब्दप्रयोगदर्शनात्, अन्यथा 'उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतस्सरसिरुहोद्भवः परागः' (किरा. ५. ३९) इत्यत्र सरसिरुहशब्दस्येवात्र सरोरुहशब्दस्य रूढ्युन्मेषे पद्मपदस्य पौनरुक्त्यप्रसङ्गात् । तस्मादिह 'ईशानो भूतभव्यस्य' इति पदद्वयसमभिव्याहाररूपवाक्यबोध्यं ब्रह्मलिङ्गमात्रम् । तत्तु प्रथमश्रुताज्जीवलिङ्गाद्दुर्बलमिति निर्विवादम् ।

स्यादेतत्—अल्पपरिमाणं जीवलिङ्गमिह न प्रथमश्रुतम्, किन्तु 'ईशानो भूतभव्यस्य' इत्येतत्पूर्वश्रुतेनैतन्मन्त्रश्रुतेन च भूतभव्येशितृत्वेन सन्दष्टं अल्पपरिमाणञ्च, न जीवलिङ्गम् । तद्धि शाण्डिल्यविद्यायान्दहर-

विद्यायाश्च ब्रह्मणोऽपि हृदयायतनोपाधिकं सम्प्रतिपन्नम् । न च—तत्रोभयत्रापि 'एष म आत्माऽन्तर्हृदयेऽणीयान्' (छा. ३. १४. ३) इति, 'दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा. ८. १. १) इति च स्थाननिर्देशात् तदुपाधिकमल्पपरिमाणमिति युक्तम्, न त्वत्रेति वाच्यम् । अत्रापि 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' (क. ४. १२) इति पूर्वमंत्रे स्थाननिर्देशात् । न च—आत्मशब्दस्य स्वभाववचनत्वे कस्य स्वभाव इत्यज्ञानात् जीववचनत्वे ब्रह्मवचनत्वे च तयोर्मध्याभावादिह नास्ति स्थाननिर्देशः, किन्तु मध्ये उदासीने स्वभावे तिष्ठति उदासीनस्वभावो भवतीत्येव तदर्थ इति वाच्यम्; 'ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वेदेवा उपासते' (क. ५. ३) इत्यत्र मन्त्रान्तरे प्राणापानमध्येऽवस्थानस्य, तदुपाधिकवामनत्वस्य च श्रवणेनात्रापि मध्यशब्दस्य प्राणापानमध्यपरतया हृदयस्थानलाभात्, आत्मशब्दस्य 'आत्मा जीवे धृतौ देहे' इत्यनुशिष्टदेहपरत्वोपपत्तेः, 'आत्मैव महनीयः' 'आत्मा परिचर्यः' (छा. ८. ८. ४) इति विरोचनकृतदेहात्मवादोपदेशे देहविषयात्मशब्ददर्शनाच्च । किञ्च 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' इत्यत्रत्यमन्त्रान्तरे हृदयोपाधिनिर्देशः स्पष्ट एवास्ति । नन्वंगुष्ठमात्र इति मात्रशब्देनाधिकपरिमाणव्यावृत्तिः क्रियमाणाऽन्तःकरणोपाधिसंपिण्डितरूपे जीवे सम्भवति, न ब्रह्मणीति चेत्; न । मात्रशब्दो ह्यत्र प्रमाणवाचिप्रत्ययः 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' (पा. सू. ५. २. ३७) इति सूत्रेणानुशिष्टः, न तु 'क्षीरमात्रं पिब' इत्यत्रेवोत्तरपदत्वनियतं प्रातिपदिकम् । तथा सति अंगुष्ठपरिमाणमात्र इत्यर्थलाभायांगुष्ठशब्दस्याङ्गुष्ठपरिमाण इत्यर्थे लक्षणापत्तेः ।

ननु 'अथ सत्यवतः कायात्पाशबन्धवशङ्गतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्' इति जीवोऽङ्गुष्ठमात्रः स्मर्यते । को नेत्याह ? न हि वयं जीवस्याङ्गुष्ठमात्रत्वं नास्तीति ब्रूमः, किन्तु ब्रह्मण्यपि सम्भवता तेन ब्रह्मलिङ्गं न बाधनीयमिति ब्रूमः । ब्रह्मण्यङ्गुष्ठमात्रत्वसम्भवेऽपि 'अङ्गुष्ठमात्रं पुरुषम्' इति स्मार्तशब्दप्रत्यभिज्ञा जीव इव न सम्भवति इति चेत्, माभूत्, 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठश्च समाश्रितः । ईशस्सर्वस्य जगतः प्रभुः प्रीणाति विश्वभुक्' (महानारा. १६. ३) इति तैत्तिरीये, 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । हृदा मनीषामनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति' (श्वे. ३. १३) इति श्वेताश्वतरे च ब्रह्मविषयमन्त्रश्रवणेन ब्रह्मणि ततो बलवती प्रथमान्तश्रौतशब्दप्रत्यभिज्ञा जागर्ति । तस्मादंगुष्ठमात्रत्वलिङ्गाज्जीव इति निर्णयो न युक्त इति चेत्;

अत्र ब्रूमः—अंगुष्ठमात्रत्वं न भूतभव्येशितृत्वेन सन्दष्टम्, किन्तु तदेव मन्त्रद्वये पठितमपि 'अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति' इति तत्प्राक्छ्रुतेन 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा' इति तदनन्तर-श्रुतेन चांगुष्ठमात्रत्वेन सन्दष्टम् । अंगुष्ठमात्रत्वञ्च हृदयायतनोपाधिकं ब्रह्मणि न सम्भवति; तैत्तिरीये हृदया-ग्रवर्त्यतिसूक्ष्मवह्निशिखामध्यस्य ब्रह्मायतनत्वेनोक्ततया तदुपाधिकस्याणीयस्त्वस्यैव प्राप्तेः, तदभिप्रायेणैव शाण्डिल्यविद्यायां तस्य श्यामाकतण्डुलादप्यणीयस्त्वोक्तेः; दहरविद्यायां पुण्डरीकदहरत्वोक्त्यैव दहरत्वसिद्धावपि पुनर्दहरत्वोक्त्याऽतिसूक्ष्मत्वस्य व्यञ्जनाच्च । तैत्तिरीये ब्रह्मणोऽगुष्ठमात्रत्वश्रवणमंगुष्ठावच्छेदोपाधिकमिति तत्रैव स्पष्टम् ।

यत्तु श्वेताश्वतरे हृदयावच्छेदोपाधिकांगुष्ठमात्रत्ववर्णनं तत् ब्रह्मणो जीवात्माभिप्रायेणेति युज्यते; 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी । त्वं जीर्णो दण्डेन वञ्चसि त्वञ्जातो भवसि विश्वतोमुखः' (श्वे ४. ३) इत्यादितत्रत्यमन्त्रान्तरेषु जीवात्मना ब्रह्मोपवर्णनदर्शनात् । जीवे हि हृदयावच्छेदोपाधिकमगुष्ठ मात्रत्वमञ्जसा सम्भवति—अन्तःकरणसंपिण्डितो जीवः । अन्तःकरणं च प्रायेण हृत्कमलकोशस्थानम् । हृत्कमलकोशस्तु मनुष्याणामंगुष्ठमात्र इति, न तु तत्र ब्रह्मण इवाग्रसुषिरवृत्तित्वादिविशेषश्रवणमस्ति । स्पष्टञ्च हृदयावाछेदोपाधिकोऽगुष्ठमत्रो जीव इति 'अंगुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः' (क. ६. १७) इत्यत्रत्यमन्त्रस्योत्तरार्धे 'तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतम्' (क. ६. १७) इत्यस्मिन् शरीरविविक्ततया ज्ञातव्यत्वप्रतिपादनेन । स्पष्टञ्चान्येष्वपि मन्त्रेषु 'प्राणाधिपस्सञ्चरति स्वकर्मभिः अंगुष्ठमात्रो रवितुल्यरूपः' (श्वे. ५. ७–८) इत्यादिषु । प्रत्यभिज्ञापि स्मार्त्येवानुग्राहिका; स्मृतौ हृदया-वच्छेदोपाधिकांगुष्ठमात्रत्ववर्णनात् उत्क्रमणकाले जीवस्सह मनःप्राणेन्द्रियैर्हृदयं प्रविश्य तत एवोत्क्रामतीति श्रुति-प्रसिद्धेः । न च 'न तत्र सूर्यः' इति मन्त्रस्य तेजोविषयत्वे इवास्य मन्त्रस्य जीवविषयत्वे प्रकरणविरोधोऽस्ति; कठवल्लिषु 'येयं प्रेते' इति प्रश्नानुसारेण जीवस्यापि वक्तव्यत्वात् । तस्मात् प्रथमश्रुतहृदयावच्छेदोपाधि-कांगुष्ठमात्रत्वलिङ्गसमर्पितो जीव एव संकुचितदेहेन्द्रियादिभूतभव्येशितृत्वेन वा, असंकुचितभूतभव्येशितृत-योपास्यत्वेन वा 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यत्रेव तथाभूतेश्वरात्मतयोपास्यत्वेन वा अस्मिन्मन्त्रे प्रतिपाद्यत इति ।

एवं प्राप्ते **सिद्धान्तः**—अंगुष्ठप्रमितः परमात्मा; तदभिधानश्रुतिरूपादीशानशब्दात् । न च यौगिकार्थप्रतिसंबन्ध्यनुपादान एव रूढ्युन्मेष इति नियमः; तत्प्रतिसंबन्ध्युपादानेऽपि रूढशब्दश्रवणप्रयुक्त रूढ्युन्मेषस्यानिवार्यत्वात् । काव्येषु तु व्यंग्यार्थप्रधानेषु यस्य शब्दस्य यौगिकार्थो व्यञ्जनाव्यापारानुकूलस्तं शब्दं यौगिकार्थ एवोपक्षीणं कृत्वा तदीयरूढ्यर्थसमर्पणार्थं क्वचित् क्वचित् पदान्तरमुपाददत इति तत्पदान्तरोपादानं न यौगिकार्थप्रतिसंबन्ध्युपादानस्य रूढ्युन्मेषविरोधित्वप्रयुक्तम्; तदनुपादानेपि 'तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा । कुर्यां हरस्यापि पिनाकपाणेः धैर्यच्युतिं के मम धन्विनोऽन्ये' (कुमा. ३. १०) इत्यत्र तद्दर्शनात् । अत्र हि कैमुतिकन्यायोपयोगिसारतरायुधत्वव्यञ्जनानुकूले यौगिकार्थ एव पिनाकपाणिशब्दमुपक्षीणं कृत्वा तद्रूढिविषयशिवसमर्पणार्थपदान्तरं प्रयुक्तम् । एवमिहापि हिमवदौन्नत्यव्यंजनानुकूलयौगिकार्थसमर्पणव्यग्रं सरोरुहपदमिति तद्रूढ्यर्थबोधनाय पद्मपदं प्रयुक्तम् । किञ्च यस्य योगरूढिमतः पदस्य सन्निधौ तदलभ्यस्य कस्यचिदवयवार्थस्य विशेषकं किमपि प्रथममुपादीयते—यथा 'पद्मानि यस्याग्रसरोरुहाणि' इति यथा वा 'लपनं पद्ममेवास्या लावण्यसरसीरुहम्' इति—तत्पदं तद्विशेषितयौगिकार्थवशीकृतमिति तेनापि हेतुना तत्र रूढ्युन्मेषो न भवतीति वक्तुं शक्यम् । इह तु सङ्कोचकाभावादीशानपदयौगिकार्थतया तल्लब्ध एवार्थो 'भूतभव्यस्य' इत्यनेन पश्चादनुवदिष्यत इति नात्र तदनुन्मेषशावकाशः ।

नन्वीशानश्रुत्यनुरोधे प्रथमश्रुतं हृदयोपाधिकांगुष्ठमात्रत्वं प्रतिष्ठितं जीवलिङ्गं कथं नेतव्यमिति चेत्, जीवस्यैव सतोऽङ्गुष्ठमात्रस्यांगुष्ठपरिमाणजीवभावोपमर्देन 'तत्त्वमसि' वाक्य इव ब्रह्मभाव उपदिश्यत इति नेतव्यम्; प्रथमश्रुतस्याप्यनुवाद्यस्य तात्पर्यवता विधेयेन विरोधे सत्युपमर्दो युक्त एव, उक्थ्याग्निष्टोमाधिकरणन्यायात् । तथा हि—'उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थाऽन्यत्वम्' (जै. सू. १०. ५. १२) इति दाशमिकाधिकरणे 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः' इति वचनाद्राजन्यनिमित्तेनोक्थ्याग्निष्टोमयोः कर्तव्यः षोडशिग्रहयागाभ्यासः स्तोत्रशस्त्ररहितः स्यात्, तत्सहितो वेति संशये, उक्थ्यस्याग्निष्टोमस्य च सतः षोडशियागाभ्यासविधानात्तदङ्गस्य षोडशिस्तोत्रस्यानुष्ठाने क्रतोरुक्थ्यस्तोत्रान्तत्वरूपस्योक्थ्यत्वस्य अग्निष्टोमस्तोत्रान्तत्वरूपस्याग्निष्टोमत्वस्य चोपमर्दप्रसङ्गात् स्तोत्रशस्त्ररहितः स्यादिति प्राप्य, षोडशियागाभ्यासविधिना साङ्गस्य तस्य विधानेन तदङ्गभूतयोः स्तोत्रशस्त्रयोरनिवार्यत्वाद्विधेयेन संस्थान्तरेणानुवाद्ययोरुक्थ्याग्निष्टोमसंस्थयोरुपमर्दो न्याय्य इति स्तोत्रशस्त्रसहित एव स्यात् । एवञ्चोक्थ्यसंस्थोऽग्निष्टोम-

संस्थो वा यः क्रतुः प्राप्तः स राजन्यस्य न तथा, किन्तु प्राप्तसंस्थोपमर्देन षोडशिसंस्थः कर्तव्य इति । उक्तं च 'उक्थ्यसंस्थो हि यः प्राप्तस्तथाऽग्निष्टोमसंस्थिकः । राजन्यस्य तथा नासौ किन्तु षोडशिसंस्थिकम्' इति । एवमिहाप्यन्तःकरणोपाधिपरिकल्पितरूपतया योऽङ्गुष्ठमात्रः प्राप्तो जीवः स न तथा, किन्त्वसंकुचितसकलभूतभविष्यद्वर्तमानवस्तुनियन्तृत्वप्राप्तसकलान्तरवस्थानतया व्यापकः परमात्मेवैत्यर्थो ग्राह्यः ।

नन्विहांगुष्ठमात्रमनूद्य तस्येशानभावो विधीयते चेत् अस्तु नाम पूर्वरूपोपमर्दः । तदेव कुतोऽवसीयते । नह्यत्र किञ्चिदनुवाद्यं किञ्चिद्विधेयमित्यत्र ज्ञापकमस्तीति चेत् 'अंगुष्ठमात्रः पुरुषोन्तरात्मा' इत्युत्तरमन्त्रवशादेवमवसीयते । तत्र हि पूर्वार्द्धेन जीवमनूद्य 'तं स्वाच्छरीरात्प्रवृहेत्' इति तस्य स्थूलसूक्ष्मदेहद्वयादप्रमादेन बुद्धिबलेन विवेचनं विधाय विवेचितस्य तस्य 'तं विद्याच्छुक्रममृतम्' इति शुद्धब्रह्मभावो विधीयते । इहापि स एवार्थः संग्रहेण वर्ण्यते । अत्र 'अंगुष्ठमात्रः पुरुषः' इति जीवानुवादः । 'ज्योतिरिवाधूमकः' इति जडदेहान्तःकरणसंवलितस्य तस्य ततो विवेचनम् । 'ईशानो भूतभव्यस्य' इति तस्य ब्रह्मभावविधिरिति । ननु तद्वदत्र शुद्धब्रह्मभावोपदेशो न दृश्यत इति चेत्, न । अत्राल्पपरिमाणत्वोपमर्देन तद्विरोधिव्यापकब्रह्मभावप्रतिपत्तये व्यापकत्वोपलक्षकस्य सर्वनियन्तृत्वस्योपन्यासात् । उक्थ्याग्निष्टोमवाक्ययोरपि ह्यनूदितोक्थ्याग्निष्टोमसंस्थोपमर्दकविधेयषोडशियागसंस्थोपलक्षकं षोडशिग्रहणमेवोपन्यस्तम् । सूत्रगत एवकारः—कथं 'अहमिहैवास्मि सदने जानानः' इत्यल्पपरिमाणत्वेनानुभूयमानस्य व्यापकब्रह्मभावः ? — इत्याशङ्कायां वचनबलादेव, नह्यस्ति वचनस्यातिभार इति परिहारज्ञापनार्थः । १. ३. २४ ।

ननु जीवस्याप्यंगुष्ठमात्रत्वेनानुवादो न युक्तः । तस्याराग्रमात्रत्वश्रवणादित्याशंक्याह —

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् । २५ ।

जीवस्य हृद्यवस्थानमपेक्ष्य इदमंगुष्ठमात्रत्वमुच्यते । नाडीसञ्चारमपेक्ष्य त्वन्यत्र आराग्रमात्रत्वश्रवणम् । अत एवापरत्रातिसूक्ष्मनाडीसञ्चारमपेक्ष्य वालाग्रायुतभागत्वश्रवणमपि दृश्यते । नाडीहृदयादितत्तदवकाशानुसारिसङ्कोचविकासेनान्तःकरणेनावच्छिन्नो जीवोऽपि हि तथा तथा भवति । ननु हृदयापेक्षमप्यंगुष्ठमात्रत्वमनुपपन्नम्; हस्तिमशकादीनां हृदयपरिमाणभेदात् । न च तत्तदंगुष्ठपरिमाणं ग्राह्यम्; खरतुरगादीनामंगुष्ठाभावादित्याशङ्क्योक्तं 'मनुष्याधिकारत्वात्' इति । मनुष्याधिकारं शास्त्रम्, अतो मनुष्यान्प्रति जीवस्य

ब्रह्मभाव उपपादनीयः। मनुष्याणाञ्च हृदयं तदंगुष्ठमात्रमिति तदवच्छिन्नजीवस्य तथात्वेनानुवादो युज्यत एव। यत्तु भाष्ये ब्रह्मणोऽगुष्ठमात्रत्वोपपादनपरतयाऽस्य सूत्रस्य व्याख्यानम्, तत् अयं मन्त्रः 'तत्त्वमसि' वाक्यवज्जीवब्रह्माभेदपरमहावाक्यविषयेव ब्रह्मपरावान्तरवाक्यविषयाऽपि योजयितुं शक्य इति प्रौढिवादमवलंब्य, न तु भाष्याभिमतम्। अग्रे 'यदप्युक्तम्' इत्यादावंगुष्ठमात्र इत्यनेन जीवानुवाद इत्यस्यैवार्थस्यानुमोदनात्। नन्वित्थमंगुष्ठमात्रत्वश्रवणं मनुष्यदेहापन्नजीवविषयतया सङ्कोचनीयं चेत्, एवमेव भूतभव्येशानत्वश्रवणमपि देहेद्रियादिनियन्तृत्वविषयतया सङ्कोच्य कृत्स्नोऽयं मन्त्रः किमिति जीवपरो नाभ्युपेयते—इत्याशङ्कापरिहारार्थस्तुशब्दः। अनन्यगतिकतया कस्यचित्सङ्कोचः कृत इति तस्यापि सङ्कोचः कर्तुं न युक्तः; जीवस्यांगुष्ठमात्रत्वमुपसृत्य तदभेदेनोपदेश्ये ब्रह्मणि व्यापकतोपलक्षणत्वेन तदसङ्कोचोपपत्तेरिति परिहाराभिप्रायः। १. ३. २५.।

इति प्रमिताधिकरणम्। ७।



(८ अधिकरणम्)

**तदुपर्यपि बादरायणः सम्भवात्। २६।**

ब्रह्मविद्याधिकारित्वं मनुष्याणां यदीरितम्। तत्प्रसङ्गेन देवानामप्यस्तीति प्रसाध्यते॥
मनुष्याणामुपरि ये देवास्तेषाञ्च मन्यते। सूत्रकारोऽधिकारित्वं तत्रार्थित्वादिसम्भवात्॥
दिव्ये सुखे निमग्नानामपि मोक्षार्थिता भवेत्। तस्यापि निर्विशेषत्वात् क्षयसातिशयत्वयोः॥
तेषां सामर्थ्यमप्यस्ति पटुदेहेन्द्रियादिकम्। मन्त्रार्थवादेतिहासपुराणाद्युपवर्णितम्॥
तेषामनुपनीतानामधीतिर्नास्ति चेदपि। वेदो जन्मान्तराधीतः स्वयं भायान्महात्मनाम्॥
श्रुतश्चेन्द्रस्य विद्यार्थं गुरूपसदनं श्रुतौ। तेषामृषीणाञ्च नृणां मुक्तत्वमपि विद्यया॥
सूत्रे तदुपरीत्येतन्मनुष्याणामधस्तनान्। व्यावर्तयति पश्वादीन् ब्रह्मविद्याधिकारतः॥ १.३.२६।

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्। २७।**

यद्यवाप्य ब्रह्मविद्यामिन्द्राद्या मुक्तिमाप्नुयुः। यष्टव्यदेवताऽभावात् कर्मलोपो भवेत्तदा॥
इति चेन्नैवमाम्नायतदन्तेषु स्मृतिष्वपि। अनेकस्येन्द्रवह्न्यादिभावसम्प्राप्तिदर्शनात्॥

नक्षत्रेष्वर्थवादादिष्विन्द्रादीनामनेकता। यष्टृयष्टव्यभावादिभेदकैर्हि प्रदर्शिता ॥
ततश्च मुक्तिं कस्मिंश्चिद्विद्यया समुपेयुषि। तदन्य इन्द्रस्तत्काले यष्टव्यः कर्मणां भवेत् १.३.२७।

स्यादेतत्—

कर्मण्येवं विरोधस्य समाधानं वितन्वतः। इन्द्रादिशब्दे स भवेत् कर्माङ्गमनु श्रुते ॥
न ह्येक इन्द्रस्तस्यार्थो नियन्तुं शक्यते तदा। न चानेकत्र तद्वृत्तिर्निमित्तैक्यं विना भवेत् ॥
नैवास्ति डित्थशब्दस्य सङ्केतविषयेष्विव। अर्थेषु तेषु तेष्वेकं निमित्तं तस्य योजकम् ॥
क्रियेतेन्द्रादिशब्दस्य यदि डित्थादिशब्दवत्। प्रत्यर्थव्यक्तिसङ्केतस्तदा सापेक्षता भवेत् ॥
व्यवस्थितश्चार्थ एको मन्त्राणां नैव सम्भवेत्। तत्सम्भवे च तच्छून्ये कल्पे ते स्युर्निरर्थकाः॥
तस्मादिन्द्रादिशब्दस्य वाच्यो मन्त्रार्थवादयोः। नित्य एकैक एवार्थो न भिन्नः कालभेदतः ॥
यष्टृयष्टव्यभावस्तु न कर्मानधिकारिणाम्। अर्थवादैः प्रशंसार्थं कल्पितो भेदसाधकः ॥
ब्रह्मा विष्णुश्च रुद्रश्च साक्षाद्ब्रह्म च यष्टृताम्। यष्टव्यत्वञ्च तैर्नीतं वाच्यं तत्रैवमेव हि ॥
आत्मासाधारणं द्रव्यमन्यसाधारणं सुरैः। कृतं त्वास्त्विष्टिभिस्तेषां भेदसिद्धिः कथं ततः ॥
वस्वाद्युपासकानान्तु वस्वादिभवनोक्तयः। भोगसाम्यपराः कल्प्याः तैर्षां वस्वादिभिस्सह ॥
अन्यथा खलु वस्वादिसंख्याधिक्यं प्रसज्यते। परश्शतेषु युगपत्प्रेप्सुपूपासनाफलम् ॥
दृष्टा हि विष्णुभावस्य तद्यागफलताश्रुतेः। तद्भोगसाम्यपरता सर्वेषामपि सम्मता ॥
सृष्टिप्रलयवाक्यानामयन्तु विषयो भवेत्। देवानां देहनिकरः सृज्यते ह्रियते च यत् ॥
सर्गादौ भगवान्धाता यथापूर्वमकल्पयत्। इत्येवमादिवाक्यानां लभ्यते चैवमार्जवम् ॥
एवञ्चास्पृष्टदेहादौ तत्तदात्मैकवाचके। इन्द्रादिशब्दनिकरे न विरोधः प्रसज्यते ॥
अस्पृष्टमत्स्यरूपादौ परमात्मैकवाचके। विष्णुर्नारायणः कृष्णो विधुरित्यादिके यथा ॥
तथाचेन्द्रादिदेवानामिन्द्रत्वाद्यनपायतः। सद्यः सातिशयत्वं स्यात् कृच्छ्रञ्च प्रत्यादिकम् ॥
तस्मान्मुक्तावसाध्यायामर्थित्वं न सुपर्वणाम्। इत्याशङ्काऽपनोदार्थमिदं सूत्रं प्रवर्तते ॥

**शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्।** २८।

श्रुतिस्मृतिभ्यां देवानां शब्दप्रभवता यतः। अतोऽत्र नेदृशी शङ्काऽवकाशं प्रतिपद्यते।

एवं खल्वत्राशङ्का कृता—वर्तमानेन्द्रस्य विद्यया मुक्तौ यष्टव्येन्द्राभावादग्रे कर्मलोपो माभूदित्येतदर्थं तदानीमिन्द्रान्तरसृष्ट्यभ्युपगमे कर्माङ्गमन्त्रेषु 'इन्द्रागच्छ हरिव आगच्छ' 'आयाहीन्द्र पथिभिरीडितेभिस्सोमं पिब वृत्रहन् शूर विद्वान्' इत्यादिषु श्रुते इंद्रशब्दे विरोधः स्यात्। न हि भूतो भविष्यन्वर्तमानो वा तस्यैक एवेन्द्रो वाच्य इति नियन्तुं शक्यते; विनिगमनाविरहात्, इन्द्रान्तरे यष्टव्ये तस्य तदवाच्यत्वेनैन्द्र्या गार्हपत्य इव तस्य तत्र विनियोजकश्रुत्यभावेन च लिङ्गविनियोज्यानामैन्द्रमन्त्राणां तत्र विनियोगाभावप्रसङ्गाच्च। न च तावत्स्विन्द्रेष्विन्द्रशब्दस्य वृत्तिरेकं प्रवृत्तिनिमित्तं विना सम्भवति। प्रवृत्तिनिमित्तञ्चैकं डित्थशब्दस्य तत्सङ्केतविषयेष्विवात्रापि तावत्स्विन्द्रेष्वनुगतं नास्ति। एवमग्न्यादिशब्दानामप्यग्न्याद्यर्थेषु। यदि चैत्रमैत्रादीनां पुत्रेषूत्पन्नेषु तद्व्यवहारार्थं पित्रादिभिरिच्छया डित्थ इति सङ्केत इव तत्तत्कालवृत्तिष्विन्दादिषूत्पन्नेषु तद्व्यवहारार्थं काश्यपादिभिः स्वेच्छयेन्द्रोऽग्निर्मित्रो वरुण इत्यादिसङ्केतः क्रियेत, तदा वैदिकानामिन्द्रादिशब्दानां तत्तत्कालसङ्केतयितृपुरुषबुद्ध्यधीनसङ्केतापेक्षतत्तत्कालवर्तिभिन्नभिन्नार्थबोधकत्वे तत्सापेक्षत्वलक्षणमप्रामाण्यं स्यात्। व्यवस्थितश्चैकैकोऽर्थो न स्यात्। व्यवस्थितैकैकेन्द्राद्यर्थाभ्युपगमे च तदन्येन्द्रादिमति कल्पे 'इन्द्रागच्छ' इत्यादिमन्त्राणां विनियोगो न स्यात्। तस्मात्तेषामनपायीन्द्रत्वादिप्रवृत्तिनिमित्तो नित्य एकैक एवार्थः स्वीकर्तव्यः।

अत्रेयमाशङ्का स्यात्—नक्षत्रेष्ट्यर्थवादेषु 'इन्द्रो वा अकामयत ज्यैष्ठ्यं देवानामभिजयेयमिति स एतमिन्द्राय ज्येष्ठायै पुरोडाशमेकादशकपालं निरवपत्' 'अग्निर्वा अकामयत। अन्नादो देवानां स्यामिति। स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टादशकपालं निरवपत्' इत्यादिष्विन्द्रस्येन्द्रो यष्टा अग्नेरग्निः सोमस्य सोमः सवितुः सवितेत्यादिप्रकारेण यष्टृयष्टव्यभावश्रवणादिन्द्रभेदादिकं तावत्स्वीकर्तव्यम्। इन्द्रादीनां स्वस्वोद्देशेन द्रव्यत्यागात्मकयागानुष्ठानानुपपत्तेः स्वस्मै सङ्कल्प्यमानस्य द्रव्यस्य स्वत्वत्यागासंभवात्। एवमिन्द्रभेदादिकञ्च कल्पमन्वन्तरादिकालभेदेनोपपादनीयम्; युगपदिन्द्रद्वयाद्यभावात्। तथाच एतत्कल्पादिवर्तीन्द्रः पूर्वकल्पादिस्थितायेन्द्राय तदानीं हविर्निरवपदित्यादिस्तदर्थः पर्यवस्यतीति नेन्द्रादीनां नित्यत्वं युज्यते।

तथा मधुविद्यायां 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्ति' इत्याद्युपक्रम्य 'स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति। स य एत-

देवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति' इत्यादिश्रवणात्, उपास्येष्वन्यतमस्य वसुभावादिपरावृत्तिं विना तत्तदुपासकस्य वस्वादिभावप्राप्तौ 'अष्टौ वसव एकादश रुद्रा द्वादशादित्याः' इत्यादिश्रुतिप्रसिद्धवस्वादिसंख्याऽतिरेकप्रसङ्गाच्च । उपास्यानां वस्वादीनां यावदधिकारमवस्थाय परावृत्तौ पुनश्च वस्वन्तरादिसृष्टिकाले पूर्वं वस्वाद्युपजीव्यादित्यमण्डलगतरोहिताादिरूपात्मकामृतोपासनाकृतोऽपि तेषु तेष्वन्यतमभावं प्राप्नुवन्तीत्येव तदर्थः पर्यवस्यतीति वसुरुद्रादित्यमरुत्साध्यगणानामपि नित्यत्वं न युज्यते । एवञ्चान्येषामपि देवानां प्रसिद्धाप्रसिद्धानां नित्यत्वं न युज्यत इति कैमुतिकन्यायेन सिध्यति । अत एव वेदेषु वेदान्तेषु इतिहासपुराणेषु च इन्द्रादीनां सर्वेषामपि देवानां सृष्टिप्रलयौ वर्ण्येते इति ।

अत्रेदमुत्तरम्—यष्टृयष्टव्यभावस्तु नेन्द्रादिभेदसाधकः । देवैरप्यनुष्ठितानि कर्माणि मनुष्यैरनुष्ठेयानीति किमु वक्तव्यमिति कैमुतिकन्यायेन प्रशंसार्थं कल्पितो हि सर्वत्र 'देवा वै सत्रमासत' इत्याद्यर्थवादजाते कर्मानुष्ठातृभावः; वस्तुतो देवानां कर्म्माधिकाराभावेन बाधितत्वात् । तथा च यष्टव्या इन्द्रादयोऽपि ज्यैष्ठ्यादिफलमेताभिरिष्टिभिः प्राप्नुवन्, अन्यैस्तत्प्राप्त्यर्थमनुष्ठेया एता इति किमु वक्तव्यमित्येवंविधेनापि कैमुतिकन्यायेन प्रशंसार्थं यष्टृयष्टव्यभावोऽपि कल्पित एव स्यात् । श्रूयते हि बृहदारण्यके साक्षाद्ब्रह्मापि ब्रह्मविद्ययैव ब्रह्मभावं प्रापत्, अन्यैर्देवर्षिमनुष्यादिभिर्ब्रह्मभावप्राप्त्यर्थं ब्रह्मविद्याऽवाप्तव्येति किमु वक्तव्यमिति कैमुतिकन्यायेन प्रशंसार्थमर्थवादः 'तदाहुः यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेद्यस्मात्तत्सर्वमभवत्' इति । 'ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेदहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' इति, तथैव 'इन्द्रो वा अकामयत' इत्यादयोऽप्यर्थवादाः स्युः । तथा सति हि यष्टृपरेन्द्रादिपदानां भविष्यदिन्द्रादिभावेषु लक्षणा परिहृता भवति । अवश्यञ्च रोहिणीश्रवणार्द्रानक्षत्रेष्टिविध्यर्थवादेष्वेवमेवोपपादनीयम् । तर्हि ब्रह्मविष्णुरुद्राः सर्वकल्पानुयायिनः कल्पान्तरे ब्रह्मविष्णुरुद्रान्तराभावेनाभेदेऽपि यष्टृयष्टव्यभावं नीताः । ये तु ब्रह्मविष्णुरुद्रानप्यधिकारिजीवविशेषतया प्रतिकल्पं भिन्नान्मन्यन्ते, तैरप्यभिजिन्नक्षत्रेष्ट्यर्थवादे इत्थमुपपादनीयम् । तेन हि साक्षात्परं ब्रह्मैव यष्टृयष्टव्यभावं नीतम् ।

अस्तु वेन्द्रादीनां नक्षत्रेष्टिकल्पितो यष्टृयष्टव्यभावः । स त्विन्द्राादिभेदाभावेऽप्युपपद्यत एव । न हि नक्षत्रेष्टिषु केवला इन्द्रादयो यष्टव्याः, किन्तु ज्येष्ठादीनि नक्षत्राण्यपि । तथाचेन्द्रादिभिः स्वस्वास-

धारणमेकादशकपालादि द्रव्यं यागे ज्येष्ठानक्षत्रादिसाधारणं कृतमिति निर्वोढुं शक्यत्वान्न तत्र यष्टृयष्टव्यभावेन भेदसिद्धिशङ्कावकाशः। मधुविद्यायामुपासकस्य वस्वादिभावश्रवणं तु वस्वादिपदप्राप्तिपूर्वकं तत्तद्भोगसाम्यपरमुपपद्यते 'अस्माकं भ्रातॄणां मध्ये त्वमेकः' इति लौकिकवचनवत्। अन्यथाऽष्टाधिकसंख्येषूपासकेषु युगपदुपासनाफलप्राप्त्यर्थमुपस्थितेषु सर्वेषां वस्वादिभावप्राप्त्या तत्संख्याऽतिरेकः स्यात्। दृष्टश्च 'वैष्णवं वामनमालभेत स्पर्धमानः' इति विधिशेषस्य 'विष्णुरेव भूत्वेमान् लोकानभिजयति' इत्यर्थवादस्य जेतृत्वे विष्णुसाम्यमात्रपरत्वम्। इन्द्रादीनां प्रतिकल्पं पूर्वदेहोपसंहारदेहान्तरसृष्टी स्तः पुण्डरीकाक्षस्येव। 'धर्मसंस्थापनार्थाय सम्भवामि युगे युगे' (भ. गी. ४. ८) इत्यादिस्मृतिप्रसिद्धौ पूर्वदेहान्तर्धानदेहान्तरपरिग्रहाविति स एव देवसृष्टिप्रलयवाक्यानां विषयः।

एवञ्च 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (महानारा. ५. ७) इत्यादिश्रुतीनामप्याञ्जस्यं लभ्यते। यथा राष्ट्रक्षोभे या दग्धगृहाः प्रजाः, ता एव पुनर्गृहान्तरनिर्माणेन राजा कल्पयति, एवं याः सूर्याचन्द्रमसद्युपृथिवीप्रभृतयो देवताः प्रलयेनोपसंहृतदेहास्ता एव सर्गादौ पुनर्देहान्तरनिर्माणेन प्रजानां पतिरकल्पयदिति हि तदर्थः प्रतीयते। न चैवमपि देवमनुष्यादिशब्दानामिवेन्द्रादिशब्दानां देहविशिष्टात्मवाचकत्वस्य वक्तव्यत्वादेकस्येन्द्रादेः प्रतिमन्वन्तरं भिन्नानां बहूनां देहानां तत्तन्मात्रानुगतजात्यवच्छिन्नत्वाभावदेकैकदेहविशिष्ट एवेन्द्रादौ पृथक्पृथक्सङ्केतोऽङ्गीकर्तव्य इति पुनरपि शब्दविरोधस्तदवस्थ इति वाच्यम्। इन्द्रादिशब्दानां वज्रायुधादीनीव विग्रहानपि विहाय आत्मवाचकत्वोपपत्तेः। विष्ण्वादिशब्दानां परस्परविलक्षणमत्स्यादिमूर्तीरपहाय व्यूहावतारादिसकलमूर्त्यनुस्यूतपरमात्ममात्रवाचकत्वदर्शनात्। तस्मान्नित्यसंसारिवादिमते संसारित्ववन्नित्यत्वेनानपायिन इन्द्रत्वादेर्विद्ययाऽपासितुमशक्यत्वादिन्द्रचन्द्रादिपदानां सातिशयत्वं सातिशयमुक्तिवादिमते मुक्ताविव संसार एव सोढव्यम्। तथा प्रलयमन्वन्तराद्यखिलमपीति देवानां मुक्तेः साधयितुमशक्यतया तत्साधनसामर्थ्याभावात्, तदुपयोगिश्रवणादिप्रवृत्तिकरार्थित्वासम्भवाच्च न मुक्तिसाधनविद्यार्थेषु श्रवणमनननिदिध्यासनसगुणोपासनेष्वधिकार इति।

नेयमाशङ्काऽवकाशं लभते, 'एत इति वै प्रजापतिर्देवानसृजत, असृग्रमिति मनुष्यान्, इन्दव इति पितॄन्' 'स भूरिति व्याहरत् स भूमिमसृजत, स भुव इति व्याहरत् सोऽन्तरिक्षमसृजत'

(तै. ब्रा. २. २. ४. २) 'वेदेन रूपे व्याकरोत् सतासती प्रजापतिः' 'सर्वेषां तु स नामानि कर्माणि च पृथक्पृथक्। वेदशब्देभ्य एवादौ पृथक्संस्थाश्च निर्ममे' 'नामरूपञ्च भूतानां कृत्यानाञ्च प्रपञ्चनम्। वेदशब्देभ्य एवादौ देवादीनाञ्चकार सः' (मनु. १. २१) इत्यादिश्रुतिस्मृतिगणाभ्यां देवादिकस्य सर्वस्य जगतो वेदशब्दप्रभवत्वावसायात्।

ननु वेदवत् ब्रह्मप्रभवस्य जगतः कथं वेदशब्दप्रभवत्वं कथञ्च तावतेन्द्रादिशब्दविरोधपरिहार इति चेत्; अत्राहुः—पूर्वस्यामिन्द्रादिव्यक्तौ विनष्टायां जगत्स्रष्टा वैदिकादिन्द्रादिशब्दान्मनसि विपरिवर्तमानात्पूर्वेन्द्राद्याकारैश्वर्यादिकं बुद्ध्यावालिख्य तदाकारैश्वर्ययुक्तामेवापरामिन्द्रादिव्यक्तिं सृजति, यथा कुलालो घटादिशब्दान्मनसि विपरिवर्तमानात् प्राचीनघटाद्याकारमनुसन्धाय तदाकारां घटादिव्यक्तिं सृजतीत्यनेन रूपेण निमित्तकारणभूतवैदिकशब्दप्रभवत्वमिहाभिमतम्। तेन चेन्द्रादिशब्दानां जातिनिमित्तकत्वद्योतनात् साङ्केतिकत्वशङ्कामूलकशब्दविरोधपरिहारो लभ्यते। जातिनिमित्तकेभ्यो हि घटादिशब्देभ्य उक्तरीत्या निमित्तभूतेभ्यस्तत्तदर्थाः प्रभवन्तो दृश्यन्ते। साङ्केतिकास्तु डित्थादिशब्दाः प्रागुत्पन्नैः पित्रादिभिर्व्यवहारार्थं नामधेयापेक्षैः प्रयोज्यमानाः स्वयमेवार्थेभ्यः प्रभवन्ति। जातिनिमित्तकत्वञ्चेन्द्रादिशब्दानां पूर्वापरेन्द्रादिविग्रहानुगतैकैकजातिसद्भावान्मनुष्यपशुपक्ष्यादिशब्दन्यायेन, त्रिदिवत्वादिजात्यवच्छिन्नैकैकस्थानाधिपत्यसद्भावान्नरपत्यमात्यादिशब्दन्यायेन चोपपद्यत इति।

अत्रेदमाक्षिप्यते—इन्द्रादिशब्दानां उक्तरीत्या गौणमप्यर्थसृष्टिनिमित्तत्वमसिद्धम्; अर्थसिध्यर्थमपेक्षितस्य तदनुसन्धानस्य प्राक्तनतदनुभवादेव सम्भवेन तद्वाचकशब्दानपेक्षणात्। अत एव कैश्चिदुपकरणैः किञ्चिदर्थनिर्माणं दृष्ट्वा तद्वाचकशब्दानभिज्ञा अपि नानाशिल्पनिपुणास्तैरुपकरणैस्तथाभूतमेव व्यक्त्यन्तरं निर्मिमाणा दृश्यन्ते। शिल्पिनां प्रतिमादिनिर्माणार्थं तदनुसन्धानस्य शास्त्रापेक्षत्वेऽपि परमात्मनो जगत्सृष्ट्यर्थं जगदनुसन्धानस्य तत्सापेक्षत्वमसिद्धम्; तस्य स्वत एव सर्वज्ञत्वात्। अत एव शास्त्रयोनित्वाधिकरणे तस्य शास्त्रानपेक्षमेव सार्वज्ञ्यं शास्त्रयोनित्वेन साधितम्। आगन्तुकसार्वज्ञ्यश्चतुर्मुखो देवादीनां नामरूपस्रष्टा, न साक्षात् परमात्मा इति चेत्, न। देवादीनां नामरूपस्रष्टा परमात्मैवेति संज्ञामूर्तिक्लृप्त्यधिकरणे निर्णीतत्वात्। अस्तु वा चतुर्मुखोऽपि, तदीयस्यापि सृज्यानुसन्धानस्य वाचकशब्दापेक्षत्वमसिद्धम्; 'ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः। ऐश्वर्यं चैव धर्मश्च सहसिद्धं चतुष्टयम्' इति पूर्वकल्पानुष्ठितसत्कर्माधीनस्यापि

तत्सार्वज्ञ्यस्य सहजत्वश्रवणात् । देवादीनां वाचकशब्दप्रभवतायां 'एत इति वै प्रजापतिर्देवानसृजत' इत्यादि-श्रुत्युदाहरणमप्ययुक्तम्; 'एते' 'असृग्रम्' 'इन्दवः' इति पदानां देवमनुष्यपितृवाचकत्वाभावात्, कथञ्चि-द्योगादिनापि तत्तत्सृष्ट्युपयोगितत्तदाकृतिविशेषोपस्थितिजनकत्वासम्भवाच्च ।

यत्तु—एतच्छब्दो देवानां करणेष्वनुग्राहकत्वेनस निहितानां स्मारकः । असृग्रुधिरं; तत्प्रधानदेहे रममाणानां मनुष्याणां असृग्रशब्दः । इन्दुमण्डलस्थपितृणामिन्दुशब्द इति, तदयुक्तम्; कल्पादौ देवसृष्टेः पूर्वं तत्स्रष्टुः करणेष्वधिष्ठातृत्वेन देवानां सन्निधानासम्भवात् । तत्सम्भवेऽप्येत इत्येकेन सर्वनामशब्देन तत्तद्देवासाधारणाग्निसूर्येन्द्रादिपदजातेनेव तत्तद्देवजातीयव्यक्त्यन्तरसृष्ट्यनुकूलायाः परस्परव्यावृत्तजात्यवच्छिन्न-तत्तद्देवोपस्थितेरसम्भवात् । तत्सम्भवेऽपि 'एते असृग्रमिन्दवस्तिरः पवित्रमाशवः । विश्वान्यभिसौभग' इत्यस्मिन्मन्त्रे लतारूपसोमदेवत्यबहिष्पवमानस्तोत्रविनियुक्ते 'छन्दांसि वै सोममाहरंस्तं गन्धर्वो विश्वावसुः पर्यमुष्णात्तेनापः प्राविशत् । तं देवता अन्वैच्छन् । तं विष्णुरप्सु पर्यपश्यत् । स ह्यकाङ्क्षदयं नु नाप्य इति । तं पुरा प्रास्फुरत्तस्मात् पृथगिन्दवोऽसृज्यन्त । स देवताभ्योऽभितस्तिष्ठन्तीभ्यः एते असृग्रमिन्दव इति प्राब्रवीत् । बहिष्पवमानेन वै यज्ञः सृज्यते । यदेते असृग्रमिन्दव इति प्रस्तौति । यज्ञमेव तत्सृष्टं देवेभ्यः प्राहेति । एत इति वै प्रजापतिर्देवानसृजत' इत्याद्यर्थवादानन्तरश्रुतविनियोगानुरोध्यर्थवादानुसारेण, वेदभाष्यकारादिकृतव्याख्यानानुसारेण च 'एते इन्दवस्सोमाः, तिरःपवित्रं तिर्यग्भूतं दशापवित्रं प्रति, आशवः शीघ्रगामिनः, विश्वानि सौभगा सर्वाणि सौभाग्यानि अभि उद्दिश्य, असृग्रं असृज्यन्त' इत्येवमर्थके श्रुतस्यैत इत्यस्येन्दुशब्दोक्तसोमविशेषणतया करणाधिष्ठातृदेवपरामर्शित्वासम्भवात् ।

विनियोगानुसार्यर्थवादविरोधिनः 'एते इति वै प्रजापतिर्देवानसृजत' इत्यर्थवादस्य 'नृमेधश्च परुच्छेपश्च ब्रह्मवाद्यमवदेताम्' इत्याद्यर्थवादस्य अग्निसृष्टिसामर्थ्याधानवर्णनेन, 'तं त्वा समिद्भिरङ्गिर-इत्यादिमन्त्रस्तुताविव देवादिसृष्टिसामर्थ्याधानवर्णनेन 'एते असृग्रमिन्दवः' इति मन्त्रस्तुतौ तात्पर्योपपत्तेः । अस्यार्थवादस्य प्रथमश्रुतत्वेन बलवत्त्वोक्तावतोऽपि प्रथमश्रुतेन 'एते असृग्रमिन्दव इति बहुभ्यः प्रतिपदं कुर्यात्' इति बहुयजमानकक्रतुगतबहिष्पवमानस्तोत्रे उदाहृतमन्त्रस्य विनियोगविधेः शेषेण 'एते इति सर्वानेवैनाननूच्यै भूत्वा अभिवदति' इत्यर्थवादेन 'एते' इत्यस्य यजमानपरत्वस्य वक्तव्यतया करणाधिष्ठातृदेवपरामर्शित्वस्यानु-पपत्तेः, अर्थवादद्वयमध्ये श्रुतस्याप्यस्यैव बलवत्त्वेऽपि 'यदेत इति तस्माद्यावन्त एवाग्रे देवास्तावन्त इदानीम्'

इत्यस्यैव शेषभूतेनानन्तरश्रुतार्थवादेन 'एते' इत्यस्यातीतवर्तमानकल्पयोरष्टौ वसव एकादश रुद्रा इत्यादि-देवगणसङ्ख्यासाम्यपरतया व्याख्यातत्वेन तत्तदसाधारणजात्यवच्छिन्नकरणाधिष्ठातृदेवपरामर्शित्वोक्तेः कथमप्यव-काशाभावाच्च । एतेन—देवादिसृष्टेर्वैदिकशब्दप्रभवत्वे 'स भूरिति व्याहरत्' इत्यादिश्रुतिस्मृत्युदाहरणमपि निरस्तम् ; जगत्स्रष्टुः सहजसार्वज्ञ्याधीनाया देवादिसृष्टेर्वैदिकशब्दालोचनाधीनसृज्यानुसन्धाननिरपेक्षत्वेन तस्यापि श्रुतिस्मृतिगणस्य 'जगत्स्रष्टुरपि सृष्टिसामर्थ्याधायका वैदिकशब्दाः' इत्यनेन रूपेण वेदस्तुतिपरत्वस्यैव वक्तव्यत्वात् । पूर्वोक्तेरेन्द्राद्यनुगतजात्युपाधिप्रदर्शनेन शब्दविरोधपरिहारविवक्षायां च तदेव सूत्रे साक्षात्प्रदर्शनीयम्, न तु तदुपपादकत्वेनाभिमतं दुरुपपादं च इन्द्रादीनां वेदशब्दप्रभवत्वम् । तत्र श्रुतिस्मृतिदिदर्शयिषायां च 'श्रुतिस्मृतिभ्याम्' इत्येव सूत्रणीयम्, न 'प्रत्यक्षानुमानाभ्याम्' इति; अस्फुटार्थत्वात्, गुरुत्वाच्च । तस्मात् सर्वमिदमसञ्जसमिव भाति ।

अत्र ब्रूमः—

सृष्टिषु त्रिदशादीनां सरसीरुहभूरपि । कर्तैव कलशादीनां कुलाल इव सृष्टिषु ॥
अत एव तपस्तस्य सृष्टिसामर्थ्यसिद्धये । इतिहापुराणेषु प्रपञ्चेन प्रदर्शितम् ॥
सृष्ट्वा समादिशत्तस्मै वेदानीश इतीरितम् । 'यो ब्रह्माणम्' इति श्रुत्या यत्तस्यायं किलाशयः ॥
शिल्पी यथा शिल्पशास्त्रवचनेभ्यो मरुत्वताम् । विज्ञाय नामरूपाणि निर्माति प्रतिमादिकं ॥
तथैव त्रिदशादीनां नामरूपाणि सर्वशः । विज्ञाय वेदशब्देभ्यो विश्वं वेधास्सृजत्विति ॥
एवं च लब्धं सार्वज्ञ्यं जातमात्रेण वेदतः । सहजं तेन तत्सृष्टा देवास्स्युर्वेदशब्दजाः ॥
यद्यपीन्द्रस्सहस्राक्ष इत्यादेरेव वैदिकात् । नैते असृग्रमित्यादेश्शब्दादिन्द्रादिसम्भवः ॥
देवसङ्ख्याकृतिरपि पूर्वकल्पानुवर्तिनी । अष्टौ वसव इत्यादेर्नैतस्मादेत इत्यतः ॥
तथापि माहिमाऽन्यस्या वैदिक्याः पदसंहतेः । प्रत्यासत्त्योपचारेण स्तुतयेऽन्यत्र वर्ण्यते ॥
कल्पवृक्षवलक्षांशुलक्ष्मीप्रभवतादिकः । कलशाब्ध्यादिमहिमा लवणाम्बुनिधाविव ॥
समुद्रमथनोद्भूतशिवभूषणतात्मकः । कलाधर्म इव व्योम्नि चरिष्णौ चन्द्रमण्डले ॥
सर्गाद्यकालजैकैकविप्रादिव्यक्तिमात्रगम् । मुखबाहूरुपज्जत्वं वर्णेष्वद्यतनेष्विव ॥
एत इत्यादिशब्दानां देवसंख्याद्यवाचिनां । तादर्थ्योक्तिस्तु नेतव्या स्वपित्यादिनिरुक्तिवत् ॥

भाष्ये तु वेदाद्देवादिप्रभवोऽस्ति श्रुतीरितः । इत्येतल्लक्षकतया साऽपि श्रुतिरुदाहृता ॥
पूर्वापरेन्द्रादिगतजातीनामेव सिद्धये । वेदशब्दप्रभवतां देवादीनामसूत्रयत् ॥
नामरूपाण्यनुस्मृत्य सृष्टानां हि घटादिवत् । समाननामरूपत्वं देवादीनां प्रसिध्यति ॥
प्रसिध्यन्ति ततस्तेषां नाम्नां व्यक्तिषु हेतवः । समानाकृत्यभिव्यंग्या वासवत्वादिजातयः ॥
साक्षात्तु जातिवाचित्वं हेतूकर्तुं न शक्यते । असिद्धं तद्धि शंक्येत परासंप्रतिपत्तितः ॥
समाननामरूपत्वं हेतूकर्तुं न शक्यते । तत्रापि हेतुरत्रोक्तस्सोऽप्यग्रे दर्शयिष्यते ॥
इन्द्रादिदेवभावस्य कर्मप्रभवताऽऽत्मकम् । अर्थान्तरमपि क्रोडीकर्तुश्चेत्थमसूत्रयत् ॥
समाननामाकृतयो बहवस्सन्तु विग्रहाः । देवत्वं त्वनपाय्यस्त्वित्याशङ्का तेन वार्यते ॥
कर्मजत्वेऽपि देवानां यौगपद्येऽपि कर्मणां । अष्टौ वसव इत्यादिसंख्याया न भवेत् क्षतिः ॥
संख्याश्रुतिबलात् कर्मविपाके कल्प्यते क्रमः । यौगपद्यमिवैतस्मिन् प्रलयोत्पातवर्णनात् ॥
यत्प्रत्यक्षानुमानाभ्यामित्यसूत्रयदस्फुटम् । तदप्यर्थान्तरं तेन क्रोडीकर्तुं न तद्वृथा ॥
प्रत्यक्षं प्रतिमास्वेतच्छब्दात् प्रभवतीति यत् । अनुमेयं विरिञ्चेन सृष्टेषु सुमनस्स्विति ॥

अयमत्र परिहारार्थः—यद्यपि संज्ञामूर्तिक्लृप्त्यधिकरणे नामरूपव्याकरणं परमेश्वरकर्तृकमिति निर्णीतम्, तथाऽपि घटादिसृष्टिषु कुलालादिवद्देवादिसृष्टेषु चतुर्मुखोऽपि कर्तैव; इतिहासपुराणेषु तस्य सृष्टिसामर्थ्यसिद्धये तपश्चरणस्य तल्लब्धसामर्थ्येन देवादिस्रष्टृत्वस्य च वर्णनात्। तं सृष्ट्वा परमेश्वरस्तस्मै वेदानप्युपदिदेशेति 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये' (श्वे. ६. १८.) इति श्वेताश्वतरोपनिषन्मन्त्रे श्रूयते। तत्र जगत्सृष्ट्यधिकारितया सृष्टाय प्रथमं वेदोपदेष्टुरित्थमाशयो वर्णनीयः—यथेदानीं शिल्पी शिल्पशास्त्रवचनेभ्यो देवादीनां नामरूपाणि विज्ञाय प्रतिमादिकं निर्माति, एवञ्चतुर्मुखोऽपि वेदादिवचनेभ्यस्तन्नामरूपाणि विज्ञाय देवादिकं सर्वं जगत्सृजतु इति। तस्य परमेश्वरोपदिष्टवेदलब्धं सार्वज्ञ्यं जातमात्रेण लब्धत्वात् सहजसिद्धमिति पौराणिकैर्गीयते। ततश्च वेदलब्धसृष्ट्युपयोगिनामरूपविज्ञानेन तेन सृष्टा देवा वेदशब्दप्रभवा इति युक्तमेव। यद्यपि इन्द्रादिनामानि सहस्राक्षत्वादिरूपप्रतिपादकपदानि च येषु वेदवाक्येषु सन्ति, तेभ्य एवेन्द्रादीनां तत्तन्नामरूपविशिष्टानां प्रभवः, न तु 'एते असृग्रमिन्दवः' इत्यादिपदसंहतेः; यद्यपि (च) 'अष्टौ वसवः' इत्यादिश्रुत्यन्तरादेव देवसंख्याक्रमिनात्र

त्यादिन्दुविशेषणात् 'एत' इति पदात्, तथाप्यन्येषामपि वैदिकपदानां महिमा वैदिकत्वसामान्येन तत्सन्निकृष्टेष्वन्येषूपचारेण स्तुतयेऽर्थवादेषु वर्ण्यते; काव्येषु यथा कल्पवृक्षप्रभवत्वादिः क्षीरसमुद्रस्य महिमा समुद्रत्वसामान्याल्लवणसमुद्रे वर्ण्यते, समुद्रमथनप्रभवत्वादिः कलाधर्मश्चन्द्रत्वसामान्यात् प्रसिद्धे चन्द्रमण्डले वर्ण्यते, मुखजत्वबाहुजत्वादिः सर्गाद्यकालप्रभवैकव्यक्तिधर्मोऽद्यतनेष्वपि ब्राह्मणक्षत्रियादिषु वर्ण्यते।

यत्तु 'एते असृग्रमिन्दवः' इति मन्त्राम्नातानामेत इत्यादिपदानामर्थवादेषु देवसंख्यादिवाचित्ववर्णनं तत् 'स्वपिति' इत्यादिनिरुक्तिवद्यथाकथञ्चित् तत्तत्पदशक्तिसंपादनेन स्तुत्यर्थमिति नेतव्यम्। श्रूयते हि 'यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति' (छा. ६. ८. १) 'यत्रैतत्पुरुषोऽशिशिषति नाम आप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षते अशनाया' (छा. ६. ८. ३.) इत्यादि। न हि स्वशब्दप्रातिपदिकाप्युपसृष्टैतिधात्वन्तररूपावयवद्वयघटितःस्वपितिशब्दः; न वा बुभुक्षायां निपातितोऽशनायाशब्दो गोनायादिशब्दवत् कर्मोपपदान्नयतेरणन्तः; तथाप्यक्षरसाम्यमात्रेण तत्र यथाऽर्थवादेषु तत्तदर्थवर्णनमेवमिहापि नेतव्यम्। यत्तु भाष्ये देवानां वेदशब्दप्रभवतायां 'एत इति वै प्रजापतिर्देवानसृजत' इत्यादेरविवक्षितस्वार्थस्यार्थवादस्य प्रमाणतया प्रदर्शनं तदस्मिन्नर्थे श्रुतयः सन्तीति श्रुत्यन्तरोपलक्षकतया, न तु स एवार्थवादस्तत्र प्रमाणमित्याशयेन। अत एव 'स भूरिति व्याहरत्' इत्यादीनि श्रुत्यंतराण्यपि भाष्ये प्रदर्शितानि। यदुक्तम्——शब्दविरोधपरिहारार्थमिन्द्रादिशब्दानामिन्द्रत्वादिजातिवाचित्वे, तत्तत्पदविशेषाधिपत्यरूपोपाधिवाचित्वे वा हेतूकर्तव्ये किमर्थं सूत्रे देवानां शब्दप्रभवत्ववर्णनम्?—इति; तत्रेदमुत्तरम्——जातिवाचित्वं पूर्वोत्तरेन्द्रादिगतजातिसिद्धिसापेक्षम्, उपाधिवाचित्वं तद्घटकपूर्वोत्तरेन्द्रादिपदगतजातिसिद्धिसापेक्षमिति तासामेव जातीनां सिद्धये देवादीनां तत्तत्पदविशेषाणां च वेदोपवर्णिततत्तन्नामरूपानुसन्धानपूर्वकं प्रजापतिना सृष्टत्वं सूत्रे वर्णितम्। तेन हि पूर्वोत्तरेन्द्रादिषु, तत्पदादिषु च घटादिष्विव नाम्नामाकृतीनाञ्च समानत्वं सिध्यतीति तेषां नाम्नां साक्षादिन्द्रादिषु प्रवृत्तिनिमित्तभूततादृशोपाधिसङ्घटनसमर्थाश्च समानाकृत्यभिव्यङ्ग्या इन्द्रादिगतास्तत्पदविशेषगताश्च जातयः सिध्यन्ति। साक्षाज्जातिवाचित्वस्य हेतूकरणे त्विन्द्रत्वादिजातीनां पूर्वपक्ष्यसम्मतत्वादसिद्धिशङ्का स्यात्। यद्यपि तासां जातीनां साक्षात्साधकं समाननामरूपत्वं सूत्रयितुं शक्यम्,

तस्योदाहरिष्यमाणश्रुतिस्मृतिसिद्धत्वात्, तथापि तद्धेतुदार्ढ्यार्थं तस्याप्युपपादकं देवानां शब्दप्रभवत्वं सूत्रितम्। सोऽपि हेतुः 'समाननामरूपत्वात्' (ब्र. सू. १. ३. ३०) इति सूत्रे दर्शयिष्यते।

अपिच देवत्वेन्द्रत्वादीनां कर्म्माधीनत्वरूपमर्थान्तरं गर्भीकर्तुमपि 'अतः प्रभवात्' इति सूत्रितम्। अस्मिन्नर्थे 'अत' इत्यनेन पूर्वसूत्रप्रकृतकर्मपरामर्शः। प्रभवः प्रादुर्भावः कर्मजन्येष्विन्द्रादिविग्रहेषु देवत्वेन्द्रत्वादिजातिविशेषाणामभिव्यक्तिः। प्रसिद्धं हि देवत्वादीनां कर्माधीनत्वम्। तथा हि—छन्दोगब्राह्मणे तावत् 'अतिरात्रः पृष्ठ्यष्षडहो महाव्रतं पृष्ठ्यष्षडहस्त्रयस्त्रिंशारंभणोऽतिरात्रः एताभिर्वै देवा देवत्वमगच्छन् देवत्वं गच्छंति य एता उपयन्ति' इति देवत्वस्य कर्माधीनत्वं श्रूयते। बृहदारण्यकोपनिषदि च 'तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यं नवतरं कल्याणतरं रूपं कुरुते, एवमेवायमात्मेदं शरीरं निहत्याविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम्' (बृ. ४.४. ४) इति कर्म(र्मि)णामैहिक शरीरत्यागानन्तरं पितृगन्धर्वदेवादिरूपप्राप्तिप्रतिपादनेन देवत्वादीनां कर्मविशेषाधीनत्वं ख्याप्यते। इतिहासपुराणेषु चेन्द्रादिभावस्य शताश्वमेधादिप्राप्यत्वमुपवर्ण्यते। नहुषचरितपश्चेन्द्रोपाख्यानादिष्विन्द्रादिभावस्याप्राप्तस्य प्राप्तेः प्राप्तस्य निवृत्तेश्च प्रतिपादनेन तत्तत्कर्माधीनत्वं ज्ञाप्यते।

एवं देवत्वादीनां श्रुत्यादिप्रसिद्धकर्माधीनत्वसूत्रणेनेयं शङ्का व्यावर्त्यते—सन्तु नामेन्द्रादीनां प्रतिकल्पं नवनवा विग्रहास्समानाकृतयः, तथापि तेषां देवत्वेन्द्रत्वादिकं नित्यमनपाय्यस्तु, इति। इत्थं च तद्व्यावर्तनम्—देवत्वादीनां तावत् कर्माधीनत्वं श्रुतिस्मृतिषु प्रसिद्धं, तत्तु श्रुतिस्मृतिस्वारस्येन तथैवाङ्गीकर्तुं युक्तम्, इन्द्रादिशब्दानामुक्तरीत्या जातिवाचित्वसमर्थनेन शब्दविरोधस्य परिहृततया तत्परिहारार्थमिन्द्रत्वादिनित्यत्वस्यासमर्थनीयत्वेन तदन्यथानयनक्लेशायोगात् इति। देवानां कर्मजत्वेऽपि तत्कर्मानुष्ठातॄणामानन्त्येऽपि तेषां कर्मणां यौगपद्यसंभवेऽपि न वस्वादिसंख्यानियमभङ्गः प्रसज्यते। यतो वस्वादिसंख्याश्रुतिबलेन तेषां कर्मणां विपाकक्रमः कल्प्यते प्रलयश्रुतिबलेन भिन्नकालजानामपि सर्वप्राणिगतदेहादिवियोजककर्मणां विपाकयौगपद्यवत्, उत्पातश्रुतिबलेन शिथिलिनीशलभावुद्गमहेतुतदीयकर्मणां विपाकयौगपद्यवच्च।

यत्तु—'श्रुतिस्मृतिभ्याम्' इति स्फुटार्थे लघुनि सूत्रे कर्तव्ये किमर्थं 'प्रत्यक्षानुमानाभ्याम्' इति सूत्रितमिति चोद्यम् तत्रेदमुत्तरम्—तेनाप्यर्थान्तरं क्रोडीकर्तुं तथा सूत्रितमिति न तद्व्यर्थम्। अर्थान्तरं

च देवादीनां शब्दप्रभवत्वे श्रुतिस्मृत्यनुग्राहकयुक्तिरूपम्। यद्धि शास्त्रावगम्यरूपविशेषं वस्त्वन्येन निर्मीयमाणं दृष्ट्वा केन चिद्बुद्धिपूर्वकं निर्मीयते तच्छास्त्रजन्यतन्नामरूपावगत्यैवेति शिल्पशास्त्रज्ञेन निर्मीयमाणेषु प्रतिमादिषु सर्वसंवेद्यमेव तत्। तमेव प्रतिमादिषु गृहीतं नियममवलंब्य सर्गादौ विरिंचेन सृष्टेषु देवादिषु अनुमीयते इति। तस्मात् सर्वं समंजसमेव। एवं देवानां ब्रह्मविद्यार्थश्रवणाद्यधिकारमभ्युपगच्छतः सूत्रकारस्य मते इन्द्रादीनामेकैकव्यक्तिताङ्गीकारे तन्मुक्त्यनन्तरं यष्टव्येन्द्राद्यभावात् कर्मणि विरोधः स्यात्। अनेकव्यक्तित्वाङ्गीकारे तेषामिन्द्रादिपदेषु क्रमेणागच्छताममात्यसेनापत्यादिपदेष्वागच्छतामिवानुगतानतिप्रसक्तेन्द्रादिशब्दप्रवृत्तिनिमित्तत्वयोग्यजातिमत्त्वे प्रमाणाभावात्तेषु शक्तिग्रहासम्भवेनेन्द्रादिशब्दे विरोधः स्यादिति शङ्कापरिहारार्थतया 'विरोधः कर्मणीति चेत्' इत्यादिसूत्रद्वयस्य भाष्याभिप्रेतयोजना दर्शिता।

अथ देवतानां विग्रहाङ्गीकारे कर्मणि, शब्दे च विरोधः स्यादिति शङ्कापरिहारार्थतया सूत्रद्वयस्य योजनां भाष्ये कण्ठतः प्रदर्शितामुपन्यस्यामः। देवतानां विग्रहाभ्युपगमे यागादिकर्मणि सन्निधानेन भाव्यम्; विग्रहवतोऽङ्गस्य ऋत्विगादिवत् सन्निधाय क्रतूपकारकत्वनियमात्। न च तासां यागादिदेशे सन्निधानमङ्गीकर्तुं शक्यम्; युगपत् प्रवृत्तानेकयागदेशगमनासम्भावत्, प्रत्यक्षबाधितत्वाच्च; इत्याद्यसूत्रे शङ्का। देवतानां योगिनामिव युगपदनेकदेहप्राप्तेः श्रुतिस्मृतिषु दर्शनात्, सामर्थ्यविशेषेणास्मदाद्यदृश्यत्वसम्भावाच्च यागदेशे तासां सन्निधानं सम्भवतीति तत्परिहारः। अथवा माभूद्यागदेशे देवतासन्निधानम्। स्वस्थानस्थितामेव देवतामुद्दिश्य युगपद्यजमानाः स्वस्वद्रव्यं त्यक्ष्यन्ति। बहुभिर्नमस्क्रियमाणस्यैकस्य ब्राह्मणस्य स्वस्थानस्थितस्यैवानेककर्तृकनमस्कारकर्मणि युगपदङ्गभावप्रतिपत्तिदर्शनात् तद्वदिहाप्युपपत्तेरिति परिहारः। देवतानां विग्रहवत्त्वे जननमरणावश्यम्भावेन इन्द्रादिजननानन्तरं तत्पित्रादिकृतमिन्द्रादिनाम डित्थादिनामवत्पुरुषबुद्धिप्रभवं भवेदिति तत्पूर्वकवाक्यार्थप्रत्ययस्य पुरुषबुध्यपेक्षितमानान्तरापेक्षत्वापत्त्या वैदिकशब्दे सापेक्षत्वलक्षणाप्रामाण्यापत्तिरूपो विरोध इति द्वितीयसूत्रे शङ्का। इन्द्रादिशब्दानां प्रागुक्तरीत्या वेदोपदर्शितनामरूपानुसन्धानसृष्टेन्द्रादिविग्रहगतसमानाकृत्यभिव्यंग्यजातिवाचित्वसमर्थनेन तत्परिहारः।

इदमत्र चिन्त्यते—

स्यात्कर्मणि विरोधश्चेद्देवानां विग्रहे सति। विग्रहाभावपक्षे वा कथं तत्स्यान्न दूषणम्॥<br>
न नियमः कथमप्युपकारके क्रतुषु विग्रहवत्यपि सन्निधेः। अन्नदानमुखैरुपकारको न खलु सन्निहितो नृपतिः क्रतौ॥

अस्ति विग्रहवतोऽङ्गताजुषःसन्निधौ नियम इत्युरीकृतौ । व्यर्थमेव नियमे विशेषणं सर्वमङ्गमयते हि सन्निधिम् ॥

जुहूमदंत्यादिषु किं न संनिधिर्व्यपेक्ष्यते विग्रहवर्जितेष्वपि । अतः कथङ्कारमविग्रहाऽपि ते न सन्निधायाङ्गमिहास्तु देवता ॥

विग्रहेण रहिताऽपि देवता नो खलु क्रतुगणेषु केनाचित् । इन्द्रमित्रवरुणादिशब्दिता सन्निधिं विदधती समीक्ष्यते ॥

अपि चापरिहार्यस्ते दोषोऽयं विग्रहं प्रतिक्षिपतः । विग्रहवती हि कुर्याद्युगपत्सन्निधिमनेककार्यबलात् ॥

विग्रहवती च गच्छेदङ्गत्वं देवता न सन्निहिताऽपि । प्रवसन्निव यजमानः कर्ता कालेषु याजमानजपस्य ॥

अविग्रहं क्रियाशब्दव्यतिरिक्तं न वीक्ष्यते । यत्खल्वसन्निधानेऽपि गच्छेत् क्रत्वङ्गतां क्वचित्॥

यदि पुरुषोच्चार्यत्वाद्यागेष्विन्द्रादिशब्द एवाङ्गम् । न तु तत्तदर्थ इति मतिरनङ्गमर्थस्तदाऽस्तु विग्रहवान् ॥

न हि विग्रहवत्त्वे स्यादर्थोऽप्यङ्गमितीदृशम् । आपादनं क्रियत इत्यवकाशवती स्पृहा ॥

शब्दे विरोधो यदि विग्रहे भवेत् कथं समाधिस्तदभावसम्मतौ । नास्त्यर्थ एवेति यदि प्रपद्यसे दृढीभवेत्तर्हि विरोधदुर्दशा ॥

नित्योऽर्थ इत्युपगमे त्वनित्यास्सन्तु विग्रहाः । शब्दवाच्यबहिर्भूताः क्व विरोधः प्रसज्यते ॥

इत्यापत्तेरनित्यार्थे विग्रहासम्मतावपि । वक्तव्ये सति पूर्वोक्तविरोधतदवस्थितिः ॥

तस्मादाक्षेपभागस्य सूत्रयोरनयोर्द्वयोः । देवताविग्रहाक्षेपपरता नोपपद्यते ॥

अयमत्र शङ्काऽर्थः । देवताविग्रहाङ्गीकारे तदेव दूषणमुद्भावनीयम्, यत्तदनङ्गीकारे न प्रसरति । कर्मविरोधदूषणं तु तदनङ्गीकारेऽपि प्रसरति । तथा हि—विग्रहवतः क्रतूपकारकत्वे सन्निधान-नियममवष्टभ्य कर्मणि विरोध आपादितः, उत क्रत्वङ्गत्वे? आद्ये स्वस्थान एव स्थित्वा धनदानयज्ञवाटरक्षणा-

दिना क्रतूपकारके राज्ञि व्यभिचारः । द्वितीये विग्रहवत इति विशेषणं व्यर्थम्; विग्रहरहितस्यापि जुह्वादेः क्रत्वङ्गस्य सन्निधानानियमदर्शनात् । अतो विग्रहरहिताऽपि देवता सन्निधानाभावे कर्माङ्गं न स्यादिति कथं विग्रहाभावपक्षेऽपि कर्मणि विरोधो न स्यात् । न हि विग्रहरहिताऽपि देवतेन्द्रादिशब्दिता क्रतुषु सन्निहिता केन चिद्दृश्यते । अपिच विग्रहानङ्गीकार एवापरिहार्यः कर्मणि विरोध आपतति । न हि विग्रहराहित्यदेवतायां युगपत् प्रवृत्तेषु यागेषु कायव्यूहेन सन्निधिरिति परिहारः प्रवर्तते । किञ्च विग्रहवत्त्वे देवतायाः प्रवसद्यजमानवदसन्निधानेऽपि क्रत्वङ्गत्वमुपपादयितुं शक्यम्, न तु तद्राहित्ये । न हि विग्रहरहितं प्रवसद्यजमानजप्यमानमन्त्रेभ्यस्तत्तत्क्रियमाणविष्णुक्रमेभ्यश्चान्यदसन्निहितं क्रत्वङ्गं दृश्यते । यद्युच्येत— क्रतुष्विन्द्रादिशब्द एवाङ्गम्; पुरुषेणोच्चार्यतयाऽनुष्ठातुं शक्यत्वात् तु तदर्थः; अननुष्ठेयत्वादिति, तदा तदर्थस्य विग्रहवत्त्वं कथं सन्निधानाभावेन प्रत्याख्यातुं शक्यम्? अनङ्गत्वेन सन्निधानानपेक्षणात् । न हि विग्रहवत्त्वेऽर्थोऽप्यङ्गं स्यादित्यापादनं सम्भवति; विशेषाभावात् ।

शब्दविरोधापादनमपि विग्रहाभावपक्षसाधारणम् । कथम्? यदि विग्रहराहित्योक्तिभङ्ग्येन्द्रादिशब्दानामर्थ एव नास्तीत्युक्तं स्यात्, तदेन्द्रादिशब्दघटितवैदिकवाक्यार्थानिष्पत्त्या शब्दविरोधः । अर्थाङ्गीकारेऽपि तस्य नित्यत्वाभ्युपगमे विग्रहवादिनाऽपि नित्यमिन्द्रादिशब्दार्थमङ्गीकृत्य तस्यागमापायिनां भूषणायुधादिवदिन्द्रादिशब्दवाच्यबहिर्भूतानां विग्रहाणां स्वीकर्तुं शक्यत्वात् विरोधो न प्रसज्यत इति दोषापत्तेरनित्य एवार्थे विग्रहाभाववादिनाऽप्यङ्गीकर्तव्ये सतीन्द्रादिशब्दे तत्सम्बन्धस्यानादित्वासम्भवेन पुरुषबुद्धिकल्पितत्वस्य वक्तव्यत्वाच्छब्दविरोधस्तदवस्थः । तस्मादनयोः सूत्रयोराक्षेपभागस्य देवताविग्रहाक्षेपपरता नोपपद्य इति ।

अत्र ब्रूमः—

असारावित्थमाक्षेपौ पूर्वमीमांसकैः कृतौ । देवताविग्रहद्वेषभरान्धीकृतदृष्टिभिः ॥
तावेवात्रापहसितुं परिहारश्च तात्त्विकम् । वक्तुं सूत्रपदारूढौ विदधे भाष्यकृन्मुनिः १.३.२८।

एवं देवतानां ब्रह्मविद्याऽधिकारममृष्यमाणैः परैरुद्भावितं शब्दविरोधं 'अतः प्रभवात्' इति हेतुना परिहृत्य तद्धेतूक्तिसामर्थ्यलब्धेन जगत्कारणत्वेन वेदस्यापौरुषेयत्वलक्षणं नित्यत्वं व्यवस्थापयति ।

## अत एव च नित्यत्वम् । २९ ।

वेद : पौरुषेयो न भवति; जगत्कारणत्वादीश्वरवत् । न चादृष्टे व्यभिचारः; स्वतन्त्रेण पुरुषेणार्थमुपलभ्य तेन हेतुना विरचितवर्णपदानुपूर्वीविशेषरूपसन्दर्भवत्त्वं पौरुषेयत्वमिति तदभावस्यादृष्टेऽपि सत्त्वात् । एवमानुषङ्गिकवेदापौरुषेयत्वसिद्धिहेतुविशेषलाभोऽपि 'अतः प्रभवात्' इति पूर्वसूत्रे हेतुनिर्देशस्य प्रयोजनम् । चकारः स्वतन्त्रकर्त्रस्मारणादिहेत्वन्तरसमुच्चयार्थः । १. ३. २९ ।

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च । ३० ।

किमर्थमिदं सूत्रम्? समाहितः खलु 'शब्द इति चेन्नातः प्रभवात्' (ब्र. सू. १. ३. २८) इति सूत्रे शब्दप्रभवत्वेनेन्द्रादीनां समाननामरूपत्वं प्रदर्श्य तेषां नाम्नां समानरूपाभिव्यंग्यजातिवाचित्वेन शब्दविरोधः । अथ महाप्रलये निराश्रयाणामिन्द्रत्वादिजातीनामवस्थानायोगेन तत्पूर्वापरकल्पसम्भवेन्द्राद्यनुगतेन्द्रत्वादिजात्यसम्भवादिन्द्रादिशब्दानां व्यक्तिवाचित्वपक्ष इव जातिवाचित्वपक्षेऽप्यैकार्थ्यासम्भवेनानेकत्र सांकेतिकत्वस्य वक्तव्यत्वात् शब्दविरोधस्तदवस्थ इत्यधिकाशङ्कायां महाप्रलयव्यवधानेऽपि पूर्वोत्तरकल्पसम्भवेन्द्रादीनां श्रुतिस्मृतिभ्यां समाननामरूपत्वावश्यम्भावेन तदनुगतानां महाप्रलयावस्थायिनीनामिन्द्रत्वादिजातीनामवश्याङ्गीकर्तव्यत्वात् । सर्वपदार्थानाञ्च शक्त्यात्मना सूक्ष्मरूपेण महाप्रलयेऽप्यवस्थानसत्त्वेन निराश्रयत्वाप्रसक्तेर्जातिवाचित्वं सम्भवतीति प्रदर्शनेन परिहारार्थमिदं सूत्रमिति चेत्; महाप्रलयाङ्गीकारप्रयुक्ता खल्वियं शङ्का, नेन्द्राद्यनेकत्वविग्रहवत्त्वाङ्गीकारप्रयुक्ता । अत एवेयं गवादिशब्दसाधारणी; गोत्वादिजातीनामपि महाप्रलये निराश्रयाणामवस्थानायोगशङ्कायास्तुल्यत्वात् । न चेयं शङ्काऽत्र प्रसाध्यमानदेवताऽधिकारविरोधिनी, येनात्र परिहार्या भवेत् । लप्स्यमानपरिहारा चेयं शङ्का 'सूक्ष्मं तु तदर्हत्वात्' (ब्र. सू. १. ४. २) 'तदधीनत्वादर्थवत्' (ब्र. सू. १. ४. ३) इत्यानुमानिकाधिकरणसूत्राभ्याम् ।

नन्विदं सूत्रं व्यवहितसूत्रप्रसाधितस्य शब्दविरोधाभावस्य समर्थनार्थं माभूत् । अव्यवहितसूत्रप्रसाधिते वेदनित्यत्वे विरोधसमाधानार्थमस्तु । महाप्रलयेऽध्यापकाध्येतृसन्तानाविच्छेदाद्वेदस्य नित्यत्वमनुपपन्नमिति विरोधशङ्कासम्भवादिति चेत्; मैवम् । वेदस्यापौरुषेयत्वलक्षणं हि नित्यत्वं पूर्वसूत्रे प्रसाधितम्,

न तु स्वरूपनित्यत्वम्; आनुपूर्वीविशेषविशिष्टवर्णसमुदायरूपस्य वेदस्य स्वरूपनित्यत्वासम्भवात्, अदृष्टादौ व्यभिचारेण पूर्वसूत्रप्रदर्शितजगत्कारणत्वहेतुकतत्स्वरूपनित्यत्वसिध्यसम्भवाच्च । अवान्तरप्रलयवर्तित्वं नित्यत्वं विवक्षितमिति न व्यभिचार इति चेत्; तर्हि तस्य महाप्रलयेऽध्ययनाध्यापनसन्तानविच्छेदेऽपि विरोधाभावात् तद्विरोधशङ्का निरालम्बना स्यात् । प्रवाहरूपेण सकलकालवर्तित्वं साध्यम्; अदृष्टादीनाञ्च महाप्रलयेऽप्यवस्थानान्न व्यभिचारः इति चेत्; तर्हि तस्य विरोधस्यानेनापि सूत्रेण समाधानं न स्यात् । महाप्रलये वेदाध्ययनाध्यापनसन्तानविच्छेदस्य सिद्धान्तेऽप्यङ्गीकारात् । अत्रोच्यते—

वेदनित्यत्वमाक्षिप्य पूर्वसूत्रप्रसाधितम् । समाधातुं सूत्रकृता सूत्रमेतत् प्रवर्तितम् ॥

तथाहि—

मन्त्राणां ब्राह्मणानाञ्च पदानामपि तज्जुषाम् । कर्तारस्संहितानाञ्च श्रूयन्ते बहवश्श्रुतौ ॥

ईश्वरादृग्यजुरादीनामुत्पत्तिरपि वर्ण्यते । यज्ञेन वाच इत्याद्या दृश्यन्ते श्रुतयो हि याः ॥

तास्त्ववान्तरकल्पादिविषयत्वेन सङ्गताः । समाननामरूपत्वश्रुतिस्मृतिवचांस्यपि ॥

तन्मात्रविषयत्वेन प्रपद्यन्तेऽर्थशालिताम् ॥

'नम ऋषिभ्यो मन्त्रकृद्भ्यस्संहिताकारपदकारसूत्रकारब्राह्मणकाराणाम्' इत्यादिश्रुतिषु वेदान्तर्गतानां मन्त्राणां ब्राह्मणानां तदन्तर्गतपदानां तत्संहितानाञ्च कर्तारः ऋषयः श्रूयन्ते । 'छन्दांसि जज्ञिरे तस्मात् यजुस्तस्मादजायत' 'अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः' (बृ. २. ४. १०) इत्यादिश्रुतिषु परमेश्वरस्य वेदानां कर्ता श्रूयते । अतो वेदो नित्य इत्ययुक्तम् । या तु 'यज्ञेन वाचः पदवीयमायन् तामन्वविन्दन्नृषिषु प्रविष्टाम्' (ऋ. स. १०. ७१. ३) इति यज्ञादिपुण्येन वेदग्रहणयोग्यतां प्राप्तानामृषिषु स्थिताया एव वेदवाचो लाभ इति श्रुतिः, या च 'युगान्तेऽन्तर्हितान्वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञातास्स्वयंभुवा' इति प्रलयेऽन्तर्हितानामेव वेदानां तपस्समाराधितचतुर्मुखप्रसादाल्लाभस्मृतिः सा सर्वाऽप्यवान्तरप्रलयान्तर्हितवेदप्राप्तिविषयत्वेन सङ्गच्छते ।

अत एवोदाहृतयोः श्रुतिस्मृत्योः 'ऋषिषु प्रविष्टाम्' इति 'सेतिहासान्' इति च विशेषणम् । अवान्तरप्रलये हि भूर्भुवस्सुवरिति लोकत्रयमात्रव्यापिनि ब्रह्मलोकादिगतेषु ऋषिषु प्रविश्य वेदास्तिष्ठति, न तु

महाप्रलये सकलभूतव्यापिनि । अवान्तरप्रलयानन्तरमेव च ब्रह्मलोकादिस्थितानामितिहासानां प्राप्तिः सम्भवति, न तु महाप्रलयानन्तरम्; महाप्रलये प्राचीनपौरुषेयवाक्यानां निरन्वयविनाशात् । समाननामरूपत्वगमकानि देवादीनां वेदप्रभवत्वविषयाणि साक्षात्समाननामरूपत्वप्रतिपादकानि च यानि श्रुतिस्मृतिवचनानि सन्ति, तान्यप्यवान्तरकल्पादिविषयत्वेनैवार्थवत्तां प्रतिपद्यन्ते । अत एव 'ऋषीणां नामधेयानि याश्च वेदेषु दृष्टयः । शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः' इति स्मृतौ 'शर्वर्यन्ते प्रसूतानाम्' इति विशेषितम् । शर्वर्यन्तो हि चतुर्मुखरात्रिरूपस्यावान्तरप्रलयस्यावसानम्, न तु तदायुस्समाप्त्यनन्तरभाविनो महाप्रलयस्य । अनेन विशेषणेनेत्थं ज्ञायते—अवान्तरकल्पादिषु सृष्टानामृषीणां वसिष्ठादीनां यानि नामधेयानि तेषां तत्तद्वेदभागदर्शनानि च, तानि तत्तत्कल्पान्तर्गतमन्वन्तरेषु तदुत्तरावान्तरकल्पेषु च सृष्टेभ्यो ददाति, न तु महाकल्पादिषु सृष्टानां नामधेयानि महाकल्पान्तरे सृष्टेभ्यो ददातीति । एवं महाकल्पावान्तरकल्पभेदेन वेदकर्तृद्रष्टृविषयोभयविधश्रुतिसामञ्जस्ये सम्भवति नैकानुसारेणान्यनयनक्लेशः समाश्रयणीयः ।

न च प्रतिकल्पं वेदस्य वर्णपदवाक्यक्रमस्वरान्यत्वे पारायणादिभिः क्वचित्कल्पेऽभिमतफलप्रदो वेदः कल्पान्तरे वाग्वज्रः स्यादिति धर्माधर्मव्यवस्थाविप्लवो दोषः; इष्टापत्तेः । प्रतिमहाकल्पमन्य एव वेदाः अन्य एव चैषामर्थाः, अन्यान्येव च वैदिकानि पदानि तेषु तेष्वर्थेषु तत्तत्कल्पादिषु पदकारैर्महर्षिभिस्सङ्केतितानीत्यङ्गीकारे दोषाभावात् । एकस्मिन्नपि हि कल्पे हिंसास्तेयपरयोषिदपहारादिकं विषयभेदेन धर्माधर्मोभयरूपतयाऽभ्युपगम्यते । कल्पभेदेन वेदतदुक्तकर्मणां तदुभयरूपत्वस्वीकारे को दोषः ? किञ्चैकस्य श्राद्धकर्मणः दिने निशायाञ्च कृतस्य, एकस्यैव काम्यकर्मणः शुद्धमासे मलमासे च कृतस्यैकस्यैव गोमधुपर्कस्य कृतादिषु कलौ च कृतस्यैकस्यैव वह्नेः शिशिरे निदाघे च सेवितस्यार्थानर्थहेतुत्वं सम्प्रतिपन्नमिति तद्वत्प्रतिकल्पभिन्नवेदतदुक्तकर्मणां कल्पभेदेनार्थानर्थहेतुतया धर्माधर्मरूपत्वमङ्गीतुं शक्यमेव । तथा च वासिष्ठे वसिष्ठंप्रति भूसुण्डाख्यस्यानेककल्पजीविनो वायसस्य वचनं दर्शितम्—'सुरापब्राह्मणं तात निषिद्धसुरशूद्रकम् । स्वैरवृत्तसतीकञ्च कञ्चित्सर्गं स्मराम्यहम् ॥ कलौ कृतयुगाचारं कृते कलियुगस्थितिम् । त्रेतायां द्वापरे चैव विपर्यासं स्मरामि च' इति । तस्मादनुपपन्नं वेदस्य नित्यत्वमित्याक्षेपसमाधानार्थमिदं सूत्रम् ।

समाधानप्रकारस्तु—महाप्रलयानन्तरं जगत्सृष्ट्यावृत्तावपि न वेदनित्यत्वविरोधः; सृज्यमानस्य सर्वस्य जगतस्तत्पूर्वकल्पजगत्समाननामरूपत्वात्, तत्समानस्वभावज्ञानैश्वर्यादिमत्वाच्च । कुत इदमवगम्यते ? 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्' (ऋ सं. १०, १९०. ३.) इत्यादिश्रुतिदर्शनात् ।

'यथर्तुष्वृतुलिंगानि नानारूपाणि पर्यये । दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ।
तथाऽभिमानिनोऽतीतास्तुल्यास्ते साम्प्रतैरिह । देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ।
तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनःपुनः ।
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते' ।

इति स्मरणात्, देवर्षिमनुष्यतिर्यक्स्थावरादिभावस्य यज्ञादिफलत्वाच्च । पूर्वस्मिन् कल्पे यैर्महेन्द्रवरुणकुबेरादिदेवभावस्य, वसिष्ठविश्वामित्रादिऋषिभावस्य, ब्रह्मक्षत्रियादिमनुष्यभावस्य वा प्रापकत्वेन वेदविहितानि यज्ञाध्ययनदानतपांसि, उपासनानि वा यथाविधि तत्तद्भावप्राप्तिसङ्कल्पपूर्वकमनुष्ठितानि, त एव महाप्रलयभाविन्यामपि सृष्ट्यावृत्ताविन्द्रादिभावं प्रतिपद्यन्ते ।

यैर्गवाश्वगजधनधान्यगृहक्षेत्रारामादिप्रापकत्वेन विहितानि, तान्यनुष्ठितानि तत्तद्भाग्यतया तिर्यञ्चस्स्थावराश्च जन्म प्रतिपद्यन्ते । ते चानुष्ठातारस्तस्मिन्कल्पे प्रचरद्भिर्वेदवाक्यैस्तत्कालवर्तिनामिन्द्रादीनां दिव्यविग्रहैश्वर्यमहाभोगादिकं वसिष्ठादीनां दिव्यज्ञानमाहात्म्यादिकञ्च यादृशं वर्णितं प्रत्यक्षादिभिश्च ब्राह्मणक्षत्रियादीनां विशिष्टदेशजातिकुलरूपायुश्श्रुतवित्तवृत्तसुखमेधसां मुक्तिपर्यन्तसकलपुरुषार्थसम्पादनाधिकारवतां वैशिष्ट्यं गवाश्वादीनां दोहनवाहनादिकृततदुपयोगिसंस्थानविशेषादिकञ्च यादृशमवगतं, तादृशमेव प्राप्तव्यतया-सङ्कल्पयन्ते नान्यादृशमवगम्यते; इष्टसाधनविषयत्वादिच्छायाः, तस्मिन् कल्पे प्रचरद्भिर्वेदवाक्यैस्तत्कालवर्ति देवर्षिमनुष्यादिवाचकपदवद्भिस्तत्सजातीयदेवभावादिप्राप्तिसाधनत्वेनैव यज्ञादीनामुपासनानां च विधानाच्च । तथा च तथासङ्कल्पपूर्वकमनुष्ठितानां कर्मणां फलतया भवन्ती देवादिसृष्टिः पूर्वकल्पस्थितदेवादिनामरूप-स्वभावप्रभाववैभववती वज्रलेपायते ।

एतेन—समाननामरूपत्वादिविषयश्रुतिस्मृतिवचनजातमवान्तरकल्पादिविषयमस्त्विति शङ्काऽपि निरस्ता । देवादिभावप्रापककर्मानुष्ठानहेतुसङ्कल्पानुसारेण महाकल्पभेदेऽपि समाननामरूपत्वावश्यम्भावात् । 'शर्वर्यन्ते' इति तु महाप्रलयावसानमपि वक्तुं शक्यम् । महाप्रलयो हि परब्रह्मणस्सुषुप्तिकालत्वेनोपचर्यते । उक्तश्चाचार्यवाचस्पतिना 'अस्य च सुप्तिर्महाप्रलयः' इति ।

नन्वस्तु श्रुतिस्मृतियुक्तिभिर्महाकल्पभेदेनेन्द्रादीनां समाननामरूपत्वम् । तेन वैदिकेन्द्रादिपद-साङ्केतिकत्वशङ्कामूलक एव वेदनित्यत्वविरोधः समाहितो भवति, न तु पुराणादिवत्तत्तत्कल्पादिषु नवनवा

वेदाः पुरुषप्रणीताः सन्त्विति शङ्कामूलक इति चेत्; सोऽपि तेन समाहितो भवत्येव । समाननामरूपत्वे पूर्वस्मिन् कल्पे यैर्वेदवाक्यैरिन्द्रादिरूपमवगम्य तद्भावप्राप्तये कैश्चित्कर्माण्यनुष्ठितानि तैरेव तत्कल्पस्थितेन्द्रादि-नामरूपाणि स्मृत्वा चतुर्मुखेन महाप्रलयव्यवहितायां पुनस्सृष्ट्यावृत्तौ तत्समानरूपेन्द्रादिभावेन ते सृष्टा-इत्यङ्गीकर्तव्यत्वात्, तदानीन्तनपुरुषप्रणीतैर्वेदवाक्यैस्तन्नामरूपानुसन्धानासम्भात् । तेषां प्राचीनकल्पस्थित-वेदसमानार्थत्वस्वीकारेऽपि ते मन्त्रकृत्त्वादिप्रसिद्धिमदृषिप्रणीता इत्यङ्गीकारे तैस्तेषामृषीणां ततःपूर्वं सृज्यानां देवानाञ्च सृष्ट्युपयोगिनो नामरूपज्ञानैश्वर्याद्यनुसन्धानस्यासम्भवात्, 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति (श्वे. ६. १८) ब्रह्मसृष्ट्यनन्तरमेव तत्कर्तृकदेवर्षिमनुष्यादिसृष्ट्यर्थनामरूपानु-सन्धानोपयोगिवेदप्रदानश्रवणविरोधापत्तेश्च । तेषां ब्रह्मसृष्टेरपि प्राक् परमेश्वरप्रणीतत्वाङ्गीकारे 'प्रजापतिर्देवान-सृजत' 'स भूमिमसृजत' इत्यादिषु लङादिश्रवणविरोधापत्तेः । पूर्वकल्पवृत्तान्तविषयतया कथञ्चिल्लङादिसमर्थ-नेऽपि परमेश्वरोपादानकत्वरूपस्य, परमेश्वरकर्तृकत्वरूपस्य वा वियदादिप्रपञ्चसाधारणस्य परमेश्वरप्रभवत्वस्य वेदेऽभ्युपगमेन प्राङ्निरुक्तापौरुषेयत्वरूपतन्नित्यत्वविरोधाप्रसक्तेश्च, 'अस्य भूतस्य निश्वसितमेतत्' 'यजुस्त-स्मादजायत' इत्यादिश्रुतीनां तन्मात्रविषयतयोपपन्नत्वात्; वेदत्वं समानानुपूर्वीकोच्चारणपूर्वकत्वरहितस्वतन्त्र पुरुषोच्चारणविषयवृत्ति; वाक्यवृत्तित्वात्, सत्तावदित्याद्यनुमानानामप्रयोजकत्वात्, तत्प्रमाणस्य स्वतस्त्वेन वक्तृवाक्यार्थयथार्थज्ञानादिरूपगुणानपेक्षत्वात् ।

तस्मात्सर्वदैकरूपानुपूर्वीविशिष्टा वेदा महाप्रलयेष्वध्यापकाद्यभावेन खिलीभूता अपि पुनस्सर्गे प्राचीनानुपूर्वीविशिष्टतयोद्धृत्य परमेश्वरेण हिरण्यगर्भाय प्रदीयन्ते । तेषु केचिद्भागाः कैश्चित्कैश्चित् प्राचीनपुण्य-फलाद्वासिष्ठविश्वामित्रादिऋषिपदं प्राप्तैस्तदानीमध्ययनाभावेऽपि पूर्वकल्पाधीता एवानुसन्धाय शिष्येषु प्रवर्त्यन्ते । कैश्चित्पदविभागं प्रदर्श्य पदाध्ययनसम्प्रदायाः प्रवर्त्यन्ते कैश्चिद्वर्णपदानां संहितायां लक्षणग्रन्थान्निर्माय संहिता-स्वरूपमसन्दिग्धं क्रियत इति त एव वेदेषु मन्त्रकृतो ब्राह्मणकाराः पदकाराः संहिताकारा इति व्यप-दिश्यन्ते । वैदिकपदैर्देवतादिसृष्टिर्मन्त्रकृदादिऋषिसद्भावश्च प्रवाहानादिरित्यनादिष्वपि वेदेषु 'स भूमिमसृजत' इत्यादयो लङादिप्रयोगाः मन्त्रकृदादिनिर्देशाश्च क्रियन्त इत्येव युक्तमिति ।

सूत्रे महासर्गावृत्तावप्यवान्तरकल्पेष्विव देवर्षिप्रभृतीनां समाननामरूपत्वाच्चशब्दसमुच्चितात् समानस्वभावप्रभावत्वाच्च न तेषां नाम्नां घटादिनामवदनुगतनामरूपाभिव्यंग्यजातिवाचित्वस्य सेनान्या-

दिनामवदनुगताधिकविशेषरूपोपाधिवाचित्वस्य वाऽवश्यम्भावात् तदनुसारेण पदकारश्रुतिः पदाध्ययनसम्प्रदाय-प्रवर्तकत्वपरेति ततो वैदिकपदानां साङ्केतिकत्वरूपः शब्दविरोधो न प्रसज्यते इति न तत्कृतो वेदनित्यत्व-विरोधः इत्येवमविरोधपदावृत्त्या योजनं कार्यम्। पुनश्च मन्त्रकृदादिश्रवणेनापि नास्ति वेदानित्यत्वविरोधः। महासर्गावृत्तावप्यवान्तरकल्पादिष्विव पूर्वेषामुत्तरेषां च मन्त्रादिकृतां वसिष्ठादीनां समाननामरूपादिमत्त्वेन तत्सृष्टेः प्राक्सिद्धैर्वैदिकशब्दैरेव नामरूपावनुसन्धाय तेषां तेभ्यः प्राक् सृज्यानां देवादीनाञ्च स्रष्टव्यतया मन्त्रकृदादिशब्दानां मन्त्रद्रष्टृपरत्वस्य कल्पनीयत्वादित्येवमर्थकत्वेन 'अविरोध' इत्यन्तमावृत्त्या योजनीयम्। पुनश्च 'यजुस्तस्मादजायत' इत्यादिश्रवणेनापि न वेदानित्यत्वविरोधः; वियदादीनामिव वेदानां सृष्ट्यावृत्तावपि समाननामरूपत्वात्। न हि वेदानां प्रतिकल्पं सृष्ट्यावृत्तिवदानुपूर्वीविशेषात्मकरूपभेदो वा, प्रतिपाद्यविशे-षात्मकरूपभेदो वा प्रवृत्तिनिमित्तत्वेन रूपभेदाङ्गीकारापादको नामभेदो वाऽभ्युपगम्यते, येन प्रतिकल्पं भिन्ननामरूपा वेदास्तत्र तत्र कल्पे परमेश्वरेण निर्मिता वक्तव्या इति वेदनित्यत्वविरोधः स्यादित्येतद-र्थत्वेनाप्यविरोध इत्यन्तमावृत्त्या योजनीयम्।

देवर्षिमनुष्यादीनां वेदानाञ्च समाननामरूपत्वे स्यादेवमविरोधः, तदेव कुत इत्याकाङ्क्षायां 'दर्शनात् स्मृतेश्च' इति सूत्रशेषः। देवादीनां समाननामरूपत्वे प्राक् प्रदर्शिताः श्रुतिस्मृतियुक्तयः, वेदानां समाननामरूपत्वे 'वाचा विरूपनित्यया' 'अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा। आदौ वेदमयी दिव्या यतस्सर्वाः प्रवृत्तयः' इत्यादिश्रुतिस्मृतयः प्रमाणानि। अत्र हि श्रुतौ नित्यत्वं स्मृतावनादिनिधनत्वञ्च न स्वरूपतो विवक्षितम्; आनुपूर्वीविशेषविशिष्टवाक्यानां तदसम्भवात्। किन्तु वर्णपदवाक्यतदानुपूर्वीतत्प्रति-पाद्यतत्प्रवृत्तिनिमित्तकनामभेदं विना सर्वकल्पेष्वैकरूप्येणाध्ययनाध्यापनसम्प्रदायविषयत्वम्। 'अनादिनिधना नित्या' इति स्मृत्युक्तं नित्यत्वं तु 'अतएव च नित्यत्वम्' (ब्र. सू. १. ३. २९.) इति सूत्रोक्तमिव स्वतन्त्रपुरुषविश्रान्त्यभावरूपमपौरुषेयत्वमिति विवेकः।

अपि च 'यज्ञेन वाचः पदवीयमायन्' 'यज्ञो म आगच्छतु' 'उत्तरां देवयज्यामाशास्ते भूयो हविष्करणमाशास्ते' 'पुण्यः पुण्येन कर्मणा भवति' इत्यादिमन्त्रब्राह्मणप्रतिपन्नवेदवैदिककर्मप्राप्त्यर्थयज्ञादि-सत्कर्मानुष्ठानं तत्प्रेप्सया वक्तव्यम्। अवगतेष्टसाधनविषया च प्रेप्सा भवति कर्मानुष्ठानकाले अचरस्त्वेव च वेदवैदिककर्माण्यवगतानि नान्यादृशानीति महाप्रलयव्यवहितपूर्वकल्पानुष्ठितकर्मभिस्तदनन्तरकल्पे प्राप्याणि

वेदवैदिककर्माणि पूर्वकल्पप्रवृत्तान्येव भवन्तीत्यतोऽपि वेदानां समाननामरूपत्वसिद्धिः। नामरूपभेदे प्रमाणाभावाच्च। तत्र प्रमाणाभावे हि लाघवात् समाननामरूपत्वमेव सिध्यति। वासिष्ठवचनं तु न वैदिककर्मभेदे प्रमाणम्; अवान्तरकल्पभेदेन वैदिककर्मवैरूप्यस्य पूर्वपक्षिणाऽप्यनङ्गीकृतत्वात्, महाकल्पभेदेन तद्वैरूप्यस्य काकेनानुभूततया वक्तुमशक्यत्वात्, महाकल्पद्वयजीविनः काकस्याप्यभावात्। तस्मात् वासिष्ठे भूसुण्डाख्यकाकवचनं जगद्वैचित्र्याद्युक्तिमात्रपरमिति नेतव्यम्।

एवं महाकल्पादौ प्राथमिकाध्ययनविषयो वेदः पूर्ववेदसमाननामरूपः; वेदत्वादिदानीन्तनाध्यापनविषयवेदवत्; विपक्षे नामरूपभेदकल्पनायां गौरवम्; 'वाचा विरूपनित्यया' 'अनादिनिधना दिव्या' 'तान्येवैभ्यो ददात्यजः' 'युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः' इत्यादिश्रुतिस्मृतिव्याकोपश्च। 'सेतिहासान्' इति इतिहासशब्देन 'त्रयो होद्गीथे कुशला बभूवुः'। 'देवासुराः संयत्ता आसन्' इत्यादीनि वैदिकानि पुरावृत्तानि विवक्षितानि, न तु पौरुषेयप्रबन्धविशेषाः। पुरावृत्तग्रहणं च वेदार्थैस्सह वेदानां लब्धत्वप्रत्यायनार्थम्। अत एव 'यो वै वेदांश्च प्रहिणोति तस्मै' इति श्रुतौ चकारेण सृष्ट्युपयोगीन्द्रादिनामरूपपरिज्ञानार्थं सर्गप्रलयाद्यर्थवादार्थप्रधानं संगृहीतमिति विवरणार्थे तदुपबृंहणे 'ब्रह्माणं विदधे पूर्वं जगत्सृष्ट्यर्थमीश्वरः। तस्मै वेदान् पुराणानि दत्तवानग्रजन्मने' इति श्लोके पुराणशब्दः प्रयुक्तः। तत्र हि पुराणशब्दो वैदिकार्थवादनिरूपितसर्गप्रलयपर एव वक्तव्यः, न तु पौरुषेयप्रबन्धपरः; महाकल्पादौ ब्रह्मसृष्ट्यनन्तरं तदीयजगत्सृष्टिसामर्थ्योपयोगिवेदप्रदानसमये पौरुषेयप्रबन्धानामनिष्पत्तेः। एवंविधाः श्रुतिस्मृतियुक्तयो 'दर्शनात् स्मृतेश्च' इति सूत्रशेषेण संगृहीताः। तत्र 'श्रुतेः' इति सूत्रणीये 'दर्शनात्' इति गुरुसूत्रकरणं शङ्कान्तरवारणार्थमर्थान्तरमपि क्रोडीकर्तुम्।

इत्थमत्र शङ्का समुन्मिषति—मन्त्रकृदादयो मन्त्रद्रष्टारः, न तु मन्त्रादिकर्तार इत्युक्तम्। मन्त्रादिद्रष्टृत्वं हि कल्पान्तराधीतमन्त्रादिस्मर्तृत्वमभिमतम्। तन्न सम्भवति; सर्वव्यवहारोच्छेदिना महाप्रलयेन व्यवधानात्। न च वाच्यम्—'यदा सुप्तस्स्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिस्सहाप्येति चक्षुस्सर्वै रूपैस्सहाप्येति श्रोत्रं सर्वैश्शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाऽग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ. ३. ३.) इति श्रुत्यनुसारेण स्वापप्रबोधयोः प्रलयप्रभवसत्त्वेऽपि स्वापव्यवहितं प्रबोधे स्मर्यते, तद्वत् महाप्रलयव्यवहितमपि स्मर्येत—इति। स्वापे मरणस्य काल-

विप्रकर्षस्य वा वासनोच्छेदकारणस्याभावेन सत्यां वासनायां स्मरणमुपपद्यते, कस्यचित् स्वापेऽप्यन्येषां प्रबोधात् तेभ्यश्च ग्रहणमुपपद्यते; महाप्रलये सर्वेषां युगपन्मरणं भूयान् कालविप्रकर्षश्चेति कथमतीतकल्पवृत्तान्तानुसन्धानं सम्भवेदिति ।

तत्रेदमुत्तरं सूत्रशेषेण विवक्षितम् । मरणकालविप्रकर्षसत्त्वेऽपि स्मृतेर्दर्शनात् महाप्रलयव्यधानेऽपि स्मृतिरुपपद्यते । तथाहि—प्राणिनामनेकजन्मान्तरव्यवहितेषु मनुष्यपक्षिसरीसृपादिजन्मसु प्राप्तेषु तत्तज्जात्युचितस्तन्यपानादेप्रवृत्तयो हिंस्राहिंस्रत्वतत्तज्जात्यन्तरविषयविरोधादिस्वभावप्रतिपत्तयश्च दृश्यन्ते । तास्सर्वा अप्यनेकजन्मसहस्रव्यवहिततत्तत्सजातीयजन्मान्तराभ्यस्तस्मृतिं विना न सम्भवन्तीति तत्तज्जातिप्रापककर्माण्येव तत्स्मृतिजनकसंस्कारोद्बोधकानीति स्वीकरणीयम् । एवमेव वसिष्ठविश्वामित्रादिप्रभृतिमन्त्रकृदृषिजन्मप्रापकाणि ज्ञानकर्माणि पूर्वकल्पेष्वनुष्ठाय महाकल्पादिषु वसिष्ठादिजन्म प्राप्नुवतां तानि कर्माणि कथं तत्तन्मन्त्रादिविषयसंस्कारोद्बोधकानि न स्युरिति । तस्मात् समञ्जसमिदं सूत्रम् । भाष्यस्याप्यस्मिन्नर्थे योजना सुकरैव । १. ३. ३० ।

## मध्वादिष्वसम्भवादनधिकारं जैमिनिः ।३१।

एवं ब्रह्मविद्यायां देवानामधिकारङ्गीकुर्वाणस्य भगवतो बादरायणस्य मतं प्रदर्शितम् । अथ तमनङ्गीकुर्वाणस्य जैमिनेर्मतं पूर्वपक्षतयोद्भाव्यते । अत्रायं **पूर्व पक्षः—**

वसुरुद्रादित्यमरुत्साध्याश्च गणवर्तिनः । रविश्च मधुविद्यायामुपास्या नाधिकारिणः ॥
संवर्गविद्यादिषु च वाय्वाद्या नाधिकारिणः । अग्निहोत्रादिषु तथा यष्टव्यास्सर्वदेवताः ॥
मधुविद्याऽग्निहोत्रादिष्वन्तर्यामी सुपर्वणाम् । भवेदुपास्यो यष्टव्य इत्युक्तिस्तु न युज्यते ॥
तथाऽप्युपास्या वस्वाद्या नान्तर्यामीति गम्यते । उपजीवकतायाश्च तद्भावस्य च वर्णनात् ॥
यष्टव्याश्च महेन्द्राद्या देवा इत्यवसीयते । प्रसिद्धवृत्रहन्तृत्वमुखतो धर्मवर्णनात् ॥
स्वमिष्टवद्भ्यो देवेभ्यस्स्वदेवत्ये महाक्रतौ । तत्तद्भागाः प्रसन्नेन वितीर्णा हरिणेति चेत् ॥
तावता विष्णुदेवत्यस्स एकस्सिध्यति क्रतुः । नानादेवत्यतान्येषां भवेत् तस्यापि सम्प्रति ॥
अर्थवादाश्च निस्सारानवलम्ब्यैतिहासिकान् । न युज्यते कल्पयितुं धर्माधर्मस्थितिच्युतिः ॥
अन्यथा हि श्वेतकेतोश्शापादारभ्य योषिताम् । सम्प्रवृत्तैकवर्तित्वव्यवस्थेति प्रयुज्यते ॥

श्वेतकेतोः कापालिङ्गात् तद्व्यवस्थित्यनादिता । ज्ञातेति तत्कथा स्वार्थविवक्षारहितेति चेत् ॥
यज्ञाप्रहारोपाख्यानकथाऽप्येवमिति स्मर । तस्या विवक्षितार्थत्वे यतस्स्यात् बह्वसङ्गतम् ॥
तस्मिन् सत्रे यदि तदा दीक्षणीया कृताग्निना । अद्य विष्णोरभागत्वं न चेदग्नेः प्रसज्यते ॥
उपसत्सु कृतश्चेत् स्यात् यागः केनापि वैष्णवः । तदीय एवेदानीं स्यान्न चेत्स्याद्विकलः क्रतुः ॥
सर्वैरुदवसानीयावसानास्सत्र एव चेत् । अनुष्ठितास्तदानीं स्युस्सर्वे स्सर्वेषु भागिनः ॥
कैश्चित् केचिद्यदि कृतास्सर्वेषामपि स क्रतुः । विकलस्स्यात्ततो विष्णोः कुतः प्रीतिः कुतो वरः ॥
तद्देवताविधीनां च वैयर्थ्यं कालभेदतः । अदृष्टचरमन्यत्र प्रसज्येतानिवारितम् ॥
एतेनेन्द्रादयो विष्णुं यजन्ति मनुजास्तु तान् । इत्यपास्तन्तु वैयर्थ्यं तेषां स्याद्धि तदा सदा ॥
एवमेव क्रतुभुजां यज्ञानुष्ठानगोचराः । अर्थवादाश्च विज्ञेया विवक्षारहितार्थकाः ॥
अग्निष्टोमं कथं कुर्यात् सृष्टिसामर्थ्यसिद्धये । त्रिवृत्स्तोमादिसृष्टेः प्राक् प्राक् तत्सृष्टेश्च विश्वसृक् ॥
यष्टृणां सामदस्यञ्च ब्राह्मण्यञ्च विना कथम् । चत्वारस्सत्रमासीरन्नग्नीन्द्रप्रमुखास्सुराः ॥
कथं वैश्वसृजे सत्रे कुर्यादार्त्विज्यमङ्गना । ऋत्विजां खलु पुंलिङ्गैर्वेदैः पुंस्त्वं विवक्षितम् ॥
कथञ्चान्नेतृकर्मैकं कुर्यातामेककर्तृकम् । सर्पौ च काविशङ्काख्यौ सर्पाणामयने कृ(क्र)तौ ॥
तस्माद्विद्याविशेषेभ्यः कर्मभ्यश्च च्युतास्सुराः । च्यवन्ते श्रवणादिभ्यो वैदिकत्वाविशेषतः ॥
देवानां ब्रह्मवित्त्वं यदर्थवादेषु वर्णितम् । पूर्वजन्मानुवृत्तं तत् घटते वामदेववत् ॥
इन्द्रस्य ब्रह्मविद्यार्थं ब्रह्मचर्यस्य वर्णनम् । यष्टृत्ववादवन्नेयं शून्यमर्थविवक्षया ॥
कथं हि ब्रह्मचर्यं स्यात् क्षणमप्यमृतान्धसाम् । सदा क्रतुहविर्भूतमधुमांसादिभोजिनाम् ॥
पद्यैस्समग्रहीष्मेत्थं पद्धतिं पूर्वपक्षिणः । पुनस्स्फुटीकरिष्यामो वाक्यैरनतिविस्तरैः ॥

मधुविद्यायामादित्यव्यपाश्रयवस्वादिपञ्चदेवगणोपजीव्यपञ्चामृतोपासनासु मध्वध्यासेनादित्योपासनायां-च वस्वादीनां, संवर्गादिविद्यादिषु वाय्वादीनाम्, अग्निहोत्रेष्टिसोमयागादिषु अग्न्यादिसर्वदेवतानाञ्च नाधिकारः; अभेदे उपास्योपासकभावस्य यष्टृयष्टव्यभावस्य चासम्भवात् । न च तेषु वस्वादितत्तद्देवान्तर्यामी परमात्मै-वोपास्यो यष्टव्यश्च स्यादिति वाच्यम् । मधुविद्यायां हि 'तद्यत् प्रथमममृतं तद्वसव उपजीवन्ति' इत्यादौ-वस्वादिशब्दोक्तानां तत्तदमृतोपजीवनं श्रुतम्, न तु तत्तद्भोगमात्रम् । उपजीवनं चाप्राप्तप्राप्त्यर्थं किञ्चिदा-

श्रयणम् । तत्तु न परमात्मनि सम्भवति । तथा 'वसूनामेवैको भूत्वा' इत्युपासकस्य वसूनामन्यतमभावापत्तिः श्रुता । साऽपि परमात्मनि न सम्भवति; निर्धारणषष्ठीबहुवचनस्यार्थबहुत्वमनपेक्ष्यैकस्मिन्नन्तर्यामिण्यन्वयायोगात् । तस्मादिह वस्वादिशब्दोक्ता गणदेवता एवेत्यवसीयते । यथा 'स य एतदेवममृतं वेद' (छा. ३. ६. ३) इत्यत्रोपासकत्वलिङ्गाद्यच्छब्दोक्तो जीवः नान्तर्यामी, 'न ह वा अस्मा उदेति न निम्रोचति सकृद्दिवाहैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद' इत्यौपसंहारिकं ब्रह्मप्राप्तिकथनं वस्वादिभावद्वारा क्रममुक्तिपरम्, ब्रह्मोपनिषत्पदं वेदोपनिषदर्थकश्चेति युज्यते, तथा क्रतुषु यष्टव्या अपि प्रसिद्धा महेन्द्रादय इत्यवसीयते । 'त्वष्टा हतपुत्रो वीन्द्रं सोममाहरत्' इत्यादिश्रुतौ प्रसिद्धस्य वृत्रहन्तुरिन्द्रस्यैव, 'सम्भवदग्नीषोमावभिसमभवत्' इत्यादिश्रुतौ वृत्रेणाभिभवितुं योग्ययोः प्रसिद्धयोरग्नीषोमयोरेव, 'अग्निर्वै देवानामवमः' इत्यादिश्रुतावमत्वादियोग्यानामग्निप्रभृतीनामेव चेष्टिसोमादिषु देवतात्वस्यावगम्यमानस्याप्रत्याख्येयत्वात् ।

ननु महाभारते—

'ततस्ते विबुधास्सर्वे ब्रह्मा ते च महर्षयः । वेददृष्टेन विधिना वैष्णवं क्रतुमारभन् ॥

तस्मिन् सत्रे तदा ब्रह्मा स्वयं भागमकल्पयत् । देवा महर्षयश्चैव सर्वे भागमकल्पयन् ॥

ते कार्तयुगधर्माणो भागाः परमसत्कृताः । प्रापुरादित्यवर्णं तं पुरुषं तमसः परम्'

इत्याद्यभिधाय

'यज्ञैश्चर्येऽपि यक्ष्यन्ति सर्वलोकेषु वै सुराः । कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ॥

यो मे यथा कल्पितवान् भागमस्मिन् महाक्रतौ । स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः' ॥

इति तदनन्तरं विष्णुवचनवर्णनेन पूर्वं वैष्णवानामेव सतां यज्ञभागानां तदीयवरदानेन देवतान्तरसम्बन्धित्वं ज्ञातव्यमित्यवगम्यते । तस्मादिन्द्रादीनां क्रतुषु देवतात्वं प्रतिपादयतामर्थवादानां नासाङ्गत्यमिति चेत् । किं ततः ? तस्मात् वैष्णवसत्रादन्येषां क्रतूनां तस्याप्यधुनेन्द्रादि नानादेवत्यताङ्गीकृतैवेति कथमिन्द्रादीनां यागाधिकारः स्यात् ? किञ्चैतादृशानितिहासदृष्टानर्थवादानवलम्ब्य पूर्वमन्यथाप्रवृत्तः धर्म इदानीमन्यथा प्रवृत्त इति धर्ममर्यादाविप्लवाङ्गीकारो न युक्तः; अन्यथा ह्यधर्ममर्यादाऽप्येवं विप्लुनाऽङ्गीक्रियेत । दृश्यते हि भारत एव पूर्वमनावृतानां स्त्रीणां श्वेतकेतुशापप्रभृत्येकपत्नीत्वावरणं प्रवृत्तमित्यादिर् धर्मविप्लवार्थवादः ।

ननु श्वेतकेतूपाख्याने स्त्रीणां पूर्वमनावृतत्वे निर्धनेनोत्सवार्थं क्रियमाणायामाभरणप्रार्थनायामिवापत्नीकेन ब्राह्मणेनापत्यार्थं क्रियमाणायामुद्दालकपत्नीप्रार्थनायां तत्पुत्रस्य श्वेतकेतोः कोपो न स्यात् । कोपश्च तत्रैव वर्णितः 'मातरं तां तदा दृष्ट्वा नीयमानां बलादिव । तपसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे । संगृह्य मातरं हस्ते श्वेतकेतुरभाषत । दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम्' इति । ततस्त्रीणामेकपत्नीत्वनियमस्यानादित्वावगमात् तस्मिन्नुपाख्याने 'अनावृता हि वर्णानां सर्वेषामङ्गना भुवि । यथा गावः स्थितास्तात स्वे स्वे वर्णे तथा प्रजाः' इति नारीणां प्रागनावृतत्ववचनं 'व्युच्चरन्त्याः पतिं नार्याः अद्यप्रभृति पातकम् । भ्रूणहत्याकृतं पापं भविष्यत्यसुखावहम्' इति तदाप्रभृत्येकपत्नीत्वव्यवस्थापनवचनं च कुन्त्यपत्यार्थं पुरुषान्तरं प्रवर्तयितुकामस्य पाण्डोस्स्वकल्पितार्थविषयं वचनमिव प्ररोचनामात्रपरमित्यवसीयत इति चेत् ।

यज्ञाग्रहारोपाख्यानवचनजातमप्येवमेवेत्यवधारय, अन्यथा हि तत्र बह्वसमञ्जसमापद्यते । तथा हि— तस्मिन्सत्रे दीक्षणीयायामाग्नावैष्णवः पुरोडाशोऽग्निना नानुष्ठितश्चेदग्नेर्भागो न स्यात् । अनुष्ठितश्चेत् विष्णोरिदानीं भागानुवृत्तिर्न स्यात् । उपसत्सु वैष्णवो यागः केनापि देवेनानुष्ठितश्चेत् तदीय एवेदानीं स्यान्न वैष्णवः; नानुष्ठितश्चेत् क्रतुर्विकलः स्यात्; उदवसानीयावसानाः सर्वेऽपि देवर्षिभिरनुष्ठिताश्चेत् सर्वेषु हविष्षु सर्वेऽपि भागिनः स्युः । कैश्चित्कोचित्कृताश्चेत्सर्वेषामपि स क्रतुर्विकल इति ततो विष्णोः प्रीतिस्ततो देवानां वरलाभश्च न स्यात् । किञ्च पूर्वं वैष्णवः क्रतुः कालविशेषे नानादेवत्यो जात इत्यभ्युपगमे तस्मिन्नुपदेशातिदेशाभ्यां 'प्रवृत्तेषु विधिषु श्रुतानां देवतासमर्पकपदानां पूर्वं विष्णुवाचित्वमिदानीं नानादेवतावाचित्वमिति क्वापि अदृष्टचरं विविधार्थवत्त्वं प्रसज्येत । एतेन—'इन्द्रादयो देवा विष्णुं यजन्तीति न यष्टृयष्टव्यभावविरोधः मनुजास्त्विन्द्रादीन्यजन्तीति नेन्द्रादीनां यष्टव्यत्वप्रसिद्धिविरोधश्च' इत्यपास्तम् । तदा हि विधिषु देवतावाचकपदानां नित्यमेव वैयर्थ्यं प्रसज्येत ।

एवं यज्ञाग्रहारोपाख्यानवदेव देवानां क्रत्वनुष्ठानार्थवादा अप्यविवक्षितार्था द्रष्टव्याः, अन्यथा हि तत्राप्यसाङ्गत्यमापद्येत । तथा हि—छन्दोगब्राह्मणे 'प्रजापतिरकामयत बहु स्यां प्रजायेयेति स एतमग्निष्टोममपश्यत्तमाहरत्तेनेमाः प्रजा असृजत' इति प्रजापतेस्सृष्टिसामर्थ्यसिध्यर्थमग्निष्टोमानुष्ठानमुक्त्वा 'सोऽकामयत यज्ञं सृजेयेति स मुखत एव त्रिवृतमसृजत तं गायत्रीछन्दोऽन्वसृज्यताग्निर्देवता ब्राह्मणो मनुष्या वसन्त ऋतुः' इत्यादिना यज्ञानुष्ठानार्थं तदपेक्षितानां त्रिवृत्पञ्चदशादिस्तोमनां गायत्रीत्रिष्टुभादिच्छन्दसां ब्राह्मण-

क्षत्रियादिमनुष्याणां वसन्तग्रीष्मादिऋतूनाञ्च सृष्टिरुक्ता । पुराणेषु तु 'गायत्रञ्च ऋचश्चैव त्रिवृत्स्तोमं रथन्तरम् । अग्निष्टोमञ्च यज्ञानां निर्ममे प्रथमान्मुखात्' इत्यादिना स्तोमादिसृष्टितः पृथगग्निष्टोमादियज्ञसृष्टिरप्युक्ता । एवमग्निष्टोमतदङ्गकलापसृष्टेः प्रागेव 'प्रजापतिरग्निष्टोममाहरत्' इति कथं घटते ? तथा 'देवा वै यशस्कामास्सत्रमासत अग्निरिन्द्रो वायुर्मखः' इति चतुर्णां देवानां सत्रानुष्ठानमुक्तम् । कथं चत्वार एव ब्राह्मण्यरहितास्सत्रमनुतिष्ठेयुः ? सप्तदशावराणां ब्राह्मणानामेव हि सत्रानुष्ठानम् । 'ब्रह्म वै देवानां बृहस्पतिः क्षत्रमिन्द्रः' इत्यादिश्रवणात् देवेष्वपि ब्राह्मणादिभावोऽस्तीति चेदस्तु नाम । तथाऽपि बृहस्पतेरेव देवेषु ब्राह्मणत्वेन निर्धारितस्य सत्राधिकारः स्यान्न त्वग्न्यादीनाम् । 'त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु' इति अग्नेरपि देवेषु ब्राह्मण्यनिर्धारणं श्रूयते इति चेत्, तर्ह्यर्थवादद्वयमप्यविवक्षितार्थमित्येव पर्यवस्येत्; उभयोरितरव्यवच्छेदेन ब्राह्मण्यनिर्धारणायोगात् । तथापीन्द्रादीनां सत्राधिकारो न स्यादेव । तथा विश्वसृजामयने स्त्रिया आर्त्विज्यं श्रूयते 'वाक् सुब्रह्मण्य (ण्या)' इति । तथैव तैत्तिरीयशाखायामपि श्रूयते 'वागेषां सुब्रह्मण्यासीच्छन्दोयोगान्विजानती' इति । कथं स्त्रिया आर्त्विज्यम् ? 'होतारं वृणीते' इत्यादिविधिवाक्यगतैर्हि पुलिङ्गैः ऋत्विजां पुंस्त्वं विवक्षितम् । तथा सर्पाणामयने चक्रपिशङ्गयोर्द्वयोरुन्नेतृकर्म श्रूयते 'चक्रपिशङ्गावुन्नेतारौ' इति । कथमेककर्तृकमुन्नेतृकर्म द्वौ कुर्याताम् ? तस्मादविवक्षितार्थ एव देवानां क्रत्वनुष्ठानार्थवादः । अतो विद्याविशेषेभ्यः कर्मभ्यश्च प्रच्युता देवाः श्रवणादिभ्योऽपि च्यवन्त इत्येव युक्तम्; वैदिकत्वाविशेषात् ।

यत्तु कठकौषीतकीशाखादिषु यमभहेन्द्रादीनां ब्रह्मविद्योपदेष्टृत्वमुक्तम्, तत् वामदेववत्पूर्वजन्मानुवृत्तया ब्रह्मविद्यया घटते । यत्तु छान्दोग्य इन्द्रस्य ब्रह्मविद्यार्थमेकशतवर्षब्रह्मचर्यवर्णनं तत् क्रत्वनुष्ठानवर्णनवदविवक्षितार्थं नेतव्यम् । नन्विह विरोधाभावे किमित्यविवक्षितार्थत्वं कल्प्यते ? इहापि विरोधस्तुल्य एव । कथं हि देवानां चित्रेष्ट्यादिषु, पशुयागादिषु च हविर्भूतानि मधुमांसानि तत्र तत्र यजमानैः प्रदीयमानानि सदा भुञ्जानानां क्षणमपि ब्रह्मचर्यं सम्भवेत्? ब्रह्मचर्यकाले तद्भोजनाभावे च हविर्भोजनेन तृप्तानां देवानां फलप्रदातृत्वमिति नियमस्त्यक्त एव स्यात् । तस्मान्नास्ति देवानां ब्रह्मविद्याऽधिकारः ।

सूत्रस्य मधुविद्यादिष्वधिकारासम्भवात् वैदिकत्वाविशेषेण ब्रह्मविद्यायामप्यनाधिकारं जैमिनिर्मेन इत्येकोऽर्थः । मधुमांसभक्षणशीलेषुब्रह्मचर्यासम्भवात् तेष्वनधिकारं जैमिनिर्मेन इत्यपरोऽर्थः । १, ३. ३१ ।

एवं विग्रहादिपञ्चकवतीं देवतां सिद्धान्तिरीत्याऽभ्युपगम्य तस्याः श्रवणादिष्वधिकारो निराकृतः। इदानीं तथाभूतायां देवतायां प्रमाणाभावात् तस्यास्तदधिकारव्यवस्थापनं गगनकुसुमस्य सौरभ्यप्रदानेन तुल्यमित्यभिप्रेत्याह—

**ज्योतिषि भावाच्च । १. ३. ३२ ।**

यागादिविधिसामर्थ्यं आदित्यादिपदसामर्थ्यं मन्त्रार्थवादेतिहासपुराणेषु विग्रहादिपञ्चकवद्देवताकीर्तनञ्च तथाभूतदेवतास्तित्वे प्रमाणत्वेन शङ्कनीयतया सम्भावितम् । तथा हि तत्तद्देवत्ययागविधयः श्रूयन्ते । यागाश्च तत्तद्देवताराधनरूपाः; 'यज देवपूजायाम्' इति स्मरणात् । फलकामिनाञ्च देवताराधनानि राजाराधनवत्फलार्थानीत्याराध्यमानानां देवतानां राज्ञामिव फलदातृत्वमवगम्यते । न च फलस्यानीशानानां फलदातृत्वं घटते । नाप्यप्रसन्नाः फलं प्रयच्छन्ति । नापि दीयमानं हविरभुञ्जानाः प्रसीदन्ति । न चैतत्सर्वमचेतनानां विग्रहरहितानामुपपद्यत इति यागविधिसामर्थ्याद्विग्रहो हविर्भोक्तृत्वं प्रसादवत्त्वमैश्वर्यं फलदातृत्वं च देवतानां कल्प्यते ।

तथा 'यदाग्नेयोऽष्टाकपालः' इत्यादिष्वग्न्यादीनां भोज्येन पुरोडाशादिना सम्बन्धो योग्यतया भोक्तृत्वमेव । भोक्तृत्वे च तदुपपादको विग्रहस्तत्साध्यं प्रसादादिकं च लभ्यत इत्येवं द्रव्यदेवतासम्बन्धविधिसामर्थ्यादपि तासां विग्रहादिपञ्चकं कल्प्यते । तथा प्रगीताप्रगीतमन्त्रसाध्यगुणवचनरूपस्तोत्रशस्त्रविधिसामर्थ्यादपि । गुणवचनं हि देवतानां राज्ञामिवाराधनरूपं भवति । तेनाराध्यमानानां देवतानां फलदातृत्वं कल्प्यते । तेन तासां फलैश्वर्यं स्तावकेषु प्रसादो गुणवचनाकर्णनं विग्रहवत्ता चेति सर्वं कल्प्यते । तथा 'यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' इति देवताध्यानविधिसामर्थ्यादपि विग्रहादिकं कल्प्यते । न हि विग्रहरहिता देवता ध्यानगोचरीभवतीति रूपविशेषाकांक्षायां मन्त्रार्थवादादिप्रसिद्धं विग्रहात्मकमेव रूपं ग्राह्यम् । हविःप्रदानसमये हविरुद्देश्यभूतविग्रहवद्देवताध्यानं च दृष्टार्थत्वाय हविःस्वीकरणार्थम् । तच्च भोजनार्थम् । तेन प्रसादस्तेन फलकामनया हविस्त्यक्तवते यजमानाय फलप्रदानञ्चेति सर्वं लभ्यते ।

तथा आदित्योऽग्निश्चन्द्र इन्द्र इत्यादयः शब्दा विधिमन्त्रार्थवादेतिहासपुराणेषु लोके च प्रसिद्धाः । तेषाञ्च विधिमन्त्रादिष्वेव प्रातिपदिकात् विहितैर्विभक्तितद्धितैर्योगदर्शनात् निखण्ड्वादिषु रविः

सूर्यो वह्निर्ज्वलनो विधुश्चन्द्रमा मघवान् मरुत्वानित्यादिपर्यायस्मरणाच्च हुंफडादिवैलक्षण्येनार्थवत्त्वस्य, लोक-वेदप्रसिद्धेन्द्राण्यादिशब्देषु 'पुंयोगादाख्यायाम्' (पा. सू. ४. १. ४८.) इति विहितस्त्रीप्रत्यययोगाद्वि-ग्रहवदर्थवत्त्वस्य च सिद्धौ विग्रहविशेषाकांक्षायां मन्त्रार्थवादादिप्रसिद्धो विग्रहः समानवाक्योपात्तत्वाद्धविर्भो-क्तृत्वादिकञ्चेति सर्वं लभ्यते । साक्षाच्च विधिनैरपेक्ष्येण 'वज्रहस्तः पुरन्दरः' 'पिबा सोममिन्द्र मन्दतु त्वा' 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' 'इष्टान् भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः' 'ते तृप्तास्तर्प-यन्त्येनं सर्वकामफलैः शुभैः' इत्यादिमन्त्रार्थवादेतिहासपुराणैरपि देवतानां विग्रहादिपञ्चकं सिध्यतीति ।

तत्र पदसामर्थ्यं तावन्नोक्तरूपदेवतास्तित्वे प्रमाणम्; आदित्योऽग्निश्चन्द्रः विद्युन्नक्षत्राणीत्येवमा-दिपदानामचेतनगगनपरिदृश्यमानमण्डलादिरूपे प्रसिद्धे ज्योतिषि वृत्तेः । तत्रैव तेषां लोकप्रसिद्धेः, 'न तत्र सूर्यः' इत्यादिश्रुतिप्रसिद्धेश्च सद्भावात्; इन्द्रो मित्रो वरुण इत्यादिपदानामपि 'ज्येष्ठा नक्षत्रमिन्द्रो देवता' इत्यादिश्रुत्यनुसारेण नक्षत्ररूपे ज्योतिष्येव वृत्तेः । नक्षत्रेष्टियाज्यानुवाक्यासु क्वचित्क्वचित् 'इन्द्रो ज्येष्ठामनु नक्षत्रमेति' इत्यादौ ज्येष्ठादिनक्षत्राणामिन्द्रादिदेवतानाञ्च भेदनिर्देशस्य नक्षत्रपदवाच्यलौकिकतेजोविशेषत्व-देवतापदवाच्यालौकिकहविरुद्देश्यत्वात्मकरूपभेदेनोपपत्तेः । सोऽयं गकार इति प्रत्यभिज्ञालम्भितसर्वविषय-गकाराभेदानुसारेण 'द्वावेतौ गकारौ तारेण मन्द्रोऽभिभूतः तारान्मन्द्रोऽन्यः' इत्यादिभेदप्रत्ययानामौपाधिक-रूपभेदविषयत्वस्याङ्गीकृतत्वेन तद्वदिहापि सम्भवात् । अन्येषां च लोकवेदप्रसिद्धदेवतावाचिपदानां ज्यो-तिर्मण्डलमध्यगते क्वचित्क्वचिन्नक्षत्रे इन्द्रादिपदवत् वर्तनसम्भवात् । इन्द्राण्यादिशब्दानां नक्षत्रवाचितया पुंविशेषयुक्तस्त्रीवाचित्वाभावेऽपि हिमानीयवानीशब्दवत् स्त्रीप्रत्ययान्तत्वसम्भवात् । पृथिव्यापो वायुरन्तरिक्ष-मोषधयो वनस्पतयः पुष्पाणि फलान्यहोरात्रौ प्राची प्रतीची मनश्चित्तमित्यादिकर्मविशेषविनियुक्तदेवतावाचि-पदानां लोकवेदप्रसिध्यनुसारेण प्रसिद्धेषु मृदादिष्वेव वृत्तेश्च । तस्मात् पदसामर्थ्यं न विग्रहादिमद्देवताऽस्तित्वे प्रमाणम् ।

नापि यागादिविधिसामर्थ्यम्; यागविधीनां पूजाविषयत्वेन, द्रव्यसम्बन्धविधीनां द्रव्यसम्बन्धि-त्वेन, स्तोत्रशस्त्रविधीनां स्तुतिविषयत्वेन, ध्यानविधेर्ध्यानविषयत्वेन चादित्यादिज्योतिषि मृदादौ च तात्पर्यात् । तथा हि—

पूज्यः फलप्रदातेति नियमो नैव विद्यते। दूरे तस्य फलैश्वर्यप्रीतिभोजनविग्रहाः ॥

पूज्या हि राज्ञश्शिशवः पूज्यास्तत्पादुकादयः। क्रतौ सोमश्शिवेज्यायां पूजोपकरणादयः ॥

तानुद्दिश्य कृता पूजा राजादीनां भवेद्यदि। तदाऽस्तु यज्ञे देवानां पूजा ब्रह्मण एव नः ॥

पितुर्मातुर्गुरोः पत्युरतिथीनां त्रयीविदां। पूजायां गतिरेषैव ह्युपास्या सकलैरपि ॥

इष्ट्योः पार्वणहोमाभ्यां ते एव खलु कर्मणि। यष्टव्ये स्वीकृते तत्र का गतिः कथितेतरा ॥

तुरङ्गमेधे मेध्यस्य तुरङ्गस्य गुणक्रियाः। अङ्गानि च यदिज्यन्ते गतिस्तत्रापि नापरा ॥

छन्दोगानां विवाहेषु या कन्या परिणीयते। सैवेज्यते तदङ्गं च तत्राप्यन्याऽस्ति नो गतिः ॥

श्राद्धेष्वतीताः पितरः तिर्यग्जन्मगता अपि। इज्यन्ते नामगोत्राभ्यां तत्राप्येषा गतिस्समा ॥

चेतनत्वेऽपि देवानां भाविकल्पान्तरे फलम्। ईश्वरेणैव दातव्यं न तु तैर्विलयं गतैः ॥

अथवा कर्मजन्येन संस्कारेणैव केवलम्। न द्रव्यदानप्रीतेन देवेनाखण्डलादिना ॥

आहूतायाप्रदानं च क्षेपं संकल्पितस्य च। तत्प्रीतिमिच्छन् कः कुर्यादाश्रयन् ब्रह्म कर्म वा ॥

यदाग्नेयादिवाक्येषु तद्धितादिसमर्पितः। द्रव्यदैवतसम्बन्धश्शब्दद्वारो विवक्षितः ॥

विधिवद्देवतावाचिशब्दोच्चारणपूर्वकम्। द्रव्यस्य त्यज्यमानत्वं सम्बन्धस्ताभिरस्ति हि ॥

शब्दद्वारक एवात्र सम्बन्धो विधिमर्हति। शक्यं पुंसामनुष्ठातुं शब्दोच्चारणमेव यत् ॥

अत एव हि पर्यायाः पदस्य विधिवर्तिनः। यज्ञेषु न प्रयुज्यन्ते देवतास्मृतिसिद्धये ॥

अग्नये पावकायेति विहिता यत्र देवता। तत्र शब्दौ प्रयुज्येते पर्यायावपि तावुभौ ॥

सोमः क्रतुहविर्भूतस्तस्याभिषवसाधनः। ग्रावा च स्तूयते तद्वदर्हन्तीन्द्रादयः स्तुतिम् ॥

प्रजापतेर्हि न प्रीत्यै तत्परीवादशंसनम्। अन्यत्र स्तोत्रशब्दस्य तादर्थ्ये कस्तवाग्रहः ॥

समुद्रध्यानवद्ध्यानं देवतानां प्रसिध्यति। तासां नाचेतनत्वेन किञ्चिदप्यपराध्यते ॥

श्लोकैस्संगृहीतमर्थजातमस्फुटार्थकरंबितं वाक्यैः स्फुटीकुर्मः। पूज्यः फलप्रदातेति नास्ति नियमः, येन यागेषु पूजनीयानां देवादीनां फलैश्वर्यादिकं सिध्येत्। राज्ञश्शिशवस्तत्पादुकादयश्च राजभृत्यैरुचितोपचारेण पूज्यन्ते। ज्योतिष्टोमे सोमलता पयोऽन्ननिवेदनेन पूज्यते। शिवपूजायां पूजोपकरणनिर्माल्यादयो गन्धपुष्पादिभिः पूज्यन्ते। न हि तेषां फलदातृत्वमस्ति। यद्युच्यते राजकुमारादीनामुपचारो राजदीनामेव

पूजा तेषां च फलदातृत्वमस्तीति नास्ति नियमविरोध इति, तदा क्रतुषु देवानामिज्या तत्तद्वर्णाश्रमाचारादि-रूपाज्ञाप्रवर्तकस्य परब्रह्मण एव पूजा तस्य फलदातृत्वमस्तीति नास्माकमपि नियमविरोधः । अवश्यञ्च पित्रा-दिपूजासु दर्शपूर्णमासेष्ट्योर्दर्शपूर्णमासशब्दितकर्मसमुदायदेवत्यत्वेनात एव आग्नेयादिप्रत्येकयागविकारेषु सौर्या-दिषु अनतिदेश्यत्वेन च स्वीकृतयोः पार्वणहोमयोरश्वमेधे चाश्वस्य गुणक्रियाङ्गान्युद्दिश्य 'कृष्णाय स्वाहा श्वेताय-स्वाहा यन्मेहसि तस्मै स्वाहा यच्छकृत्करोषि तस्मै स्वाहा दद्भ्यस्स्वाहा हनूभ्यां स्वाहा' इत्यादिमन्त्रैः क्रियमाणेषु होमेषु, सामगानां परिणयनकर्मणि परिणीयमानां कन्यामुद्दिश्य 'लेखासंधिषु पक्ष्मसु' इत्यादिमन्त्रैः क्रिय-माणेषु होमेषु, तदङ्गविशेषमुद्दिश्य 'इमं त उपस्थं मधुना संसृजामि' इत्यादिमन्त्रेण क्रियमाणे होमे, तिर्यग्जन्मगतानपि मृतानुद्दिश्य क्रियमाणेषु श्राद्धेषु कल्पावसानकृतयागादिषु च नान्या गतिरस्ति; पित्रादीनां पितृशुश्रूषादिविध्युक्तैहिकामुष्मिकफलदानसामर्थ्यसम्भवात्, चेतनत्वेनाभ्युपगतानामपि यागेषु यष्टव्यानामि-न्द्रादीनां कल्पान्तरेष्वनुवृत्तिरहितानां भाविकल्पान्तरभोग्यपूर्वकल्पावसानकृतकर्मफलदानसामर्थ्यासम्भवाच्च । तस्मादनन्यगत्या देवानामिज्यायाः परब्रह्मणैव फलं देयमिति वा ब्रह्मवादानभ्युपगमे कर्मजन्यसंस्कारेणैवा-पूर्वरूपेण फलं देयमिति वाऽऽश्रयणीयम् । द्रव्यदानप्रीतेन इन्द्रादिना फलं देयमिति त्वयुक्तमेव; कर्मान्वयि-देवतानां चेतनत्वफलैश्वर्यफलदानकालपर्यन्तस्थायित्वनियमाभावात् ।

किञ्च 'ऐन्द्रमेकादशकपालं निर्वपेत् मारुतं सप्तकपालं ग्रामकामः' इति विहितायामिष्ट्यां 'ऐन्द्र-स्यावद्यन् ब्रूयादिन्द्रायानुब्रूहीत्याश्राव्य ब्रूयान्मरुतो यजेति मारुतस्यावद्यन्ब्रूयान्मरुद्भ्योऽनुब्रूहीत्याश्राव्य ब्रूयादिन्द्रं यज' इत्याहूतदेवतायै द्रव्याप्रदानमनाहूतदेवतायै तत्प्रदानञ्च कर्तव्यतया श्रूयते । 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान्विभजेत्' इत्यादिवाक्यविहितायामभ्यु-दयेष्टौ द्रव्यसंप्रदानत्वेन सङ्कल्पितदेवतानिरासो द्रव्याणां देवतान्तरोद्देशेन त्यागश्च कर्तव्यतया श्रूयते । तदेतत् यागादीनां देवताप्रीणनेन ततः फलावाप्त्यर्थपक्षे न युज्यते । को हि द्रव्यदानेन कञ्चित्प्रीणयितुमिच्छन् द्रव्यदानार्थं तमाहूय तद्द्रव्यमन्यस्मै दद्यात् ? कस्मैचिद्द्रव्यं सङ्कल्पितं प्रतिक्षिप्यान्यस्मै तद्द्रव्यञ्च दद्यात्? न ह्यप्रीणनीये प्रीणनीयत्वभ्रान्त्या तदाह्वानसङ्कल्पौ; अग्रे यष्टव्याना-मिन्द्रादीनामवश्यं प्रीणनीयत्वात्, तेषामपि तथाऽऽह्वानसङ्कल्पाभ्यां कोपजननायोगात् । अतः कर्मब्रह्मान्य-तरानाश्रयेण यष्टॄणां देवताप्रीणनपरतायामीदृशकर्मानुष्ठानायोगादीदृशैः कर्मभिरात्मनो लीलारूपैः प्राप्तं

ब्रह्मैव वा, अपूर्वद्वारकं कर्मैव वा विश्वसन्तो यष्टव्यदेवताप्रीतिमनादृत्य यथाविधि कर्मानुतिष्ठन्ति । कर्मविधयश्च यष्टव्यदेवताप्रीतिमद्वारीकुर्वन्तः सर्वकर्माराध्यस्य परब्रह्मणः फलदातृत्वे कर्मण एवापूर्वद्वारकस्य फलजनकत्वे वा तात्पर्यवन्तः प्रवृत्ता इत्येवोपपादनीयम् । द्वितीयपक्षे पूज्यः फलप्रदातेति नियमश्च त्यक्तव्यः, पूजैव फलजनिकेत्यभ्युपेयम् । तस्मान्न यागविधिसामर्थ्यं देवतानां विग्रहादिमत्त्वे प्रमाणम् ।

नापि द्रव्यदेवतासम्बन्धविधिसामर्थ्यम् । 'यदाग्नेयोऽष्टाकपालः' 'अनुमत्यै पुरोडाशम्' इत्यादिविधिषु तद्धितचतुर्थीसमर्पितः द्रव्याणां देवतासम्बन्धो न भोक्तृभोज्यभावसम्बन्धः; तस्य पुरुषेणानुष्ठातुमशक्यस्य विध्यगोचरत्वात् । किन्तु यथाविधि तत्तद्देवतावाचिशब्दोच्चारणपूर्वकत्यागविषयत्वरूपः परम्परासम्बन्धः; शब्दोच्चारणस्यैव पुरुषेणानुष्ठातुं शक्यस्य विध्यर्हत्वात् । अत एव द्रव्यत्यागादिविषये तत्तद्विधिश्रुतदेवतावाचिशब्दोच्चारण एव विधिपर्यवसानम्, न देवतायाम्, द्रव्यस्य तत्सम्बन्धे वा । अत एवाग्नेयादियागकालेषु अग्न्यादिशब्दपर्याया नोच्चार्यन्ते—अन्यथा उद्देश्यदेवतास्मृतिमात्रार्थत्वे कदाचिदिच्छया पर्याया अपि प्रयुज्येरन् ।

यद्युच्येत—विध्युपात्तदेवतावाचिशब्दस्य बुद्धिसन्निहितस्य त्यागे कारणाभावात् स एव यागकाले प्रयुज्यते—इति, तथापि 'अग्नये पावकाय पुरोडाशम्' इत्यादिविधिविहितयागानुष्ठाने द्वयोरग्निवाचकपदयोः प्रयोगो न स्यात्; एकेनाप्यर्थस्मृतिसिद्धेः । अतो विधिवाक्यश्रुतयावद्देवतावाचिशब्दोच्चारणविधिबलादेव स नियमो निर्वाह्य इति न देवताविधिसामर्थ्यमपि तासां विग्रहादिमत्त्वे प्रमाणम् । स्तुतिस्त्विन्द्रादीनामचेतनानामपि बहिष्पवमानस्तोत्रे सोमलताया इव, ग्रावस्तुतौ तदभिषवसाधनानां ग्राव्णामिव चोपपद्यते । किञ्च द्वादशाहे 'प्रजापतिं परिवदन्ति' इति विधानात् 'अकुशलो वा अयं प्रजापतिर्यो दंशमशकान् ससृजे यस्तेनान्' इत्यादीन् प्रजापतिपरिवादान्न तत्प्रीत्यर्थमधीयते । निन्दानां कोपजनकत्वात्, किंत्वदृष्टार्थमित्येवोपपादनीयम् । एवमेवान्यस्यापि स्तुतशस्त्रवचनस्यादृष्टार्थत्वोपपत्तौ प्रीत्यर्थतायामाग्रहो न युक्तः । देवतानां ध्यानमपि बृहत्स्तोत्रादिकालेषु समुद्रादीनामिवाचेतनानामपि घटते । तस्माद्देवतानामचेतनत्वे किमपि न विरुध्यते इति न यागदेवतास्तोत्रशस्त्रदेवताध्यानविधीनां सामर्थ्यं तासां विग्रहादिमत्त्वे प्रमाणम् ।

नापि मन्त्रार्थवादेतिहासपुराणवचनजातं तत्र प्रमाणम् । ज्योतिष्टोमादिकर्मतदङ्गकलापान्वयिषु मन्त्रेषु तद्विध्यन्वयिष्वर्थवादेषु च देवतानां सर्गप्रलयविग्रहचरित्रादिवर्णनस्यानुष्ठेयार्थस्मृतिद्वारा विधेयस्तुतिद्वारा

च ज्योतिष्टोमादौ प्रधाने तदङ्गकलापे च, औपनिषदमन्त्रार्थवादेष्वितिहासपुराणेषु च तद्वर्णनस्य देवतानां सृष्टिप्रलयकर्तरि तपश्चर्यादिभिः तासामुपास्ये तद्वैरिनिग्रहादिना तासां पालके परब्रह्मज्योतिषि, तदुपासना-विशेषेषु च तात्पर्यात् । ज्योतिष्टोमादिकर्मतदङ्गविधिभिः परब्रह्मस्वरूपनिरूपणपरमहावाक्यैस्तदुपासनाविधि-भिश्चैकवाक्यतापन्नानां देवताविग्रहादिसमर्पकमन्त्रार्थवादेतिहासपुराणवचनानां प्रतीयमानेऽर्थान्तरे तात्पर्या-योगात् ।

स्यादेतत्—तेषां विध्याद्येकवाक्यत्वेन देवताविग्रहादौ तात्पर्याभावेऽप्यवान्तरपदसंसर्गतः प्रतीय-मानः सोऽप्यर्थोऽभ्युपगन्तव्य एव; प्रतीयमानार्थत्यागे कारणाभावात्, 'न सुरां पिबेत्' इत्यत्र पदत्रयस्य पदैकवाक्यत्वात् सुरां पिबेदिति पदद्वयसंसर्गतोऽर्थप्रतीतिरेव नास्तीति तदनभ्युपगमः । मन्त्रादीनां तु सन्नि-हितविध्यादिभिः वाक्यैकवाक्यतेति तेभ्योऽवान्तरार्थप्रतीतिः सर्वानुभवसिद्धा न प्रत्याख्यातुं शक्या । अत एव जैमिनिनाऽपि 'अविशिष्टस्तु वाक्यार्थः' (जै. सू. १. २. ३२) 'अर्थैकत्वादेकं वाक्यम्' (जै. सू. २. १. ४६) इत्यादिसूत्रैर्मन्त्राणां वाक्यार्थवत्त्वं दर्शितम् । तद्विरोधिनश्च तदर्थशास्त्रादयो मन्त्राधिकरणे परिहृताः । अपरिपूर्णेषु मन्त्रवाक्येषु तदर्थप्रतीत्युपपादकौ चानुषङ्गाध्याहारौ 'अनुषङ्गो वाक्यसमाप्तिः' (जै. सू. २. १. ४८) 'व्यवधाना (व्यवाया) न्नानुषज्यते' (जै. सू. २. १. ४८) इति सूत्राभ्यां दर्शितौ । मन्त्रवाक्यार्थप्रतीतिमुपजीव्यैव च 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्राणां लैङ्गिकविनियोगोऽङ्गी-कृतः । अर्थवादवाक्यानामर्थवत्त्वविरोधिनश्च शास्त्रदृष्टविरोधादयोऽर्थवादाधिकरणे परिहृताः । तदर्थप्रतीत्युप-पादकाश्च तत्कार्यकरत्वादिलक्षणास्तत्सिद्धिपेटिकायां दर्शिताः । अर्थवादवाक्यार्थप्रतीतिमुपजीव्यैव च ज्योतिष्टो-मादिफलसमर्पकस्वर्गशब्दस्यालौकिकसुखविषयत्वं रात्रिसत्रस्य प्रतिष्ठाफलत्वं, ज्योतिष्टोमशब्दस्य सोमयागमात्र-विषयत्वं चातुर्मास्ये द्वयोः पर्वणोरप्राकृताग्निप्रणयनान्तरविधानस्य मध्यमपर्वविषयत्वं गवामयनिका-रम्भकालविधायकवाक्यगतपौर्णमासीशब्दस्य माघपौर्णमासीविषयत्वं द्वादशाहविकारेषु तदीयमध्यमदशरात्रस्य प्रवृत्तिर्गवामयने त्र्यनीकायां स्वस्थानविवृद्धिः दण्डकलितपदावृत्तिरित्याद्यर्थजातं निर्णीतम् । किं बहुना । कृत्स्नमपि पूर्वतन्त्रं मन्त्रार्थवादलिङ्गान्युपजीव्यैव प्रवृत्तम् । तथापि मन्त्रार्थवादादीनां विध्याद्येकवाक्य-तयाऽन्यत्र तात्पर्यवत्तां देवताविग्रहादिरूपे स्वार्थे तात्पर्याभावान्न तत्र प्रामाण्य मस्तीति चेत्;

न; तात्पर्यविषय एवार्थे शब्दस्य प्रामाण्यमिति नियमाभावात्। प्रमाणतः प्राप्तिविरोधयोरसतोः पदसमभिव्याहारलभ्यार्थमात्रे तस्य प्रामाण्यात्। अन्यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति वाक्यात् रेवत्याधारवारवन्तीयसामसाध्याग्निष्टोमस्तोत्रविशिष्टक्रतुविधिपरात् 'रेवतीर्नस्सधमाद' इत्यादिऋक्त्रयाधारवारवन्तीयसामरूपमग्निष्टोमस्तोत्रस्य विशेषणं न सिध्येत्। न हि तत् 'सोमेन यजेत' इत्यादिविशिष्टविधिषु सोमलतादिविशेषणवल्लोकसिद्धम्। नापि 'कवतीषु रथन्तरं गायेत्' इति तत्प्रमापकविध्यन्तरमस्ति। न चास्यैव विशिष्टगोचरस्य विधेर्विशेषणविधावपि तात्पर्यं वक्तुं शक्यम्; विध्यावृत्तिप्रसङ्गात्। न चाक्षेपाद्विशेषणविधिलाभः। लोकप्रसिद्धे हि विशेषणे विशिष्टविधिवाक्यगतसोमादिपदाप्रतीते तद्विशिष्टयागादिगोचरो विधिः विशेषणविधिमाक्षिपेत्। न चेह तथा विशेषणस्य लोकतः प्रसिद्धिरस्ति। न चाक्षेपादेव तस्य प्रसिद्धिरप्येष्टव्या। आक्षेपात् विशेषणप्रसिद्धौ सत्यां विशिष्टविधिः, विशिष्टविधिनैव च विशेषणतद्विध्योराक्षेप इति परस्पराश्रयापत्तेः। तस्मात् विशिष्टविधेर्विशेषणस्वरूपे तात्पर्याभावेऽपि तस्मिन्नप्रसिद्धे 'रेवतीषु वारवन्तीयम्' इति पदद्वयसमभिव्याहारस्यैव प्रामाण्यमभ्युपगम्य ततस्तत्प्रसिद्धिराश्रयणीया।

एवं मन्त्रार्थवादादिभिस्तात्पर्यरहितैरपि देवताविग्रहादिकं प्रसिद्धं न निवार्यते। अन्यार्थप्रवृत्तस्यापि प्रमाणस्य प्रमाणस्वाभाव्येन यावत्स्वविषयपरिच्छेदकत्वावश्यंभावात्; 'घटायोन्मीलितं चक्षुः पटं किं न प्रकाशयेत्' इति न्यायात्। यदि च शब्दस्य तात्पर्यविषय एव प्रामाण्यमिति नियमस्तथाऽपि न दोषः। यागादिविधिभिः ब्रह्मपरवाक्यैरुपासनविधिभिश्च वाक्यैकवाक्यतया तेषु महातात्पर्यवतामपि मंत्रार्थवादादीनां प्रधानविध्येकवाक्यतावतां प्रयाजादिवाक्यानामिव स्वस्वार्थेष्ववान्तरतात्पर्यसंभवात्। प्रयाजादीनामितिकर्तव्यतारूपेण प्रधानविध्याकांक्षितत्वात् तेष्ववान्तरतात्पर्यमस्ति, न देवताविग्रहादौ, अनपेक्षितत्वादिति चेत्; न। 'क्लृप्तोपकारसाकांक्षाः प्रथमं प्राकृतैस्सह। संबध्यन्ते समीपस्थं विकाराः प्रोज्झ्य चोदितम्' इत्युक्तन्यायेन क्लृप्तोपकारप्राकृताङ्गकलापप्राथमिकान्वयनिराकांक्षीकृतप्रधानविध्यनपेक्षिताङ्गसमर्पकाणामप्यामनहोमादिविधीनां स्वस्वार्थेष्ववान्तरतात्पर्याभ्युपगमात्। मंत्रार्थवादप्रतिपाद्यनामानपेक्षितत्वमप्यसिद्धम्; विध्द्वयन्वय्यर्थवादार्थानां यागादिषूपासनासु च परीक्षकप्रवृत्त्युपयोगिस्तुतिद्वारत्वात्।

यद्यपि काव्येषु पुरवर्णनादिरूपा सहृदयहृदयोल्लासप्रयोजना, लोके राजादिहृदयावर्जनप्रयोजना, बालानामौषधादिप्रवृत्तिप्रयोजना च स्तुतिरसदर्थावलंबनाऽपि दृश्यते, तथापि परीक्षकाणां यागादिप्रवृत्ति-प्रयोजना स्तुतिरसदर्थावलंबना न संभवत्येव । एवं 'नकिरिन्द्र त्वदुत्तरः' 'विश्वस्मादिन्द्र उत्तरः' इत्यादि-मंत्रार्थानामपि स्तुतिद्वारत्वादसदर्थावलंबनता न संभवति । ये तु केवलमनुष्ठेयार्थप्रकाशका मंत्रा न तु स्तावकाः तदर्था अप्यनुष्ठेयार्थप्रकाशनस्यैव निर्वाहार्थमपेक्षिताः । तथा ब्रह्मवाक्यान्वयिसृष्टिप्रलयादिप्रति-पादकमंत्रार्थवादा अप्यध्यारोपापवादादिभिर्ब्रह्मणो निष्प्रपञ्चत्वादिप्रसिद्ध्यर्थमपेक्षिता एव । एवमितिहासपुराणार्था अपि । तस्मान्मंत्रार्थवादेतिहासपुराणैर्देवतानां विग्रहादिकं सिद्ध्यतीति चेत्;

उच्यते—यदुक्तं प्रामितिविरोधयोरभावात् मन्त्रार्थवादादिभिरन्यपरैरपि देवतानां विग्रहादिकं सिध्य-तीति, तत्र विरोधाभावस्तावदसिद्धः । तथा हि—देवतानां विग्रहं प्रतिपादयतां तेषामचेतनेषु ज्योतिरादिष्वादित्यादि-शब्दानां शक्तिग्राहकैस्तदनुसारिभिर्लौकिकवैदिकप्रयोगैश्च विरोधः । 'असौ योऽवसर्पति नीलग्रीवो विलोहितः उतैनं गोपा अदृशन्नदृशन्नुदहार्यः उतैनं विश्वा भूतानि स दृष्टो मृडयाति नः' इत्यादित्यस्य विग्रहं गोपाल-सलिलाहरणीप्रभृतिपामरजनसाधारण्येन सकलदृश्यं प्रतिपादयतो मन्त्रस्य प्रत्यक्षविरोधः । अस्य च 'नमस्सू-र्यायादित्याय नमो नीलग्रीवाय शितिकण्ठाय' इति कृच्छ्राङ्गादित्योपस्थानमन्त्रस्य च नीलग्रीवत्वादिविशिष्ट-मादित्यविग्रहं प्रतिपादयतस्तथाभूतविग्रहं शिवासाधारणं प्रतिपादयद्भिर्मन्त्रार्थवादादिभिर्विरोधः । 'अर्यम्णे चरुं निर्वपेत्स्वर्गकामोऽसौ वा आदित्योऽर्यमा' इत्यादिब्राह्मणविहिते काम्येष्टिविशेषे क्रमप्रमाणेन विनियुक्तस्य 'अर्यमायाति वृषभस्तुविष्मान्दाता वसूनां पुरुहूतो अर्हन् । सहस्राक्षो गोत्रभिद्वज्रबाहुरस्मासु देवो द्रविणं ददातु' इति मन्त्रस्य वज्रहस्तत्वादिविशिष्टं विग्रहं महेन्द्रासाधारणं प्रतिपादयद्भिस्तैर्विरोधः । 'एतेन वै सर्पा अपमृत्युमजयन्नपमृत्युं जयन्ति य एतदुपयन्ति तस्मात्ते हित्वा जीर्णां त्वचमतिसर्पन्त्यप हि ते मृत्युमजयन्सर्पा वा आदित्या आदित्यानामेवैषां प्रकाशो भवति य एतदुपयन्ति' इति सर्पाणामयनार्थवादस्यादित्यानां कद्रूसुतरूपत्वं प्रतिपादयतस्तेषां पौरुषेयान्विग्रहानदितिप्रभवान् प्रतिपादयद्भिस्तैर्विरोधः । 'सायं यावानश्च वै देवाः प्रातर्यावानश्चाग्निहोत्रिणो गृहमागच्छन्ति' 'अध्वर्यो द्रावय त्वं सोममिन्द्रः पिपासति । उपनूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा' इत्यादीनां यागदेशागमनं देवतानां प्रतिपादयतां प्रत्यक्षविरोधः; युग-पत्प्रवृत्तानेकयागदेशागमनविरोधश्च ।

न च कायव्यूहकल्पनेन सर्वत्रागमननिर्वाहः। मातापितृप्रभवत्वनियतानां करचरणाभिलापादिमत्कायानामिच्छामात्रेणाविर्भावकल्पनानुपपत्तेः। 'कस्य वाह देवा यज्ञमागच्छन्ति कस्य वा न बहूनां-यजमानानाम्' इति ब्राह्मणश्रुतप्रश्नानुपपत्तेश्च। कायव्यूहपरिग्रहे हि सर्वेषामपि यज्ञमागच्छेयुरविरोधात्। 'यो वै देवताः पूर्वः परिगृह्णाति स एनाश्श्वोभूते यजते' इति तदुत्तरमपि विरुद्धम्। पश्चाद्देवतापरिग्रहं कृतवतां यज्ञं प्रति देवतानामनागमनेन तन्नैष्फल्यप्रसङ्गात्, एवमपि युगपत्प्रवृत्तानेकयागदेशागमनानिर्वाहाच्च। तथा देवतानां यागीयहविर्भोक्तृत्वं प्रतिपादयतां मन्त्रार्थवादादीनां प्रत्यक्षविरोधः। अग्नौ हुतानि हि द्रव्याणि प्रत्यक्षं भस्मीभवन्ति दृश्यन्ते। पदहोमादिद्रव्याणि च पांस्वादिषु निलीयमानानि दृश्यन्ते। पञ्चशारदीयोक्षहयमेधपरस्वदादयश्च यागीयाः पशवः पर्यग्निकरणान्ते देवतोद्देशेन त्यक्ता यथापूर्वं जीवन्त एव दृश्यन्ते। श्राद्धेषु विश्वदेवाद्युद्देशेन त्यक्तानि चान्नानि निमन्त्रितैर्ब्राह्मणैरेव भुज्यमानानि तेषामेव च तृप्तिं जनयन्ति दृश्यन्ते। हविषां सूक्ष्माः रसांशाः देवैर्भुज्यन्त इति मधुकरभुक्त सूक्ष्मरसांशेषु पुष्पेष्विव नास्ति प्रत्यक्षविरोध इति चेत्; एवमपि हविषां परलोकोत्क्रमणप्रत्यावृत्तिश्रुतिस्मृतिविरोधः। तथा हि—अग्निहोत्राहुतीः प्रकृत्य वाजसनेयके श्रूयते 'ते वा एते आहुती उत्क्रामतः ते अन्तरिक्षमाविशतस्ते अन्तरिक्षं तर्पयतः ते दिवमाविशतः ते दिवं तर्पयतः ते आवर्तेते। ते इममाविशतः ते पुरुषमाविशतः ते स्त्रियमाविशतः ततः पुत्रो जायते' इति। स्मर्यते (?) च 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' (मैत्रा. ६. ३७) इति।

न च 'दिवं तर्पयत' इति श्रवणाद्धविषां कस्मिंश्चिदंशे देवैर्भुक्तेऽशान्तरस्य प्रत्यावृत्तिः स्यादिति वाच्यम्। 'दिवं तर्पयत' इत्यस्य 'अन्तरिक्षं तपयत' इत्यस्य चाविशेषेण तत्तल्लोकप्रीतिपरतया विशिष्य अग्निहोत्रदेवताभूताग्निसूर्यप्रजापतितर्पणपरत्वाभावात्। अन्यथा 'अन्तरिक्षमाविशत' इत्यस्यायोगात्, अग्निसूर्यप्रजापतीनामन्तरिक्षलोकवासित्वाभावात्। अपि च हविर्भुञ्जाना देवाः स्वस्थान एव स्थित्व भुञ्जते उत यागदेशमागत्य? आद्ये यागदेशागमनं व्यर्थमिति 'अध्वर्यो द्रावय त्वम्' इत्यादिश्रुतिविरोधः; द्वितीये हविरग्निना देवानां स्थानं प्रति न नेतव्यमिति 'अतन्द्रो हव्या वहसि हविष्कृतः' 'अग्नेस्त्रयो ज्यायांसो भ्रातर आसन्ते देवेभ्यो हव्यं वहन्तः प्रामीयन्त' इत्यादिश्रुतिविरोधः।

एवं श्राद्धेषु तर्पणीयाः स्वस्थानस्था भुञ्जत इत्यङ्गीकारे पुराणादिषु तेषां श्राद्धदेशागमनवर्णनविरोधः। उक्तं हि पाद्मपुराणे श्रीरामचन्द्रेणापि योगवाप्याज्ञयायां श्राद्धे क्रियमाणे दशरथतत्पितृपिता-

महास्तं देशमागत्य निमन्त्रितब्राह्मणानां देहेषु स्थिताः सीतया दृष्टा इति । तत्र किमर्थं निमन्त्रितान् ब्राह्मणान् दृष्ट्वैव श्राद्धदेशादपक्रान्ताऽसीति पृष्टवन्तं श्रीरामचन्द्रं प्रति श्रीसीतावचनं 'शृणु त्वं नाथ यद्दृष्टमाश्चर्यं हि मयेदृशम् । पिता तव मया दृष्टो ब्राह्मणाङ्गेषु राघव । सर्वाभरणसंयुक्तो द्वावन्यौ च तथाविधौ । दृष्ट्वा त्रपाऽन्विता चाहमपक्रान्ता तवान्तिकात्' इति । श्राद्धदेशमागत्य निमन्त्रितब्राह्मणमुखेनाविश्य मनुष्यमुखेन पिशाचा इव भुञ्जत इत्यङ्गीकारे तु 'अभून्नो दूतो हविषो जातवेदा अवाड्ढव्यानि सुरभीणि कृत्वा प्रादात् पितृभ्यस्स्वधया ते अक्षन्' इत्यादिश्रुतिविरोधः । स्थावरतिर्यङ्मनुष्यादिजन्म प्राप्तानां श्राद्धदेशगमनासम्भवयुक्तिविरोधश्च; पूर्वजन्मपुत्रादिकृतश्राद्धैः कस्यापि कदापि तृप्तेरदर्शनात् प्रत्यक्षविरोधश्च । भाव्यं हि हव्यकव्योद्देश्यानां तद्भोक्तृत्वे कदाचिदप्यकस्मादेव पूर्वजन्मपुत्रादिकर्तृकश्राद्धदत्तान्नपानविशेषोपयोगजन्यैः प्रीतिविशेषैः ।

किञ्च देवतानां हविर्भोक्तृत्वाङ्गीकारे 'नह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति' इति श्रुत्यन्तरविरोधश्च । प्रस्तरयागस्वरूपहोमवातनामहोमादिद्रव्येषु कुशकाशदारुशकलवाय्वादिषु मनुष्याद्यनदनीयेषु युक्तिविरोधश्च । तथा स्रुवादिगृहीतैराज्यादिद्रव्यैः द्व्यवदानादिपरिमितैः पुरोडाशादिद्रव्यैश्च, महाविग्रहत्वेन मन्त्रार्थवादादिप्रतिपन्नानां देवतानां तृप्तिं प्रतिपादयतां तेषां युक्तिविरोधः । 'यस्मै वा अल्पेनाहरन्ति नात्मना तृप्यति नान्यस्मै ददाति यस्मै महता तृप्यत्यात्मना ददात्यन्यस्मै महता पूर्णं होतव्यं तृप्त एवैनमिन्द्रः प्रजया पशुभिस्समर्द्धयति' इति श्रुतिरपि स्रुवाद्यल्पपात्रप्रविष्टैराज्यादिद्रव्यैस्तृप्त्यसम्भवयुक्तिमनुमोदते ।

तथा देवानां फलदातृत्वं प्रतिपादयतां कल्पान्तरभोग्यफलदातृत्वासम्भवयुक्तिविरोधः, 'फलमत उपपत्तेः' (ब्र.सू ३.२.३)'इत्यधिकरणोक्तन्यायविरोधश्च । एकैवाग्निहोत्रदेवता दध्ना प्रीतेन्द्रियं प्रयच्छति, पयसा प्रीता पशुमित्यादिफलव्यवस्थायां लोकदृष्टविरोधश्च । लोके द्रव्यप्रदानेन प्रीणनीयानां राजादीनां प्रदेयद्रव्यभेदेन व्यवस्थितफलदातृत्वादर्शनात् । एतेन—फलदातृत्वान्यथानुपपत्त्या देवतानां तत्तत्फलैश्वर्यकल्पनमपि निरस्तम् । तस्मादसिद्धो विरोधाभावः ।

यदुक्तमन्यपरवाक्यैरपि प्रतीयमानं देवताविग्रहादिकं सिध्यति, तात्पर्यविषय एवार्थे शब्दस्य प्रामाण्यमिति नियमाभावादिति, तदसङ्गतम् । तथा नियमाभावे 'श्वेतो धावति' इति श्वित्रिकर्तृकवाक्यनिर्णे-

जनपरवाक्यस्य 'इतः सारमेयो गच्छति' इत्यर्थान्तरेऽपि प्रतीयमाने प्रामाण्यप्रसङ्गात्। न चेष्टापत्तिः। अविरुद्धेऽपि शब्दस्य तात्पर्यविषयव्यतिरिक्तेऽर्थे पर्वतो वह्निमानित्यनुमानस्यानुमेयव्यतिरिक्तेऽर्थे पर्वतादाविव शब्दस्य प्रामाण्यव्यवहाराभावस्य सर्वसंप्रतिपन्नत्वात्। व्यवहारानुसारेणैव प्रामाण्यस्याभ्युपगन्तव्यत्वात्। ननु शब्दस्य स्वतन्त्र एवार्थद्वये प्रामाण्यं नास्ति। द्वारद्वारिभावापन्ने तु अस्तीति चेत्; न। श्लिष्टकाव्येषु विश्वतोमुखेषु सूत्रेषु च वक्तृविवक्षया शब्दतात्पर्यविषये स्वतन्त्रार्थद्वयेऽपि प्रामाण्यस्य संप्रतिपन्नतया विवक्षितविवेकतस्तात्पर्यविषय एवार्थे शब्दस्य प्रामाण्यमिति पर्यवसानेनोक्तव्यवस्थाया निष्प्रमाणकत्वात्। 'रेवतीषु वारवन्तीयम्' इत्यत्र तात्पर्याविषयेऽप्यर्थे शब्दस्य प्रामाण्यं दृष्टमिति चेत् न। असिद्धेः; 'सोमेन यजेत' इत्यादिष्विवात्रापि विशिष्टविधिनैव विशेषणविध्याक्षेपाङ्गीकारात्। न चोक्तपरस्पराश्रयप्रसङ्गः; सोमद्रव्यप्रतीतिवत् विशिष्टविधिगतपदलभ्यां रेवत्याधारवारवन्तीयप्रतीतिमुपजीव्य प्रवृत्तेन विशिष्टविधिना रेवतीषु वारवन्तीयं कुर्यादिति विशेषणविध्याक्षेपसम्भवात्। तत्प्रतीत्यभावे त्वयाऽपि तत्र प्रामाण्यस्याङ्गीकर्तुमशक्यत्वेन तत्प्रतीतेरेवावश्याभ्युपगन्तव्यत्वात्।

इयांस्तु विशेषः—सोमलतादिविशेषणं मानान्तरसिद्धं पदात्प्रतीयते, इदन्तु मानान्तरासिद्धमेव पदसमभिव्याहारात् प्रतीयत इति। प्रतीयमानेऽपि विशेषणे तात्पर्याभावात् तत्र विशिष्टविधेः प्रामाण्याभाव उभयत्राप्यविशिष्टः। अयञ्चापरो विशेषः—सोमलतादिद्रव्यस्य लोकसिद्धत्वात् तत्र यागसम्बन्धित्वेनैव विधिः कल्प्यः। 'विश्वजित् सर्वपृष्ठोऽतिरात्रो भवति' इति विश्वजिति षाडहिकपृष्ठगतसर्वताविधौ षाडहिकपृष्ठानां लोकसिद्धत्वाभावेऽपि द्वादशाहप्रकरणगतविधिसिद्धत्वात्तेष्वपि विश्वजित्सम्बन्धित्वेनैव विधिः कल्प्यः। इह तु विशेषणस्वरूपस्यापि मानान्तरासिद्धत्वात्प्रतीयमानेऽपि तस्मिन् विशिष्टविधेः प्रामाण्याभावाच्च तत्सिद्ध्यर्थं स्वरूपेण स्तोत्रविशेषसम्बन्धित्वेन च विधिद्वयं कल्प्यमिति। तस्मात् तात्पर्याविषयेऽपि शब्दः प्रमाणमित्येतदसङ्गतम्।

यदुक्तम्—देवताविग्रहादीनामवान्तरवाक्यार्थत्वात्प्रयाजामनहोमादिष्विव तेष्ववान्तरतात्पर्यमभ्युपगन्तव्यमिति, तदप्यसङ्गतम्। वेदे न्यायेन तात्पर्यं व्यवतिष्ठते, लोके वक्तृविवक्षयेव। अस्ति प्रयाजादीनामवान्तरतात्पर्यसद्भावावगमको न्यायः। तेषां प्रयाजादिविधितात्पर्याभावे हि वैयर्थ्यं स्यात्। तथा सति

प्रयाजादीनां निष्प्रमाणकत्वापत्त्या दर्शपूर्णमासाद्यन्यव्यङ्गसमर्पकत्वाभावेन तद्विध्येकवाक्यतयाऽपि सार्थकत्व-कल्पनानवकाशात् । न चाध्ययनविधिपरिगृहीतानां तेषां वैयर्थ्यं युक्तमिति । न चेह तथा मन्त्रार्थवादानां देवताविग्रहादिष्ववान्तरतात्पर्यकल्पकोऽस्ति न्यायः । तेषामनुष्ठानकालिकद्रव्यदेवतादिस्वरूपप्रकाशनप्राशस्त्य-समर्पणरूपव्यापारान्तरवतां तद्द्वारेण तत्तद्विध्येकवाक्यतया सार्थकत्वसंभवात् । यदि तु तात्पर्यकल्पकन्या-यमनपेक्ष्यैव क्वचित्तात्पर्यवतां वेदवाक्यानां प्रतिपत्तुरिच्छयाऽन्यत्रापि तात्पर्यमभ्युपगम्येत, तदा 'सदेव सोम्येदमग्र आसीत्' इत्यादिजगत्कारणवाक्यानामुपक्रमोपसंहारादिबलवन्न्यायवशात्क्वचिदर्थे तात्पर्यवतां तत्तद्वाचभ्युपगतब्रह्मविष्णुरुद्रेन्द्रचन्द्रसूर्यानलादिष्वन्येष्वपि बहुषु तात्पर्यं स्यादिति अनेकेश्वरवादो वेदसिद्धः प्रसज्येत ।

ननु मन्त्रार्थवादानामसदर्थविषयत्वे तात्पर्यप्रतीत्या परीक्षकप्रवृत्त्युपयोगिन्या विधेयस्तुतिबुद्धे-र्विहितानुष्ठानस्य चासंभवात्तदुभयद्वारा विध्येकवाक्यत्वं न निर्वहतीति तन्निर्वाहार्थमेव तेषां सदर्थविषयकत्वं कल्पनीयमिति चेत्; उच्यते— स्तावकवाक्यानां तावत्स्तुतिद्वारकविध्येकवाक्यत्वनिर्वाहार्थमसदर्थविषयत्वमेव कल्पनीयम् । तथात्व एव स्तुतिपरत्वनिश्चयेन झटिति स्तुतिबुध्युत्पत्तेः । अन्यथा स्वार्थबोधविषयैव वाक्यप्रवृत्तिरिति शङ्कया स्तुतिपरत्वनिश्चयासंभवात् । अत एव स्तुतिपरवाक्यानामसदर्थावलंबनत्वं सिद्धं कृत्वोक्तमभियुक्तैः 'भूतार्थव्याहृतिःसा हि न स्तुतिः परमेष्ठिनः' इति । भट्टपादैरप्याशङ्कापरिहाराभ्यां तथैव दर्शितम् 'अथोच्येत असदर्थान्वाख्याने कुतःस्तुतिनिन्दात्वमिति सुतरां तत्र प्रतीयते कामं परार्थे वक्तारो भवन्ति काऽत्र स्तुतिर्निन्दा वा । सत्यमेवैतत्' इति ।

नन्वसदर्थावलंबनया स्तुत्या परीक्षकाः कथं प्ररोचिताः प्रवर्तन्ते ? इत्थम्—आरोग्यादिफले कटुतिक्ताद्यौषधसेवने बहुनियमपरिकरे प्रवर्तकस्य पित्रादेः प्रवर्तनीयेष्वतमासत्यानेकफलोक्तीनामिव बहुवित्त-व्ययायाससाध्ये कर्मणि प्रवर्तकस्य वेदस्य स्तावकवाक्यानामसदर्थविषयत्वमवगच्छन्तोऽपि प्रवर्तनीयाः परीक्षका यदस्य वास्तवं फलं तल्लंभनार्थमवश्यमिदमनुष्ठापनीयमिति स्तावकवाक्यानामसदर्थावलंबनत्वे हितैषित्वेन प्रवृत्तिप्रतिबन्धकद्वेषालस्यादिभङ्गरूपप्ररोचनार्थमसत्यान्यन्यान्यपि फलान्युपन्यस्य कृत्युद्देश्यतार्हमिदं कर्मेति पित्रादिवद्वेदः स्तौतीति स्तावकवाक्यानामसदर्थावलंबनत्वेऽप्यबाधितायां कर्मस्तुतौ तात्पर्यं निश्चित्य

प्रवर्तकस्य वेदस्य हितैषित्वेनानतिक्रमणीयत्वविश्वासात्स्तुतिद्वारभूतार्थासत्यत्वमदोषं मन्यमानाः प्रवर्तन्ते। एवमेवासदर्थावलंबननिन्दावाक्यश्रवणेन च निवर्तन्ते। एवमसदर्थावलंबनस्तुतिनिन्दावाक्यानां प्रवृत्तिनिवृत्तिपरत्वासमर्थने भारतादिषु. गृध्रगोमायुसंवादादीनामसदुपाख्यानानां का गतिः? ते हि तिर्यञ्चोऽपि एवं वञ्चयन्ति; विशिष्टबुद्धयो मनुष्या वञ्चनप्रवृत्ताश्चेत्कथं कथं न वञ्चयेयुः? तस्माद्वञ्चकानिंगिताकारैः सम्यक्संशोध्य तदनुसारेण प्रवर्तनीयं निवर्तनीयं वेत्याद्युपदेशे तात्पर्यवन्तः प्रमाणभूता इत्येव समर्थनीयम्। इयमेव 'त्रयो होत्रीये कुशला बभूवुः' इत्यादिवैदिकोपाख्यानानामपि गतिः। न हि तेषां सदर्थविषयत्वमङ्गीकर्तुं शक्यम्; वेदस्यानित्यसंयोगप्रसङ्गात्।

मन्त्राणान्तु अनुष्ठानार्थं प्रकाशनीयेषु द्रव्यदेवतादिषु सद्विषयत्वानियमेऽपि तद्विशेषणेषु च नास्ति सद्विषयत्वनियमः। 'तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' 'जगृभ्णाते दक्षिणमिन्द्र हस्तम्' 'धान्ते धूमो गच्छत्वन्तरिक्षमार्चिः 'पृथिवीं भस्मना प्रीणय स्वाहा' 'दिवमग्रेण मा लेखीरन्तरिक्षं मध्येन मा हिंसीः पृथिव्या संभव' 'अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यम् अग्नये जुष्टं निर्वपामि' इत्यादि मन्त्रेषु प्रकाशनीयानां द्रव्यदेवताक्रियाणामिव तद्विशेषणानां सौमनस्यादीनां सत्यत्वाभावात्। 'अवचनं तेषामितरार्थं प्रयुज्यते' (जै. सू. ९. १. ३७) इति नावमिकाधिकरणे कर्मसमवेतनिर्वापादिविशेषणस्य 'अश्विनोर्बाहुभ्याम्' इत्यादेरसमवेतस्याभिधानमदृष्टार्थमिति व्यवस्थापितत्वात्। एवमेव कर्मसमवेतदेवताप्रकाशकेषु मन्त्रेषु विग्रहादिरूपतद्विशेषणाभिधानमसमवेताभिधानं संभवतीति न किञ्चित् हीयते। अवश्यञ्च 'अग्निस्ते तनुवं मातिधात्' 'व्रीहीणां मेध सुमनस्यमानः' इत्यादिमन्त्रेषु द्रव्यविशेषणदेहेन्द्रियाद्यनुवदनसमवेताभिधानमित्येवांगीकार्यम्। देवताविशेषणदेहेन्द्रियाद्यनुवदने कः सद्विषयत्वाग्रहः? तस्मात् पुरोडाशादीनामिवाचेतनानां देवतानामपि देहेन्द्रियादि कल्पनामात्रमित्येव वक्तुं युक्तम्। पुरोडाशादिशब्दानामपूर्वादिष्विव आदित्यादिशब्दानामप्यचेतनेषु ज्योतिरादिषु व्युत्पत्तिग्रहस्याविशिष्टत्वात्। अत एव 'असौ योऽवसर्पति' इति मंत्रः पामरसाधारण्येन सकलदृष्टिगोचरज्योतिर्मंडलमेव नीलग्रीवत्वेन विशेषयति। न हि तत् काल्पनिकत्वमनङ्गीकृत्य निर्वोढुं शक्यम्। तस्माद्देवताविग्रहादिप्रतिपादकमंत्रार्थवादानामपि विग्रहादिकल्पनावति ज्योतिरादावेव तात्पर्यान्न तद्बलादपि देवतानां विग्रहादिसिद्धिः। तस्मात् विग्रहादिरहितत्वेन देवतानां ब्रह्मविद्याधिकारशङ्काऽपि नावकाशवतीति। इत्थं द्वेधा पूर्वपक्षे प्राप्ते सिद्धान्तमाह—

## भावं तु बादरायणोऽस्ति हि ।३३।

यद्यपि मधुविद्यादिष्वधिकारो नास्ति देवानाम् । न निवार्यते तथापि स शुद्धायां ब्रह्मविद्यायाम् ॥
न हि सर्वेषां सर्वेष्वधिकारो राजसूयमुख्येषु । सर्वत्रानधिकारो येनैषां कुहचिदनधिकारात्स्यात् ॥
किंच मध्वादिविद्यासु देवानां नानधिक्रिया । भाष्ये त्वनधिकारोक्तिः कृत्वाचिन्त्यैव केवलम् ॥
वस्वाद्यास्समुपासीरन्नात्मानं स्वस्वमात्मना । स्वस्वात्मन उपास्यत्वे को विरोधः प्रसज्यते ॥
कर्मकर्तृविरोधोऽस्ति नोपास्योपासकत्वतः । अहंग्रहोपासनासु स्वस्योपास्यत्वदर्शनात् ॥
उपासनाविशेष्यत्वे स चेदत्रापि नास्ति सः । विशेषणानि ह्यमृते वस्वाद्या वर्णिताः श्रुतौ ॥
तस्यां विशेष्यत्वमपि स्वस्य नैव विरुध्यते । योऽहं सोऽसाविति न किं स्वविशेष्यमुपासनम् ।
कर्मकर्तृविरोधोक्तिस्तत्राभ्युच्चय एव नः । तत्परत्वेन हि मुहुः पूर्वपक्षाः प्रवर्तिताः ॥
वस्वादीनामपि सतां वस्वादित्वं भवान्तरे । प्रार्थनीयं भवत्येव पुत्रित्वं पुत्रिणां यथा ॥
देवत्वप्रापकं सत्रं देवास्सन्तोऽपि कुर्वते । इत्येवमुक्तिलिंगादप्ययमर्थोऽवसीयते ॥
यद्वा वस्वादिभावस्य तस्मिन्नेव भवे सतः । प्रार्थनीयं भवत्येव दीर्घकालानुवर्तनम् ॥
सिद्धं किञ्चित्फलांशानां तदंशान्तरलिप्सया । रसायनादिसेवासु प्रवृत्तिः खलु दृश्यते ॥

श्लोकानामयं निष्कृष्टोऽर्थः —यदुक्तम्—देवानां मधुविद्यादिष्वनधिकारात् ब्रह्मविद्यायामपि नाधिकार—इति तत्रेदमुच्यते । ब्राह्मणादीनां राजसूयादिष्वनधिकारेऽपि यथा कर्मान्तरेष्वधिकारः, एवमिहापि स्यादिति । मध्वादिविद्यासु देवतानामनधिकारोऽप्यसिद्धः । भाष्ये तदनधिकारोक्तिः कृत्वाचिन्तैवाग्निहोत्राद्यनधिकारेऽपि विद्याधिकारसिध्यर्था । तथाहि—वस्वादीनां मध्वाद्युपासनासु कर्मकर्तृभावस्तावन्न विरुध्यते; अहंग्रहोपासनासु स्वस्य स्वोपास्यत्वसंप्रतिपत्तेः । यदुच्येत—तासु स्वात्मत्वेन ब्रह्मोपासनीयमिति स्वात्मा विशेषणं विशेष्यत्वे परं कर्मकर्तृविरोध इति । तर्ह्यत्रापि स न प्रसज्यते । वस्वादिभोग्यरोहितादिपञ्चरूपात्मकामृतोपासनासु वस्वादीनां विशेषणत्वात् । —अथापि स्यात् मध्वाद्यध्यासेनादित्याद्युपासनास्वादित्यादीनां विशेष्यत्वादस्ति तत्र कर्मकर्तृविरोध इति—तत्रापि नास्तीति ब्रूमः । 'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्युपासनायां स्वात्मनो विशेष्यत्वस्यापि दर्शनात् । क्व तर्हि कर्मकर्तृविरोध उपास्योपासकतायाम् ? न क्वापि । कथं ? 'स क्रतुं कुर्वीत' इति वाक्यस्य जीवोपासनापरत्वे कर्मकर्तृविरोधः उक्तः अभ्युच्चयमात्रम् ।

अन्यथा तदनन्तराधिकरणेषु जीव उपास्य इति पूर्वपक्षो न क्रियेत । कृतश्च पुनः पुनस्तत्र तत्राधिकरणे तथा । तथा प्राग्वस्वादिभावानां तत्प्रेप्साऽपि न विरुद्धा । इह जन्मनि पुत्रवतां पुनः पुत्रान्तरोत्पादनाक्षमाणां भाविजन्मन्यपि पुत्रवान् भूयासमितीच्छया तदर्थकर्मानुष्ठानदर्शनेन तद्वदिहाप्युपपत्तेः । 'एताभिर्वै देवा देवत्वमगच्छन् देवत्वं गच्छन्ति य एता उपयन्ति' इति देवत्वप्राप्त्यर्थतया विहितस्य पञ्चदशरात्रस्य 'एतद्वै देवानां सत्रं तदद्यापि देवास्सत्रमात्रमासत' इत्यर्थवादे तस्य देवानुष्ठीयमानत्वोक्तिलिङ्गाच्च । न हि देवानां सतां देवत्वप्रापकसत्रानुष्ठानं भाविजन्मनि देवत्वप्रेप्सां विना घटते । यद्यपि देवत्वप्राप्त्यनन्तरं यागानुष्ठानवर्णनं कल्पितार्थविषयम्, तथापि तत्र स्तुत्यालम्बनभूतो वाक्यार्थो भाविजन्मनि देवत्वप्रेप्सया घटनीयत्वात् कल्पितत्वेऽपि 'ऊरू वा एतौ यज्ञस्य यद्वरुणप्रघासास्साकमेधाश्च' इत्यर्थवादार्थ इव लिङ्गं भवितुमर्हत्येव ।

अपि च वस्वादीनां तस्मिन्नेव जन्मनि मन्वन्तरावसाने स्वाधिकारनिवृत्तिर्माभूत् मन्वन्तरान्तरेऽपि वसुपदाद्यनुवृत्तिरस्त्विति लिप्सया तदनुष्ठानं घटते । दृष्टं हि देहपोषणनयनपाटवादिमतामेव अग्रे वार्धकेन तदपचयो माभूदिति तदनुवृत्तिलिप्सया वैद्यकोक्तरसायनसेवनम् । तस्मान्मध्वादिविद्यासु भवत्येवाधिकारः, अग्निहोत्रादिषु परं न संभवति; स्वोपासनावत्स्वोद्देशेन द्रव्यत्यागस्यायोगात् । स्वात्मने सङ्कल्प्यमानस्य द्रव्यस्य-स्वत्वानिवृत्तेः, त्रैवर्णिकत्वऋषिवंशत्वरहितानां तेषामाधानसाध्यस्य अग्नेरार्षेयस्य वरणस्य चाङ्गस्यासंभवाच्च । एवमग्निहोत्रादिष्वनधिकारेऽपि ब्रह्मविद्याधिकार उपपादित एव ।

यत्तु—क्रतुहविर्भूतमधुमांसादि सदा भुञ्जानानां ब्रह्मविद्याधिगमार्थं ब्रह्मचर्यानुष्ठानं न संभवतीत्युक्तम्, तदप्ययुक्तम् । कायव्यूहवतां देवानां गुरुकुलवासादिना रूपेण ब्रह्मचर्यं, यज्ञदेशागतेन, स्वपदास्थितेन वा रूपेण हविर्भोक्तृत्वमित्यविरोधात्, 'भुंजीत विषयान् कैश्चित्कैश्चिदुग्रं तपश्चरेत्' इति स्मृत्या रूपान्तरेण भोगस्य रूपान्तरानुष्ठीयमानब्रह्मचर्याविरोधित्वावगमात् । एवं कर्मानधिकारप्रयुक्तो, ब्रह्मचर्यासंभवप्रयुक्तश्च ब्रह्मविद्यानधिकारः समाहितः । तत्र ब्रह्मविद्याधिकारस्य भावं भगवान् बादरायणो मन्यत इति सूत्रनिर्दिष्टे साध्ये 'अस्तिहि' इति हेतुः कर्माधिकारहेतुसामर्थ्याभावेऽपि अस्ति हि ब्रह्मविद्याधिकारहेतुभूतमर्थित्वसामर्थ्यादिकमिति, मधुमांसादिभोगाविरोधापादकं गुरुकुलवासि रूपान्तरमिति च योजनीयः ।

यत्तु देवतानां चेतनत्वविग्रहत्वाद्यभावात्तदधिकारचिन्तैव निरालंबनेति पूर्वपक्षान्तरम्, तन्निराकरणपूर्विकायामपि अधिकारव्यवस्थापनायां 'अस्ति हि' इत्येव हेतुः । अस्ति हि विग्रहादिमती देवतेति—तदर्थः । तत्रायमाशयः ।

कथं देवान्निराकुर्यात्कर्ममीमांसकस्स्वयम् । ज्योतिष्टोमादिभिस्स्वर्गे देवत्वजुष एव हि ॥
कर्मभिस्स्वर्गता देवास्सन्तीन्द्राद्यास्तु नेति चेत् । ननु कर्मभिरेवासन्निन्द्राद्या अपि देवताः ॥
मयिवर्चस्सामगानं त्रैलोक्यैश्वर्यकामिनः । विहितं हि ततोऽन्यत्किमिन्द्रस्येन्द्रत्वमिष्यते ॥
ब्रह्मेन्द्रयक्षराजादीनावर्तयितुमिच्छतः । सुतास इति वर्गस्य गानं विहितमीक्ष्यते ॥
विहितं ब्रह्मसालोक्यसार्ष्टिसायुज्यकामिनः । सहस्रवत्सरं सत्रं वाजपेयस्तमीप्सतः ॥

श्लोकैस्संगृहीतमर्थजातं स्पष्टीकुर्मः । किं विग्रहवंतो देवा एव नेत्युच्यते, उत विशिष्य इन्द्रादयो न संतीति । कर्ममीमांसकेन तावद्देवसामान्यं निराकर्तुं न शक्यते । यतो देवभावं प्राप्तस्यैव स्वर्गः । कथम् ? स्वर्गो हि नाम सङ्कल्पमात्रोपनतस्रक्चन्दनवनितादिसाधनप्रभवः साधनार्जनदुःखासंभिन्नः स्वदारानियमभ्रंशादिप्रयुक्ताग्रिमनरकदुःखग्रासरहितश्च सुखविशेषः 'यन्न दुःखेन संभिन्नम्' इत्यादिश्रवणात् । स चात्रत्यब्राह्मणादिशरीरावच्छिन्नस्य न संभवतीति तद्विगमनान्तरं 'स्वर्गे लोके यजमानं हि धेहि' 'मां नाकस्य पृष्ठे परमे व्योमन्' इत्यादिमन्त्रार्थवादप्रतिपन्ने लोके 'अन्यन्नवतरं कल्याणतरं रूपं कुरुते' इत्यादिश्रुतिप्रतिपन्नदिव्यशरीरं प्राप्तेन लब्धव्य इत्येवोपपादनीयम् । तत्प्राप्तश्च देव एव । एवञ्च देवतासामान्यनिराकरणे ज्योतिष्टोमादीनां निष्फलत्वप्रसङ्गो दोषः । 'सन्तु नाम कर्मदेवाः, आजानदेवा इन्द्रादयो न संभवन्ति' इति चेत्—तत्किमिन्द्रादय इन्द्रत्वादिप्रापककल्पान्तरानुष्ठितकर्मविशेषप्रभवा न भवन्ति ? येन तेषां निराकरणं सुकरं भवेत् । प्रसिद्धं हि शताश्वमेधादिप्राप्यमिन्द्रादिपदमिति । श्रूयते च छन्दोगानां सामविधिब्राह्मणे 'मयि वर्च' इत्येतेन कल्पेन चत्वारि वर्षाणि प्रयुञ्जानास्त्रयाणां लोकानामाधिपत्यं गच्छन्तीति । 'मयि वर्चः मयि यशः' इत्यस्यामृचि गीतं साम प्रागुक्तनियमसाहित्येन चत्वारि वर्षाणि जपतस्त्रैलोक्याधिपत्यं भवतीति । तद्धीन्द्रपदमेव ।

किंच तस्मिन्नेव ब्राह्मणे 'अथ यः कामयेतावर्तयेयमित्येकरात्रं क्षीरसंयुक्तस्तिष्ठेत्सुतासो मधुमत्तमा इति वर्गः एतेषामेकमनेकं वा सर्वाणि प्रयुञ्जानः एकरात्रेण कुटुंबिनमावर्तयति द्विरात्रेण राजोपजीविनं

त्रिरात्रेण राजानं चतूरात्रेण ग्रामं पञ्चरात्रेण नगरं षड्रात्रेण जनपदं सप्तरात्रेण सुररक्षांसि अष्टरात्रेण पितृ-पिशाचान्नवरात्रेण यक्षान् दशरात्रेण गंधर्वाप्सरसोऽर्द्धमासेन वैश्रवणं मासेनेन्द्रं चतुर्भिः प्रजापतिं संवत्सरेण यत्किञ्च जगत् सर्वं हास्य गुणीभवति' इति ब्रह्मेन्द्रवरुणादिवशीकरणकामस्य 'सुतासो मधुमत्तमाः' इत्य-स्यामृचि गीतानामष्टानां साम्नां मध्ये एकस्यानेकस्य सर्वेषां वा साम्नां जपश्चतुर्मासादिकालविशेषावच्छिन्नो विहितः। तथा सामगानां पञ्चविंशब्राह्मणे 'ब्रह्मणस्सलोकतां सार्ष्टितां सायुज्यं गच्छन्ति य एतदुपयन्ति' इति विश्वसृजामयनस्य ब्रह्मसालोक्यसार्ष्टिसायुज्यफलं चोदितम्। तत्र सालोक्यं तल्लोकावाप्तिः। ब्रह्मणो यावन्ति भोग्यानि गंधमाल्यनृत्तगीतवादित्रादीनि तावतां प्राप्तिस्तत्सार्ष्टिः तैर्नृत्तगीतादिभिस्सङ्गीतशास्त्रादिकं सम्यग्जा-नानस्य ब्रह्मणो यावद्भोगस्तावद्भोगप्राप्तिस्सायुज्यमिति भेदः।

तथा तस्मिन्नेव ब्राह्मणे 'वाजपेययाजी वा प्रजापतिमाप्नोति' इति वाजपेयस्य ब्रह्मप्राप्तिः फलञ्चो-दितम्। एवंच यदि ब्रह्मेन्द्रादयो देवास्तत्तल्लोकविशेषेषु विग्रहवन्तो दिव्यभोगयुक्ता न स्युः; तदानीं तत्तद्दैव-भावावाप्त्यभिमतवरप्रार्थनार्थतद्वशीकरणतल्लोकप्राप्तितत्सदृशभोग्यभोवाप्तिफलार्थत्वेन विहितानां कर्मणां नैष्फल्य-प्रसङ्गः। तस्माद्यथा स्वर्गार्थज्योतिष्टोमादिविधिनिर्वाहाय मन्त्रार्थवादादिषु स्वर्गशब्दार्थप्रतिपादनस्य च सत्यत्वं ज्योतिष्टोमादितः स्वर्गफलावश्यम्भावविरोधिनः 'को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वा' इति फलसन्देह-प्रतिपादनस्यासत्यत्वं च स्वीकर्तव्यम्, तथा तत्तद्देवभावतद्वशीकरणतल्लोकप्राप्त्याद्यर्थकर्मविधिनिर्वाहाय ब्रह्मे-न्द्रवरुणादितनुभुवनभोगादिप्रतिपादनस्य सत्यत्वं तद्विरोध्यर्थप्रतिपादनस्यासत्यत्वं च स्वीकर्तव्यम्। तथा 'यः कामयेत् पिशाचान् गुणीभूतान् पश्येयमिति संवत्सरं चतुर्थे काले भुञ्जानः कपालेन भैक्षं चरन्प्राणशिशुरित्यन्तं सदा सहस्रकृत्वः आवर्तयन् पश्यत्ययाचितमेतेन कल्पेन द्वितीयं प्रयुञ्जानः पितॄन् पश्यति संवत्सरमित्यष्टमे काले भुञ्जानः पाणिभ्यां पात्रार्थं कुर्वाणो वृत्रस्य त्वा श्वसथादिषमाणा इत्येतयोः पूर्वं सदा सहस्रकृत्वः आवर्तयन् गंधर्वाप्सरसः पश्यति अयाचितमेतेन कल्पेन द्वितीयं प्रयुञ्जानो देवान्पश्यति' इति देवादिदर्शनार्थ-सामजपविधिनिर्वाहाय तदीयकायव्यूहप्रतिपादनस्य सत्यत्वं तद्विरोधिनामसत्यत्वं च स्वीकर्तव्यम्। अन्यथा बहुषु युगपद्देवादिदर्शनार्थं सामजपं कुर्वत्सु तावतां तत्फलालाभप्रसङ्गात्।

एवञ्चाजानदेवानां प्रसिद्धौ कर्मदेववत्। ज्योतींषि दिवि दृश्यानि यान्ति तद्देहतामिताम्॥
आमनन्ति हि ऋक्षाणि ज्योतींषि सुकृतामिति। तद्वदेवावगन्तव्यं विवस्वन्मण्डलाद्यपि॥

रविरादित्य इत्याद्यास्स्वार्थाधिष्ठानभावतः। शब्दास्तत्र प्रयुज्यन्ते नेत्राद्या गोळकेष्विव ॥
देहप्रभामण्डलस्य दर्शनं देहदर्शनम्। कृत्वा सकलदृश्यत्वं मन्त्रे निगदितं रवेः ॥
यदस्य नीळग्रीवत्वाद्युक्तं मन्त्रेषु केषुचित्। तदन्तर्यामिणो रूपमभिप्रेत्यांबिकापतेः ॥
मन्त्रान्तरे यदस्यैव रूपमैन्द्रं प्रदर्शितम्। द्वादशादित्यमध्ये तदिन्द्रस्यापि क्वचित्स्थितेः ॥
आदित्यत्वं तु सर्पाणामन्यच्चैवंविधं श्रुतम्। आदित्यो यूप इत्यादिन्यायेन स्तावकं परम् ॥
एवं सिद्धे फलविधिबळाच्चेतने देववर्गे कायव्यूहाश्रयणनिपुणे योगिवद्दृश्यभूते।
आहूतस्य क्रतुषु युगपन्नाङ्गताऽस्त्वित्ययुक्तिः प्रातः कर्माद्यनुमतिपरः कस्य वाहेति वादः ॥
त्यक्तस्य हविषो वृद्धिश्श्रूयते देवतेच्छया। पर्याप्ता देवतावृत्तेः प्रत्यावृत्तेश्च सा भवेत् ॥
निर्गत्वरस्य हविषस्सूक्ष्मस्यैव रसस्य वा। सुरभीकृत्य हविषो वोढाऽग्निरिति लिङ्गतः ॥
तत्र दैवततृप्त्यर्थं रसांशो वृद्धिमाप्नुवन्। तेषामास्वादने योग्यं परिणामं प्रपद्यते ॥
यथा प्रत्यावर्तमानो रसांशः प्राप्य पूषणम्। वृष्ट्योषधिप्रजारूपं परिणामं प्रपद्यते ॥
श्राद्धेषु दत्तस्यान्नस्य परिणामो मुनीश्वरैः। पित्रादिप्राप्तजात्यर्हः साक्षादेवं च वर्णितः ॥
येष्विष्टिसोमेष्वाह्वानं करणीयं सुपर्वणाम्। आगत्य भुञ्जते तेषु वहत्यन्येषु हव्यवाट् ॥
अभून्नो दूत इत्येतदाह वोढारमाहुतेः। विप्रभोज्यं (विभज्यान्नं) च नेतव्यं पितृषु स्थावरादिषु ॥
मानुषाद्यैर्यदन्नाद्यमकस्मादिव लभ्यते। तन्मध्यपाति श्राद्धान्नं भवान्तरसुतार्पितम् ॥
अशनप्रतिषेधस्तु रोहिताद्यमृते परम्। न हि रूपं परीणामं भोजनार्हं प्रपद्यते ॥
द्रव्यत्वात्कुशकाशादि भुक्त्यनर्हमपि स्वयम्। प्रपद्यते परीणामं तदर्हमिति युज्यते ॥
फलप्रदातृता येषु देवानां न विरुध्यते। द्वारं तेष्वीश्वरप्रीतिः तत्प्रीतिस्साति संभवे ॥
कर्मणैव फलोत्पत्तौ प्रीतिर्द्वारमितीष्यते। पयसा पशुरित्यादिव्यवस्था तेन युज्यते ॥

एवं सिद्धे पञ्चके देवतायां नास्त्येवास्मिन्विग्रहादौ विरोधः।
यस्मिन्कर्मण्यस्ति तत्रैव वाच्या तामुद्दिश्य त्यागमात्रात् फलाप्तिः ॥
सर्वत्रापि त्यागमात्रात्फलेऽपि प्रत्याख्यातुं विग्रहा नैव शक्याः।
इन्द्रश्चन्द्रस्सूर्य इत्यादिकानां भोग्यं कर्मोपासनानां फलं यैः ॥

श्लोकानामयमर्थः—एवं कर्मदेववदाजानदेवानां सिद्धौ रविमण्डलादीनि ज्योतींषि तत्तत्प्रभामण्डलानि पर्यवस्यन्ति । आमनन्ति हि 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि' इति । तद्बलात्कानिचिन्नक्षत्राणि कर्मदेवानामिव रविचन्द्रग्रहतारकादिज्योतींष्याजानदेवानां प्रभामण्डलान्येव । भवन्ति रविरादित्यश्चन्द्र इन्द्र इत्यादिशब्दास्तु नेत्रादिशब्दा गोलकेष्विव स्वस्ववाच्याधिष्ठानेषु प्रभामण्डलेषु गौणाः । देहप्रभामण्डलदर्शनमेव देहदर्शनं कृत्वा सर्वजनदृश्यत्वमादित्यस्योक्तं 'असौ योऽवसर्पति' इति मन्त्रे । तस्मिन्नन्येषु च केषुचित् मन्त्रेष्वादित्यरूपस्य नीलग्रीवत्वाद्युक्तिः 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषः' 'नमो हिरण्यबाहवे हिरण्यपतयेऽम्बिकापतये उमापतये' इत्यादिमन्त्रान्तरप्रतिपन्नमादित्यान्तर्यामिणःशिवस्य रूपमभिप्रेत्य । 'अर्यमायाति' इति मन्त्रे त्वादित्यस्येन्द्ररूपत्वोक्तिरिन्द्रस्यापि द्वादशादित्यमध्ये क्वचिन्निवेशात् । उक्तं हि हरिवंशे—'अदित्यां कश्यपाज्जाता आदित्या द्वादशैव हि । इन्द्रो विष्णुर्भगस्त्वष्टा वरुणोंऽशोऽर्यमा रविः । पूषा मित्रश्च वरदो धाता पर्जन्य एव च' इति । विष्णुपुराणेऽपि—'मारीचात्काश्यपाज्जातास्तेऽदित्या दक्षकन्यया । तत्र विष्णुश्च शक्रश्च जज्ञाते पुनरेव हि । अर्यमा चैव धाता च त्वष्टा पूषा तथैव च । विवस्वान्सविता चैव मित्रो वरुण एव च । अंशो भगश्चादितिजा आदित्या द्वादश स्मृताः' इति । महाभारतेऽप्यादिपर्वणि—'धाता मित्रोऽर्यमा शक्रो वरुणश्चांश एव च । भगो विवस्वान्पूषा च सविता दशमस्तथा । एकादशस्तथा त्वष्टा विष्णुर्द्वादश उच्यते' इति । 'सर्पा वा आदित्याः' इत्युक्तिर्यूपादित्योक्तिवत्प्रशंसापरा केवलमादित्यानामेवैषां प्रकाशो भवतीति फलार्थवादार्था ।

एवं निरस्तनिखिलविरोधेन फलविधीनां सामर्थ्येन सिद्धे विग्रहवति देवतागणे युगपदारब्धेषु क्रतुष्वेककालमाहूतस्य युगपत्सन्निधानमपि नानुपपन्नम्; तस्य योगिवद्भूतवशितया स्वेच्छावशाद्विषे तदपनेतृगरुडोपासनादिवत्क्रियोत्पादनसामर्थ्यवत्त्वेन भूतानां परस्परसंयोजनया कायव्यूहनिर्माणनिपुणत्वात् । शरीरविशेषाणां मातापितृप्रभवत्वनियमस्तु देवादिदर्शनतद्वशीकरणरूपेष्टदेवतासंप्रयोगादिफलकस्वाध्यायजपादिविधिविरोधात् अणिमाद्यष्टैश्वर्यादिफलकयोगविधिविरोधाच्च स्वर्गापवर्गार्थयज्ञादिश्रवणादिविधिविरोधात् सुखस्य दुःखसंभिन्नत्वानित्यत्वनियम इव हेयः । उदाहृतो हि प्राक् सामविधिब्राह्मणवर्णितः स्वाध्यायादिष्टदेवतासंप्रयोगः । योगाभ्यासादैश्वर्यप्राप्तिश्च श्वेताश्वतरोपनिषदादिषु वर्णिता; पातञ्जले च शास्त्रे विभूतिपादे च प्रपञ्चिता । वदन्ति चागमिकाः पिशाचादिहिरण्यगर्भान्तानामष्टगुणषोडशगुणादिचतुष्षष्टिगुणपर्य

न्तानैश्वर्यविशेषान् । एवं च यज्ञवाटेषु देवानामदृश्यत्वमप्यैश्वर्यादुपपन्नम् । 'कस्य वाह देवा यज्ञमागच्छन्ति' इत्याद्यर्थवादस्तु प्रातरग्निहोत्रानन्तरमेवान्वाधाय देवतापरिग्रहः कर्तव्य इति विधेस्तावको न विवक्षितस्वार्थः ।

एवं हविर्भोजनार्थमाहूतानां यज्ञदेशमागतानां देवतानां हविर्भोक्तृत्वमप्युपपद्यते । तत्र न तावत् हविरुत्क्रमणप्रत्यावृत्तिश्रुतिविरोधः 'यद्वै देवा हविर्जुषन्ते अल्पमप्येकामाहुतिमपि तत् गिरिमात्रं वर्धयन्ते' इति त्यक्तस्य हविषो वृद्धिश्रवणेन कश्चिदंशस्तृप्तिपर्याप्तो देवैर्भुज्यते, कश्चिदंशो वृष्ट्यन्नादिरूपेणावर्तत इति उभयविधश्रुतिनिर्वाहसंभवात् । न च हविर्वृद्धितदंशभोजनतदंशान्तरोत्क्रमणप्रत्यावृत्त्यभ्युपगमे प्रत्यक्षविरोधः । त्यक्ते हविषि ततो निर्गत्वरस्य तदीयसूक्ष्मरसांशस्यैव वृद्ध्याद्यभ्युपगमात् 'अवाड्ढव्यानि सुरभीणि कृत्वा' इति सुरभीकृतहविरवस्थाऽन्तरनयनलिंगात् । एवञ्च पर्यग्निकरणान्तोत्सृष्टपश्वादीनां सूक्ष्मांशापगमेऽपि मधुकरोपभुक्तरसांशानां पुष्पाणामिव तादवस्थ्यदर्शनमपि नानुपपन्नम् । तत्र च हविषः सूक्ष्मे रसे तत्तद्देवतातृप्तिपर्याप्तां वृद्धिमाप्नुवन् भक्ष्यांशस्तत्तदास्वादनयोग्यरूपेण सूर्यं प्राप्य प्रत्यावर्तमानस्तादितरांशो वृष्ट्यन्नप्रजारूपेणेव परिणमत इति कुशकाशदारुशकलादीनामनदनीयत्वदोषो न प्रसज्यते । श्राद्धेषु पित्राद्युद्देशेन दत्तस्यान्नस्य पित्रादिप्राप्तजात्युचिताहारतया परिणामः स्मृतिपुराणेषु कण्ठोक्त्या वर्णितः । तथाहि मत्स्यपुराणवचनम्—

'देवो यदि पिता जातः शुभकर्मनियोगतः । तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥
गांधर्वे भोग्यरूपेण पशुत्वे च तृणं भवेत् । श्राद्धान्नं वायुरूपेण नागत्वेऽप्युपतिष्ठति ॥
पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम् । दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम् ॥
मनुष्यत्वेऽन्नपानादि नानाभोगरसो भवेत्' इति

तथैव देवतोद्देशेन त्यक्तस्यापि हविषस्तदभिमताऽदनीयद्रव्यतया परिणामो भविष्यति । लिङ्गञ्चात्र दृश्यते 'एतद्वै दैव्यं मधु यद्घृतम्' इति । उक्तं च तन्त्रवार्तिके लोकवेदाधिकरणे 'यच्चैतद्घृतमस्माकं देवानां मध्विदं यदि । रसवीर्यादिभिस्तत्र न शब्दार्थोऽन्यथापतेत्' इति । देवविधिसोमेषु 'अग्निमग्न आवह' 'इन्द्रागच्छ' इत्यादिमन्त्रवत्सु देवतानामह्वानमस्ति ताएव तेष्वागत्य त्यक्तं भुञ्जते तदितरेष्वग्निना नीतं भुञ्जते' इत्यागमनश्रुतिर्हविर्नयनश्रुतिरित्युभयमप्युपपद्यते । श्राद्धेषु यद्यप्यतीताः पित्रादय आगच्छन्तीति स्मर्यते, तथापि

तेषामधिष्ठातार आजानपितारः सन्ति तत्पितृपितामहप्रपितामहानां वसुरुद्रादित्या वरुणप्रजापत्यग्नयो मासर्तु-संवत्सरा विष्णुब्रह्ममहेश्वराः प्रद्युम्नसङ्कर्षणवासुदेवाः स्कन्दचण्डगणेशाः ईशसदाशिवशान्ताश्चाधिष्ठातारः स्मृतिपुराणागमेषु दर्शिताः । अन्ये चाग्निष्वात्ता बर्हिषद आज्यपाः सुकालिन इत्याद्या आजानपितरो वर्णिताः । तेषु च केचित्तत्तदधिकारिभेदव्यवस्थया, तदव्यवस्थया च अन्ये श्राद्धीयेषु होमपिण्डभोजनेषु भोक्तारः । यथा गर्भवृध्युद्देशेन सुहृद्भिर्दत्तं दौहृदं भुक्त्वा तृप्यन्त्यो गर्भवत्यो गर्भानपि पोषयन्ति सुहृद्भ्यश्च प्रत्युपकुर्वन्ति तथा पित्रादितृप्त्युद्देशेन पुत्रादिभिर्दत्तमन्नं भुक्त्वा तृप्तास्तदधिष्ठात्र्यो देवताः पित्रादीनपि तर्पयन्ति पुत्रादिभ्योऽपि श्राद्धकल्पोक्तफलप्रदानेनोपकुर्वन्ति । 'वसुरुद्रादितिसुताः पितरश्श्राद्धदेवताः । प्रीणयन्ति मनुष्याणां पितॄन् श्राद्धेषु तर्पिताः । एवमेते महात्मानश्श्राद्धे सत्कृत्य पूजिताः । सर्वान्कामान्प्रयच्छन्ति शतशोऽथ सहस्रशः' इत्यादिवचनदर्शनात् तेषां सर्वेषामागमनं न स्मर्यते । अतीतपितॄणाञ्च स्थावरतिर्यङ्म-नुष्यनारकजन्मप्राप्तानामागमनं न संभवतीति तदर्थत्वेन 'अवाड्ढव्यानि सुरभीणि कृत्वा' इति श्राद्धीयहविर्नयन-श्रवणमपि सङ्गच्छते । मनुष्यादिभिर्विनैव स्वयत्नमाकस्मिकमिव यदाहारादिकं लभ्यते तन्मध्यपाति समर्थयितुं शक्यं भवान्तरसुतादिदत्तं श्राद्धम्; केवलपुण्येनेव भवान्तरसुतादिकर्तृकश्राद्धसंपादनद्वारकेणापि पुण्येन तल्लाभ-सम्भवात् ।

यत्तु 'न ह वै देवा अश्नन्ति न पिबन्ति' इति देवानामशनादिप्रतिषेधस्स प्रकृतपञ्चामृतमात्र-विषयः । 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्ति' इत्याद्युक्त्यनन्तरं रोहितरूपादिगुणात्मकान्यमृततानि कथं वस्वादीनामुपजीव्यानि स्वतोऽनदनीयत्वादद्रव्यत्वेन कुशकाशादिवददनीयपरिणामासंभवाच्चेति शंकायां दर्शनमात्रेण तेषां तृप्तिप्रदानीति परिहारार्थत्वेन तदवतारात् । यागीयेषु हविष्षु स्वतोऽनदनीयेष्वदनीय-वस्तुतया परिणतेषु च देवतानां भोक्तृत्वे नास्त्यनुपपत्तिः । हविषा तेषां तृप्तिस्तु हविर्भिर्वृध्येति प्रागेव दर्शितम् । यद्यप्यैन्द्रमारुतेष्ट्यादिष्वाहूतप्रत्याख्यातानां देवतानां पुनस्तदुद्देशेन त्यक्तैरपि हविर्भिः प्रीतिर्लोकदृष्टिविरुद्धा, यद्यपि च प्रीतिमतीनामपि देवतानां कल्पान्तरभाविफलप्रदातृत्वं न संभवति, तथापि यत्र प्रीतिः संभवति तत्र फलप्रदायामीश्वरप्रीतौ सा द्वारमिति कल्पनायां न काचिदनुपपत्तिः । ईश्वरस्यापि प्रीतिः कर्मणा, तदाश्रित-कारकेण वा फलोत्पत्तौ द्वारमात्रं न तु तयोरीश्वरप्रीतावुपक्षय इति कर्मतत्कारकवैचित्र्यात्फलवैचित्र्यमप्युपपद्यते । एवं फलविधिसामर्थ्याद्देवतानां विग्रहस्य तदनुबन्धितया हविर्भोक्तृत्वादेश्च सिद्धौ न कश्चिद्विरोध इति स्वीकर्तव्यमेव

तेषां विग्रहादिपञ्चकम् । यत्र तु गुणक्रियावयवादिदेवत्ये कर्मणि तदभ्युपगमे विरोधोऽस्ति, तत्र देवता-मुद्दिश्य द्रव्यत्यागमात्रादीश्वरप्रीतिद्वारा कर्मफलमिति कल्प्यते । सर्वत्रापि तथाऽस्त्विति चेदस्तु नाम । न ह्यस्मिन्नधिकरणे देवतानां यज्ञदेशाभिगमनं हविर्भोक्तृत्वमित्यादिकमपि साधनीयम् । विद्याधिकारसमर्थ-नाय तेषां विग्रहमात्रं साधनीयम् । विग्रहाश्च प्रागुदाहृतफलविधिजातसामर्थ्यात्तत्तद्देवपदप्रापककर्मोपासना-फलभोगोपयोगितया सिध्यन्तो न प्रत्याख्यातुं शक्याः । अन्यत्सिध्यतु मा वा, न नः किञ्चिदिह तेन प्रयोजनम् ।

अत एव भाष्ये कर्मविरोधसमाधानसूत्रांशस्य तथैव द्वितीययोजना दर्शिता । वस्तुविचारणायां तु विग्रहादिपञ्चकमपि स्वीकर्तव्यम् । असति विरोधे मन्त्रार्थवादेतिहासपुराणप्रतीतार्थपरित्यागायोगात्, मानान्तरप्राप्तेरप्यप्रामाण्यहेतोरभावात् । अनुमितेस्तु पर्वतांशे प्रत्यक्षज्ञानतः प्राप्तिरस्तीति न तत्र प्रामाण्यम् । 'श्वेतो धावति' इति वाक्याद्वक्तृविवक्षानास्पदस्यार्थस्य प्रतीतिरेव नास्ति । अर्थवादेभ्यः स्तुतिद्वारभूतार्थस्य प्रतीतिरनुभवसिद्धा स्तुत्यर्थमपेक्षिता च । 'श्वेतो धावति' इति वाक्याद्वक्तुरविवक्षितेऽर्थे यदि कस्यचित्प्र-तीतिस्स्यात्, प्राप्तिविरोधौ च न स्याताम्, तदा तस्य तत्र प्रामाण्यमिष्टमेव । अन्यथा 'अनधिगतार्थबोधकः प्रमाणम्' इति लक्षणस्य तत्रातिव्याप्तिप्रसङ्गात् । 'एतस्यैव रेवतीषु वारवन्तीयम्' इत्यत्रापि अस्ति रेवत्या-धारवारवन्तीयरूपविशेषणप्रतीतिस्तद्घटितवाक्यार्थप्रतीत्यपेक्षिता । नास्ति च प्राप्तिरूपमप्रामाण्यकारणमिति तात्पर्याविषयेऽपि तत्र तस्य प्रामाण्यमनिवार्यम् । तत्कर्तव्यतामात्रस्य विशिष्टविध्याक्षिप्तविशेषणविधिनो लाभः । संप्रतिपन्नं च स्वर्गार्थवादस्य तात्पर्याविषयेऽपि स्तुतिद्वारार्थे प्रामाण्यम् । तस्य तत्रावान्तरतात्पर्य-मस्तीति चेत्, तद्वदेवार्थवादान्तरस्यापि तत्स्यात् । तदर्थस्यापि स्तुतिद्वारत्वाविशेषात् । स्वर्गार्थवादः फलविध्यपेक्षित इति स्वार्थे तस्यावान्तरतात्पर्यं, नान्यस्येति चेत्; न । एकवाक्यतायामपि स्तुतिद्वारभूतेऽर्थे क्वचिदवान्तरतात्पर्याभ्युपगमे तद्वदन्यत्रापि प्राप्तिविरोधयोरसतोस्तस्यानिवार्यत्वात् । तथा इहापि देवताह्वान-विधिर्दृष्टार्थत्वाय देवतागमनमपेक्षते । तद्धविषां स्वीकरणं तद्भोजनं तत्तृप्तिं फलकामेन क्रियमाणं देवतानं तृप्तिजननं देवतायाः फलदातृत्वसिद्धय इति तदपेक्षते । फलदातृत्वं फलैश्वर्यं विनाऽनुपपन्नं फलैश्वर्यमपेक्षत इति देवतागमनादीनामपि साक्षात्परंपरया चाह्वानविध्यपेक्षितत्वाच्चेत्यलं प्रसक्तानुप्रसक्त्या । तस्मादुपपन्नो देवतानामर्थित्वसामर्थ्यादिमत्त्वाद्ब्रह्मविद्यार्थश्श्रवणाद्यधिकारः ।

नन्वियं चिन्ता नास्मदादीनां प्रवृत्तावुपयुक्ता। नापि देवतानाम्; तेषां स्वकीयविग्रहसत्त्वे तत्प्रयुक्तसामर्थ्यादिमत्त्वे च सिद्धान्तन्यायनिरपेक्षमेवावगतिसद्भावात्। न च देवाः स्वपदानित्यत्वशङ्कया तत्र न प्रवर्तेरन्निति तत्प्रवृत्तावुपयुक्ता; तेषां जातिस्मरत्वेन प्राचीनब्राह्मणजन्माद्यनुष्ठितसत्कर्मायत्तं स्वपदं न नित्यमिति स्वत एवावगतिसत्त्वात्। न चास्मदादीनामेव देवोपास्यत्वेन ब्रह्मोपासनसिद्धावुपयुक्ता। उपासनाप्रकरणेषु देवोपास्यत्वविशेषणसत्त्वे द्युमूर्द्धत्वादिवदारोपितेनापि तेन रूपेणोपासनोपपत्तेरिति चेत्।

उच्यते—देवतानामसिद्धौ मधुविद्यादीनां तत्तद्देवतापदप्राप्तिः फलं न भवेत्, वरुणग्रहनिर्मोकादिवद्बाधितस्य श्रुतत्वेऽपि विधेयक्रियाफलत्वायोगात्। किंत्वन्यदेव फलं कल्प्यं स्यात्। अन्तरादित्यविद्यायामादित्यदेवताऽन्तर्वर्तित्वेन ब्रह्मोपासनं न सिध्येत्। ज्योतिर्मण्डलाद्यन्तर्वर्तित्वेनैव तदुपासनं सिध्येत्। उपकोसलविद्यायां पञ्चाग्निविद्यायां च अर्चिराद्यभिमानिदेवताविशेषा मार्गपर्वत्वेन चिन्तनीया न स्युः। अर्चिरादीन्यचेतनान्येव तथा चिन्तनीयानि स्युः। तथा 'तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेतिभक्षयंत्येवमेनांस्तत्र भक्षयन्ति' यथा ह वै बहवः पशवो मनुष्यं भुंज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमाने अप्रियं भवति किं बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः' इत्यादिश्रुतिषु कर्मदेवभावं प्राप्तानामप्राप्तानाञ्च मनुष्याणां यावज्जीवमाजानदेवभृत्यभावोक्त्या वैराग्यं न सिध्येत्। एतादृशस्याभिमतस्य सिद्धिः प्रयोजनं देवतासद्भावप्रसाधनस्य। आदित्यचन्द्रादिपदव्युत्पत्तिग्रहादिभिर्विरोधेऽपि ज्योतिर्मण्डलाद्यतिरिक्ता देवताः सिध्यन्ति; विधिफलत्वात्, दृष्टसुखादिविरुद्धस्वभावस्वर्गसुखादिवदिति देवताप्रसाधनोपयुक्तन्यायप्रदर्शनस्य तथैव दृष्टविरोधेऽपि श्रवणादिविधिफलत्वात् ब्रह्मात्मैक्यमपि प्रसिध्यतीति प्रदर्शनमपि प्रयोजनम्। मंत्रार्थवादाः प्राप्तिविरोधयोरसतोः प्रतीयमानार्थे प्रामाण्यं न जहतीति देवतातद्विग्रहादिपञ्चकप्रसाधनोपयोगिन्यायप्रतिपादनस्य 'तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते' (छा. ८. १. ६) 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत' (छा. ५. १. ८) इत्यादिमन्त्रार्थवादैः श्रवणाधिकारिविशेषणविवेकवैराग्यादिकमपि सिध्यतीति प्रदर्शनमपि प्रयोजनम्। तस्मात्सफलेयं चिन्ता। १. ३. ३३

इति देवताऽधिकरणम्। ८।

( ९ अधिकरणम् )

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि । ३४ ।

अत्र श्रौतलिङ्गानुगृहीतार्थित्वादिसंभवात् देवानामिव शूद्राणामप्यधिकारोऽस्ति विद्यास्विति **पूर्वपक्षः** । अस्ति हि देवाधिकारे 'तद्यो यो देवानां प्रत्यबुध्यत' (बृ. १. ४. १०) इत्यादिलिङ्गमिव शूद्राधिकारेऽपि लिङ्गं 'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' (छा. ४. २. ३) इति 'आजहारेमाः शूद्रानेनैव मुखेन मामालापयिष्यथा' (छा. ४. २. ५) इति च विद्यार्थमुपसन्नं जानश्रुतिं प्रति 'शूद्र' इत्यामंत्रणम् । न चायं शूद्रशब्दो योगेन त्रैवर्णिके वर्तनीयः; रूढेः प्रबलत्वात् । अन्यथा 'वर्षासु रथकारोऽग्नीनादधीत' इत्यत्र रथकारशब्दस्यापि त्रैवर्णिके योगः कल्प्येत । न च रथकारशब्दो विधिवाक्ये श्रुतः शूद्रशब्दोऽर्थवाद इत्यतोऽस्ति कश्चिद्विशेषः; प्रामाण्ये विध्यर्थवादयोरविशेषात् । अर्थवादस्यापि प्राप्तिविरोधयोरसतोः प्रतीयमानार्थे प्रामाण्यस्य पूर्वाधिकरणे व्यवस्थापितत्वात् तयोरसतोर्विधिवाक्यस्यापि प्रामाण्यासंभवात् । न हि 'दध्ना जुहोति' इति विधिवाक्यं, प्राप्तायां होमकर्तव्यतायां 'कृष्णलं श्रपयेत्' इति विधिवाक्यं मानान्तरविरुद्धायां विक्लित्तिफलकक्रियाविशेषरूपश्रपिधातुमुख्यार्थकर्तव्यतायाञ्च प्रामाण्यमश्नुते । न च रथकारशब्दस्य रूढौ बाधकं नास्ति, इह तु शूद्रशब्दस्य रूढावस्ति बाधकं अध्ययनरहितस्य शूद्रस्याविद्वत्त्वमिति वाच्यम् । तस्य हितैषिवचनेन विद्यार्थगुरूपगमनापेक्षितस्य विद्यानुष्ठानापेक्षितस्य च विद्वत्त्वस्य संभवात् । न चाध्ययनावाप्तवेदजन्यवेदार्थज्ञानवतैव वैदिककर्माण्यनुष्ठेयानीति नियमः । तथा नियमे मानाभावात् । रथकारस्याधाने निषादस्थपतेरिष्टौ शूद्रमात्रस्य स्ववर्णधर्मे त्रैवर्णिकानामप्युपनीताना मध्ययनशौचसंध्योपासनसमिदाधानादिषु स्त्रीणामैष्टिकसौमिकादिपत्नीकर्मसु च वैदिकेष्वनुष्ठेयेषु तदभावाच्च ।

नन्वध्ययनविधिस्तथा नियमे मानम् । तथाहि—'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधेरश्रुतफलकस्यार्थज्ञानं फलत्वेन कल्पनीयम्; 'फलवद्व्यवहाराङ्गभूतार्थप्रत्ययाङ्गता । निष्फलत्वेन शब्दस्य योग्यता त्ववधार्यते ॥' इति न्यायात्, न तु विश्वजिन्न्यायात् स्वर्गः । श्रुतपदान्वयस्वारस्यभञ्जनस्य, गुणकर्मत्वे संभवति अश्रुतपदान्वयक्लेशेनार्थकर्मत्वस्य, दृष्टफलत्वे संभवति अदृष्टफलकल्पनस्य चायुक्तत्वात् । स्वर्गस्य फलत्वे

'हिरण्यं धार्यम्' इत्यत्र हिरण्यनिर्वर्त्येन धारणेनेष्टं भावयेदितिवत्स्वाध्यायनिर्वर्त्येनाध्ययनेन स्वर्गं भावयेदिति श्रुतोऽध्ययनस्य स्वाध्यायं प्रति गुणभावो भज्यते। अर्थज्ञानफलत्वे तु श्रुतपदान्वयलभ्यस्य तव्यप्रत्ययादध्ययन-संस्कार्यतयाऽवगम्यमानं स्वाध्यायं प्रत्यध्ययने गुणभावस्य न भंगः। अध्ययनेन स्वाध्यायस्यावाप्तिरूपसंस्कारः अवाप्तेन स्वाध्यायेनार्थावबोध इति प्रणाड्या भवति; अर्थज्ञानरूपे फले स्वाध्यायसंस्कारस्यैव सतोऽध्ययनस्य पर्यवसानात्।

तथा स्वर्गफलत्वेऽध्ययनजन्यस्य तस्य स्वरूपं तत्राध्ययनजन्यत्वं च कल्पनीयमिति गौरवमापद्यते। अर्थज्ञानफलत्वे त्वध्ययनावाप्तस्वाध्यायजन्यतया दृष्टेऽर्थज्ञानेऽध्ययनजन्यत्वमात्रं कल्पनीयमिति लाघवं लभ्यते। न च दृष्टफले विधिवैयर्थ्यम्। अध्ययनेनैव स्वाध्यायमवाप्य तद्द्वाराऽर्थज्ञानं भावयेदिति नियमार्थत्वात्। एवं च वर्णविशेषादिग्रहणमंतरेणाविशेषप्रवृत्ता वैदिककर्मविधयः कर्मानुष्ठानार्थमनुष्ठेयार्थज्ञानसम्पन्नानधिकारिणोऽपेक्ष-माणाः स्वत एवाध्ययनलब्धानुष्ठेयार्थज्ञानान् द्विजातीनासाद्य निर्वृण्वन्ति। फलकामत्वाविशेषेऽपि शूद्रस्याधि-कारित्वेन संग्रहार्थमनुष्ठेयार्थज्ञानं नाक्षिपन्ति। यथा क्रतुविधयो याजकानपेक्षमाणाः स्ववर्णोचितद्रव्यार्जनो-पायवति याजने स्वत एव प्रवृत्तान् ब्राह्मणानासाद्य निर्वृण्वन्ति, न त्वध्ययनवत्त्वेऽपि क्षत्रियवैश्ययोर्याजकत्व-माक्षिपन्ति। ततश्च 'याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेत्' इति द्रव्यार्जनोपायनियमविधिबलात् ब्राह्मणानामेवार्त्विज्यमिति नियमवदध्ययननियमविधिबलादध्ययनलब्धानुष्ठेयार्थज्ञानवतामेव वैदिककर्मानुष्ठानमिति नियमस्य लाभात्, तथा नियमे मानाभावस्तावदसिद्धः। यत्तु रथकारादीनामाधानाद्यनुष्ठानेष्वध्ययनलब्ध-मनुष्ठेयार्थज्ञानं नास्तीत्युक्तं तत्सत्यमेव। तथाऽपि विशिष्य रथकारादीनामाधानादिविधिबलादाप्तवचनैरेवाधा-नादिकर्तव्यताज्ञानं तत्तदनुष्ठानापेक्षितमन्त्रग्रहणं च तेषामभ्युपगम्यते। अन्यथा तत्तद्विधीनामानर्थक्य-प्रसङ्गात्। न चेह तत्प्रसङ्गः; अध्ययनवत्सु त्रैवर्णिकेष्वग्निहोत्रादिविधीनां विद्याविधीनाञ्च सार्थकत्वात्। तस्मात्कर्मस्विव विद्यास्वपि नाधिकार इति चेत्।

उच्यते—अर्थज्ञानस्याध्ययनफलत्वे ह्येतदेवं भवेत्, न तु तत् तस्य फलम्, किन्तु स्वाध्याया-वाप्तिरेव, तव्यप्रत्ययेन तस्याध्ययनप्राप्यत्वश्रवणात्। सा न पुरुषार्थ इति चेत्—किमर्थज्ञानं पुरुषार्थः ? पशुपुत्रादिवत् पुरुषार्थोपयोगितया गौणपुरुषार्थत्वं तु स्वाध्यायावाप्तेरपि तुल्यम्। अथार्थज्ञानमन्तरेणानुष्ठा-

नासंभवात् तस्यानुष्ठानोपयोगितया गौणपुरुषार्थत्वं सामर्थ्यादवगतं न स्वाध्यायावाप्तेरिति चेत्; न । तां विना जपपारायणाद्ययोगेन तस्यापि तथात्वस्य सामर्थ्यादवगतेः ।

ननु 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा. १. १. १०) इति श्रुत्या सामर्थ्यतः शीघ्रगामिन्या अर्थज्ञानस्य तथात्वं प्रथममवगतमिति चेत् ; न । तस्याः श्रुतेः प्रकृतोद्गीथ-विद्याविषयत्वस्य पुरुषार्थाधिकरणे सूत्रकृता वक्ष्यमाणत्वेनार्थज्ञानपरत्वाभावात् । 'धन्यं यशस्यमायुष्यं पुण्यं स्वर्गापवर्गदम् । धारणं धर्मशास्त्रस्य वेदानां धारणं तथा ॥' इत्यादिस्मृत्या स्वाध्यायावाप्तेरपि तथात्वस्य शीघ्रमेवागतेश्च । तत्र धारणस्य फलार्थत्वमुक्तम्, न त्ववाप्तेरिति चेत्; न । स्वाध्यायस्य धारणमवाप्तिरित्यभेदात् । स्वाधीनोच्चारणक्षमत्वं ह्यवाप्तिः । तच्च पुरुषस्य स्वाध्यायोच्चारणेच्छायामस्खलिततदुच्चारणोपयोगितालुमूर्धादिवर्णस्थानवशित्वसाहिताविच्छिन्नस्मृतिसन्तानजनकतदन्तर्गतयावद्वर्णपदवाक्यावलीविषयसंस्कारदार्ढ्यमेव । विधिशक्तिविशेषणगुणनिकया च संपादितं स्वाध्यायस्य धारणमपि तदेव, न वस्त्रभूषणादिवत्तस्य मुख्यं धारणमस्ति । अवश्यं चार्थज्ञानं फलमभ्युपगच्छताऽपि क्वचित् क्वचिदक्षरावाप्तिरपि फलत्वेनाभ्युपगन्तव्या । न खलु हुंफडादीनां स्तोभाक्षराणामर्थोऽस्ति । न वा निषेधवाक्यानामर्थवत्त्वेऽपि तदध्ययनस्यार्थज्ञानं फलमभ्युपगन्तुं शक्यम् । तथा सति निषेधविधयोऽपि निषिद्धानुष्ठानपरिहाराय हिंसानृतपरदारगमनादिकं प्रत्यवायकरमिति ज्ञानवदधिकारिसापेक्षाः स्वतस्सिद्धतद्ज्ञानेषु त्रैवर्णिकेष्वेव पर्यवस्यन्ति, न शूद्राणां तद्ज्ञानमाक्षिपन्तीति त्वदीयकल्पनाप्रसरेण निषेधवाक्याध्ययनविधेरुक्तरूपज्ञानवतां त्रैवर्णिकानामेव निषिद्धानुष्ठानं प्रत्यवायकरमिति नियमपर्यवसायितया शूद्राणां हिंसाऽनृतादिभिः प्रत्यवायाभावप्रसङ्गात् । त्रैवर्णिकानामपि वेदाध्ययने सत्येतानि निषिद्धानि प्रत्यवायकराणीति ज्ञानावश्यम्भावेन तदनुष्ठाने प्रत्यवायो भवेदित्यनिष्टफलत्वप्रतिसन्धानेन तत्र प्रवृत्त्यभावप्रसङ्गाच्च ।

अथोच्येत—निषेधवाक्येषु प्रत्यवायफलकं निषिद्धानुष्ठानं न शास्त्रार्थः, किन्तु प्रत्यवायपरिहारफलकं तदननुष्ठानमिति तद्विषय एव नियमः—अध्ययनपूर्वकनिषेधवाक्यार्थज्ञानवत एव निषिद्धाननुष्ठानं प्रत्यवायपरिहाराय भवतीति । तथा च निषिद्धानुष्ठानेन प्रत्यवायजनने निषेधवाक्यार्थज्ञानं नापेक्षितमिति शूद्राणां तदनुष्ठाने प्रत्यवायाभावो न प्रसज्येत; त्रैवर्णिकानां प्रत्यवायपरिहारोपयोगिज्ञानफलकमध्ययनं नानिष्ट-

फलकमिति तेषामध्ययने प्रवृत्त्यभावोऽपि न प्रसज्यते—इति । एवमपि अनधीतवेदानां निषिद्धाननुष्ठानेऽपि प्रत्यवायापरिहारादवश्यंभाविप्रत्यवायस्तदनुष्ठानेनैवास्त्विति प्रतिसन्धानेन शूद्राणां निषिद्धानुष्ठानप्रसङ्गो दुर्वारः । एवं च यद्यपि ब्राह्मणानामश्वमेधादिभागार्थज्ञानं याजनाद्युपयोगि, क्षत्रियवैश्ययोर्बृहस्पतिसवादि-भागार्थज्ञानं तदवगमार्थिभ्य उपदेशोपयोगि 'आपत्कल्पो ब्राह्मणस्य अब्राह्मणाद्विद्योपयोग' इति स्मरणात्, जैवलिकेकयाजातशत्रुप्रभृतीनां क्षत्रियाणामृषीन् प्रत्यङ्गावबद्धसगुणनिर्गुणब्रह्मविद्योपदेष्टृत्वश्रवणाच्च, सर्वे-षामपि तत् मीमांसासाद्गुण्यविचारोपयोगि अश्वमेधादिभागविचारस्य मीमांसाशास्त्रे कृतस्य न्यायसाम्येन ब्राह्म-णाद्यनुष्ठेयार्थनिर्णयेष्वप्यपेक्षितत्वात्, अतस्तत्राध्ययनजन्यार्थज्ञानवतैव क्रियमाणं विचारयाजनोपदेशं स्वस्य याज्योपदेश्यानाञ्च फलाय भवतीति नियमः संभवतीति; तथाऽपि स्तोभादिष्वर्थाभावात् निषेधवाक्येषु विपरीतफलकत्वाच्च तथा कश्चिदर्थज्ञानफलकाध्ययनविधिलभ्यो नियमो वक्तुं न शक्यत इति तत्राक्षरावाप्तिरेव फलत्वेन स्वीकर्तव्या । एवञ्चेत् सर्वत्रापि सैव फलमस्तु व्यापित्वात् ।

ननु तथाऽप्यर्थज्ञानमपि संभवस्थलेषु फलत्वेन स्वीकर्तव्यम्, अन्यथा वेदवाक्यानां तत्र तत्रार्थे तात्पर्यासिद्ध्या तन्निर्वाहार्थलक्षणादिकल्पनोच्छेदप्रसङ्गात्; अर्थावबोधमुद्दिश्य शब्दोच्चारणेन हि लोकवाक्यानां तात्पर्यमवगम्य तन्निर्वाहार्थं मुख्यार्थासम्भवे लक्षणादिकं कल्प्यते, न तूच्चारणमात्रेण । अत एव 'गौरश्वः पुरुषो हस्ती' इति पदानामुच्चारणमात्रेण लक्षणा न कल्प्यते । यदा विशिष्टार्थबोधमुद्दिश्य तेषामुच्चारणमिति तात्पर्यमवगम्यते, तदैव तन्निर्वाहार्थं अयज्ञो: बलीवर्दः, अश्वो वेगवान्, पुरुषो नियतचेष्टः, हस्ती महाबलः, इत्यश्वादिपदानां लक्षणा कल्प्यते । एवञ्च वेदवाक्यानामर्थावबोधमुद्दिश्य उच्चारणाभावे तात्पर्यासिद्ध्या तन्निर्वा-हार्थलक्षणागौणवृत्त्यनुषङ्गाध्याहारव्यवहारकल्पनोच्छेदप्रसङ्गादवश्यं वेदेऽप्यार्थावबोधमुद्दिश्य उच्चारणस्य वक्तव्य-त्वाद्वेदे च लोक इव तमुद्दिश्य रागप्रयुक्तोच्चारणाभावाद्विधिप्रयुक्तमेव तदाश्रयणीयम् । विधिश्चाध्ययनविधेरन्यो न दृश्यत इति तेनैवार्थावबोधमुद्दिश्य गुरुमुखोच्चारणानूच्चारणरूपमध्ययनं विधीयत इति अकामेनापि स्वीकर्त-व्यम् । एवं च दृष्टफलेऽप्यर्थावबोधे विधिरन्यतोऽसिध्यतस्तात्पर्यस्य सिध्यर्थः, न तु स्वाध्यायाध्ययनजन्यार्थ-ज्ञानवत एव तदर्थकर्मानुष्ठानेन तत्तद्वाक्योक्तं फलं भवतीति नियमार्थ इति निषेधवाक्येष्वप्यर्थज्ञानकामाधिकारे न कश्चिद्दोषः ।

अत एवाध्ययनविधावपि न दोषः । तदध्ययनजन्यार्थज्ञानवत्तैव तद्विधेयमध्ययनमनुष्ठेयमिति नियमपर्यवसायी स विधिरित्यङ्गीकारे ह्यात्माश्रयदोषः स्यात् । स्तोभाक्षरेषु परं विशिष्टार्थपराणामृचां तदन्तर्गतपदानां तदन्तर्गतवर्णानाञ्च मध्ये प्रविष्टत्वात्कथमप्यर्थपरतया वर्णयितुमशक्येषु स न संभवतीति तेषु जपपारायणस्तोत्रशस्त्राद्यर्थगीतिविरामोपयोगिन्यक्षरावाप्तिरेव फलम् । न चैवं विधिवैरूप्यदोषप्रसङ्गः; यदेव किञ्चन विध्यन्तरोपयोगि स्वाध्यायसंस्काररूपेणाध्ययनेन शक्यं भावयितुं तत्सर्वमनेन भावयेदित्येकधैव वचनभंग्योभयार्थत्वलाभात् । एवञ्च क्रमफलमपि संगृहीतं भवति । क्रमविशेषविशिष्टवर्णपदवाक्यसङ्घातो हि स्वाध्यायशब्दार्थः । अतोऽध्ययनविधिः क्रमविशिष्टतयैव स्वाध्यायस्याध्ययनं विधत्ते । क्रमविशेषस्य चैतत्प्रयोजनं यत्सामिदादिविधिवाक्यपाठक्रमेण प्रयाजाद्यनुष्ठानोपयोगी आग्नेयाग्नीषोमीयादिमंत्रपाठक्रमेण तदनुष्ठानोपयोगी च स्मृतिक्रमः काम्येष्टिकांडसमाम्नातानामैन्द्राग्नादीनां याज्यानुवाक्याकाण्डसमाम्नातानां 'उभा वामिद्राग्नी आहुवध्यै' इत्यादिमंत्राणां च यथासंख्यपाठक्रमेणाङ्गाङ्गिभावः उच्चैस्त्वादिस्वरविधिषु वेदोपक्रमेण ऋगादिपदानामृग्वेदादिषु लक्षणा, बार्हस्पत्ये सप्तदशशरावे चरावातिदेशिकचतुर्मुष्टिनिर्वापासंभवादवश्यंभाविनि संख्यामुष्ट्यन्यतरबाधे च चरमश्रुतमुष्टिबाध इत्यादि । यत्र तु नैतादृशं फलमस्ति, तत्रैव परं क्रमस्य जपयज्ञादिमात्रोपयोग इति ।

नन्वक्षरावाप्तिवदनुष्ठानकालापेक्षितश्रुतिस्मृतिक्रमोऽपि भवतु नाम फलमध्ययनविधेः, तथाऽप्यर्थज्ञानं फलं भवितुं नार्हति; अध्ययनात्प्राक्तत्कामनाया असंभवात् । इष्टसाधनगोचरा खलु कामना इष्टसाधनतावच्छेदकप्रकारेण तद्गोचरज्ञानाद्भवति । ज्ञाने इष्टसाधनतावच्छेदकस्तत्तद्वाक्यार्थविशेष एव, न तु वाक्यार्थसामान्यं यःकश्चिदर्थोऽस्तीति; एतावता तज्जिज्ञासाऽनुदयात् । स्वाध्यायान्तर्गतानन्तवाक्यार्थगोचरज्ञानञ्च माणवकस्य स्वतो वा, हितैषिवचनाद्वा न सम्भवतीति चेत् ।

मैवम् । न वयं माणवकस्याध्ययनारम्भसमये तत्फलभूतार्थज्ञानविषयकामनाऽस्तीति ब्रूमः, किन्तु यथैवार्भकमातुरं भिषज्यद्भिर्हितकारिभिरौषधसेवाफलमारोग्यं जानद्भिरर्भकापेक्षितफलान्तरप्रतिपादनेन सामादिना वाऽनुष्ठाप्यमानस्य औषधसेवनस्य तदीयमेवारोग्यं फलमेवमध्ययनसाध्यं तत्तद्वाक्यार्थज्ञानं माणवकस्य श्रेयस्करमवगच्छद्भिर्हितकारिभिरनुष्ठाप्यमानस्याध्ययनस्य माणवकगतमर्थज्ञानं फलमिति ब्रूमः । अक्षरावाप्त्यादिफलपक्षे-

ऽप्येवमेवोपपादनीयम् । न ह्यष्टमे वयसि वर्तमानः सर्वोऽपि माणवकः स्वाध्यायाक्षरावाप्तिः श्रेयसी भवतीति जानानस्तत्कामनयाऽध्ययने प्रवर्तते । न चोपनयनतत्पूर्वकशौचसन्ध्यावन्दनसमिदाधानादिकर्मसु तत्तत्फलकामनया प्रवर्तते । न च तावताऽध्ययनादीनामक्षरावाप्त्यादिकं फलमपि हीयते । बाल्य एव केचन मेधाविनोऽक्षरावाप्त्यादिकामाः संभवन्ति अर्थज्ञानकामस्तु कोऽपि न संभवति इति चेत्; न । अर्थज्ञानकर्मानुष्ठानप्रणाडिकया स्वर्गादिफलपर्यवसायिनीमक्षरावाप्तिं कामयमानानभ्युपगच्छतां तेषामेवार्थज्ञानकामनाया अप्युपपादनीयत्वात् । अन्यथा स्वतोऽपुरुषार्थरूपायां तस्यां कामनोदयासंभवात् । कथं च स्वयंविविधविचित्रार्थप्रतिपादकान्प्रबन्धान्निर्माय तेषामध्येतृषु प्रचयगमनमिच्छन्नर्थज्ञानकामनां निराकुर्यात् । न हि वेदानामिव तेषामध्ययनेष्वक्षरावाप्तिकामाः प्रवर्तेरन् । न वा तदर्थज्ञानकामनायामेवमसंभवशङ्का निवर्तेरन् । तस्मादिहैवमादयोऽर्थाः प्रतिपाद्याः तेषामवगमस्तस्मै फलाय भवतीति हितैषिवचनात्सामान्यतस्तदर्थान्विशिष्य तेषामवगमस्येष्टोपायताञ्चावगम्य हितैषिवचनविश्वासादेव विशिष्य तदर्थज्ञानं कामयन्त इत्युपपादनीयम् । तदुपपादनं प्रकृतेऽपि न दंडवारितम् । तस्माद्युक्तमध्ययनविधेरर्थज्ञानं फलमिति—

उच्यते—तव्यप्रत्ययेन स्वाध्याये भाव्यतया बोध्यमाने तदवाप्तिमतिलंघ्यार्थज्ञानस्याप्यध्ययनविधिफलत्वकल्पनं तावत्तात्पर्यसिध्यर्थं न स्वाभिमतप्रयोजनसिध्यर्थम्; श्रुतफलसाध्यस्यापि वैधफलत्वकल्पनायोगात् । अन्यथा चित्रापुत्रेष्ट्यादिवाक्यश्रुतेषु पशुपुत्रादिफलेषु प्राप्तेष्वपि तैस्संपादनीयस्य स्वभोगस्य कदाचिदप्राप्तिस्स्यादिति तत्प्राप्तिनैयत्यसिद्धये पशुपुत्रादिप्रयुक्तस्य भोगस्यापि चित्रापुत्रेष्ट्यादिविधिफलत्वकल्पनाप्रसङ्गात्, लोकव्युत्पत्तिसिद्धस्य शब्दानामर्थपरत्वस्यौत्सर्गिकस्य क्वचित्क्वचिल्लौकिकवाक्ये वक्तृदोषादपवादेऽप्यपौरुषेये वेदे तदभावान्निरपवादस्य स्वत एव सतस्तस्यार्थज्ञानोद्देश्यकशब्दोच्चारणविधिनिरपेक्षत्वाच्च । शब्दानामर्थपरत्वमात्रं व्युत्पत्तिसिद्धं न त्वग्निहोत्रादिवाक्यं तत्तदर्थविशेषपरमित्यपि । तत्तु तत्तदर्थविशेषमुद्दिश्योच्चारणमपेक्षत इति तदर्थोऽध्ययनविधिस्स्यादिति चेत्, न । अध्ययनविधिनाऽपि तदलाभात् । न ह्यध्ययनविधिः प्रतिवाक्यं तत्तदर्थविशेषज्ञानमुद्दिश्य तत्तद्वाक्योच्चारणविधाने व्याप्रियते । स्वाध्यायाध्ययनेन यद्भावयितुं शक्यं तदनेन भावयेदिति विधाने सत्यग्निहोत्रादिवाक्याध्ययनेन न्यायलभ्यतत्तदर्थविशेषज्ञानमेव भावयितुं शक्यमिति तत्र तत्रार्थविशेषतात्पर्यमर्थतस्सिध्येदिति चेत्, तर्ह्यग्निहोत्रादिवाक्यानामौत्सर्गिकमर्थपरत्वमेव न्यायपर्यालोचनेन तत्तदर्थविशेषतात्पर्यरूपतया पर्यवस्यतीत्येवास्तु, किमुच्चारणविधिना ? यदि

च लोके दृष्टमित्येतावता वेदेऽप्यर्थावबोधमुद्दिश्य उच्चारणमाद्रियेत, तदा स्वतन्त्रवक्तृविवक्षितेतरार्थावबोधमुद्दिश्य श्रोतृभिरुच्चारणे कृतेऽपि तस्य वाक्यस्य तत्र तात्पर्यं न दृष्टं किन्तु स्वतन्त्रवक्तुर्यदर्थावबोधमुद्दिश्योच्चारणं तत्रैव तात्पर्यं दृष्टमिति वेदस्य तात्पर्यसिध्यर्थं पौरुषेयत्वमपि कल्प्येत ।

वस्तुतस्तु लोकेऽपि नोच्चारणाधीनं तात्पर्यम्; मौनिना लिखित्वा दत्ते परेणापि लिखितं दृष्ट्वा मनसाऽनुसंहिते श्लोकादावुच्चारणाभावात् । किंत्वस्माद्वाक्यादेतदर्थप्रतीतिर्भवत्विति वक्तृविवक्षाऽधीनं तदिति तात्पर्यसिध्यर्थमध्ययनविधेरर्थावबोधफलकत्वकल्पनायाः कथंचिदपि नावकाशः । वक्तृविवक्षा त्वपौरुषेये वेदे न संभवतीति लोकव्युत्पत्तिसिद्धमर्थपरत्वं वक्तृविवक्षिते विशेषे पर्यवस्यति, वेदे तु न्यायलभ्ये विशेषे । तदनुसारेण च लक्षणादिकल्पनमित्येवाभ्युपगन्तुं युक्तम् । अत एव वेदस्य तात्पर्यवत्त्वरूपस्वाभिमतप्रयोजनसिद्धिमेव न्याय्यं मत्वा अनेनापि न्यायतोऽध्ययनविधिरर्थावबोधमपि फलत्वेन गृह्णातीति तत्तात्पर्यं निश्चित्य तद्बलेन स्वाध्यायावाप्तेरेव फलताप्रत्यायकस्य तव्यप्रत्ययस्य स्वारस्यमुल्लङ्घितम् । न ह्यध्ययनविधेरुक्तार्थतात्पर्यनिश्चयोऽयमर्थावबोधमुद्दिश्योच्चारणविध्यधीनः; तथाभूतविध्यन्तराभावात् अस्यैव विधेरपेक्षायामात्माश्रयापत्तेः, किंतु केवलन्यायाधीन एव वक्तव्यः । तस्मात्तात्पर्यसिध्यर्थमध्ययनविधेरर्थावबोधफलकत्वकल्पनमित्येतत् तावदयुक्तम् ।

क्रमफलसङ्ग्रहार्थं यदनेन शक्यं भावयितुं तद्भावयेदित्यध्ययनविध्यर्थपर्यवसानादध्ययनेन भावयितुं शक्यमर्थज्ञानमपि तद्भाव्यकोटावनुप्रविशेदित्यप्ययुक्तम्; अनुष्ठानकालापेक्षितस्य समिद्यागादिस्मृतिक्रमस्याध्ययनगृहीतस्वाध्यायपाठक्रमेणाध्ययनविधिफलाक्षरावाप्त्यनुनिष्पादितया स्वत एव संभवतोऽध्ययनविधिफलत्वेन सङ्ग्राह्यत्वाभावात् । तत्संग्रहार्थं मीमांसाशास्त्रपाठकालापेक्षितक्रमफलस्यापि तथैव विधिफलत्वेन संग्राह्यत्वाभावात्, तत्संग्रहार्थं यदनेन भावयितुं शक्यं तत्सर्वमनेन भावयेदित्यध्ययनविध्यर्थाङ्गीकारे अर्थज्ञानवत्ख्यातिलाभादीनां चार्वाकापादितफलादीनामपि तद्भाव्यकोट्यनुप्रवेशप्रसङ्गाच्च । तेषामपि लोकतः, 'शोभते ह्यस्य मुखं य एवं वेद' 'आस्य प्रजायां वाजी जायते' इत्यादिश्रौतलिङ्गतश्चाध्ययनेन भावयितुं शक्यत्वावगमात् । 'शोभतेऽस्य मुखं य एवं वेद' इति हि गर्गत्रिरात्रब्राह्मणज्ञस्य तद्ज्ञानफलानुवादः शिष्यैरुद्वीक्ष्यमाणत्वात्तद्ज्ञस्य मुखं शोभते इति तदुपपादनं कृतमर्थवादाधिकरणे । अनेन ख्यातेरध्ययनावाप्यत्वं लब्धम् । 'आस्य प्रजायां वाजी जायते' इति वेदानुमन्त्रणमन्त्रज्ञस्य तद्ज्ञानफलानुवादः कुले सन्तताध्ययनश्रवणात्

तद्ज्ञस्य प्रजासु मेधावी वेदविज्जायते स प्रतिग्रहादन्नमाप्नोतीति तदुपपादनं कृतम् । अनेन कैमुतिकन्यायेन साक्षादध्येतुर्धनलाभस्य तदध्ययनावाप्यत्वं लब्धम् । विध्यन्तरापेक्षितं यद्भावयितुं शक्यमिति विशेषितमिति चेत्, धनलाभोऽपि नन्वर्थज्ञानक्रतुविधिभिरपेक्षित एव । ख्यातिरपि धनलंभनद्वारा क्रतुषूपयुज्यते । तस्मादध्ययनविधेस्तव्यप्रत्ययोपात्ताक्षरावाप्तिफलकत्वेनार्थज्ञानपर्यन्तत्वाभावादन्यतो लब्धज्ञानानपश्यन्तः क्रतुविधयो विद्याविधयश्चानुष्ठानापेक्षितं ज्ञानं स्वयमेवाक्षिपन्ति ।

एवञ्च यद्यपि क्रतुविधयः शूद्रस्य स्वानुष्ठानोपयुक्तं ज्ञानं नाक्षिपन्ति; 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' इति तस्य क्रतुप्रतिषेधात्, तथापि विद्याविधयस्तस्य स्वोपयुक्तं ज्ञानं किमिति नाक्षिपेयुः ? क्रतुष्विव विद्यासु तस्य प्रतिषेधाभावात्, प्रत्युत विशिष्य तस्य क्रतुप्रतिषेधेन विद्याऽनुमत्यवसायात् । यदि ह्यध्ययनविधिरर्थज्ञानभाव्यकः स्यात्तदाऽध्ययनविधिलब्धज्ञानाद्द्विजातीनासाद्य निर्वृताः क्रतुविद्याविधयः शूद्रस्य स्वानुष्ठानोपयोगि ज्ञानं नाक्षिपन्तीति न्यायमूलं यज्ञानवक्लृप्तिवचनं विद्याऽनवक्लृप्तेरप्युपलक्षणं स्यात् । न त्वयमर्थज्ञानभाव्य इत्युक्तम् ।

अस्तु वाऽयमर्थज्ञानभाव्यः, तथापि शूद्रस्यानिवार्यो विद्याधिकारः; क्रतुविद्याविधिभिस्त्रैवर्णिकानां स्वशाखेतरशाखाविहिताङ्गगुणोपसंहाराय तत्तच्छाखाऽध्यायिभ्यस्तत्तदङ्गगुणज्ञानस्येव शूद्रस्यापि विद्याविधिभिस्तत्तद्ज्ञानस्य आक्षेप्तुं शक्यत्वात् । अध्ययनविधिना ह्येकस्या एव शाखाया अध्ययनं विधीयते; प्रतिव्यक्ति घटत्वस्येव प्रतिशाखं स्वाध्यायत्वस्याध्ययनेन परिसमाप्तत्वात् । अध्ययनविधेरर्थज्ञानफलकत्वपक्षे स्वाध्यायाध्ययनेनार्थज्ञानं भावयेदिति स्वाध्यायस्योपादेयकोटिप्रवेशादधीतेन स्वाध्यायेनार्थज्ञानं भावयेदिति तस्य साक्षात्, उपादेयत्वाद्वा तत्संख्याया विवक्षितत्वात् । स्वाध्यायस्योपादेयत्वेऽपि तस्यार्थसिद्धमध्ययनसंस्कार्यत्वमप्यस्तीति तव्यप्रत्ययेन 'चरुमुपदधाति' इत्यत्र द्वितीयया चरोरुपधानसंस्कार्यत्वस्येव तस्यानुवादात् । अग्निप्रकरणाम्नातेन 'चरुमुपदधाति' इति विधिना चरूपधाने स्थण्डिलाङ्गतया विनियुज्यमाने तस्य साक्षात्स्थलनिर्वर्तकत्वायोगादुपहितेन चरुणा तन्निर्वृत्तिदर्शनाच्चोपधानस्य स्थलाङ्गत्वं चरुसंस्कारद्वारकमित्यर्थसिद्धमेव यथा चरोरुपधानसंस्कार्यत्वं द्वितीययाऽनूद्यते, एवमिहाप्यध्ययनस्य तत्समाप्त्यनन्तरारम्भणीयमीमांसापरिचयोत्तरकालभाविन्यर्थज्ञाने साक्षात्कारणत्वायोगादध्ययनगृहीतस्वाध्यायेन कालान्तरे स्मृतिसमारूढेन द्वारेणार्थज्ञानदर्शनाच्चार्थसिद्धं स्वाध्यायस्याध्ययनसंस्कार्यत्वं तव्यप्रत्ययेनानूद्यत इति उपपत्तेः । संस्कारकर्माध्ययनं स्वाध्यायावाप्तिफलक-

मिति पक्षे स्वाध्यायस्याध्ययनसंस्कार्यत्वेनोपादेयत्वेऽपि स्वशब्देनात्मीयवाचिना पितृपितामहादिपरम्परागताया एव शाखाया अध्यायशब्दोक्ताया अध्ययनविधानात् सर्वशाखानामध्येतुमशक्यतया सङ्कोचापेक्षासत्त्वेनोद्देश्यस्यापि स्वीयत्वविशेषणसहिष्णुत्वात् । एवञ्च स्वीयेतरशाखाविहितमङ्गगुणजातं विनैव तदध्ययनं तदध्येतृभ्यो गृहीत्वाऽनुष्ठीयत इति त्रैवर्णिकेषु दृष्टत्वात् शूद्रं प्रति सर्वासामपि शाखानां स्वीयेतरत्वात् तदध्ययनाभावेऽपि तदध्येतृभ्योऽधिगत्य विद्यानुष्ठाने न कश्चिद्विरोधः ।

ननु शूद्रस्य विद्यानुष्ठानापेक्षितं ज्ञानं कात्स्न्येनापेक्षणीयं त्रैवर्णिकानां स्वशाखेतरशाखाविहितगुण-विषयस्तदेकदेश इत्याक्षेपलाघवात् विद्याविधयस्त्रैवर्णिकानेवाधिकुर्युः, न शूद्रमिति चेत्; एवं तर्हि यस्य कर्मणो यस्यां शाखायां भूयसामङ्गानां विधानं 'भूयस्त्वेनोभयश्रुति' (जै. सू. ३. ३. १०) इति न्यायेन प्रधानस्यापि विधानं शाखान्तरे तु किंचिदङ्गविधानं तत्र कर्मणि तच्छाखाध्यायिनामेवाधिकारः स्यात् ज्ञाना-क्षेपलाघवान्न तु शाखान्तराध्यायिनाम् । यस्य कर्मणस्तदङ्गस्य वा कस्यचिद्यस्यां शाखायां विधानं नास्ति किन्तु शाखान्तर एव साङ्गस्य तस्य विधानं तत्र कर्मणि तच्छाखाध्यायिनामधिकारो न स्यात् । शूद्रवत्तेषां तदनुष्ठा-नोपयोगिज्ञानस्य कात्स्न्येनापेक्षणीयत्वात् । सम्भवन्ति हि गुणफलविधिरूपाणि क्षुद्रकर्माणि शाखाविशेषेषु सर्वथैवानिरूपितानि । तस्मात्त्रैवर्णिकानामपि ज्ञानाक्षेपस्य संप्रतिपन्नत्वात् तद्वत् शूद्रस्यापि विद्यानुष्ठानोपयो-गिज्ञानाक्षेपसम्भवात् वेदविद्भ्यो विज्ञाय विद्यानुष्ठानमुपपद्यते। अन्यथाऽध्ययनाभावेन शूद्रस्य विद्याप्रत्याख्याने मैत्रेयीप्रभृतीनां स्त्रीणां ब्रह्मविद्याऽवाप्तौ का गतिः ? न हि अत्रत्यस्य शूद्रशब्दस्य क्षत्रिय इव मैत्रेय्यादि-शब्दानां पुरुषेषु वृत्तिस्सिद्धान्तिनाऽपि कल्पयितुं शक्यते; 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुः मैत्रेयी च कात्यायनी च' (बृ. ४. ५. १) इत्यादिवाक्यान्तरविरोधात् ।

ननु तथाऽपि निर्गुणविद्योदयार्थं शूद्रस्य वेदान्तग्रहणं नोपपद्यते 'अथ हास्य वेदमुपश्रृण्वतस्त्र-पुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः' इति शूद्रस्य वेदश्रवणादिप्रतिषेधादिति चेत्, न । कूपखननप्रयुक्तं पङ्किलदेहत्वं तल्लब्धजलेनेव वेदार्थविचारप्रयुक्तं वेदश्रवणोदाहरणधारणकृतदुरितं तल्लब्ध-ब्रह्मज्ञानेनापनेष्यत इति धिया तस्य वेदान्तश्रवणेऽपि प्रवृत्त्युपपत्तेः । ननु शूद्रस्य सगुणविद्यानुष्ठानार्थं वेदान्तार्थविचारार्थं चोपदेष्टा न लभ्यते 'न शूद्राय मतिं दद्यात्' इति प्रतिषेधादिति चेत्, न । सगुण-विद्यानुष्ठानेन निर्गुणब्रह्मज्ञानेन वा तदुपदेष्टृत्वप्रयुक्तं दुरितमपनेष्यामीति मन्यमानस्य परमकारुणिकस्य सम्भ-

वात्; स्नेहार्थलोभाद्युपाधिनाऽतिक्रान्तनिषेधस्य वोपदेष्टृत्वसम्भवात् । अन्यथा सोमविक्रय्यलाभेन त्रैवर्णिकानां यज्ञानुष्ठानस्यापि लोपप्रसङ्गात् । तस्मादस्ति शूद्रस्य सगुणविद्याऽनुष्ठाने निर्गुणविद्यार्थश्रवणमनननिदिध्यासनानुष्ठाने चाधिकार इति एवं प्राप्ते पूर्वपक्षे—

**सिद्धान्तमाह**—'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि' । यदुक्तम्—देवानामिव शूद्राणामपि विद्याधिकारे वैदिकं लिङ्गमस्तीति, तत्र तावदिदमुच्यते । न जानश्रुतौ शूद्रशब्दो रूढ्यर्थविवक्षया प्रयुक्तः, किन्तु योगार्थविवक्षया प्रयुक्तः । अस्य हि जानश्रुतेः शुगुत्पन्ना । कुतः कारणात्? तदनादरश्रवणात्—तस्माद्धंसवाक्यादात्मनोऽनादरश्रवणात् । सा रैक्केण महर्षिणा शूद्रशब्देन सूच्यते; आत्मनः परोक्षज्ञानवत्त्वज्ञापनाय । कथं सा शूद्रशब्देन सूच्यते? तदाद्रवणात् तया शुचा हेतुना रैक्कस्याद्रवणात्—विद्यार्थाभिगमनात् । रैक्कस्याभिगमनं शुचेति चाख्यायिकयैव सूच्यते ।

एवं हि उपाख्यायते—जानश्रुतिः किल पौत्रायणः श्रद्धया बहुधनान्नप्रदः सर्वासु दिक्षु ग्रामनगरमार्गारण्यतीर्थादिषु पान्थानामनाथानाञ्च शीतवातवर्षातपबाधनिवारकान्नोदकशयनाच्छादनादिभोग्यजातस्य पूर्णानावसथान्मापयाञ्चक्रे । एवं कर्मपथरसिकं विद्यापथमजानानं कर्मभिः क्षीणदुरितं तं विद्यापथे प्रवर्तयितुकामाः केचन महर्षयः सारासारे विद्याकर्मणी क्षीरनीरे इव स्वयं विवेक्तुं कुशला इति व्यञ्जयितुं हंसरूपमास्थाय निशायां हर्म्ये शयानस्य तस्योपरि पङ्क्तिमाबध्याजग्मुः । तेषामग्रेसरं हंसं सम्बोध्य पृष्ठतः पतन्नेकतमो हंसः साकूतमुवाच—भोभोयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समन्दिवाज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीदिति । एवं भल्लाक्षेत्यनेन विपरीतलक्षणया मन्दलोचनेति सम्भ्रमेण द्विवारं सम्बोध्य जानश्रुतेरन्नदानादिप्रभावजनितं ज्योतिर्द्युलोकपर्यन्तं व्याप्तं वर्तते तत्र त्वं लग्नो माभूरिति तेन तव प्रदग्धता मा भूदित्युक्ते तमग्रगामी हंसः प्रत्युवाच 'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ' (छा. ४. १. ३) इति । तदिदमग्रगामिनो हंसस्य वाक्यं अरे हंस एनं राजानं कमु कमेव केनैव माहात्म्येन युक्तं एतत्सन्तमेतादृशं सन्तं मनुष्यसामान्यदशामनतिक्रम्य वर्तमानम्, सयुग्वानमुपकरणनयनार्थेन शकटेन सहितं रैक्कमिव एवं सबहुमानमात्थेत्येतदाकर्ण्य तेन पृष्ठगामिना हंसेन कोऽसौ रैक्क इति पुनः पृष्टस्स एव प्रत्युवाच सर्वेषामपि यथावत् साधु कर्म तत्सर्वं फलतो रैक्कस्य धर्मेऽन्तर्भवति तथाऽन्योऽपि यः पुरुषधौरेयो रैक्कोपास्यमुपास्ते तस्यापि धर्मे तत्सर्वमन्तर्भवति तथाभूतो रैक्को मयोक्त इति ।

तदेतद्धंसवाक्यं तथाभूतस्य रैक्वस्य हि कर्मज्ञानजनितं ज्योतिरसह्यं न त्वस्य वराकस्येति स्वनिन्दागर्भमाकर्ण्य जानश्रुतिः कथमपि निशामतिवाह्य तल्पं त्यजन्नेव क्षत्तारमाहूय सचिह्नं रैक्वमुक्त्वा तदन्वेषणाय प्रेषयित्वा क्वचिद्विविक्ते देशे शकटस्याधस्तात्पामानं कण्डूयमानं रैक्वमुपलभ्य प्रत्यागते तस्मिन् स्वयं रैक्वमुपसद्य गवां षट्शतानि हारमश्वतरीयुक्तं रथञ्चोपहृत्य त्वदुपास्यां देवतामनुशाधीति रैक्वं प्रार्थयामास । रैक्वः स्वयोगमहिमविदितसकलवृत्तान्तो जानश्रुतेर्विद्याविधुरतानिमित्तानादरगर्भहंसवाक्यश्रवणजनितां शुचं तदनन्तरमेव विद्यार्थं स्वोपसर्पणञ्च विदित्वा चिरकालसेवां विना द्रव्यप्रदानेन मां तोषयितुकामस्यास्य यावच्छक्ति प्रदानं विना विद्या प्रतिष्ठिता न भवेदिति मत्वा तदनुजिघृक्षया स्वस्य परोक्षज्ञानवत्तारूपं स्वमहिमानं 'शूद्र' इति सम्बुध्या ख्यापयन्नाह 'अह हारे त्वा शुद्र तवैव सह गोभिरस्तु' (छा. ४. २. ३) इति । अहेति निपातः । हारसहित इत्वा रथः गोभिःसह तवैवास्तु किमनेन अल्पधनेन मम सन्तोषः कलत्रहीनस्य मम एतद्धनरक्षणे वा शक्तिः, तव वा मत्प्रयोजनापर्यवसाय्यल्पधनदानेन ब्रह्मविद्या प्रतिष्ठिता भवेदिति भावः । पुनर्जानश्रुतौ सहस्रं गवां पूर्वानीतं हारादिकं रैक्वस्य परिणयनार्थं स्वकन्यां तत्रत्यं ग्रामञ्चोपहृत्य प्रार्थयमाने विद्याप्रदानार्थमुपहारस्य पर्याप्ततामनुजानन् पुनरपि तदेव 'शूद्र' इत्यामन्त्रणं पूर्वोक्तानुकरणमात्रत्वेनावर्तयन् 'आजहारेमाःशूद्रानेनैव मुखेनालापयिष्यथाः' (छा. ४. २. ५) इति इमां दक्षिणां आजहर्थ; अनेनैव मुखेन विद्याग्रहणोपायेन मां वाचयिष्यसीत्यर्थः ।

अस्यामाख्यायिकायां हंसवाक्यानादरश्रवणानन्तरमेव क्षत्तृप्रेषणव्यग्रत्वप्रतिपादनेन जानश्रुतेः शुगुत्पन्ना सूच्यते । अतस्तदुत्पन्नया शुचा विद्यार्थं स्वाद्रवणं रैक्वेण शूद्रेत्यामन्त्रणेन सूच्यत इति युक्तम्। योगाद्रूढेर्बलीयस्त्वेऽपि बुद्धिसन्निहितार्थविषययोगस्यातथाभूतरूढितः प्रतिपत्तिलाघवेन बलीयस्त्वात् । इह च नैरुक्तप्रक्रियया 'रुदं (जं) द्रावयति' इत्यर्थे रुद्रशब्दवच्छुचा दुद्राव' इत्यर्थे शूद्रशब्दस्य निष्पत्तिसंभवात् । उकारस्य दीर्घस्तु नैरुक्त इहाधिकः । केचित् 'संहितायां यत्र दैर्घ्यं पदे यत्र न विद्यते । उक्तार्थस्य महाधिक्यं श्रुतेस्तत्र विवक्षितम् ॥' इति वचनमुदाहरन्तः शोकाधिक्यद्योतको दीर्घ इत्याहुः ।

नन्वेवं सति सूत्रे सूच्यत इत्यस्याख्यायिकया 'शुगुत्पन्ना सूच्यते' इति एषैव योजना युक्ता । रैक्वेण 'शूद्र' इत्यामन्त्रणेन सा सूच्यत इति योजनान्तरं तु न युक्तम् ; यौगिकेन शूद्रशब्देन शुचः कण्ठोक्त्यैव प्रतिपादनात् । नैष दोषः । हंसवाक्यानादरश्रवणकृतया शुचा विद्यार्थं मामभ्यागतवानसीत्येतावतो-

ऽर्थस्य रैक्केण चिख्यापयिषितस्यैकदेशप्रतिपादनद्वारा सूचनीयत्वात् । एवञ्च यदि नैरुक्तप्रक्रियया शुचिधातो-र्व्युत्पन्नोऽयं शूद्रशब्दः केवलयौगिकः, न तु 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपि' इत्यादिसूत्रतो रप्रत्यये अनुवर्तमाने 'शदेरूच' इत्यौणादिकसूत्रेण निष्पन्नश्चतुर्थवर्णे रूढः । तदा शूद्रशब्देन शुचः कण्ठोक्त्या प्रतिपादनात्कथं तेन सूच्यत इत्युक्तमित्याशङ्कायामपि सूत्रे 'तदाद्रवणात्' इत्येवोत्तरम् । ल्यब्लोपे पञ्चमी-यम्; न हि शुचमेव केवलामपेक्ष्य सूच्यत इत्युक्तम्, किन्तु तदाद्रवणमपेक्ष्य, तया 'शुगस्य तदनादरश्रव-णात्' इति सूत्रभागे प्रकृतया अनादरश्रवणजत्वविशिष्टया शुचा हेतुना यदाद्रवणं रैक्काभ्यागमनं तदपेक्ष्य । तत्तु सूचनीयमेवेति भावः । एवं सत्याङुपसर्गोऽप्यर्थवान् भवति । शूद्रशब्दप्रविष्टावयवार्थमात्रप्रदर्शनपरत्वे 'तद्रवणात्' इत्येव सूत्रं क्रियेत ।

केचिदुणादिसूत्रे रक्प्रकरणे 'शदेरूच' इति सूत्रपाठमनङ्गीकृत्य तदनंतरपठितात् 'अमितम्योर्दीर्घश्च' इति सूत्रादनन्तरं 'शुचेर्दश्च' इति सूत्रान्तरपाठं कल्पयन्तः तेन निष्पादितोऽयं शूद्रशब्दः केवलं शोचितृत्वार्थकः, न तु शुचाद्रवणार्थकः, औणादिकनिर्वाहे संभवति नैरुक्तनिर्वाहायोगात् । पाणिनीयनिर्वाहो मुख्यः, तत औणा-दिकस्ततो नैरुक्तः इति हि मर्यादेति वदन्ति । एवं शुद्धेषु सूत्रकोशेष्वदृष्टं वृत्तिग्रन्थेष्वव्याख्यातं पाठान्तरं कल्पयित्वा तथाव्युत्पादने नास्माकं कश्चिद्दोषः; 'तदाद्रवणात्' इति सूत्रभागस्य तद्व्याख्यानभाष्यस्य च वैदिकशूद्रपदवाच्यार्थप्रतिपादनपरत्वं विहाय केवलं तत्सूत्रार्थप्रतिपादनपरत्वकल्पनोपपत्तेः । किन्तु औणादि-कप्रत्ययान्ततायां न शोचितृत्वार्थलाभेनापि जात्यर्थत्वनिरासस‍िद्धिः । औणादिकप्रत्ययान्तानामव्युत्पन्नप्राति-पदिकत्वात् सर्वेषां नाम्नामौणादिकप्रत्ययान्तत्वेन जातिवाचिनः शूद्रशब्दस्यापि तथात्वावश्यंभावात् ।

अत एवाहुः शब्दविदः—'औणादिकप्रत्ययान्तान्यव्युत्पन्नप्रातिपदिकानि' इति 'अतः कृकमिकंस कुंभपात्रकुशाकर्णीष्वनव्ययस्य' (पा. सू. ८. ३. ४६) इत्येतत्सूत्रे कमिग्रहणे सत्यपि कमेरौणादिकप्रत्य-यान्तस्य कंसपदस्य ग्रहणेन सर्वेषां नाम्नामौणादिकप्रत्ययैः कृदन्तानां कृत्तद्धितसूत्रतः प्रातिपदिकसंज्ञासिद्धि-संभवेऽपि अर्थवत्सूत्रप्रणयनेन च ज्ञापितमिति । यद्यपि 'तदाद्रवणात्' इत्यत्र तत्पदस्येव 'तदनादरश्रवणात्' इत्यत्र तत्पदस्य 'अस्य' इति पदस्य च सूत्रप्रकृतपरामर्शित्वं नास्ति, तथाऽपि 'अह हारे त्वा शूद्र' इति वैदिकलिङ्गमवलंब्य प्रत्यवतिष्ठमानस्य पूर्वपक्षिणः तस्यामाख्यायिकायां वर्ण्यमानो जानश्रुतिः तमुद्दिश्य हंस वाक्यञ्च बुद्धिसन्निहितमिति पूर्वपक्षिणं प्रति जानश्रुतौ शूद्रशब्दप्रयोगनिर्वाहार्थं प्रवृत्ते सूत्रे प्रयुक्तयोस्तयोर्बोध्य-

बुद्धिसन्निहितपरामर्शित्वमस्तीति तयोर्निर्वाहः । एवमप्रतिपन्नरूढितः प्रतिपन्नयोगस्य बलीयस्त्वात् जानश्रुतिर्न जातिशूद्र इत्युपपादितम् । १. ३. ३४ ।

अत्रैव हेत्वन्तरमाह :—

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् । ३५ ।

जानश्रुत्याख्यायिकासमाप्त्यनन्तरमुत्तरत्र जानश्रुतये रैक्वेण उपदिष्टायाः संवर्गविद्याया वाक्यशेषे श्रूयते 'अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' (छा. ४. ३. ५) इति । तत्राभिप्रतारी चित्ररथवंश्यः क्षत्रियश्चेति तावद्वक्तव्यं; कापेयाख्ययाजकयोगात् । कापेययाजक योगो हि च्छन्दोगब्राह्मणे चित्ररथस्य श्रुतः । तत्र हि द्विरात्रप्रकरणे 'एककिनमेवैनमन्नाद्यस्याध्यक्षं करोति' इति फलार्थवादानन्तरं तदुपपादकमर्थवादान्तरं श्रुतं 'एतेन वै चित्ररथं कापेया अयाजयन् तमेकाकिनमन्नाद्यस्याध्यक्षमकुर्वन् तस्मात् चैत्ररथी नामैकः क्षत्रपतिरजायत' (ताण्डय ब्रा. २०. १२. ५) इति । तेनाभिप्रतारिणः संज्ञाभेदात् चित्ररथत्वासिद्धावपि तद्वंश्यत्वं सिध्यति; समानान्वयानां समानान्वया याजका भवन्तीति प्रायेण दर्शनात् । चित्ररथवंश्यत्वे सति क्षत्रियत्वमप्युदाहृतच्छन्दोगब्राह्मणवचनबलादेव सिध्यति । एवं चोत्तरत्र ब्राह्मणेन कापेयेन युक्तोऽभिप्रतारी क्षत्रिय इति निश्चिते तत्समभिव्याहारात् ब्राह्मणेन रैक्वेण युक्तो जानश्रुतिरपि क्षत्रियो गम्यते ।

किञ्च जानश्रुत्याख्यायिकायामेव तस्य क्षत्रियत्वे लिङ्गमस्ति । तत्र हि श्रूयते 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान्मापयाञ्चक्रे' (छा. ४. १. १) इत्यादि । तत्र यद्यपि दानं शूद्रस्याप्यस्ति 'दानञ्च दद्यात् शूद्रोऽपि पाकयज्ञैर्यजेत च' इति स्मरणात् ; शूद्रादिभ्यः पक्वान्नदानञ्च तस्य संभवति; तथाऽपि 'बहुदायी' इत्युक्तं दानपतित्वं सर्वत्रावसथान्निर्मायान्नसत्रप्रवर्तनञ्च बहुधनसाध्यं न तस्य संभवति । 'शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः' इति तस्य बहुधनसंपादननिषेधात् । 'यञ्चार्यमाश्रयेत भर्तव्यस्तेन क्षीणोऽपि तेन चोत्तरस्तदर्थोऽस्य निचयस्स्यात्' इति यं द्विजातिं शुश्रूषते तस्य कदाचित् क्षीणतायां तद्भरणं कार्यमिति तन्मात्रोपयुक्तधनसङ्ग्रहणस्यैवानुमतिदर्शनात् । तथा 'स ह प्रातः संजिहान उवाच' (छा. ४. १. ५) इत्युक्तं क्षत्तृप्रेषणमपि न तस्य संभवति । राज्ञ एव हि क्षत्तृसम्बन्धः 'वैश्याद्ब्राह्मणकन्यायां क्षत्ता नाम प्रजायते । जीविका वृत्तिरेतस्य

राजाऽन्तःपुररक्षणम्' इति स्मरणात्। तथा 'रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथः इयं जायाऽयं ग्रामो यस्मिन्नास्से' इत्युक्तं यत्र ग्रामे रैक्वस्तदानीं वसति तस्य ग्रामस्य तस्मै समर्पणं 'ते हैते रैक्व पर्णा नाम महावृषेषु यत्रास्माउवास' (छा. ४. २. ४) इति वर्णितम्। महावृषाख्यदेशगतेषु येषु ग्रामेषु रैक्वेणोषितं तेषां सर्वेषामपि ग्रामाणामद्यापि रैक्वपर्णनाम्ना प्रसिद्धानां तस्मै समर्पणञ्च जनपदाधिपत्यसाध्यं शूद्रस्य न संभवति। सर्वमेतत् क्षत्रियस्यैव संभवति। तस्मादपि क्षत्रिय एवायं न शूद्र इति गम्यते। अत्रेदञ्चिन्त्यते—

रूढेरस्त्यत्र योगस्य बलीयस्त्वे हि कारणम्। वर्णितं प्रतिपन्नत्वं तत्तावन्नोपपद्यते ॥
हंसवाक्यं श्रुतवतः क्षत्तृप्रेषणकर्मणा। विकारो मानसः कोऽपि गम्यते शुक्त्वसौ कुतः ॥
यथा स्वनिन्दा शोकाय तथा रैक्वप्रशंसनम्। तदुपास्योपासकान्यस्तवनञ्च भवेन्मुदे ॥
स्वस्यापि रैक्वमहिमप्राप्त्युपायप्रदर्शनात्। गुरोश्च तदुपायाप्तौ सचिह्नं तस्य सूचनात् ॥
महात्मनाञ्च शोकाय स्वनिन्दा नैव कल्पते। नतराञ्च कृता पथ्ये प्रवर्तयितुमिच्छता ॥
सर्वप्राणिरुताभिज्ञश्श्राद्धो जानश्रुतिर्यदि। तस्य हंसकृता निन्दा नैव शोकाय कल्पते ॥
स्मरन्ति हि महात्मानो मन्वाद्यास्स्मृतिकारकाः। अवमानात्तपोवृद्धिं सम्मानाच्च तपःक्षयम् ॥
यदि सा देवभाषेति हितैषी हंसरूपधृक्। ऋषिरेव समागादित्यभिज्ञो नतरां तदा ॥
न चास्य निन्दा यद्दिव्यज्योतिर्वैकल्यवर्णनम्। न ह्यसम्भावितगुणाभावोक्त्या कोऽपि निन्द्यते ॥
क्षत्रियः क्षत्रियेणासावग्रतोऽभिप्रतारिणा। समभिव्याहृतत्वादित्येतदप्यसमञ्जसम् ॥
याज्ययाजकभावोऽत्र कापेयाभिप्रतारिणोः। न श्रुतोऽभिप्रतार्येष येन चैत्ररथो भवेत् ॥
नाप्यन्यत्र श्रुतो नापि कल्प्यो न खलु विद्यते। मूलसम्बन्धनियमः कयोश्चित् क्वापि मेलने ॥
सति वा नियमे तस्मिन्याजकत्वं ततः कथं ॥
यौनमौखादिसम्बन्धानपहायान्यगामिनः। प्रसिद्ध एव सम्बन्धो यदि सङ्ग्राह्य इष्यते ॥
एकविद्यत्वमेव स्यान्नतु याजकता तदा। संवर्गविद्यावित्त्वं हि कापेयाभिप्रतारिणोः ॥
प्रसिद्धमत्रैव न तत् श्रुत्यन्तरमपेक्षते। प्रायेण चैकविद्यानां च्छान्दोग्ये मेलनं श्रुतम् ॥
प्राचीनशालशिलकप्रभृतीनां निरीक्ष्यते। अन्योन्यसाद्विशेषाणां ग्रहणार्थतया हि तत् ॥
निबध्यमानमद्यापि विद्यावत्सूपयुज्यते। विद्याप्रकरणे याज्ययाजकादिसमागमः ॥
वर्ण्यमानः प्रपद्येत किं वा दृष्टप्रयोजनम्। एवञ्चाभिप्रतारी स्यात् कापेयसहपाठतः ॥

## अपशूद्राऽधिकरणम् ।



अनिर्द्धारितवर्णत्वात्तद्वत् ब्राह्मण एव नः । तस्माज्जानश्रुतेस्तेन समभिव्याहृतत्वतः ॥

क्षत्रियत्वं न निर्णेतुं कथञ्चिदपि शक्यते । यत्तु दानपतित्वादिलिङ्गं तदपि दुर्बलम् ॥

उपपादयितुं शक्यं सर्वं शूद्रेऽपि तद्यतः । धार्मिकस्य हि शूद्रस्याप्यनुज्ञातं धनार्जनम् ॥

राज्याधिपत्यमप्यस्ति तस्यात्रेष्टिनयोदितम् । दृष्टञ्च कर्णस्यात्मानं मन्यमानस्य सूतजम् ॥

अङ्गराज्याधिपत्यञ्च दातृत्वञ्चातिमानुषम् । एवञ्च शूद्र एवायं शूद्रेत्यामन्त्रणान्वयात् ॥

राज्याधिपत्यदानादि तस्मिन् सङ्गच्छतेऽखिलम् । न ह्यस्य यागहोमादि किञ्चिदप्यत्र वर्णितम् ॥

न सङ्गच्छेत यच्छूद्रे तस्माच्छूद्रो भवत्ययम् । इति ।

श्लोकानामयमर्थः—इह शूद्रशब्दे रूढितो योगस्य बलीयस्त्वे कारणं शुचः प्रतिपन्नत्वमुक्तम् । तन्न युज्यते; तत्प्रतिपत्त्यसिद्धेः । हंसवाक्यश्रवणानन्तरमेव क्षत्तृप्रेषणेन तत्प्रेषणहेतुः कश्चिन्मानसो भावो हंसवाक्यश्रवणादुदित इत्येतावत्प्रतिपत्तुं शक्यते । स भावः शुगिति कुतः प्रतिपत्तव्यम् ? हंसवाक्यं जानश्रुतिनिन्दात्मकमिति ततस्तस्य शुच एवोदयो युक्त इति चेत्, न । तद्रैक्वस्य तदन्यस्यापि तदुपास्यदेवतोपासकस्य स्तुतिरूपम्भवतीति ततस्तोषोदयोऽपि युक्त एव । स्वस्यापि रैक्वमहिम-प्राप्त्युपायस्तदुपास्यदेवतोपासनमिति प्रदर्शनात्तदुपासनप्रकारोपदेशार्थं प्रार्थनीयः स एव रैक्व इत्यपि 'सयुग्वानम्' इति सचिह्नोपन्यासेन सूचनात् । अन्यथा कोऽसौ रैक्व इति पृष्ठगामिनो हंसस्य प्रश्ने भल्ला-क्षेण रैक्वमहिममात्रस्य वर्णनीयतया 'यस्तद्वेद यत्स वेद' इत्यनेन यत्स रैक्वो वेद तद्रैक्वादन्योऽपि यो वेद तस्यापि धर्मे सकलप्रजानां साधुकर्म फलतोऽन्तर्भवतीति प्रतिपादनस्य, रैक्वचिह्नोपन्यासस्य च वैयर्थ्य-प्रसङ्गात् । तस्मात्पृष्ठगामिनं हंसं प्रत्युत्तरं प्रयच्छतैव भल्लाक्षेण जानश्रुतिं प्रति त्वमपि रैक्वोपास्यां देवता-मुपास्व, रैक्व इव महामहिमा भविष्यसि, तदुपासनाप्रकारे च स एव रैक्वः उपदेष्टा प्रार्थनीयः तस्य चिह्नं सशकटपर्यटनं, तमन्विष्य ततो विद्यां लब्ध्वा कृतार्थो भवेति व्यंजयितुमेव तदुभयप्रतिपादनमिति ततस्तोषो-दयो युक्त एव ।

अत एव जानश्रुतिनाऽपि रैक्वान्वेषणाय क्षत्तृप्रेषणे 'सयुग्वानम्' इति युग्वा तच्चिह्नमुपन्यस्तम् । स्वयं तदुपसर्पणानन्तरं 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' इति तदुपास्यविद्योपदेशश्च प्रार्थितः । तस्माद्धंसवाक्यश्रवणानन्तरप्रवृत्तेन क्षत्तृप्रेषणकार्येणास्य शोकोदयो निश्चेतुं न शक्यते । तथाऽपि

निन्दालक्षणकारणेनैवायमवसीयते इति चेत्; न। महात्मनां हि येनकेनचिदपि कृता निन्दा शोकाय नाव-कल्पते। हिते प्रवर्तयितुमिच्छता कृता तु नतराम्। सा खल्वन्येषामपि शोकाय न भवत्येव। तथाहि— जानश्रुतिः 'श्रद्धादेय' इति विशेषितत्वात् शास्त्रचोदितेष्वर्थेषु श्रद्धावान्। स यदि सर्वप्राणिरुताभिज्ञ इति कृत्वा लोके येनकेनचित् पुरुषेण कृतां निन्दामवधार्य लौकिकेनैव हंसेन स्वभाषया अनूद्यमानां ताम-श्रौषीदिति कल्प्यते; तदा सा निन्दाऽस्य शोकाय नावकल्पते; यतो विवेकिभिस्स्वनिन्दनस्यादरणीयत्वमेव मन्वादयस्स्मरन्ति 'अवमानात्तपोवृद्धिस्सम्मानाच्च तपःक्षयः। अमृतस्येव काङ्क्षेत अवमानस्य सर्वतः' इति। यदि तु हंसकृतनिन्दावाक्यं गीर्वाणभाषारूपमिति तेन लिङ्गेन प्रागुपन्यस्तेन प्रकृतानुपयुक्तरैक्वोपास्यदेवतोपास-कपुरुषान्तरस्तवनरैक्वचिह्नोपन्यासलिङ्गेन च नायं लौकिको हंसः, किन्तु मम हितैषी कश्चिदृषिरेवान्यैरपि ऋषिभिस्सह स्वयमुक्तिप्रत्युक्तिव्याजेन मां बोधयितुमागत इत्यज्ञासीदिति कल्प्यते, तदा निन्दा कथमपि शोकाय नावकल्पते, किन्तु सम्राजमेव राजानं प्रति 'कियदस्त्यधुना राज्यं कियदाज्ञाबलं तव। अनेन त्वमुपायेन सार्वभौमो भविष्यसि' इत्यधिकैश्वर्योपाये प्रवर्तयितुकामेन कृता विद्यमानैश्वर्यनिन्देव हर्षायैव कल्पते।

किञ्च नेयं जानश्रुतेर्निन्दा यत् भुवमारभ्य द्युलोकपर्यन्तं व्याप्तस्य कालाग्निज्वालाकलापवत् स्पर्श-मात्रेण दहमानस्य सूर्येऽप्यसम्भावितस्य ज्योतिषस्तस्मिन्नभाववर्णनम्। सम्भावितगुणवैकल्यवर्णनं हि निन्दा भवति, न तु 'आकाशमयं खादितुमशक्तः' इतिवदसम्भावितगुणवैकल्येन कश्चिन्निन्द्यमानो दृश्यते। यदि त्वेवंभूतं ज्योतिस्तस्य नासीदिति जानश्रुतेः शोकः कल्प्यते, तदानीं 'एतत्तस्य मुखात् कियत्, कमलिनीपत्रे कणं पाथसो यन्मुक्तामणिरित्यमंस्त स जडश्शृण्वन्यदस्मादपि। अंगुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनै-स्तत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तश्शुचा' (भल्लटशतकम्) इति श्लोकोक्तरीत्या तस्यातिजडत्वमेव कल्पितं स्यात्। तस्माद्विवेकी जानश्रुतिर्विद्ययाऽपि रैक्वस्य तथाभूतं ज्योतिर्न सम्भाव्यते, तस्य तथाभूतज्योति-रभावोऽपि न दोषः, किन्तु रैक्वोपास्यविद्याप्रशंसार्थं कश्चिदयं कल्पनाविशेष इति जानात्येव। अत एव रैक्वान्वेषणाय क्षत्तारं प्रेषयन् शकटसाहित्यमेव तच्चिह्नमाह, न तु तथाभूतं ज्योतिः। क्षत्त्राऽपि पामानं कषमाणस्तपसा, दारिद्र्येण च कृश एव रैक्वो दृष्ट इति वर्णितं, न त्वादित्यवद्दुर्दर्शो दृष्ट इति वर्णितमिति केनापि प्रकारेण जानश्रुतेर्नास्ति शोकावकाशः। एवञ्चेह योगबलीयस्त्वे कारणस्याख्यायिकया शुचः सूचि-तत्वस्य वर्णनं प्रथमसूत्रकृतं तावदसमञ्जसम्।

तथा द्वितीयसूत्रकृतमभिप्रतारिसमभिव्याहृतत्वेन क्षत्रियत्वनिर्धारणमपि । तत्खल्वभिप्रतारिणः क्षत्रियत्वनिर्द्धारणे, तत् तस्य चैत्ररथित्वनिर्द्धारणे, तदपि तस्य कापेययाज्यत्वनिर्द्धारणे सति भवति । तदेव कुतो निर्द्धार्यते ? न तावदस्यां श्रुतौ श्रुत्यन्तरे वा श्रुतमस्ति तत् । नापि कल्प्यम्; कल्पकाभावात् । न च क्वचिन्मिलितयोर्मूलसंबन्धनियमोऽस्ति; नानादेशागतेषु सत्रान्नभोक्तृषु व्यभिचारात् । सति वा तन्नियमे याज्ययाजकभाव एव संबन्ध इति कुतः ? बान्धवरूपस्य यौनसंबन्धस्य, लौकिकव्यवहारकृतस्य संबन्धान्तरस्य वा कल्पनोपपत्तेः । यदि संबन्धस्तयोर्ग्राह्यस्तदा संवर्गविद्याविरत्वं संबन्धस्सिध्यति । तद्धि संवर्गविद्यावाक्यशेष एव ब्रह्मचारिसंवादे प्रसिद्धम् । प्रायेण छान्दोग्यगताख्यायिकासु एकविद्यानामेव मेलनं वर्ण्यते । यथा वैश्वानरविद्यायां प्राचीनशालसत्ययज्ञेन्द्रद्युम्नजनबुडिलारुणीनां, उद्गीथविद्यायां सिलकदाल्भ्यजैवलीनां, अस्यामेव विद्यायां कापेयाभिप्रतारिब्रह्मचारिणाम् । विद्याऽङ्गभूताख्यायिकास्वेकविद्यानां मेलनकथनमन्योन्यस्माद्विशेषग्रहणार्थं सदचापि विद्यावद्भिः परस्परस्मात् संभावितविशेषग्रहणाय मिलित्वा चिन्तनीयम्, न तु विद्योपदेशलाभमात्रेण कृतार्थतया स्थातव्यमिति शिक्षादानेनोपयुज्यते । तासु याज्ययाजकादिसमागमकथनं कथमुपयुज्यते ? एवञ्चाभिप्रतारी सन्दिग्धवर्णविशेषः कापेयसमभि-व्याहाराद्ब्राह्मणस्सिध्यतीति तत्समभिव्याहारात् जानश्रुतेः क्षत्रियत्वनिर्धारणमप्यसमञ्जसमेव ।

तथा दानपतित्वादिलिंगजातेन तन्निर्धारणमपि; शूद्रेऽपि दानपतित्वादिसंभवात् । धर्मानभिज्ञस्य तत्प्रावण्यरहितस्य हि शूद्रस्य पापप्रसक्तिशङ्कया धनार्जनं निषिद्धं मानवे धर्मशास्त्रे 'शक्तेनापि हि शूद्रेण न कार्यो धनसञ्चयः । शूद्रो हि धनमासाद्य ब्राह्मणानेव बाधते' (मनु. १०. १२९) इति । धार्मिकस्य तु शूद्रस्य धर्मार्थं धनार्जनमनुज्ञातं व्याससृतौ शूद्रप्रकरणे 'राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः । पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः' इति । ग्रामदानायापेक्षितं राज्याधिपत्यमपि शूद्रस्याद्येऽनये दर्शितम् । तत्र हि 'राजा स्वाराज्यकामो राजसूयेन यजेत' इति विहिते राजसूये त्रयाणामपि वर्णा-नामधिकारोऽस्ति; राजशब्दस्यार्यावर्तप्रसिध्या राजन्यपालयितृवाचित्वेन क्षत्रियजातिवाचित्वाभावादिति. पूर्व-पक्षे राजशब्दस्य राजन्यपालयितृवाचित्वेऽपि कथं त्रयाणां वर्णानामधिकारः; क्षत्रियस्यैव राज्यपालयितृत्वेन तस्य तस्मिन्नेव पर्यवसानादित्यशंक्य उक्तं वार्तिके 'तच्च राज्यमविशेषेण चत्वारोऽपि वर्णाः कुर्वाणा दृश्यन्ते तस्मात्सर्वेऽपि राजानः' इति ।

सिद्धान्तेऽपि राजशब्दस्य राज्यपालयितृवाचित्वे शूद्रस्यानग्नित्वावेदत्वप्रतिषेधहेतुभिरधिकारा-प्रसक्तावपि ब्राह्मणवैश्ययोरधिकारः प्राप्नुयाद्राजसूये इत्येतदंगीकृत्यैव 'राज्ञः कर्म राज्यम्' इत्यस्मिन्नर्थे यत्प्रत्ययविधायकेन पाणिनिस्मरणेनानुगृहीतया दक्षिणापथप्रसिध्या तस्य क्षत्रियजातिवाचित्वं स्थापितम्। महाभारते सूतात्मजमात्मानं मन्यमानस्य कर्णस्याङ्गदेशाधिपत्यं महोदारत्वञ्च वर्णितम्। एवञ्च जानश्रुतेः शूद्रत्वेऽपि राज्याधिपत्येन ग्रामदानक्षत्तृप्रेषणादीनामुपपन्नत्वात् 'शूद्र' इत्यामन्त्रणेन प्राप्तं शूद्रत्वं न हातव्यम्। अत एवास्य शूद्रत्वादेव दानादिरूपस्साधारणधर्म एव जानश्रुतेराख्यायिकायां वर्णितः, न तु त्रैवर्णिकासाधारणो यागादिः। तस्माच्छूद्रशब्दरूढिबलीयस्त्वात् शूद्र एवायं भवेदिति। एतेन—अल्पं धनमाहृतमिति रुषा क्षत्रियोऽपि सन् 'अह हारेत्वा शूद्र' इति शूद्रशब्देनामन्त्रितः—इत्यपि कल्पनं निरस्तम्। पर्याप्तधनाहरणानन्तरमपि 'आजहारेमाः शूद्र' इत्यामन्त्रणदर्शनाच्च।

अत्र ब्रूमः—भल्लाक्षस्य रैक्वजानश्रुतिविषयादरानादरवचसी दिव्यज्योतिस्तदभावावलम्बनत्वेऽपि वस्तुतो विद्यातद्वैकल्यप्रयुक्ते एव पर्यवस्यतः। अन्यथा "गगनमयं खादति, गगनं खादितुं न शक्नोत्ययं वराकः' इत्युक्तिप्रत्युक्तिवत् हंसाभ्यां कृतयोरुक्तिप्रत्युक्त्योरपार्थकत्वप्रसङ्गात्। विद्या च सम्भावितगुण इति तद्वैकल्येन 'कम्बरएनम्' इत्यादि जानश्रुत्यनादरवचनं तन्निन्दा भवतीति तद्वचनं जानश्रुतेरत्यन्ता-स्तिकस्य एतावन्तं कालमेवं प्रशस्तां विद्यां नाध्यगमं येनैवमत्यन्तापेन पितृस्थानीयेन महर्षिणा वा कृत-स्यावमानस्य पात्रमभूवमिति शोकहेतुर्भवत्येव। 'अमृतस्येव कांक्षेत' इत्यादिस्मृतिवचनन्त्वसूयालुभिर्निन्दासु क्रियमाणासु विवेकिभिः कोपो न कर्तव्यः; तस्यैहिकामुष्मिकसकलप्रयोजनविरोधित्वात्, असूयया निन्दन्त-स्तु स्वयमेव नंक्ष्यन्तीत्येतत्परम्, न तु वेदवैदिककर्मसु प्रवर्तयितुकामेन पित्रादिना कृते धिग्वचनेऽपि पुनरपि तदेव काङ्क्षेतेत्येतत्परम्; पुत्रानुशासनादीनामकार्यकरत्वापत्तेः। एवञ्च यद्यपि भल्लाक्षवचनं प्रशस्तविद्यातदुपदेष्टृगुरुसद्भावप्रत्यायकतया हर्षहेतुर्भवति, तथापि उक्तरीत्या ततश्शोकोऽपि भवेदिति स एव हेतुकार्याभ्यां सह शूद्रशब्देन सूच्यते महर्षिणा स्वस्य परोक्षज्ञानवत्त्वख्यापनाय, तस्य विद्याधिगमे विशिष्टाधिकारित्वज्ञापनाय च। केवलं विद्याकामाद्धि विद्यावैकल्यकृतेनानुतापेनापि युक्तोऽधिकारी विशेष्यते। तस्माद्युक्तमाख्यायिकया शुचः सूचनेन प्रतिपत्तिलाघवसत्त्वाच्छूद्रशब्दो यौगिक इति।

कापेयसन्निधानादभिप्रातारी तद्याज्यश्चैत्ररथश्चेत्येतत्तयोर्मूलसम्बन्धापेक्षानियममवलम्ब्य नोच्यते, किन्त्वविदितपूर्वस्य हस्तिनो निकटे पुरुषे दृश्यमाने तस्मिंश्च राज्ञो हस्तिपकोऽयमिति प्रत्यभिज्ञायमाने सति अयमस्य हस्तिपकस्य शिक्षणीयो हस्ती राजकीयश्चेति बुद्धिरौत्सर्गिकी यथा जायते, एवमिहापि अभिप्रतारि-सन्निधाने कापेये श्रूयमाणे तस्मिंश्च श्रुत्यन्तरबलाच्चित्ररथयाजकत्वेन प्रत्यभिज्ञायमाने कापेययाज्योऽयमभिप्रतारी चित्ररथवंश्यश्चेति बुद्धिर्जायमाना न निवारयितुं शक्यते । सा च बाधकाभावात् प्रमाणमवतिष्ठत इत्यौत्सर्गि-कन्यायमवलम्ब्य उच्यते । एवञ्च ब्राह्मणद्वितीयस्याभिप्रतारिणश्चैत्ररथत्वेन क्षत्रियत्वनिश्चये तत्समभिव्याहाराद्ब्रा-ह्मणस्य रैक्वस्य द्वितीयो जानश्रुतिरपि क्षत्रिय इति निर्धारणमपि युक्तमेव । 'बहुदायी बहुपाक्यः' इत्येतयोः कथञ्चन शूद्रे सम्भवेऽपि क्षत्तृप्रेषणस्य रैक्वाद्ध्युषितग्रामाणां तस्मै दानस्य क्षत्रियधर्मराज्याधिपत्यसाध्यस्य तत्र न सम्भवोऽस्ति । राज्यपालनं हि क्षत्रियस्य वृत्तिः आपद्वृत्तित्वेनाप्येतद्ब्राह्मणस्य भवति न वैश्यशूद्रयोः । 'ब्राह्मं प्राप्तेन संस्कारं क्षत्रियेण यथाविधि । सर्वस्यास्य यथान्यायं कर्त्तव्यं परिरक्षणम् ॥ अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा । जीवेत् क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः' 'यो मोहादधमो भूत्वा जीवेदुत्कृष्ट-कर्मणा । तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत्' इत्यादिस्मरणात् । अवेष्टिनयेत्वतिक्रान्तनिषेधानां चरित्रमुदाहृतम्, तावताऽपि तत्र प्रकृतोपयोगासिद्धेः । त्रयाणामपि वर्णानां राजसूयाधिकारमुपपादयता हि पूर्वपक्षिणा स्वाभिमतं राजशब्दप्रवृत्तिनिमित्तं राज्यपालनं वर्णान्तरेष्वपि दर्शनीयम् । शब्दप्रवृत्तिनिमित्तत्वञ्च धर्म्यवदधर्म्यस्याप्यस्य पाचकत्वयाजकत्वादेरिवोपपद्यते ।

अत एव तदधिकरणपूर्वपक्षवार्तिके 'क्षत्रियसंबन्धित्वेन राज्यं विहितं अन्यायेन इतरौ कुर्वाणौ न राजानौ स्याताम्' इत्याशङ्क्य परिहृम्—'सर्वथा तावद्राज्यकरणात्ताभ्यामपि राजत्वं लब्धम् । तावता च राजसूयचोद-नायाः प्रयोजनम् । यौ तु न्यायान्यायौ तयोः पुरुषधर्मत्वान्न कोऽपि क्रतुना गृह्यते' इति । एतेन—इति-हासपुराणादिप्रसिद्धमप्यक्षत्रियाणां राज्याधिपत्यं व्याख्यातम् । न चेदमपि जानश्रुतेः क्षत्तृप्रेषणादि-लिङ्गावगतं राज्याधिपत्यं तादृशमिति वक्तुं शक्यम्; बाधकाभावे वैदिकलिङ्गावगतस्य क्षत्रियधर्मस्यैवाङ्गी-कर्त्तव्यत्वात् । अन्यथा 'शूद्र' इत्यामन्त्रणेन लिंगेनावगतं शूद्रस्य विद्याग्रहणमधर्म्यं वेदेन निबद्धमित्येव वक्तुं शक्यतयाऽस्माभिरपि शूद्रस्य विद्याधिकारे उक्तवैदिकलिंगासिद्धेर्वक्ष्यमाणबाधकानां चानुपन्यसनीयत्वापत्तेः ।

न च इतिहासपुराणेषु केषाञ्चिद्वर्णितं राज्याधिपत्यं तेष्वेव तेषां म्लेच्छजातित्वाद्युक्त्या बाधकेनाधर्म्य-मभ्युपगम्यते यथा, एवमिहापि शूद्रश्रुत्या बाधकेन तदधर्म्यमभ्युपगम्यतामिति वाच्यम्। बहुलिङ्गविरोधेन शूद्रश्रुते-रेवान्यथा नेयत्वात्। तथा हि—क्षत्तृप्रेषणं ग्रामदानञ्च तावद्विरोधिलिङ्गमुपन्यस्तम्। तथा रैक्वस्य जानश्रुति-राज्य एव केषुचिद्ग्रामेषु प्राङ्निवासः विद्यार्थितया समागताय तस्मै विद्यादानं तत्कन्यापरिणयनं चेत्येतदपि विरोधिलिंगम्। 'नाधार्मिकैश्श्रिते ग्रामे न व्याधिबहुले तथा। न शूद्रराज्ये निवसेन्न पाषण्डजनैर्वृते' इति शूद्रपालिते राज्ये निवासस्य, 'न शूद्राय मतिं दद्यान्नोच्छिष्टं न हविष्कृतम्। न चास्योपदिशेद्धर्मं न चास्य व्रतमादिशेत्' इति शूद्राय मतिदानस्य, 'न ब्राह्मणक्षत्रिययोरापत्स्वपि हि तिष्ठतोः। कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते' इति शूद्राया धर्मदारत्वेन परिग्रहस्य च निषिद्धत्वात्। तस्मात् क्षत्तृप्रेषणादिलिंगजातेन जानश्रुतेः क्षत्रियत्वसमर्थनमपि समञ्जसमेव।

सूत्रे 'चैत्ररथेन लिङ्गात्' इति भिन्नविभक्तिनिर्देशतश्चैत्ररथेन समभिव्याहृतत्वादित्यध्याहाराशय उन्नीयते। 'अभिप्रतारिणा' इति श्रुत्युपात्तशब्दे निर्देष्टव्ये 'चैत्ररथेन' इति निर्देशो नाभिप्रतारिणः कापेय-याज्यत्वेन क्षत्रियत्वमवगन्तुं शक्यम्, तद्धि तस्य तेन चित्ररथत्वसिद्धिद्वाराऽवगन्तव्यम्; श्रुत्यन्तरे चित्ररथस्यैव कापेययाज्यत्वेन निर्दिष्टत्वात्। न च तत्तस्य सिध्यति; संज्ञाभेदेन चित्ररथाद्भेदप्रतीतेरित्याशङ्कापरिहारार्थः। चित्ररथाद्भेदेऽपि तद्वंश्यत्वसिद्धिद्वारा तेन तस्य क्षत्रियत्वं सिध्यति 'समानान्वयानां समानान्वयाः याजका भवन्ति' इति दृष्टत्वादिति परिहाराभिप्रायः। 'अयमश्वतरीरथः' इत्युक्तचित्ररथवत्त्वं क्षत्रियत्वे लिङ्गतयोपन्य-स्तमिति मन्दानां भ्रान्तिवारणार्थं 'उत्तरत्र' इति विशेषणम्। अस्तु तदपि लिङ्गं को दोषः? न। तस्य लिङ्गत्वासिद्धेः। शूद्रस्यापि रथसंभवात् शूद्रस्य वेदनिषेधवद्रथनिषेधस्य प्रामाणिकवचनरूढस्यादर्शनात्, तस्य तन्निषेधसत्त्वेऽपि सशकटं पर्यटतो रैक्वस्याश्वतरीरथः प्रियतरो भवेदिति तदर्थं संपाद्यानयनसंभवाच्च। स्वोप-भोगार्हमेव परस्मै दातव्यमिति नियमाभावात्, तस्य तल्लिङ्गत्वेऽपि लिङ्गादित्यनेनैव संग्राह्यतया पृथङ्निर्देशा-योगाच्च। एवं शूद्रस्य विद्याधिकारे वैदिकलिंगं विघटितम्। १. ३. ३५।

तथाऽप्यर्थित्वादिसद्भावादध्ययनाभावेपि स्त्रीणामिव विद्याग्रहणसम्भवाच्च तदधिकारः स्यादित्या-शङ्कानिराकरणार्थं सूत्रम्—

## संस्कारपरामर्शात्तदभावाभिलापाच्च । ३६ ।

ब्रह्मविद्याप्रदेशेषु उपनयनगुरुशुश्रूषादिसंस्काराः परामृश्यन्ते । उपनयनमध्ययनाङ्गात् प्रसिद्धादन्यदस्ति विद्याङ्गं 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्' (मु. १. २. १२) इति विहितं गुरूपसदनं, 'अधीहि भगवः' (छा. ७. १. १) इति मन्त्रपूर्वकं कुर्वाणस्य विद्यार्थिनश्शिष्यत्वमङ्गीकृत्य गुरुणा क्रियमाणमनुज्ञादानादिना स्वसमीपप्रापणम्, 'भृगुर्वै वारुणिः । वरुणं पितरमुपससार अधीहि भगवो ब्रह्म' (तै. ३. १. १) इति 'अधीहि भगव इति होपससाद सनत्कुमारं नारदः' (छा. ७.१.१) इत्यादिषु श्रुतिषु, उपसन्नेभ्यो विद्योपदेशेनार्थात्सिद्धम्; प्रजापतिविद्यादिषु 'वसापराणि द्वात्रिंशतं वर्षाणि' इत्याद्यग्रेतनवचनैरपि स्फुटीकृतम् । 'तं होपनिन्ये' इत्यादौ क्वचित्कण्ठतश्चोक्तम् । इदं च केनचिन्न क्रियते उपसन्नानामिष्टां विद्यां साकल्येनाजानन्यः स्वस्य गुरुत्वं नाभ्युपगच्छति ।

अत एव प्राचीनशालादिषु वैश्वानरविद्यार्थमभ्यागतेषूद्दालकः 'प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्तान्यमभ्यनुशासानि' (छा. ५. ११. ३) इति मन्वानस्सन् 'अश्वपतिर्वै भगवन्तोऽयं कैकयस्सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यागच्छाम' (छा. ५. ११. ४) इत्युवाच । यो वा हीनवर्णस्तेनापि 'शिष्यस्तेऽहं शाधि माम्' इति प्रार्थनयोपसन्नेषु स्वस्य गुरुत्वाभ्यनुज्ञयैव तन्न क्रियते । अत एव 'ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे' (छा. ५. ११. ७) इति तेषामृषीणामुपसदनमुक्त्वा अश्वपतिनोपनयनमकृत्वैव विद्योपदिष्टेत्युक्तं 'तान्हानुपनीयैवैतदुवाच' (छा. ५. ११. ७) इति । अजातशत्रुणा च राज्ञा विधिवदुपसन्नस्य गार्ग्यस्य बालाकेरकृत्वैवोपनयनं विद्योपदिष्टेत्युक्तं 'तत इह बालाकिस्समित्पाणिः प्रतिचक्रामोप त्वाऽयानीति तं होवाचाजातशत्रुः प्रतिलोमरूपमेव स्याद्यत्क्षत्रियो ब्राह्मणमुपनयेदेहि व्येव त्वा ज्ञापयिष्यामि' (कौषी. ४. १९) इति । अन्येन सर्वेणापि कर्त्तव्यमुपनयनम् । न चैतच्छूद्रस्य विधिवद्गुरूपसदनपूर्वकमुपनयनं शिष्यसंस्काररूपं सम्भवति; 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' इति मानवे धर्मशास्त्रे शूद्रस्य सकलसंस्काराभावाभिलापात् ।

ननु तत्रैव 'धर्मेप्सवस्तु धर्मज्ञास्सतां वृत्तिमनुव्रताः । मन्त्रवर्जं न दुष्यन्ति प्रशंसां प्राप्नुवन्ति च' इति तदनन्तरश्लोकेन धार्मिकाणां शूद्राणां मन्त्रवर्जसंस्काराणामभ्यनुज्ञानं कृतम् । न चामन्त्रसंस्कारो

न विद्योपयोगीति वाच्यम्; स्त्रीणां विद्याऽनधिकारप्रसङ्गात्। तासां विवाहसंस्कारस्य समन्त्रकत्वेऽप्यन्येषां संस्काराणाममन्त्रकतया गुरूपसदनस्याप्यमन्त्रकस्यैवाङ्गीकर्तव्यत्वादिति चेत्; मैवम्। शूद्राणाममन्त्रकं जातकर्मादिसंस्कारान्तराभ्यनुज्ञानेऽपि 'शूद्रश्चतुर्थो वर्ण एकजातिः' इति विशिष्योपनयनसंस्काराभावाभिलापात्।

न च वाच्यम्—'एकजातिः' इत्यनेन द्वितीयजन्मरूपोपनयनस्याभावोऽभिलप्यते। गर्भाष्टमादिषु कर्तव्यमध्ययनाङ्गोपनयनमेव च द्वितीयजन्म। तदेवोपक्रम्य 'तद्द्वितीयं जन्म' इति स्मरणात्। तथा च विद्याङ्गोपनयनेन एकजातित्वहान्यभावात् तच्छूद्राणामपि स्यादिति। 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' (प्र. ६.८) इति वैदिकलिङ्गेन तस्यापि जन्मरूपत्वात्। न च द्विजातीनां जन्मद्वयमेवेति नियमः; 'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धनम्। तृतीयं यज्ञदीक्षायां द्विजस्य विधिचोदितम्' इति मनुना यज्ञदीक्षाया अपि जन्मत्वाभिधानात्। 'अनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि' 'दक्षिणं पूर्वमाङ्क्ते सव्यं हि पूर्वं मनुष्या आञ्जते' इत्यादिमन्त्रार्थवादलिङ्गैरग्न्याधानपूर्विकाया यज्ञदीक्षाया मनुष्यतोत्तीर्णदेवजन्मत्व-सूचनाच्च। तथा च यथा 'तत्र यद्ब्रह्मजन्माख्यं मौञ्जीबन्धनचिह्नितम्। तत्रास्य माता सावित्री पिता-त्वाचार्य उच्यते' इति द्वितीये जन्मनि मातापितरौ स्मृतौ एवमिहापि 'त्वं हि नः पिता' इति पिता श्रुतः। अर्थाच्च ब्रह्मविद्यैव माता भवति या देहद्वयविविक्तनित्यशुद्धनिरतिशयानन्दपरब्रह्मरूपतया प्रकाश-मानं विद्वदात्मानं सूते इत्येतदपि जन्मैवेति युक्तम्। तस्मादध्ययनाङ्गोपनयनाभावादध्ययन इव विद्याङ्गोपनयनाभावाद्विद्यायामपि शूद्रस्य नाधिकारः। १. ३. ३६।

## तदभावनिर्धारणे च प्रवृत्तेः। ३७।

इतश्च न शूद्रस्य विद्याधिकारः। यत्सत्यवचनेन शूद्रत्वाभावे निर्द्धारिते जाबालं गौतम उपनेतु मनुशासितुश्च प्रववृते 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः' (छा. ४.४.५) इति हि गौतमवचनं श्रूयत इति। अत्रेदं चिन्त्यते—अध्ययनाङ्गोपनयनं गौतमेन कृतम्, न विद्याङ्गम्। एवं ह्युपाख्यायते—शैशवे मृतपितृकस्सत्यकामस्स्वां मातरम् 'अहमाचार्यमुपेत्य ब्रह्मचर्यं चरिष्यामि, किंगोत्रोऽहम्' इति पृष्ट्वा तया 'त्वज्जनकपरिचरणं कृत्वैव स्थितास्मि नाहं गोत्रं वेद' इत्युक्तो गौतममासाद्य 'ब्रह्मचर्यं भवति विवत्स्याम्युपेयां भवन्तम्' (छा. ४. ४. ३) इत्युक्त्वा 'किंगोत्रस्त्वम्,

इति तेन पृष्टो 'नाहं मम गोत्रं वेद, माताऽपि नावेदीन्माता मे जबाला सत्यकामोऽहमित्येतावद्वेद' इति सत्यमुवाच। अथ गौतमस्सत्यवचनेन ब्राह्मण्यं निश्चित्य तमुपनिन्य इति।

अस्यामाख्यायिकायामुक्तं गोत्रापरिज्ञानमकृताध्ययनांगोपनयनस्य बालस्य संभवति, न तूपनीतस्याधीतसाङ्गस्वाध्यायस्य ब्रह्मविद्याऽधिजिगमिषया गुरुमुपसीदतः। अध्ययनाङ्गोपनयन एव च गोत्रपरिज्ञानं ब्राह्मण्यनिर्धारणश्चोपयुज्यते। गोत्रभेदेन ब्राह्मणादिजातिभेदेन च तत्र प्रकारभेदस्मरणात्, विद्यांगोपनयने तदभावात्। 'नैतदब्राह्मणः' इति च ब्राह्मण्यनिर्धारणमेव, न तु शूद्रत्वाभावनिर्द्धारणम्। अब्राह्मणशब्दस्य क्षत्रियवैश्यसाधारणत्वेन शूद्रमात्रपरत्वाभावात्। 'नञिवयुक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति शाब्दिकोक्तन्यायेनात्यन्तसमक्षत्रियवैश्यमात्रपरतया शूद्रास्पर्शित्वाच्च।

ननु गौतमेनाध्ययनाङ्गमुपनयनं कृतं चेदध्यापनमग्रे कर्तव्यं स्यात्। ब्रह्मविद्योपदेश एव कृतः 'उप त्वा नेष्ये न सत्यादगाः' इति गौतमोक्तिप्रदर्शनानन्तरमेवं खलु श्रूयते। गौतमस्तं सत्यकाममुपनीय स्वकीयाद्गोयूथात् कृशानां दुर्बलानां गवां चत्वारि शतानि पृथक्कृत्य तत्पोषणे तं नियुयुजे। स तु सत्यकामस्तासां गवां सहस्रसंख्यापूरणात् प्राक् न प्रत्यागच्छेयमिति प्रतिज्ञाय तृणोदकबहुलमरण्यं नीत्वा ताः संरक्षन्वर्षगणं प्रोवास। ताः सहस्रं सम्पेदिरे। तदनन्तरमृषभोऽग्निर्हंसो मद्गुरिति चत्वारो देवतात्मानस्तस्य गुरुशुश्रूषया सन्तुष्टास्तस्मै षोडशकलब्रह्मविद्यामुपदिदिशुः। ततः सह गोभिराचार्यकुलं प्राप्याचार्येण 'ब्रह्मविदिव वै सोम्य भासि कोऽनु त्वाऽनुशशास' (छा. ४. ९. २) इति पृष्टस्तं वृत्तान्तमुक्त्वा देवैरुपदिष्टमित्यतोऽपि नाहं तृप्यामि स्वकीयादाचार्यादेव लब्धा किल विद्या साधीयसी भवति भगवानेव मह्यं ब्रवीतु' इति प्रार्थयामास। ततो गौतमस्तस्मै तामेव षोडशकलविद्यामुपदिदेशेति। अत्राध्यापनं न तावद्गोसंरक्षणात् प्राकृतमस्ति 'तमुपनीय कृशानामबलानाञ्च चतुश्शतं गा निराकृत्योवाच' (छा. ४. ४. ५) इत्युपनयनानन्तरमेव गोसंरक्षणनियोगप्रतिपादनात्। नापि पश्चात् 'भगवानेवोपादिशतु' इत्युपसन्नाय ऋषभाद्युपदिष्टषोडशकलविद्यामात्रमन्यूनानतिरिक्तमुपदिदेशेत्युक्तत्वात्। 'तस्मै ह तदेवोवाचात्र हि न किञ्चन वीयाय' (छा. ४. ९. ३) इति हि श्रूयते।

उच्यते—अध्ययनाङ्गमुपनयनं कृतमित्युपक्रमतो निश्चयात्तदनुसारेण 'उपनीय' इत्यङ्गोक्त्या प्रधानभूताध्ययननिर्वर्तनमपि शौचाचारादिशिक्षणवदुपलक्षणीयम्। ततस्समावर्तनात् प्राग्गुरुदक्षिणार्थतया

महतीं गुरुशुश्रूषां कृत्वा तया शुद्धान्तःकरणो विद्याधिजिगमिषामवाप्य तदर्थमस्मिन् पुनरुपसन्नः काञ्चन ब्रह्मविद्यामप्यधिगच्छत्वित्यभिप्रायेण वा गोसंरक्षणनियोगे कृते तत्संरक्षणसन्तुष्टाभिर्देवताभिस्तस्मै षोडशकल-विद्योपदिष्टा। आचार्याद्विद्या लब्धव्येत्युपसन्नाय तस्मै सैव विद्या पुनराचार्येणाप्युपदिष्टेति श्लिष्यत एव। तस्माच्छूद्रत्वाभावनिर्द्धारणे सत्येव विद्याङ्गोपनयने विद्योपदेशे च प्रवृत्तेरिति हेतुरसिद्धः। 'नैतद-ब्राह्मणो विवक्तुमर्हति' इति निर्द्धारणमपेक्ष्य कृतस्योपनयनस्य विद्याङ्गत्वाभावानिर्द्धारणस्य चावश्यापेक्षित-ब्राह्मण्यविषयत्वेन शूद्रत्वाभावविषयत्वाभावात्। गोत्रापरिज्ञानेऽपि ह्याचार्यगोत्रमाश्रित्योपनयनं सम्भवति, न तु वर्णविशेषानिर्णये। त्रैवर्णिकानां प्रतिवर्णमुपनयने प्रकारभेदस्योपदेष्टव्यगायत्रीभेदस्य च सत्त्वात्। सिद्धावप्यस्य हेतोर्नानेन शूद्रस्य विद्याऽनधिकारित्वसिद्धिः; तस्य विद्याऽधिकारित्वेऽपि 'न शूद्राय मतिं दद्यात्' इति प्रतिषेधमालोच्य शूद्रत्वाभावनिर्द्धारणापेक्षोपनयनप्रवृत्त्युपपत्तेः। न हि सन्ततसन्तन्यमान-षोडशमहादानेन महाप्रभुणा समाहूता अयं वृत्तिं प्राप्तस्य प्रतिग्रहप्रतिषेधमालोच्य प्रतिग्रहप्रार्थनार्थं किमय-माह्वयतीति शङ्कमानास्तदभिगमने प्रवृत्त्यर्थमाह्वानस्यातादर्थ्यनिर्द्धारणमपेक्षामह इति एतावता तस्य महा-दानानधिकारसिद्धिरिति।

**अत्र ब्रूमः**—शूद्रत्वाभावनिर्द्धारणमपेक्ष्यास्यामाख्यायिकायामभिहिताध्ययनाङ्गोपनयने प्रवृत्तिरपि शूद्रस्य विद्याङ्गोपनयनतत्पूर्वकविद्याग्रहणयोरयोग्यत्वे हेतुर्भवितुमर्हति। स च हेतुरनयाऽप्याख्यायिकया लभ्यत एव। तथा हि—अब्राह्मणशब्दस्तावच्छूद्रस्यापि साधारणः; ब्राह्मणभिन्नत्वस्य प्रवृत्तिनिमित्तस्या-वैकल्यात्। 'यद्ब्राह्मणश्चाब्राह्मणश्च प्रश्नमेयाताम्' इत्यादिप्रयोगदर्शनाच्च। नञिवयुक्तन्यायेनापि ब्राह्मणत्व-शङ्काप्रसञ्जकतत्सादृश्यरहितेभ्यो लोष्टादिभ्य एव व्यावर्तते, न तद्वद्भ्यश्शूद्रेभ्यः। अत एव महाभाष्ये 'अब्राह्मणमानयेत्युक्ते ब्राह्मणसदृशं पुरुषमानयति, नासौ लोष्टमानीय कृती भवति' इत्यब्राह्मणशब्दस्य ब्राह्मणेतरपुरुषमात्रे वृत्तिरुक्ता। तस्य च साधारणशब्दस्यात्र विशिष्य शूद्रे तावत्तात्पर्यमेष्टव्यम्; 'न सत्या-दगाः' इति हेतोः शूद्रत्वव्यावर्तने एव सामर्थ्यात्। शूद्रः खलु स्वभावतो मायावीति 'अनृतञ्चातिवादश्च पैशुन्यमतिलोभता। निकृतिश्चाभिमानश्च जन्मतश्शूद्रमाविशत्। दृष्ट्वा पितामहश्शूद्रमभिभूतं तु तामसैः। द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान्। नश्यन्ति तामसा भावाश्शूद्राणां द्विजभक्तितः' इत्यादि-स्मृतिषु प्रसिद्धः।

एवञ्च 'ब्रह्मचर्यं भगवति विवत्स्याम्युपेयां भगवन्तम्' इत्यध्ययनार्थविद्यार्थोपगमनद्वयसाधारण-मुपगमनं कुर्वाणे सत्यकामे शूद्रत्वाभावनिर्धारणमपेक्ष्य या गौतमस्य तदुपनयने प्रवृत्तिः सा शूद्रस्य विद्याङ्गोपनयने विद्याग्रहणे चानधिकारं गमयितुमीष्टे । तस्य तदधिकारसत्त्वे हि शूद्रस्सन्नपि सत्यकामो विद्याङ्गोपनयनेन संस्कृत्य विद्यां ग्राहयितुं योग्य इति शूद्रत्वाभावनिर्धारणमपेक्ष्य समिदाहरणे न नियुज्येत । तस्य तदनधिकारे त्वस्य शूद्रत्वाभावे निश्चिते सति अकृताध्ययनाङ्गोपनयनोऽयं प्रथमं तेन संस्कृत्याध्यापनीय-स्ततो विद्याकामश्चेत्क्रमेण तामपि ग्राहयितव्य इत्यालोचयता गौतमेन शूद्रत्वाभावे निश्चिते सत्युपनिनीषुणा समिदाहरणे नियुक्त इति श्लिष्यते । एवं सति 'किंगोत्रस्त्वमसि' इति गोत्रप्रश्नोऽपि न तद्गोत्रानिर्दिधार-यिषया; शूद्रत्वपर्यन्तसन्देहानुवृत्तिसमये ब्राह्मणजात्युपनयनमात्रोपयुक्तगोत्रप्रश्नस्यानवसरदुस्थत्वात् । किन्तु शूद्रश्चेत् किमप्युपनयनं नार्हतीति मत्वा गोत्रप्रश्ने किमयं वक्ष्यतीति तज्जातिपरीचिक्षिषया ।

एवमस्य विद्याप्रकरणपठिताख्यायिकासन्दर्भस्य विद्याविध्यपेक्षिताधिकारिविशेषनिर्णयोपयोगित्वे सम्भवति तदनपेक्षितार्थपरतया योजनमपि न युक्तम्; प्रधानप्रतिपाद्यविध्यपेक्षितार्थसमर्पकत्वे सम्भवति तदङ्गविद्यास्तुतिद्वारभूताध्ययनाङ्गोपनयनापेक्षितार्थसमर्पकत्वकल्पनस्यायुक्तत्वात् । वर्णविशेषनिर्णयं विना-ऽध्ययनाङ्गोपनयनकरणासम्भवे तत्करणान्यथानुपपत्त्या तन्निर्णयोऽपि यथाकथञ्चिज्जात इति कल्प्यताम्, न तु तन्निर्वाहाय गौतमसत्यकामप्रश्नोत्तरसन्दर्भस्य प्रधानविध्यपेक्षितार्थपरत्वं विहायान्यापेक्षितार्थपरत्वकल्पनं युक्तम् । न हि 'चतुरो मुष्टीन्निर्वपति' इत्यत्र मुष्टयः स्वपरिच्छेदकसंख्याविशेषापेक्षा इत्येतावता चतुस्संख्या निर्वापान्वयमपहाय मुष्ट्यन्वयमनुभवति । तथासति सप्तदशशरावादिषु प्रधानभूतमुष्ट्यबाधाय संख्याबाधन-प्रसङ्गात् । तथाच यथा तत्र संख्यायाः शाब्दे निर्वापान्वये सति पार्ष्ठिकमुष्ट्यन्वयकल्पनया मुष्टीनामप्याकांक्षा-शांतिरेवं गौतमसत्यकामप्रश्नोत्तरसन्दर्भस्य विद्याधिकारिविशेषनिर्णयोपयोगिनः प्रधानभूतविद्याविध्यन्वये सति प्रागेव मया गोत्रविमर्शः कृतोऽस्तीत्येवंरूपसत्यकामवचनार्थपर्यालोचनया ब्राह्मणस्यैवोपनयनार्थं गोत्रविशेष-विमर्शप्रसक्तिर्भवति, नान्यस्येत्यर्थापत्त्या वर्णविशेषनिर्णयापेक्षस्य उपनयनस्याप्याकांक्षाशान्तिर्भवति चेत्, सा न निवार्यते ।

एतेन—शूद्राय मतिदाननिषेधादपि तदभावनिर्द्धारणे प्रवृत्तिरुपपद्यत इति हेतोरसाधकत्वशङ्कापि निरस्ता । तदभावनिर्द्धारणस्यासाधारणविद्याविध्यपेक्षिताधिकारिविशेषनिर्णयोपयोगित्वसम्भवे साधारणतदन-

पेक्षितार्थपरत्वकल्पनायोगात् । शूद्राय मतिदाननिषेधो हि कर्मणि ब्रह्माणि वा श्रुतिभिस्स्मृतिभिरितिहासैः पुराणैर्लौकिकवाक्यैर्वा 'शूद्राय मतिर्न दातव्या' इत्येवं साधारणो विद्याविष्यनपेक्षितश्च । तस्मादुपपन्नोऽयं तदभावनिर्द्धारणे च प्रवृत्तेरिति हेतुः । १. ३. ३७ ।

## श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च । ३८ ।

इतश्च न शूद्रस्य विद्याधिकारः । यदस्य वेदश्रवणं वेदाध्ययनश्चार्थः प्रयोजनं यस्य समीपे वेदोच्चारणस्य तस्यापि प्रतिषेधो भवति 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रः तस्माच्छूद्रसमीपे नाध्येतव्यम्' इत्यत्र शूद्रस्य सञ्चारिश्मशानत्ववादः श्मशानवदध्ययने दूरं परिहरणीयत्वप्रामयर्थः । 'अध्ययनं वर्जयेत्' इत्युनुवृत्तौ 'श्मशानं सर्वतश्शम्याप्रासात्' इत्युक्त्वा 'श्मशानवच्छूद्रपतितौ' इति स्मरणात् । वेदोच्चारणे शूद्रस्य सुदूरं परिहरणीयत्वोक्तिश्च मायावी शूद्रो निषेधादप्यविभ्यच्छद्मना वेदाक्षराणि गृह्णीयात् तदण्वपि मा ग्रहीदिति दृष्टार्थमपि, न तु श्मशानवच्छूद्रजातेस्सामीप्यं दोषावहमिति केवलमदृष्टविरोधपरिहारार्थम् । अत एव शूद्रजातिसामान्येऽपि शूद्रस्त्री सविधोच्चार्यमाणान्यपि वेदाक्षराणि ग्रहीतुं धारयितुं वा न शक्नोति 'शूद्रायां तु प्रेक्षणप्रतिप्रेक्षणयोरेवानध्यायः' इति तदनन्तरमुक्तम् । एवञ्च यस्य समीपेऽपि नाध्येतव्यम्, तस्य वेद-श्रवणादीनि कैमुतिकन्यायेन निरस्तानि । साक्षाच्च शूद्रस्य वेदश्रवणे तन्मूलकेऽध्ययने तस्यार्थे प्रयोजने धारणे च प्रतिषेधोऽस्ति; 'अथ हास्य वेदमुपशृण्वतः' इत्यादिना शूद्रस्य वेदश्रवणोच्चारणधारणेषु प्रायश्चित्तस्मरणात् । ततश्च शूद्रस्य वेदश्रवणाद्यभावे वेदार्थविचारस्य चाभावः कैमुतिकन्यायसिद्धः ।

साक्षाच्च तयोरपि प्रतिषेधोऽस्ति "कपिलाक्षीरपानेन ब्राह्मणीगमनेन च । वेदाक्षरविचारेण शूद्र-श्चण्डालतां व्रजेत् । यो ह्यस्य धर्ममाचष्टे यश्चैवादिशति व्रतं । सोऽसंवृतं नाम तमस्सह तेनैव गच्छति' इति वेदविचारतदर्थग्रहणयोस्तस्यात्यन्तं दुर्गतिस्मरणात् । एवञ्च वेदार्थज्ञानाभावे वेदविहितानां कर्मणां विद्यानाञ्चा-नुष्ठानासम्भवोऽपि अर्थसिद्धः । साक्षाच्चात्राधिकारप्रतिषेधोऽस्ति 'न शूद्रे पातकं किञ्चिन्न च संस्कारमर्हति । नास्याधिकारो धर्मेऽस्ति नाधर्मात्प्रतिषेधनम्' इति मनुस्मरणात् । शूद्रमुद्दिश्य विशिष्य यन्नित्यवद्विहितं तदकरणे तस्य पातकं नान्यत्र । यस्संस्कारो विशिष्य विहितस्तमेव सोऽर्हति नान्यम् । यो धर्मो विशिष्य विहितस्तत्रैव तस्याधिकारो नान्यत्र । अधर्मोऽपि यो विशिष्य प्रतिषिद्धस्स एव तस्य परिहरणीयो नान्य

इत्यर्थः । एवञ्च शूद्रस्य सगुणविद्यासु, निर्गुणविद्यार्थेषु वेदान्तश्रवणादिषु च विशेषविध्यभावेन च तेषां निषेधवचनैः क्रोडीकृतत्वान्न तेषु तस्याधिकारः ।

एतेन—शूद्रस्य वेदश्रवणाध्ययनधारणार्थावगतीनां प्रतिषिद्धत्वेऽपि कूपखननन्यायमाश्रित्य सगुणविद्यानां श्रवणादीनाञ्चानुष्ठानमस्तु; सगुणब्रह्मविद्यानां वेदान्तश्रवणजनितनिर्गुणविद्यायाश्च प्रारब्धेतरसकलपापध्वंसकत्वेन वेदश्रवणादिप्रतिषेधोल्लङ्घनकृतपापस्यापि तत एव ध्वंससम्भवादित्यपि—निरस्तम्; अनधिकारिणाऽनुष्ठितानां वैदिककर्मणां फलपर्यवसायित्वाभावेन कूपखननन्यायानवतारात् । इह विद्याङ्गोपनयनाभावेन, विशेषविहितेतरवैदिककर्माधिकारप्रतिषेधेन च शूद्राणामनधिकारित्वस्य समर्थितत्वात् । कथं तर्हि विदुरधर्मव्याधप्रभृतीनां ब्रह्मज्ञत्वम् ? पूर्वजन्माधिगतज्ञानाप्रमोषात् । 'धर्मव्याधादयोऽप्यन्ये पूर्वाभ्यासाज्जुगुप्सिते । वर्णावरत्वे संप्राप्तास्संसिद्धिं श्रमणी यथा' इति हि स्मरन्ति ब्रह्मज्ञानमपि तेषाम् । हीनजातिषु जननं तु प्रारब्धबलात् ।

ननु पूर्वजन्मानुष्ठितयज्ञादिकर्मभिः शुद्धान्तःकरणतयोत्पन्नब्रह्मविविदिषाणामपि साधनसंपत्त्यभावेनानुत्पन्नब्रह्मविद्यानां ततःप्रारब्धबलेन शूद्रादिजन्म प्राप्तानां पूर्वसंस्कारानुवृत्त्या विरक्तानामनुवृत्तब्रह्मविविदिषाणां किं ब्रह्मविद्योपायो नास्ति ? अस्त्येवेतिहासपुराणादिः । ननु 'श्रोतव्यश्श्रुतिवाक्येभ्यः' इति ब्रह्मदर्शनार्थं वेदान्तश्रवणनियमविधिना सकलोपायान्तरव्यावर्तनात् कथमितिहासपुराणादेस्तदुपायत्वेन परिग्रहः ? न । त्रैवर्णिकान् प्रति स नियमविधिरिति तल्लब्धनियमस्यापि तद्विषयत्वात् । एवन्तर्हीतिहासपुराणादिवद्वेदान्तार्थप्रथनरूपो भाषाप्रबन्धः 'त्वमेव ब्रह्मासि' इत्यादिलौकिकवाक्यञ्च तदुपायोऽस्तु; तस्यापि ब्रह्मात्मैक्यज्ञानजननसमर्थत्वात् । न च—अध्यासनिवर्तनक्षमं तदपरोक्षज्ञानं वेदान्तैस्तन्मूलैरितिहासपुराणैर्वा भवति नान्यैरिति—वाच्यम् । विषयस्वाभाव्येन 'दशमस्त्वमसि' इत्यादिलौकिकवाक्यैरप्यपरोक्षज्ञानस्य सिद्धान्तिनाऽभ्युपगतत्वात् । तथाऽपि लौकिकवाक्यजमपरोक्षज्ञानमसम्भावनाविपरीतभावनाप्रतिबन्धान्नाध्यासनिवर्तनक्षमम्, इति चेत्; न । वेदान्तजापरोक्षज्ञानस्येव तस्यापि मनननिदिध्यासनाभ्यां प्रतिबन्धकनिवर्तनसम्भवात् ।

यद्वा माभूद्भाषाप्रबन्धो मा च भूल्लौकिकवाक्यम् । मननाख्येनानुमानकलापेनैव प्रतिबन्धनिवृत्त्यर्थमवश्यापेक्षितेन 'चिन्मात्रं तत्त्वमन्यत् सर्वमारोपितम्' इति निर्धारणं सम्भवति । तच्च विषयस्वाभाव्यादपरोक्षमिति मननमात्रं निदिध्यासनशिरस्कं शूद्राणां ब्रह्मविद्योपायोऽस्तु । यदि मननं प्रमाणप्रमेया-

नुपपत्तिनिरासकतर्करूपतया वेदान्तश्रवणस्येतिकर्तव्यतारूपं न स्वतन्त्रम् तर्हि 'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्' इति वचनादितिहासपुराणमपि तथैव। यदि च तद्वचनमनेकशाखाभिज्ञमहर्षिकृतेतिहासपुराणानुसारिण्येवार्थे वेदस्य तात्पर्यं ग्राह्यमित्येवंपरम्, न स्वातन्त्र्येण ततोऽर्थनिर्णयनिषेधपरम्, तर्हि 'श्रोतव्यो मन्तव्यः' इति श्रवणाङ्गत्वेन मननविधिरपि वेदान्तेषु सम्भावितप्रमाणप्रमेयानुपपत्तिशङ्का मननेन निरसनीयेत्येतावन्मात्रपरम्, न तु स्वातन्त्र्येणानुमानाद्ब्रह्मनिर्णयो न भवतीत्येतत्परम्। 'नैषा तर्केण मतिरापनेया' इति श्रुतेर्नानुमानगम्यं ब्रह्मेति चेत्—'तन्त्वौपनिषदं पुरुषं पृच्छामि' इति श्रुतेर्नेतिहासपुराणादिगम्यमित्यपि स्यात्। औपनिषदत्वश्रुतिरुपनिषद्विरोधिशब्दान्तरगम्यत्वनिरासपरा चेत् साऽपि श्रुतिस्तद्विरोधितर्कगम्यत्वनिरासपराऽस्तु। अथवा माभूद्भाषाप्रबन्धलौकिकवाक्यानुमानजातं शूद्रस्य ब्रह्मावगत्युपायः। मा च भूत् त्वदुक्तमितिहासपुराणम्। वेदान्तवाक्यजातमेव लिखितपाठादिना गृहीतमत्रिविधिना विचारितं तदुपायोऽस्तु; व्युत्पन्नस्य लिखितपाठादिगृहीतादपि ततोऽर्थप्रत्ययस्यानिवार्यत्वात्। अविहितविचारस्याप्यार्द्रकमरीचादिविषयस्येवासम्भावनानिवर्तनक्षमत्वात्। अविहितविचारस्य च वैदिकाधिकारनिरपेक्षतया तद्वैकल्येन निष्फलत्वाप्रसक्तेः शूद्रस्य वेदग्रहणनिषेधोल्लङ्घने च कूपखननन्यायेन प्रवृत्त्युपपत्तेरिति चेत्।

अत्र ब्रूमः। बहूनि मनुष्याणां ब्रह्मविद्योत्पत्तिप्रतिबन्धकानि दुरितानि 'तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विदुः' इत्यादिवैदिकलिङ्गावगतानि। तत्र कानिचिद्विविदिषोरपि श्रवणादिसाधनसम्पत्तिविघटनद्वारकाणि, अपराणि श्रवणादिसाधनसम्पत्तावपि बुद्धिसामर्थ्यविघटनद्वारकाणि, इतराणि विद्योदयेऽप्यसम्भावनादिबाहुल्यापादकानि। किं बहुना? निरस्तसमस्तासम्भावनादिप्रतिबन्धनिर्विचिकित्सब्रह्मविद्योदयेऽप्यविद्याऽनिवृत्तिकराणि सत्यपि विशेषदर्शने भ्रमानिवृत्तिकरोपाधिसन्निधानकल्पानि कान्यपि सन्ति। तानि सर्वाणि यज्ञदानादिभिस्सन्यासापूर्वेण वेदान्तश्रवणनियमादृष्टेनेतिहासपुराणादिश्रवणनियमादृष्टेन च निवर्तनीयानि। एतानि च प्रतिबन्धकनिवर्तकानि यथाऽधिकारं व्यवतिष्ठन्ते। तथा च 'श्रावयेच्चतुरो वर्णान् कृत्वा ब्राह्मणमग्रतः' 'शूद्रस्सुखमवाप्नुयात्' इत्यादिवचनैरितिहासपुराणश्रवणपठनाधिकारित्वेनावगतस्य शूद्रस्य तच्छ्रवणनियमसंपाद्यमदृष्टं विना लिखितपाठगृहीतवेदान्तादिभिः कथमप्रतिबद्धब्रह्मावगतिसम्भवः। सन्ति हि पुराणेतिहासश्रवणसामान्ये केचन नियमाः विशिष्य च पुराणभेदेन भारतपर्वादिभेदेन चान्ये नियमाः। तत्रापि ब्रह्मावगत्युपायेषु गीतादिभागेषु 'शिष्यस्तेऽहं शाधि माम्' इत्यादिपार्थवचनप्रभृतिलिङ्गावगता गुरूपसदनादि-

नियमाः । तस्मान्नियमरहितैर्लिखितपाठगृहीतवेदान्तभाषाप्रबन्धलौकिकवाक्यतर्ककलापैरभ्यासानिवर्तनक्षमब्रह्मा-वगत्यापादनमनधिगतवैदिकमर्यादानामेव शोभते ।

ननु तथाऽपि शूद्रस्येतिहासपुराणादिनाऽपि नास्ति विद्याधिगमेऽधिकारः । न हि तमुद्दिश्य विशिष्यास्ति विद्याविधानम् । विशेषविहितेतरधर्मास्तु तस्य प्रतिषिद्धा इत्युक्तम् । सत्यम् । ब्रह्मविद्यायां नास्ति विध्यपेक्षा । आनन्दसाक्षात्कारत्वेन तस्याः फलत्वात् बन्धननिवृत्तिरूपमुक्तिसाधनत्वेऽपि प्रमाणवस्तु-परतन्त्रत्वेन विध्यनर्हत्वात्, किन्तु तत्साधने । तत्र च त्रैवर्णिकानां वेदान्तश्रवणरूप इव शूद्राणामितिहास-पुराणश्रवणरूपे विशेषतोऽस्त्येव विधिः । ननु 'द्रष्टव्यश्श्रोतव्यः' इति वेदान्तश्रवणे ब्रह्मदर्शनफलानुवादवदिह तदनुवादो नास्ति ? सत्यम् । तथाऽपि यत्र योऽर्थः प्रतिपाद्यते तदवगतिरसति बाधके तत्र फलत्वेन व्यवतिष्ठते । 'धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ । यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' इत्यादिवचनैस्तत्तत्प्रतिपाद्यप्रदर्शनमपि तत्तदवगतेः फलत्वसूचनायैव । एवञ्चेतिहासपुराणेषु यस्याधिकारिणो यदर्थावगतिर्यथोपयुज्यते, तथैव सा तस्य फलतया व्यवतिष्ठते । ततश्च यद्यपि तेभ्यश्शुद्धब्रह्मावगतिर्वेदान्त-श्रवणनियमवतां त्रैवर्णिकानां तत्र वेदान्ततात्पर्यस्थिरीकरणार्थतया उपयुज्यते, तथाऽपि प्रतिषिद्धवेदश्रवणानां शूद्राणां साक्षान्मुक्तिसाधनतयैवोपयुज्यते । तस्यास्तत्साधनत्वप्रसिध्यर्थं मनननिदिध्यासने अपि शूद्रस्य मुक्तिसाधने ब्रह्मविद्याफलकेतिहासपुराणश्रवणविधिनैवाक्षिप्येते यथाऽध्ययनविधिना स्वफलस्यार्थज्ञानस्य क्रत्वनुष्ठानादिसाधनत्वसिध्यर्थं विचार आक्षिप्यते । तस्माद्युक्तमुक्तं शूद्राणामितिहासपुराणादिकं मुक्तिसाधन-ब्रह्मविद्योपाय इति । तथापि तत्तल्लोकविशेषावाप्तिफलकसगुणब्रह्मविद्या विधेयत्वाद्विशिष्य शूद्रान् प्रत्य-विधानाच्च तेषां न स्यादिति चेत्, मा भूत् । तदंशे यज्ञादिकर्मांश इव इतिहासपुराणादिश्रवणमर्थावगति-फलकं पापक्षयफलकमस्तु । अध्ययनविधिरपि ह्यर्थावबोधफलकत्वपक्षे न सर्वत्रार्थावबोधफलकः ।

किञ्च शूद्रस्य क्वचित्क्वचिदस्त्येवेतिहासपुराणप्रतिपाद्यायां सगुणविद्यायामप्यधिकारः यत्र विशिष्य विधानं लिङ्गं वाऽस्ति यथा प्रणवरहितेन पञ्चाक्षरेण शिवोपासनायां, यथा वा नारदस्य प्राचीने शूद्रजन्मनि यतिभिरुपदिष्टायामच्युतोपासनायाम् । एवं शैवपाशुपतपाञ्चरात्रादिदृष्टेषु सगुणविद्याविशेषेष्वपि शूद्रोचितसंस्कारपूर्वकं विशिष्य विहितेषु तस्याधिकारो द्रष्टव्यः । एवं शूद्रस्य इतिहासपुराणादिमूलक-विद्याधिकारसत्त्वेऽपि वेदमूलकसंवर्गविद्याद्यधिकारशङ्कानिवारणार्थं सूत्रे जानश्रुतेः क्षत्रियत्वसमर्थनम् ।

वेदमूलकाधिकारनिराकरणार्थं ह्येतदधिकरणम् । अत एव वेदश्रवणादिप्रतिषेधः सूत्रकृता हेतूकृतः इत्यलं प्रसक्तानुप्रसक्त्या । सौत्रे श्रवणाध्ययनार्थपदे बहुव्रीहिः । अर्थपदं प्रयोजनपरं । पुनश्च द्वन्द्वः । तदानीं तत्प्रयोजनपरं प्रतिपाद्यपरञ्च । प्रतिपाद्यपरत्वे तदज्ञानस्य तदनुष्ठानस्य च लक्षकमित्येतत्सर्वं प्रागेव वर्णित-प्रायम् । चतुर्ष्वपि गुणसूत्रेषु चकारस्तत्र तत्रोद्भावितशङ्कापरिहारद्योतनाय । १. ३. ३८ ।

इत्यपशूद्राधिकरणम् । ९ ।

---

( १० अधिकरणम् )

## कम्पनात् । ३९ ।

अवसितः प्रासङ्गिकोऽधिकारविचारः । यथापूर्वं वाक्यार्थविचारः क्रियते । 'यदिदं किञ्च जगत्सर्वं प्राण एजति निस्सृतम् । महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति' (क. २. ३. २) इति कठवल्लीमन्त्रे मुख्यप्राणो बाह्यवायुश्चोपास्यगुणविशेषविशिष्टावाम्नायेते उत ज्ञेयं ब्रह्म प्रतिपाद्यत इति संशये **पूर्वः पक्षः** ।

सर्वमिदं जगद्यदाश्रयं स्पन्दत इति यतः कारणान्निस्सृतञ्चेत्युच्यते स मुख्यप्राणरूपो वायुः; प्राणश्रुतिमुख्यत्वानुरोधेन 'सर्वं जगत्' इत्यस्य प्राणात्मकवायुविकाररूपसर्ववस्तुपरतोपपत्तेः । एवं सति सर्वशब्दस्य स्वार्थैकदेशे वृत्तिसङ्कोचेऽपि ब्रह्मपरत्वे प्राणशब्दस्येव सर्वथा स्वार्थत्यागाभावात्, 'निस्सृतम्' इत्यस्य 'तच्च सर्वं जगत्प्राणान्निस्सृतम्' इति भिन्नवाक्यत्वमपहाय 'प्राणे ततो निस्सृतं सर्वं जगदेजति' इत्येकवाक्यत्वाङ्गीकारे निस्सृतविशेषणेनैव सर्वशब्दसङ्कोचस्य लम्भनाच्च । 'सर्वं जगत्' इत्यस्य सर्व-प्राणिपरत्वे 'प्राणे' इति सप्तम्याश्च निमित्तार्थकत्वे सर्वस्यापि प्राणिजातस्य चेष्टायाः प्राणस्थित्यधीनत्वेन सङ्कोचकारणानपेक्षणाच्च । उषस्तिवाक्यगतप्राणशब्दे निरपेक्षसर्वजगत्कारणत्वप्रतिपादकावधारणोपबृंहितो-पक्रमोपसंहारश्रुतप्रतिपिपादयिषितदेवताशब्दोदितचेतनत्वलिङ्गस्येवात्र मुख्यार्थत्याजकस्य बलवतो बाधक-स्याभावाच्च । तथा महद्भयकारणं वज्रशब्दितमुद्यतं यदुच्यते स बाह्यवायुः; तस्यैव धूमज्योतिस्सलिलसंव-लितस्य विद्युत्स्तनयित्नुवृष्ट्यशनिभावेन परिणामितया वज्रशब्दस्य मुख्यार्थाप्रहाणात् ब्रह्मपक्ष इव वज्रसदृशे

गौणत्वस्याकल्पनीयत्वात्, 'वायुरेव व्यष्टिः वायुस्समष्टिः अपपुनर्मृत्युञ्जयति य एवं वेद' (बृ. ३. ३. २) इति श्रुत्यन्तरदर्शनेन वायुवेदनादमृतत्वसम्भवाच्च ।

स्यादेतत्—अस्मान्मंत्रात् पूर्वोत्तरौ 'अङ्गुष्ठमात्रः पुरुषः' (क. २. १. १२) 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा' (क. २. ३. १७) इति मन्त्रावङ्गुष्ठाधिकरणे ब्रह्मपरौ निर्णीतौ । 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिन् लोकाश्श्रितास्सर्वे तदु नात्येति कश्चन' । (क. २. १. ८) 'भयादस्याग्निस्तपति भयात्तपति सूर्यः । भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' (क. २. २. ३) इत्यव्यवहितपूर्वोत्तरमन्त्रावसंशयं ब्रह्मपरौ । तत्र चोत्तरस्मिन् मन्त्रे 'अस्य' इति सर्वनामशब्द एतन्मन्त्रप्रतिपाद्यं परामृशति । 'अत्ता चराचरग्रहणात्' (ब्र. सू. १. २. ९) इत्यधिकरणे दर्शितश्च ब्रह्मप्रकरणमिहानुवर्तते । आनुमानिकाधिकरणे च 'त्रयाणामेव चैवमुपन्यासः प्रश्नश्च' (ब्र. सू. १. ४. ६) इति सूत्रे कठवल्लीष्वग्निजीवब्रह्मणां त्रयाणामेव प्रतिपादनं नान्यस्येति वक्ष्यते । कथमकस्मात् तन्मध्यपातिन्यस्मिन्मन्त्रे मुख्यप्राणबाह्यवायुपरत्वशङ्का ? एवं पूर्वापरपर्यालोचनेन ब्रह्मपरतया निर्णीतेषु प्रकरणेषु श्रुतस्य प्राणशब्दस्य ब्रह्मणि वृत्तिः प्रतर्दनाधिकरणे समर्थिता ।

अपि चैतन्मन्त्रपर्यालोचनयाऽपि न पूर्वपक्षे हेतुं पश्यामः । 'सर्वं जगदेजति' इत्यस्य स्वशासनातिलङ्घने किमयं करिष्यतीति भयात्कम्पत इत्येवमर्थकत्वात् 'एजृ कम्पने' इत्यर्थनिर्देशानुसारेण कम्पसामान्यवाचिनोऽपि धातोः 'महद्भयं वज्रमुद्यतम्' 'भयादस्याग्निस्तपति' इत्याद्युत्तरवाक्यपर्यालोचनया भयप्रयुक्तकम्पे पर्यवसानात् मुख्यप्राणस्य शासितृत्वाभावेन तत्रास्य लिङ्गस्य कथमप्यन्वयासम्भवात् अनन्यथासिद्धलिङ्गविरोधे च श्रुतेरप्यन्यथा नेयत्वात् । अशनिकारणकलापमध्ये वायोरनुप्रवेशेऽपि वायोरेवाशनित्वाभावेनाशनिवाचिनो वज्रशब्दस्य वायावपि लक्षणाऽवश्यम्भावात्, अमृतत्वसाधनवेदनविषयत्वस्य ब्रह्मणोऽन्यत्रासम्भवात्; 'तन्निष्ठस्य मोक्षोपदेशात्' (ब्र. सू. १. १. ७) इतीक्षत्यधिकरणसूत्र एव तथा व्यवस्थितेः 'अपपुनर्मृत्युञ्जयति' इति वायुविज्ञानादपमृत्युजयस्यैवोक्तत्वेन मृत्युजयरूपामृतत्वप्राप्तेरनुक्तत्वाच्चेति चेत्—

उच्यते—यद्यस्मिन् प्रकरणे ब्रह्मैव प्रतिपादनीयं नान्यत् कथं तर्हि 'तदेव शुक्रं तद्ब्रह्म' इति मन्त्रात् प्राक् 'ऊर्ध्वमूलोऽवाक्छाख एषोऽश्वत्थस्सनातनः' (क. २. ३. १) इति संसारवृक्षकीर्तनम् ? तन्मूलत्वेन ब्रह्मप्रतिपत्तौ तदङ्गमिति तद्वर्णनं न प्रकरणविरोधि इति चेत्, हन्त तर्हि मुख्यप्राणबाह्य-

वाय्वोरुक्तरूपेणोपासनमपि निर्विचिकित्सब्रह्मप्रतिपत्तौ प्रतिबन्धकादिनिवर्तकत्वेनाङ्गमिति तद्विधानमपि न प्रकरणविरोधीत्यवेहि । दृष्टं ह्युपकोसलविद्यायां 'प्राणो ब्रह्म' इत्युपासनाया अङ्गत्वम् । अतश्चायं मन्त्रोऽङ्गसर्पक इत्येव सिद्धान्तिनाऽप्युपपादनीयम्; 'अन्यत्र धर्मादन्यत्राधर्मात्' (क. १. २. १४) इति निर्विशेषस्य ब्रह्मणः पृष्टस्यैवोत्तरे प्रकरणित्वेन प्रतिपाद्यतयाऽस्य मन्त्रस्यैतत्पूर्वापरमन्त्राणाञ्चार्थस्य सविशेषब्रह्मधर्मस्य निर्विशेषप्रतिपत्त्यङ्गत्वोक्तिं विना सङ्गमयितुमशक्यत्वात् । एवमस्य मन्त्रस्य मुख्यप्राणाद्युपास्यपरत्वे सत्यनन्तरमन्त्रे श्रुतस्यास्येति पदस्य व्यवहितमन्त्रप्रकृतब्रह्मपरामर्शित्वं न विरुध्यते । यथा 'ऊर्ध्वमूलः' इति वाक्यस्य संसारवृक्षपरत्वे सति 'तदेव शुक्रम्' इत्यनन्तरमन्त्रश्रुतस्य तत्पदस्य प्रधानत्वेन प्रस्तुतं संसारवृक्षमपहाय तदुपसर्जनमूलपरामर्शित्वम् । 'एजति' इति च चेष्टत इत्यर्थपरं, न तु भयात् कम्पत इत्येतत्परम्; अग्निसूर्येन्द्रादिदेववत् शासितुः परब्रह्मणस्सद्भावमजानानस्य मनुष्यपशुपक्षिसरीसृपस्थावरसाहितस्य सर्वस्य जगतस्तच्छासनातिलङ्घनप्रयुक्तभयाभावात् । वज्रशब्दे च न लक्षणा प्रसज्यते; अशन्याकारपरिणतस्यैव वायोरुपास्यत्वाङ्गीकारात् । यद्यपि वज्रशब्देन वज्रायुधमपि वक्तुं शक्यम्, तथाऽपि वायुविशेषरूपप्राणसमभिव्याहाराद्वायुविकार एवात्र वज्रशब्दार्थो गृह्यते । उपासकस्यामृतत्वफलकीर्तनमपि न विरुध्यते 'औदुम्बरो यूपो भवति ऊर्ग्वा उदुम्बरः ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्यै' इति पश्वग्निफलकसोमापौष्णपश्वङ्गयूपप्रकृत्युदुम्बरताविध्यर्थवाद इव प्रधानफलानुवादोपपत्तेः । तस्मात्संवर्गविद्यायामिवोपास्यौ मुख्यप्राणबाह्यवायू कीर्त्येते । प्राणवज्रश्रुत्यनुसारात् तद्बाधकाभावाच्चेत्येवं प्राप्ते **राद्धान्तमाह**—'कम्पनात्' ।

'शब्दादेव प्रमितः' इति सूत्रतः शब्दादित्यनुवर्तते मण्डूकप्लुतिन्यायेन । तेन 'यदिदं किञ्च' इति मन्त्रे ब्रह्मैव प्राणशब्दात् प्रतीयत इति साध्यं लभ्यते । तत्र हेतुः कम्पनात्—सकलप्राणिजातस्पन्दनादित्यर्थः । यद्यपि तत्स्पन्दयितृत्वं मुख्यप्राणस्याप्यस्ति, तथापि निरपेक्षं तद्ब्रह्मण एव 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ (क. २. २. ५) इति 'प्राणस्य प्राणम्' (बृ. ४. ४. १८) इति च श्रुत्यन्तरात् । निरपेक्ष एव धर्मोऽन्तर्याम्यधिकरणन्यायेन ग्राह्यः । एवञ्चाप्रतिपन्नरूढितः प्रतिपन्नयोगो बलीयानिति पूर्वाधिकरणोक्तन्यायेन निरपेक्षसकलजगत्प्राणनव्यापारहेतुत्ववाचिना प्राणशब्देन ब्रह्मैव प्रतीयत इति साध्यं सिध्यति । ततश्च 'महद्भयं वज्रमुद्यतम्' इत्यनेनाप्यभ्युद्यतं वज्रायुधमिव महद्भयं बिभेत्यस्मादिति व्युत्पत्त्या भयकारणमित्यनेन रूपेण ब्रह्मैवोच्यत इति सिद्धौ नोपासनविधानम्,

उपासनस्य ब्रह्मप्रतिपत्त्यङ्गत्वनिर्वाहाय दुरितक्षयस्य द्वारत्वञ्च कल्पनीयमिति लाघवम् । सर्वशब्दे च न सङ्कोचशङ्का । प्रकरणञ्चैवमञ्जसा सङ्गच्छते, पूर्वापरमन्त्रसन्निधानञ्च । पूर्वमन्त्रे 'तस्मिन् लोकाश्श्रितास्सर्वे' इति ब्रह्मणः सकलजगदाश्रयत्वमात्रमुक्तम् । अस्मिन्मन्त्रे सकलजगज्जीवनहेतुत्वमुक्तम् । पुनश्चास्मिन्मन्त्रे ब्रह्मणो जगच्छासितुर्महाभयहेतुत्वमुक्तम् । उत्तरमन्त्रे जगच्छासितृत्वं ब्रह्मणोऽवगच्छतामग्न्यादिदेवानां ततो महता भयेन तच्छासने प्रवृत्तिरुक्तेति सर्वसामञ्जस्यात् सकलजगदेजयिता प्राणः परमात्मेति सिद्धम् । ।१. ३. ३९।

इति कम्पनाधिकरणम् । १० ।



(११ अधिकरणम् )

## ज्योतिर्दर्शनात् । ४० ।

छान्दोग्ये प्रजापतिविद्यायां श्रूयते 'एवमेवैष सम्प्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा. ८. १२. ३) इति । किमत्रादित्यज्योतिर्विवक्षितमुत परं ब्रह्मेति ज्योतिश्शब्दपरशब्दाभ्यां संशये **पूर्वपक्षः**—आदित्य इह ज्योतिर्भवितुमर्हति । पूर्वस्मिन्दहरविद्याप्रकरणे 'शतञ्चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति' (छा. ८. ६. ६) इत्युपासकानामूर्ध्वनाड्या शरीरात् समुत्थानस्य 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति' (छा. ८. ६. ५) इति तदनन्तरमेवादित्यप्राप्तेश्च वर्णितत्वात् । इहापि शरीरात् समुत्थाय परं ज्योतिरुपसम्पद्येति शब्दाभ्यां तदर्थप्रत्यभिज्ञानात् । आदित्यज्योतिषश्च मार्गे प्रथमपर्वभूतार्चिर्ज्योतिरपेक्षया परत्वेन कथञ्चित् परशब्दोपपत्तेः । न च प्रथमश्रुतपरशब्दमुख्यताऽनुरोधेन ज्योतिश्शब्दो नेतुं युक्तः; अस्माद्विषयवाक्यात् पूर्वस्मिन् 'यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते' (छा. ८. १२. २) इत्युपमानवाक्ये 'परं ज्योतिरुपसम्पद्य' इत्यस्य प्रकृष्टादित्यतेजःप्राप्तिपरतया दृष्टत्वात् । तस्य ह्ययमर्थः—यथा एतानि वायुरभ्रं विद्युत्स्तनयित्नुरिति पूर्वप्रकृतानि प्रावृषि वर्षादिप्रयोजनानन्तरं स्थूलरूपं विहाय सूक्ष्मरूपेणाकाशे स्थितानि पुनः प्रावृडारम्भे किञ्चिदुच्छ्वसितानि भूत्वा

ततस्समुत्थाय ग्रीष्मप्रवृद्धं सौरं तेजस्सहकारि प्राप्य स्वेन पुरोवातादिरूपेणाभिनिष्पद्यन्ते—इति। एवञ्चो-पमेयभागेऽपि 'परं ज्योतिरुपसम्पद्य' इत्यस्य आदित्यज्योतिःप्राप्तिरेवार्थो वक्तव्यः। अन्यथा दहराधिकरणे दर्शितया रीत्या परं ब्रह्म साक्षात्कृत्येति तदर्थोक्तावुपमानोपमेयवैरूप्यप्रसङ्गात्। न च—तस्य परं ब्रह्म प्राप्ये-त्येवार्थः। साक्षात्कारस्तु 'अभिनिष्पद्यते' इत्यनेन उच्यते—इति वाच्यम्। तथा सति 'अभिनिष्पद्यते' इति भागे उपमानवैरूप्यप्रसङ्गात्, ब्रह्मसाक्षात्कारानन्तरभाविन्यां ब्रह्मप्राप्तौ क्त्वाप्रत्ययेन तत्पूर्वभावित्वनिर्देश-स्यानुपपन्नत्वाच्च। न च 'मुखं व्यादाय स्वपिति' इतिवत्तदुपपत्तिः। तत्र व्यादानोत्तरकालानुवृत्तस्वापापेक्षया व्यादानस्य पूर्वभावित्वात्, इह निर्विशेषब्रह्मप्राप्त्यनन्तरं साक्षात्कारानुवृत्त्यभावात्।

एतेन—'उपसम्पद्य' 'अभिनिष्पद्यते' इति द्वाभ्यामपि शब्दाभ्यां ब्रह्मप्राप्तिरेवोच्यते—इत्यपि निरस्तम्। तथा सत्यभेदेन क्त्वाप्रत्ययबोध्यपौर्वापर्यस्य सुतरामभावात्। किञ्च 'शरीरात् समुत्थाय' इत्यस्य शरीराद्विवेकज्ञानमर्थ इति दहराधिकरणोक्तार्थस्वीकारे तत्राप्युपमानभागवैरूप्यं स्यादिति तत्परिहाराय शरीरादूर्ध्वदेशाक्रमणमेव तदर्थो वाच्यः। अतस्तदनुसारेणापि 'परं ज्योतिरुपसम्पद्य' इत्यस्य आदित्यप्राप्ति-रर्थो ग्राह्यः; तस्य परशब्दादपि प्रथमश्रुतत्वात्। एवञ्च समुत्थानज्योतिरुपसम्पत्तिश्रुतीनामनुग्रहोऽपि लभ्यते। तस्मादुपमानभागसारूप्यश्रुतित्रयानुग्रहानुरोधेन युक्तं परशब्दस्य कथञ्चिदर्थवर्णनम्।

स्यादेतत्—प्रजापतिवाक्यं जीवस्य ब्रह्मभावप्रतिपादनपरं नोपासनाविधिपरमिति दर्शितं दहराधिकरणे। तत्र कः प्रसङ्गस्सगुणविद्याफलप्राप्त्युपायमार्गपर्वभूतादित्यप्राप्तिवर्णनस्य ? न च प्रकरणात् समुत्थानादिश्रुतयो बलीयस्य इति वाच्यम्। श्रुतीनां स्वार्थपरत्वे निष्फलत्वप्रसङ्गात्। न हि निर्गुण-विद्याप्रकरणे तस्यास्त्युपयोगः। नापि पञ्चाग्निविद्यादिगते विस्पष्टेऽर्चिरादिमार्गोपदेशे जाग्रति तदेकदेशपर्व-भूतादित्यमात्रकीर्तनमत्रत्यं कयाचन सगुणविद्ययाऽपेक्ष्यते, यस्यामस्य पौष्णयागे पूषानुमन्त्रणमन्त्रस्येव उत्कर्षः स्यात्। तस्मात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायेन श्रुतित्रयादप्यद्वैतब्रह्म-प्रकरणं बलवदिति चेत्; स्यादेतदेवं यदि प्रजापतिवाक्यं जीवस्य ब्रह्मभावप्रतिपादकं स्यात्। तदेवासिद्धम्; तस्य सगुणब्रह्मोपासनाविधिपरत्वात्। तथा हि—तत्र 'य आत्मा' इत्यादिप्रथमवाक्यं तावत् सगुणब्रह्मपरं, न जीवपरं 'एष आत्माऽपहतपाप्मा' इत्यादिदहरवाक्यार्थानुवादरूपत्वात्। अक्षिवाक्यमपि तथा; उपको-सलविद्योपास्यप्रत्यभिज्ञानात्। एवं च स्वप्नसुषुप्तिवाक्यद्वयमपि तथैव।

ननु स्वप्नसुषुप्तिसम्बन्धलिङ्गाज्जीवपरत्वं तयोर्युक्तम् । दहरविद्याप्रकरणे 'तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानाति' (छां. ८. ६. ३) इति जीवपरत्वेन निर्णीतं यत् सुषुप्तिवाक्यं तदेवात्रापि श्रूयत इति तत्प्रत्यभिज्ञानादपि जीवपरत्वं युक्तमिति चेत् ; मैवम् । प्रतिपर्यायमुपक्रमे 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' (छा. ८. ११. ३) इति प्रतिज्ञायोपसंहारे अमृतत्वाभयत्वलिङ्गब्रह्मश्रुतीनां श्रवणेन च बह्वनुग्रहन्यायानुरोधेन जीवलिङ्गयोः कथञ्चिन्नेतव्यत्वात् । अस्ति हि ब्रह्मणोऽपि स्वप्नसम्बन्धः 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति' (बृ. ४. ३.११) इति श्रुत्यन्तरप्रसिद्धः । स एवात्र ग्राह्यः । एवञ्च महीयमानत्वलिङ्गमप्याञ्जस्यं लभते । सुषुप्तिवाक्यं तु यत्र यस्मिन्नाधारे समस्तोऽपि जन्तुस्सुषुप्तो भवतीति सुषुप्ताधारब्रह्मपरतया नेतव्यम् ।

नन्वेवं सति स्वप्नपर्यायोपदेशानन्तरं स्वप्नावस्थजीवस्य भयशोकादिदर्शनादपहतपाप्मत्वादिधर्मकामृताभयब्रह्मभावोऽनुपपन्न इति शङ्का सुषुप्तिपर्यायोपदेशानन्तरं सुषुप्तस्य जीवस्यापि नष्टप्रायत्वादुक्तरूपब्रह्मभावोऽनुपपन्न इति चेन्द्रकृता शङ्का निरवकाशा स्यादिति चेत् ; नैष दोषः । यथाऽक्षिपर्याये छायापुरुष उपदिष्ट इतीन्द्रविरोचनयोर्भ्रान्तिः, यथा च प्रतिबिम्बावेक्षणे विरोचनस्य देह उपदिष्ट इति भ्रान्तिः, तथा स्वप्नसुषुप्तिपर्याययोर्जीव उपदिष्ट इतीन्द्रस्य भ्रान्तिरिति कल्पनोपपत्तेः । अत एव 'एतन्त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मात्' इति प्रतिज्ञापूर्वकमुपक्रान्ते चतुर्थपर्याये जीवस्य ब्रह्मभाव उपदिष्ट इति इन्द्रभ्रान्तिवारणायैव 'तं वा एतं देवा आत्मानमुपासते' (छा. ८. १२. ६) इति सगुणोपासनं तत्फलञ्च जक्षणक्रीडादिकमुपवर्णितम् । न च जक्षणादिकं दहराधिकरणोक्तरीत्या कथञ्चिन्नेतुं युक्तम् । सुषुप्तिपर्यायोपदेशानन्तरं 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति । नाहमत्र भोग्यं पश्यामि' (छा. ८. ११. २) इत्युक्तवतः स्वात्मानं भूतानि चाविजानन्तं सुषुप्तं जीवं विनष्टप्रायमपुरुषार्थं च मन्यमानस्येन्द्रस्य सविशेषफलमनिष्टं मत्वा 'एवमेवैष मघवन्' इत्युक्तवता 'सर्वांश्च लोकनाप्नोति सर्वांश्च कामान्' (छा. ८. १२. ६) इति स्वोक्तफलाभिलाषेणेन्द्रः समागत इत्यवगच्छता च प्रजापतिना सविशेषफलस्यैव वक्तव्यत्वात् सकललोककामावाप्तिफलस्य उपक्रमोपसंहारयोः श्रुतत्वेन तत्र तात्पर्यावगमाच्च । तस्मादत्रादित्य एव ज्योतिः ।

एवं प्राप्ते राद्धान्तः। ज्योतिरिह परं ब्रह्म; ब्रह्मणो वक्तव्यत्वेनात्र प्रकरणेऽनुवृत्तिदर्शनात्। इह हि 'य आत्माऽपहतपाप्मा' (छा. ८. ७. १) इत्यादि 'यस्तमात्मानमनुविद्य विजानाति' (छा. ८. ७. १) इत्यन्तं प्रजापतिवचनं जगति प्रसिद्धमाकर्ण्यान्विष्टव्यात्मरूपविजिज्ञासयोपसेदिवद्भ्यां द्वात्रिंशतं वर्षाणि कृतशुश्रूषणाभ्यामिन्द्रविरोचनाभ्यां प्रजापतिरक्षिवाक्येनात्मानमुपदिश्य च्छायापुरुष आत्मेत्युपदिष्ट इति भ्रान्त्या स्वगृहीतार्थदृढीकरणाय जलादर्शादिप्रतिबिम्बोऽप्यक्षिप्रतिबिम्बाभिन्नात्मैव उत तद्भिन्नोऽनात्मेत्यभिप्रायेण 'अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एषः' (छा. ८. ७. ४) इति ताभ्यां पृष्टे 'एष उ एवैषु सर्वेष्वन्तेषु परिख्यायते' (छा. ८. ७. ४) इत्यनेन ताभ्यां गृहीतमर्थं मनसि निधाय बिंबाभिन्नः प्रतिबिंबः प्रत्युपाधि न भिद्यत इति वा स्वोपदिष्टमर्थं मनसि निधाय यश्चक्षुषि द्रष्टा मयोक्तः स सर्वान्तरो जलादिष्वपि न भिद्यत इति चोत्तरं ददौ। तस्यायमभिप्रायः—सुरासुरेन्द्राविन्द्रविरोचनौ स्वात्मन्यध्यारोपितपाण्डित्यमहत्वातिशयौ तथैव जगति प्रसिद्धौ च तद्यदि युवां भ्रान्ताविति ब्रूयां तदा चित्तावसादात्पुनः प्रश्नग्रहणावधारणेषु भग्नोत्साहौ स्याताम्। अतो यथाश्रुतप्रश्नमात्रस्योत्तरमिदानीं वक्तव्यं तेनाक्षिप्रतिबिंबाभिन्नो जलादिप्रतिबिम्बो ह्यात्मेत्यत्र तात्पर्यमिति तत्तात्पर्यभ्रमेण प्रागुत्पन्नः प्रतिबिम्ब आत्मेत्युपदिष्ट इति तयोर्भ्रमो दृढीभवन्नुपायेन केनचिदपनेतव्य इति। तद्भ्रमापनयार्थमेव तदनन्तरं 'उदशराव आत्मानमवेक्षेताम्' इति तौ नियुज्य द्वात्रिंशद्वर्षब्रह्मचर्यदीर्घीभूतनखरोमादियुक्तच्छायापुरुष दर्शनानन्तरं 'साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा पुनरात्मानमुदशरावे पश्यतम्' इति न्ययोजयत्।

तत्रैवं प्रजापतेरभिसंधिः—आगमापाय्यव्यवस्थितदेहानुकारिगुणदोषवत्त्वाद्देह इव तत्प्रतिबिंबोऽप्यनात्मेति जानीतामिति। एवं सत्यपि तावनिवृत्तभ्रमौ 'किं पश्यथ' इति प्रजापतिना पृष्टावपि यथादृष्टं कथयित्वा तूष्णीं बभूवतुः। ततः प्रजापतिर्भ्रान्तिनिवारणार्थं मया कृतस्य द्विविधप्रतिबिंबदर्शनस्याभिप्रायमिमात्रप्रक्षीणकल्मषत्वान्नावगच्छतः, प्रत्यक्षं च युवां भ्रान्ताविति वक्तुमर्हौ न भवतस्तदिदानीमेतदीयहृदयानुरोधेन प्रतिबिंबमेव निर्दिश्य सर्वान्तरं परमात्मानं मनसि निधाय 'एष आत्मा' इत्युपदेशेनैतयोराकांक्षां निवर्तयिष्यामि; कालेन कल्मषे प्रक्षीणे मद्वचनसंदर्भस्य सर्वस्याप्यभिप्रायं स्वयमेवावगमिष्यतः, विचिकित्समानौ वा मत्समीपमागमिष्यतः इति मत्वोवाच 'एष आत्मा एतदमृतमभयमेतद्ब्रह्म' इति। ततश्चेन्द्रविरोचनयोर्निवृत्ता-

कांक्षतया प्रतिनिवृत्तयोः प्रजापतिर्भ्रान्तिगृहीतार्थश्रद्धयाऽपि नष्टौ माभूतामिदमपि मम वचनं 'य आत्मा' इत्यादिवचनवत्कर्णाकर्णिकया श्रुणुतामित्यभिसंधायोवाच 'अनुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वा असुरा वा ते पराभविष्यन्ति' (छा. ८. ८. ४) इति । तयोर्विरोचनः प्राजापत्यस्य द्विविधदेहच्छायादर्शननियोगस्य देहानुकारित्वाच्छायाया देह आत्मेति सूचने तात्पर्यमलंकृतदेहच्छायां निर्दिश्यैष आत्मेत्युपदेशस्य नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्मम महार्हमिति वचनस्य छायानिमित्ते बिंबवाससी वालंकृते देहे तात्पर्यमिति मन्वानो देह एवात्माऽलङ्कारादिभिः परिचरणीय इति निश्चित्य राज्यं प्राप्यासुरेभ्यस्तथैवोपदेष्टुमुपचक्रमे । असुराश्च तदुपदेशं श्रद्दधाना देहपरिचर्यायामेव प्रववृतिरे ।

इन्द्रस्तु तावत्कल्मषरहिततया देहस्य छाया यथा देहगुणालंकृतत्वादीननुविधत्ते एवं तद्दोषानप्यान्ध्यस्रामच्छेदविनाशादीनिति तत्रात्मलक्षणविरहममृताभयब्रह्मभावानुपपत्तिश्चानुसंदधानोऽक्षिवाक्यस्य प्रतिबिम्बं निर्दिश्य 'एष आत्मा' इति वचनस्य च तात्पर्यं जिज्ञासमानो मार्गात्प्रतिनिवृत्य पुनः प्रजापतिमुपससाद । प्रजापतिः 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिंशतं वर्षाणि' (छा. ८. ९. ३) इत्युक्त्वा तावत्कालमुषितवते तस्मै स्थूलशरीरदोषाननुविधायिनं स्वप्नावस्थं जीवमात्मानमुपदिदेश । इन्द्रस्तत्रापि हन्यमानत्वद्राव्यमाणत्वबन्धनमरणाद्यप्रियद्रष्टृत्वरोदितृत्वादिप्रतिभासेन दोषं पश्यन्नुक्तार्थानुपपत्तिमनुसन्दधानः प्रजापतिं पुनरुपससाद । प्रजापतिः पूर्ववदुक्त्वा तथैव पुनरपि द्वात्रिंशतं वर्षाण्युषितवते तस्मै स्वप्नावस्थादिप्रतिभासप्रयुक्तभयशोकरहितं सुषुप्तावस्थं जीवमात्मानमुपदिदेश । इन्द्रस्तस्मिन्विशेषविज्ञानरहिते विनष्टप्रायत्वेनापुरुषार्थतां मन्यमानः प्रागुक्तार्थानुपपत्त्यनुसंधानेन पुनरपि प्रजापतिमुपससाद । प्रजापतिः 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणि' (छा. ८. ११. ३) इत्युक्त्वा तावत्कालमुषितवते एकशतवर्षब्रह्मचर्यवासेन सम्यक्प्रक्षीणकल्मषायेन्द्राय पूर्वपर्यायानपि सङ्गमयन्नुपदेष्टुमुपचक्रमे—'मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना' (छा. ८. १२. १) इत्यादिना प्रथमपर्याये प्रतिबिम्ब उपदिष्ट इति संजातेन्द्रस्य भ्रान्तिः द्वितीयतृतीयपर्याययोः स्वप्नसुषुप्त्यवस्थोपन्यासलिङ्गेन, प्रथमपर्यायेऽपि 'अक्षाणि दृश्यते' इत्यनेन दर्शनलिङ्गादक्षिण सन्निहितोऽनुमीयत इत्यर्थकेन जागरावस्थो जीव उपदिष्ट इत्यवगत्या निवर्तितैव । किन्तु स्वप्नावस्थजीवे भयशोकादिमत्त्वदोषं पश्यत इन्द्रस्य तत्रापि तद्दोषदर्शनं स्यादिति

मन्यमानः प्रजापतिः स्वप्नजागरयोर्जीवो भयशोकादिमानिति तद्भ्रान्तिवारणं तावत्करोति—इदं शरीरं स्थूल-सूक्ष्मदेहद्वयं मरणधर्मकं मृत्युना रागद्वेषशोकभयाद्यनर्थजातेन आस्कंदितमिति। तेन जीवस्य साक्षात्संबन्धेन संसारदोषवत्त्वं व्यावर्तितम्। 'तदस्यामृतस्याशरीरस्यात्मनो अधिष्ठानम्' (छा. ८. १२. १) इत्यत्राशरीर-स्येति विशेषणेन कर्दमलिप्तस्य वस्त्रस्य कर्दमकार्ष्ण्येन कार्ष्ण्यदोषवत्वमिव परसेनाविजितसैन्यस्य राज्ञः विजित-दोषवत्वमिव च देहद्वये संसारदोषाश्रये सति तद्द्वारकपरंपरासम्बन्धेन तत्स्वामित्वेन वा जीवस्यापि प्रसक्तं संसारदोषवत्त्वं व्यावर्तितम्।

एवञ्च जीवस्य शरीरेण वस्तुतः कोऽपि संबन्धो नास्तीति तस्य तदीयैर्जरामरणशोकभयादिदो-षैस्तद्वत्त्वानुभवो 'लोहितः स्फटिकः' इत्यनुभव इवाध्यासरूप इति परिशेषाद्दर्शितं भवति। कथं जीवस्य शरीरसम्बन्धाभावः 'मम देहः' 'मम मनः' इत्याद्यनुभवदर्शनादित्याशंक्य तस्याध्यासपरिनिष्पन्नं विषयं दर्शयितुमात्मनोऽधिष्ठानमिति शरीरं विशेषितम्। अशरीरस्य सतः सशरीरत्वोक्त्या हि तस्य सशरीरत्व-मध्यासनिष्पन्नं लोकानुभवगोचर इति दर्शितं भवति; अशरीरत्वेन विरोधिना सशरीरत्वोपमर्दावश्यम्भावात्। न च—अंगुष्ठाधिकरणन्यायादिह विधेयेन सशरीरत्वेनैवाशरीरत्वोपमर्दः स्यादिति—वाच्यम्। लोकसिद्धस्य सशरीरत्वस्य विध्यनर्हतया तदनूद्य तदुपमर्देनाशरीरत्वविधाने तात्पर्योन्नयनात्। एवं 'अशरीरं शरीरेषु अनवस्थे-ष्ववास्थितम्' (का. १. २. २१) इति श्रुतेरपि तात्पर्यं द्रष्टव्यम्। न च श्रुतिद्वयेऽप्यशरीरमिति शरीरान्यत्वमुच्यत इति वाच्यम्। अस्यां श्रुतावात्मनः शरीराधिष्ठातृत्वस्याशरीरामिति श्रुतावेकस्यात्मनोऽ नेकशरीरानुस्यूतत्वस्य च कथनेन तस्य शरीरान्यत्वसिद्धेः। एवं जरामरणभयशोकादयः शरीरद्वयस्य धर्माः; न जीवस्य, शरीरद्वयसम्बन्धश्च जीवस्याध्यासकृतो न स्वाभाविक इति प्रदर्शनेन जीवस्य साक्षाद्धर्मधर्मि-भावसम्बन्धेन, शरीरद्वयद्वारकपरम्परासम्बन्धेन वा स्वस्वामिभावसम्बन्धेन वा जरामरणभयशोकादिमत्त्वं नास्तीति स्वप्नजागरयोस्तस्यामृताभयब्रह्मभावानुपपत्तिर्निरस्ता।

अथ सुषुप्तौ तस्य तदनुपपत्तिशङ्कानिरासार्थं सशरीरत्वं संसारदोषनिदानमशरीरत्वं तद्विरोधीति दर्शयति—'आर्तो वै सशरीरः प्रियाप्रियाभ्यां, न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति; अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' (छा. ८. १२. १) इति। अशरीरत्वादेव संसारदोषराहित्यं वायोरभ्र-

विद्युत्स्तनयित्नूनाञ्चेत्युदाहरणप्रदर्शनरूपेणार्थवादेनाशरीरत्वस्य संसारदोषविरोधित्वं दृढीकरोति 'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरित्येतानि' (छा. ८. १२. २) इति । एतेन––सशरीरो भूत्वा स्वात्मनो भूतानाञ्चानुभवेन यत् प्रियं लभते स एव पुरुषार्थस्तद्रहितोपि नष्टप्रायः सुषुप्तजीवस्त्वपुरुषार्थ इतीन्द्रस्य भ्रान्तिस्तस्य प्रियस्याप्रियसंपृक्तस्वभावतया हेयत्वप्रदर्शनेन––निरस्ता । एवञ्च पूर्वं तत्र तत्रामृतशब्देन यद्भूमाख्यं निरतिशयसुखरूपमुक्तं तदेव सकलानर्थाध्यासनिवृत्तावाविर्भूतं परमपुरुषार्थ इत्युक्तं भवति । तस्येदानीमध्यासतिरोहितस्य कथमाविर्भाव इत्याकांक्षायां तत्प्रकारः सदृष्टान्त उच्यते––'यथैतान्यमुष्मादाकाशात्' (छा. ८. १२. २) इत्यादिना 'स उत्तमः पुरुषः' (छा. ८. १२. ३) इत्यन्तेन । अत्र शरीरात्समुत्थानं न शरीरादूर्ध्वमुत्क्रमणम्, किन्तु शरीरादात्मनो विवेकः; लोकदृष्ट्या सशरीरस्यापि ज्ञानिनो विवेकज्ञानोपनेयं यदशरीरत्वं तस्यैव संसारविरोधितया प्राक् प्रस्तुतत्वात् । नचोपमानवैरूप्यदोषः; आकाशात्समुत्थानस्यापि ततो विवेकरूपत्वात्; पुरोवातादिस्थूलरूपं विहाय सौक्ष्म्येणाकाशसाम्यं प्राप्ता हि वाय्वभ्रविद्युत्स्तनयित्नवः स्वर्गादवरोहन्तो जीवा वाय्वभ्रमेघव्रीहियवादिकादिव आकाशाद्विविच्य ग्रहीतुमशक्यतया स्थिताः पुनः प्रावृडारम्भे किञ्चिदुछ्वसनेन ततो विविक्ता भवन्ति ।

किञ्च समुत्थानस्योपमानोपमेययोर्भिन्नभिन्नरूपत्वेऽपि न दोषः । समानधर्मिनिर्देशस्य तत्तद्योग्यमुख्यगौणार्थभेदपर्यवसानेऽपि शब्दैक्यमात्रेणोपमानिर्वाहस्य 'पङ्कजैरिव कुमारमीक्षणैर्विस्मयेन विकचैर्वधुर्जनाः' इत्यादिकाव्येषु प्रचुरतरमुपलम्भात्, वेदेऽपि 'यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्यादौ दर्शनाच्च । न हि निपत्य मत्स्याद्यादानं श्येनपक्षिण उपमानस्येव निपत्य भ्रातृव्यादानं श्येनाख्यस्य यागस्योपमेयस्य मुख्यं सम्भवति । एवञ्च 'परं ज्योतिरुपसम्पद्य' इत्यनेन देहद्वयतद्धर्मास्पृष्टशुद्धजीवविषयविवेकज्ञानात्मकत्वंपदार्थपरिशोधनानन्तरभाविजीवस्वरूपभूतपरब्रह्मसाक्षात्कार एव प्रकरणानुरोधेन वक्तव्यः । प्राप्तिवाचकस्यापि शब्दस्य 'गुरोरयमर्थः प्राप्तः' इति ज्ञाने प्रयोगदर्शनात् विशिष्य च वेदान्तमूले ब्रह्मज्ञाने तथाभूतस्योपनिषच्छब्दस्य प्रयोगदर्शनात् । 'स्वेन रूपेणाभिनिष्पद्यते' इत्युक्तस्वरूपाभिनिष्पत्तिस्तु उक्तरूपसाक्षात्कारनिवर्तितसकलानर्थजातस्यापेतजीवभावस्य जीवस्य निरतिशयसुखात्मकपरब्रह्मभावेनावस्थानमिति ।

नन्वनया रीत्या यदि प्रजापतिवाक्यजातं जीवस्य ब्रह्मभावप्रतिपादकं स्यात्तदा ज्योतिरिहं परं ब्रह्म स्यादेव; न त्वेवम्; तस्य सगुणब्रह्मोपासनाविधिपरत्वस्य उक्तत्वात्, इति चेत्; सत्यमुक्तम्। दुरुक्तं तु तत्। तथासति स्वप्नसुषुप्तिपर्याययोर्भयशोकविनष्टकल्पत्वदोषोद्धाटनमनुपपन्नं स्यात्। न चेन्द्रस्य तत्तदवस्थापन्नो जीव उपदिष्ट इति भ्रान्तिः कल्पनीया। तथात्वे तद्भ्रान्तिवारणोपयोगिन एव चतुर्थपर्याये प्रजापतिना उपदेष्टव्यत्वापत्तेः। न तु तदुपदिष्टम्; किन्तु तस्यैव जीवस्यामृताभयब्रह्मभावानुपपत्तिशङ्कावारणोपयोगिनो मरणशोकभयादीनां देहद्वयधर्मत्वं तस्य देहद्वयसंबंधराहित्यं तत्संबंधाध्यासाधीनप्रियाप्रियकरंबितत्वेन हेयत्वं स्वरूपसुखस्यैव परमपुरुषार्थत्वञ्च उपदिष्टम्। न च 'एष उ एव एषु सर्वेष्वन्तेषु परिख्यायते' (छा. ८. ७. ४) इति वचनवत्प्रतिबिंबं निर्दिश्य 'एष आत्मा' इति वचनवच्च शिष्यभ्रान्तिमनुद्धाट्य किञ्चिदन्यन्मनसि निधाय वचनमिति योजयितुं शक्यम्। शोकभयादीनामात्मधर्मत्वमिति भ्रान्तेः, विषयभोगानामेव पुरुषार्थत्वमिति भ्रान्तेश्च निवर्तनेन जागरस्वप्नसुषुप्तिषु जीवस्यामृताभयब्रह्मभावोपपादनात्। एवमपि कथञ्चिदन्यथा नीयेत यदि पूर्वं भ्रान्तिगृहीतमेवार्थं दृढीकृत्य निवृत्तयोरिन्द्रविरोचनयोः 'अनुपलभ्यात्मानमननुविद्य व्रजतः' (छा. ८. ८. ४) इति प्रजापतिवचनमिव विरोचनकृतभ्रान्तिगृहीतदेहात्मवादप्रवर्तनोक्त्यनन्तरं 'अश्रद्दधानमयजमानमाहुरासुरो ह्येषोपनिषत्' (छा. ८. ८. ५) इति तन्निन्दावचनमिव इन्द्रस्य विचिकित्सया पुनर्गुरूपसदनवचनमिव चाग्रे किञ्चिदेतदपवादकं श्रूयेत। तस्मात् 'हेयत्वावचनात्' इति सूत्रोक्तन्यायेन स्वप्नसुषुप्तिपर्याययोर्जीवस्य ब्रह्मभावप्रतिपादनपरत्वं विफलमित्यक्षिवाक्यस्याप्युपकोसलविद्यावाक्यप्रत्यभिज्ञामविगणय्य तदेकवाक्यतासंरक्षणाय जागरावस्थोपलक्षितस्य जीवस्य ब्रह्मभावप्रतिपादने तात्पर्यमङ्गीकर्तव्यम्।

यद्यपि 'य आत्माऽपहतपाप्मा' इत्यादिप्रथमवाक्यं दहरविद्योपास्यसगुणब्रह्मपरमेव, तत्पदेन प्रकृतस्य तस्यानुवादात्, छांदोग्यभाष्ये 'यस्योपासनाय हृदयपुण्डरीकमभिहितं यस्मिन्कामाः समाहिताः सत्या अनृतापिधानाः यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तं यदुपासनफलभूतकामप्राप्तये च मूर्धन्यनाड्या गतिरभिहिता' इति तस्य यत्पदस्य प्रकृतदहरविद्योपास्यपरमेश्वरपरतया व्याख्यातत्वाच्च, तथापि परमेश्वरमात्रोपलक्षितब्रह्मभाव एव जीवस्य 'तत्त्वमसि' वाक्यैरिवाक्षिवाक्यादिभिरुपदिश्यत इति किमनुपपन्नम्? नन्वेवं सति प्रजापतिविद्यायां जीवस्यापहतपाप्मत्वादिगुणाष्टकं क्वचिदपि नोच्यत इति आयातम्; 'य आत्मा'

इत्यादेः परमेश्वरपरत्वात् 'एष आत्मेति होवाच' इत्यस्य गुणवैशिष्ट्यांशमपोह्य प्रकृतपरमेश्वररूपात्मस्वरूपा-भेदमात्रबोधनपरत्वात् । एवञ्च कथं 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (ब्र. सू. १. ३. १९) इति सूत्रे जीवस्यापि प्रजापतिवाक्यावगतमपहतपाप्मत्वादिगुणाष्टकमस्तीति शङ्का कृता ? न च वाच्यम्—'स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र जीवस्यापहतपाप्मत्वादिरूपेणाविर्भाव उच्यत इति तदवलंबना शङ्का; अत एवाविर्भूतस्वरूपस्यापेतजीवभावस्योच्यमानमपहतपाप्मत्वादिकं ब्रह्मण एव न जीवस्येति न तस्य ब्रह्मलिङ्गतानु-पपत्तिरिति परिहारोऽपि सङ्गच्छते इति । यतो जीवस्य यत्स्वरूपं प्रागुक्तं तेन रूपेणाविर्भावस्तत्रोच्यते । न च गुणाष्टकं जीवरूपत्वेन प्रागुक्तं, किन्तु निरतिशयानन्दरूपनिरस्तानर्थव्रातशुद्धब्रह्मभाव एव तद्रू-पत्वेनोक्तः । किञ्च 'स्वेन रूपेण' इत्यत्र स्वशब्द आत्मपरः न त्वात्मीयपर इति 'संपद्याविर्भावस्स्वेन शब्दात्' (ब्र. सू. ४. ४. १) इत्यधिकरणे निर्णेष्यते । न च सत्यकामत्वं सत्यसङ्कल्पत्वञ्च जीवस्य स्वात्मकं रूपम्; कामशब्दोदितानां कामनाविषयसृज्यपदार्थानां सङ्कल्पशब्दोदितस्य तत्सृष्टिहेतुमायावृत्ति-विशेषस्य वस्तुस्वरूपबहिर्भूतत्वादिति चेत्—

उच्यते—दहराधिकरणे दहरविद्योपास्यो जीव इति पूर्वपक्षदशायां सा शङ्का कृता । न च तस्यां दशायां 'य आत्माऽपहतपाप्मा' इत्यादेः पुरोवादानुसारेण विषयो निर्णेतुं शक्यत इत्याक्षिपर्याया-दिवाक्यशेषानुसारेण तस्य जीवो विषय इत्याश्रित्य सा शङ्का कृता । परिहारोऽपि पूर्वपक्षाशयमभ्युपगम्य जीवस्य गुणाष्टकमुच्यतां नाम, तथापि तत्तस्य जैवेन रूपेण नोच्यते, किन्तु मुक्तिप्राप्येण ब्राह्मेण रूपेणेति न गुणाष्टकस्य ब्रह्मलिङ्गत्वानुपपत्तिरिति वर्णितः । अत एव 'उत्तराच्चेत्' इति सूत्रे परिहारभाष्यं 'स्वेन रूपेणाभिनिष्पद्यते' इति यदस्य पारमार्थिकं स्वरूपं परं ब्रह्म तद्रूपतयैनं जीवं व्याचष्टे, न जैवेन रूपेण । यत् तत्परं ज्योतिरुपसम्पत्तव्यं श्रुतं तत् परं ब्रह्म । तच्चापहतपाप्मत्वादिधर्मकम् । तदेव च जीवस्य पारमार्थिकं स्वरूपं 'तत्त्वमसि' इत्यादिशास्त्रेभ्यः, नेतरदुपाधिकल्पितमिति ।

वस्तुतस्त्वेवमत्र वक्तुं शक्यम्—दहरविद्यायामसंकुचितमतिरोहितञ्चोपास्यगतं सत्यकामत्वादिक-मङ्गीकरणीयम्; सङ्कोचे तिरोधाने च मानाभावात् । तत्तु जीवस्य कथमपि न सम्भवतीति तत एव दहरविद्योपास्य ईश्वरः । स एव च 'य आत्मा' इत्यादिप्रजापतिवाक्येनानुवाद्यः । तद्रूपत्वं च जीवस्य 'एष आत्मा' इति वाक्येन 'तत्त्वमसि' वाक्येनेव गुणवैशिष्ट्यांशमपोह्यैव प्रतिपाद्यते । 'स्वेन रूपेणाभिनिष्पद्यते'

इत्यत्र च जीवस्य यत् स्वात्मकं रूपं प्रागुक्तममृताभयब्रह्मभावरूपं तेनाविर्भाव उच्यते, न तु स्वरूप-बहिर्भूतेन गुणाष्टकेनेति प्रजापतिविद्यायां न केनापि वाक्येन जीवस्य गुणाष्टकसिद्धिरिति ।

सूत्रे परिहारांशोऽप्येवमेव योजयितुं शक्यः—'स्वेन रूपेणाभिनिष्पद्यते' इत्यत्र जीव आविर्भूता-मृताभयब्रह्मस्वरूप एवोच्यते, न त्वाविर्भूतस्वरूपबहिर्भूतगुणाष्टक इति । तुशब्देन च 'य आत्मा' इत्यादि-प्रथमवाक्येन 'एष आत्मा' इति वाक्येन च जीवस्य गुणाष्टकासिद्धिशङ्का व्यावर्तनीया । परिहारभाष्यमप्येवमेव योजयितुं शक्यम् । तच्चापहतपाप्मत्वादिधर्मकं तद्ब्रह्म दहरविद्योपास्यपरमेश्वररूपमपहतपाप्मत्वादिधर्मकं तदेव च गुणवैशिष्ट्यांशमपोह्य परमेश्वरस्वरूपमात्रमेव जीवस्य पारमार्थिकस्वरूपम्; 'तत्त्वमसि' इत्यादि-भागत्यागलक्षणायुक्तस्वरूपमात्राभेदबोधकशास्त्रेभ्यः, नेतरत्सत्यकामत्वादिकमुपाधिकल्पितमिति । एवं सति प्रजापतिविद्यायां दहरविद्योपास्यगुणाष्टकपरामर्शो न ब्रह्मण्युपासनार्थः; तस्यामुपासनाविध्यनङ्गीकारात् । न तस्मिन्नवगत्यर्थः; मुक्त्यर्थतया निरूपणीयायास्तदवगतेः शुद्धब्रह्मविषयत्वाङ्गीकारात् । जीवे मुक्तावाविर्भ-विष्यत्तया तद्बोधनार्थोऽपि न भवति चेद्वैयर्थ्यमेव प्राप्तम् । 'तत्त्वमसि' इत्युपदेशस्थले ब्रह्मणो जगदुपादा-नत्वादिवर्णनस्याध्यारोपापवादन्यायेन निष्प्रपञ्चत्वबोधनार्थतयेवात्र प्रकारान्तरेण सार्थकत्वोपपादनायोगादित्या-शङ्कापरिहारार्थत्वेनापि 'अन्यार्थश्च परामर्शः' (ब्र. सू. १. ३. २०) इति 'उत्तराच्चेत्' इति सूत्रानन्तरसूत्रं योजनीयम् ।

मुक्त्यर्थं ब्रह्मणि गुणवैशिष्ट्यांशमपोह्यावगन्तव्येपि तदीयगुणाष्टकपरामर्शः प्रवृत्तिरुच्युत्पाद-नार्थः । अस्यां निर्गुणविद्यायां प्रवर्तनीया हि देवादयः प्रायेण भोगासक्ता निरन्तरायं भोगं परमपुरुषार्थं मन्यमानास्तदनुगुणमेव साधनमपेक्षन्ते । अतोऽन्वेष्टव्यस्यात्मनो जरामरणादिराहित्ये सत्यकामसत्यसङ्कल्पत्वे च वर्णिते सति तदन्वेषणादेस्तदनुगुणसाधनत्वभ्रान्त्या तज्जिज्ञासया मामुपैष्यन्ति । तेषां यथावद्गुरूपसदनेन चिरकालब्रह्मचर्यवासेन च भोगलिप्सापादके कल्मषे प्रक्षीणे तत्त्वमुपदेक्ष्यामि इत्याशयवतः प्रजापतेरयं गुडजिह्विकान्यायेन ब्राह्मगुणाष्टकपरामर्श इति । एवमेव हि सुषुप्तपर्याये जीवं विषयभोगराहित्येन पुरुषार्थ-शून्यं मत्वा 'नाहमत्र भोग्यं पश्यामि' इत्युक्तवन्तं प्रति प्रजापतिर्गुडजिह्विकान्यायमवलम्ब्यैव विषयभोगात्मकं पुरुषार्थमुपदेक्ष्यन्निव तदुक्तं 'एवमेवैष मघवन्' इत्यङ्गीचकार । एवमयं सूत्रभाष्ये योजनाप्रकारो दहराधि-

करण एव प्रदर्शनीयोऽप्यस्मिन्नधिकरणे प्रजापतिविद्यायाः सगुणविद्यात्वपूर्वपक्ष निरासेन क्रियमाणनिर्गुण-विद्यात्वव्यवस्थापनमपेक्षत इति तत्र न प्रदर्शितः ।

यद्वा दहरविद्याधिकरणे दर्शिता मुक्तानामपहतपाप्मत्वादिगुणकेश्वरभावापत्तिः प्रजापतिविद्याप्रति-पाद्यत्वेनात्रापि विवक्षितेत्येव योजनीयम् । अस्मिन् पक्षे 'शरीरात् समुत्थाय' इत्यनेनैव शरीरविविक्तपर-ब्रह्मभूतस्वात्मसाक्षात्कार उक्तः । 'परं ज्योतिः' इत्यनेन 'य आत्माऽपहतपाप्मा' इति प्रकृतोऽपहतपाप्मत्वा-दिगुणकः परमेश्वर उक्तः । 'उपसम्पद्य' इति तद्भावापत्तिरुक्ता । 'स्वेन रूपेणाभिनिष्पद्यते' इति सर्वमुक्तौ परमेश्वरभावप्रहाणानन्तरमप्यनुवर्तमाना निरतिशयानन्दरूपशुद्धचैतन्यभावापत्तिरुक्तेति विवेक्तव्यम् । एवञ्च सति 'तद्विवेकसाक्षात्कारः शरीरात्समुत्थानम्, न तु शरीरापादानकं गमनम्' इति दहराधिकरणगतभामती-ग्रन्थः, 'परमेव ब्रह्म ज्योतिश्शब्दम्, कस्मात् ? दर्शनात्. तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते ; य आत्माऽपहतपाप्मेत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणात्' इति भाष्यग्रन्थश्च सङ्गच्छते । 'सम्पद्या-विर्भाव' इत्यधिकरणगतमत्रत्यज्योतिश्शब्दार्थनिर्णयानुवादरूपं 'आत्मा प्रकरणात्' इति सूत्रञ्च सङ्गच्छते । 'सम्पद्याविर्भावः' (ब्र. सू. ४. ४. १) इत्यधिकरणे मुक्तानां शुद्धचैतन्यभावेनैवाविर्भावः, न त्वागन्तुकेन केनाचिद्रूपेणेति समर्थनस्य 'ब्राह्मेण जैमिनिः' (ब्र. सू. ४. ४. ५) इत्यधिकरणे मुक्तानामपहतपाप्मत्वादि-पारमेश्वरगुणाष्टकस्य प्राप्तिरस्तीति समर्थनस्य च विरोधपरिहारोऽपि लभ्यते । विषयवाक्ये गुणाष्टकपरामर्श-स्यापि परिपूर्णं फलं लभ्यते । न हि प्रवृत्तिरुच्युत्पादनं तस्य परिपूर्णं फलम् ; 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' इति फलकीर्तनेन तदुत्पादनात्, फलकीर्तनाभावेऽन्वेष्टव्यगुणकथनमात्रेण तदुत्पादनासम्भवात्, परिपूर्णफलसम्भवे वायुक्षेपिष्ठत्वादिवर्णनवद्यर्थप्रायत्वकल्पनाऽयोगात्, इह च 'परं ज्योतिः' इत्यनेन प्रक्रान्तं गुणाष्टकविशिष्टं परमेश्वरं परामृश्य जीवस्य तद्भावापत्तिप्रतिपादने गुणाष्टकपरामर्शस्य तादर्थ्येन साफल्यसम्भ-वान्मुक्तिफलप्रतिपादकवाक्येषु ब्रह्मप्राप्तिप्रतिपादनपरस्य तद्भावापत्तिपरतायाः आनन्दमयाधिकरणे व्यवस्था-पितत्वादित्यलं प्रपञ्चेन ।

एवञ्चात्र 'आत्मानमुपास्ते' इति प्रकृतात्मज्ञानस्योपासनारूपत्वश्रवणं श्रवणमननाद्यावृत्त्यभि-प्रायम् । जक्षणादिश्रवणं दहराधिकरणदर्शितया रीत्या जक्षणादिलीलाभिनयवत् परमेश्वरभावाभिप्रायं सर्वात्मतापत्त्यभिप्रायं वा । अथवा 'सोऽश्नुते सर्वान् कामान् सह' इति श्रुतावानन्दमयाधिकरणदर्शितया

रीत्या जक्षणाद्यभिव्यंग्यविषयसुखशीकरनिकरमहासमुद्रायमाणनिरतिशयस्वरूपसुखानुभवाभिप्रायम्; तत्र सहशब्दवदत्र जक्षणादीनां 'समिद्वारं वहन्नध्यानं पश्यन्नधीयानो गच्छति' इत्यत्र वहनादीनामिव यौगपद्यप्रापकयोः शतृशानचोर्जक्षणादिषु श्रवणाज्जक्षदित्यादिशब्दानां तत्तदभिव्यङ्ग्यसुखलक्षकत्वोपपत्तेरशरीरस्य मुख्यजक्षणाद्यसम्भवात्। अशरीरत्वञ्च मुक्तस्य सशरीरत्वनिन्दापूर्वकं शरीरात् समुत्थानस्य प्राग्वर्णनेन 'जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा' (छा. ८. १२. ३) इत्युक्त्यनन्तरं 'नोपजनं स्मरन्निदं शरीरम्' (छा. ८. १२. ३) इति शरीरास्मरणोक्त्या हि तस्याध्यस्तत्वं ब्रह्मज्ञानेन तन्निवृत्तिश्चेत्युभयमपि स्फुटीकृतम्। एवं 'सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति' (छा. ८. १२. ६) इत्यत्रापि कामशब्दोक्तानां सर्वेषां वैषयिकसुखानामसम्भवद्यौगपद्यानां यौगपद्यस्य ब्रह्मसाक्षात्कारतुल्यकालत्वस्य च लडाख्याताभ्यां प्रत्याय्यमानत्वेन साक्षात्क्रियमाणस्य ब्रह्मण एव सकलविषयसुखशीकरनिकरमहांबुधिरूपनिरतिशयसुखरूपत्वे तात्पर्यमुन्नेयम्। तस्माज्ज्योतिरिह ब्रह्म, नादित्यादिज्योतिरिति सिद्धम्।

सूत्रे यदि ज्योतिरित्यस्यापहतपाप्मत्वादिगुणकमीश्वररूपं ब्रह्मेत्यर्थः, तदा 'दर्शनात्' इति हेतोस्तस्य प्रकरणे वक्तव्यत्वेनानुवृत्तिदर्शनादिति भाष्यदर्शित एवार्थः। एवञ्च 'प्रकरणात्' इति स्पष्टे हेतौ वक्तव्ये 'दर्शनात्' इत्युक्तिरपि सफला। न केवलं ब्रह्मप्रकृतमित्येतावन्मात्रं, तदीयगुणाष्टकपरामर्शस्य साफल्यार्थं मुक्तौ जीवस्य तद्भावापत्तिरस्तीत्येवं वक्तव्यत्वेन तस्यानुवृत्तिरपि दृश्यते इति। यदि सूत्रे 'ज्योतिः' इति निर्विशेषं ब्रह्मोच्यते, तदा 'दर्शनात्' इत्यनेन 'उपसम्पद्य' इत्युक्तसाक्षात्कारोऽपि हेतूकर्तुं शक्यते। तदैवं हेतोः पर्यवसानम्। यद्युपसम्पद्येत्यनेन प्राप्तिरुच्येत, तदा मार्गपर्वतया प्राप्तव्य आदित्यः कथञ्चिज्ज्योतिः स्यादपीति, न त्वेवम्; अत्र प्रकरणानुसारेण श्रवणमननादिरूपस्य शरीरात् समुत्थानस्य ब्रह्मभावाविर्भावस्य च मध्ये श्रुतस्योपसम्पद्येत्यस्य श्रवणमननाधीनब्रह्मभावाविर्भावहेतुदर्शनपरत्वावश्यम्भावात्। अतस्तस्य दर्शनस्य विषयभूतं ज्योतिर्ब्रह्मेत्येव युक्तमिति। १. ३. ४०

इति ज्योतिर्दर्शनाधिकरणम्। ११



( १२ अधिकरणम् )

आकाशोऽर्थान्तरत्वादिव्यपदेशात् । ४१ ।

'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा. ८. १. ४) इति छान्दोग्यश्रुत आकाशो भूताकाशः, परं ब्रह्म वेत्याकाशब्रह्मश्रुतिभ्यां संशये प्रथमश्रुतादाकाशशब्दाद्भूताकाश इति **पूर्वः पक्षः**। ननु प्रथमश्रुतमप्येकं प्रमाणमुपरितनानेकप्रमाणविरोधे बाध्यमिति ज्योतिरधिकरणादिषु क्षुण्णोऽयमर्थः। सन्ति चात्र बहूनि विरोधिप्रमाणानि। 'नामरूपयोर्निर्वहिता' इति तावन्नामरूपव्याकर्तृत्वं ब्रह्मलिङ्गमुच्यते। 'निर्वहिता' इत्यस्य निरुपसर्गाभावे वोढृत्वपरत्वेऽपि तत्सत्वेन कर्तृवाचकत्वात्। ते नामरूपे अन्तरा मध्ये यदिति नामरूपास्पृष्टत्वं ताल्लिङ्गान्तरमुच्यते। नामरूपमध्यस्थत्वोक्तेरन्यतरपक्षपाताभावेन तदस्पृष्टत्वपर्यवसायित्वात्। 'तद्ब्रह्म तदमृतं स आत्मा' इति च स्पष्टान्येव ब्रह्मप्रमाणानि। कथमेतावन्ति प्रमाणान्यनादृत्य प्रथमश्रुतैकश्रुत्यवलम्बनेन पूर्वं पक्षः क्रियते ?

अथापि क्रियेत यदि ब्रह्मण्याकाशशब्दो वर्तयितुमशक्य इति शङ्काबीजं सम्भवेत्। प्रसिद्ध एव ब्रह्मण्याकाशशब्दः 'आकाश इति होवाच' इति 'दहरोऽस्मिन्नन्तराकाशः' (छा. ८. १. १) इति च। उच्यते। 'वै नाम' इति निपातद्योतिता प्रसिद्धिरिह आकाशविशेषणमिति 'आकाशो वै नाम' इत्यतः प्रसिद्धाकाश इति धर्मिनिर्देशो लभ्यते। अतस्तस्य विशेषणस्याप्रसिद्धाकाशरूपं ब्रह्म व्यावर्त्य पर्यवस्यति। न हि ब्रह्मणो वेदप्रतिपन्नत्वेऽपि क्वचित्क्वचिद्वेदभागे निरूढलक्षणया आकाशशब्दविषयत्वेऽपि भूताकाशवत् स्वरूपेणाकाशशब्दविषयत्वेन वा लोकवेदयोः प्रसिद्धम्। 'सर्वाणि ह वा इमानि भूतानि' (छा. १. ९. १) इत्यत्र तु वैशब्दद्योतितप्रसिद्धेर्नाकाशे धर्मिण्यन्वयः, किन्तु सर्वजगत्कारणत्वरूपे तद्धर्मे। तस्य धर्मस्य लोके प्रसिद्धिर्नास्तीति केवलं वैदिक्येव ग्राह्या, सा श्रुत्यन्तरप्रसिद्धजगत्कारणत्वरूपब्रह्मलिङ्गान्वयिनी सिद्धान्त एवोपयुज्यते, इह तु प्रसिद्धेर्धर्मिण्यन्वयः। सा तु सम्भवात् केवलवेदप्रसिद्धब्रह्माकाशरूपव्यावर्त्यसत्वाच्च भूताकाशविषयिणी लोकवेदसिद्धैव प्राप्नोति सिद्धान्तविरोधिनी। तस्मादप्रसिद्धाकाशव्यावर्तनैकप्रयोजनकेन प्रसिद्धिविशेषणेन भूताकाशे नियम्यमानेयमाकाशश्रुतिर्ब्रह्माणि नेतुमशक्येति तदनुरोधेनान्यत्सर्वं नेयम्।

तत्र नामरूपनिर्वोढृत्वमवकाशरूपाधिकरणतया वोढृत्वेन वा स्वगुणभूतवर्णाभिव्यञ्जकध्वन्युत्पादनद्वारा वर्णसमुदायरूपाणां नाम्नां वाय्वादिद्वारा तेजोजलपृथिव्यादिश्रितानामरुणधवलनीलादिरूपाणाञ्च

करणत्वेन वा योजनीयम्। गौरकृष्णादिनामभिस्तत्प्रवृत्तिनिमित्तरूपैश्च अस्पष्टत्वेन 'ते यदन्तरा' इत्येतत् सङ्गमयितव्यम्। बृहत्त्वेन ब्रह्मशब्दः, आभूतसम्प्लवस्थायित्वेन अमृतशब्दः, आप्नोतीति योगेन आत्मशब्दश्चोपपादनीयः। ब्रह्मानुवृत्तिदर्शनाज्ज्योतिश्शब्दस्येवाकाशानुवृत्तिदर्शनाद्ब्रह्मशब्दादेरपि स्वार्थात् प्रच्यावनोपपत्तेः। अथवा नामरूपास्पृष्टं ब्रह्मामृतात्मशब्दोदितं परं ब्रह्मैवास्तु; नामरूपनिर्वोढुर्भूताकाशस्य नामरूपास्पृष्टस्य ब्रह्मादिशब्दोदितस्य च पुल्लिङ्गनपुंसकलिङ्गनिर्देशाभ्यां भेदप्रतीतेः। तथा च नामरूपास्पृष्टब्रह्मप्रतिपत्त्यर्थत्वेन नामरूपनिर्वोढुर्भूताकाशस्य पृथक्प्रतिपादनमित्येतावान् **पूर्वः पक्षः** ॥

**राद्धान्तस्तु** 'वै नाम' इति निपातसमुदायो नाकाशस्य स्वरूपे प्रसिद्धिद्योतकः येन ततोऽप्रसिद्धाकाशव्यावृत्तिर्लभ्येत, किन्त्वाकाशस्य नामरूपनिर्वोढृत्वरूपविधेयवत्त्वेन प्रसिद्धिद्योतकः; तथैव व्युत्पत्तेः। न हि 'देवदत्तः खलु विद्वान्' इत्युक्ते यः प्रसिद्धो देवदत्तस्स विद्वानित्यप्रसिद्धदेवदत्तव्यावृत्तिः प्रतीयते, किन्तु विधेयस्य विद्वत्त्वस्यैव देवदत्ते प्रसिध्युपपादनं प्रतीयते। एवमिहापि विधेयस्य नामरूपनिर्वोढृत्वस्याकाशे प्रसिध्युपपादनं क्रियत इति स्थिते नामरूपशब्दयोरन्योन्यसमभिव्याहृतयोरसङ्कुचिताभिधानाभिधेयमात्रपरत्वेन निर्वोढृशब्दस्य कर्तृपरत्वेन च व्युत्पन्नत्वात् सकलनामरूपव्याकर्तृत्वमाकाशस्य प्रसिध्योपपद्यत इति पर्यवस्यति। तत्तु न लोके प्रसिद्धमिति श्रुत्यन्तरप्रसिद्धावन्विष्यमाणायां 'नामरूपे व्याकरवाणि' (छा. ६. ३. २) इत्यादिश्रुत्यन्तरे ब्रह्मण एव तत्प्रसिद्धमिति स्फुटमेव। एवञ्च ते इति पदमप्यसङ्कुचितसकलनामरूपपरं ब्रह्मामृतात्मशब्दा अपि स्वारसिकार्थपरा इति चरमश्रुतैरपि बहुभिः श्रुतिलिङ्गैरेकस्याः श्रुतेर्बाधौचित्यादयमाकाशो ब्रह्मैव। यदि च आकाशशब्दनिर्दिष्टस्य प्रसिद्धिद्योतकोऽयं निपातसमुदायःस्यात्तथापि वैदिकशब्दनिर्दिष्टस्योच्यमाना प्रसिद्धिर्वैदिकेर्थिनिमित्ततयोच्यमानाश्वदानवद्वैदिक्येव ग्राह्या। वैदिकी च प्रसिद्धिर्यथा ब्रह्मणो न तथा भूताकाशस्य। अतो ब्रह्मविषयाधिकवैदिकप्रसिद्धेरेवात्र आकाशविशेषणतया तद्बलेनाकाशशब्दस्य भूताकाशे नियमनासिद्धेर्न तदनुरोधेन उत्तरश्रुतिलिङ्गानामन्यथानयनं युक्तमिति तैर्ब्रह्मैवायमाकाशः।

वाक्यभेदपूर्वपक्षोऽप्येवमेकवाक्यत्वसम्भवादयुक्तः। यत्तत्पदानां प्रकृताकाशपरामर्शित्वेऽपि नपुंसकलिङ्गत्वं ब्रह्मामृतशब्दापेक्षमुपपन्नम्। न च यत्तत्पदप्रकृतीनां प्रकृतार्थनिवेशेनैकवाक्यतानुगुणत्वे तद्गुणभूतप्रत्ययार्थलिङ्गानुरोधेन वाक्यभेदशङ्काऽप्यवकाशं लभते। 'गुणे त्वन्याय्यकल्पना' इति हि

न्यायसूत्रे । अर्थान्तरत्वं नामरूपपदापेक्षया । तेन 'ते यदन्तरा' इत्यनेनोक्तो नामरूपास्पृष्टत्वहेतुर्लभ्यते । एवं व्याख्यानं विषयवाक्ये रूपशब्दस्य नामप्रवृत्तिनिमित्तधर्मवाचित्वमङ्गीकृत्य । स यदा नामविषयधर्मवाची तदा 'ते यदन्तरा' इत्यनेन नामरूपान्यत्वमुक्तं स्यादिति स एव हेतुरर्थान्तरत्वशब्देन विवक्षितः । अर्थान्तरत्वञ्च तस्यादिश्च प्राथमिकत्वेन, तत्पदपरामर्शनीयनामरूपसमर्पकत्वेन वाऽऽदिभूतो नामरूपनिर्वोढृत्वहेतुश्च तयोर्व्यपदेशात् प्रतिपादनादित्यर्थकेन 'अर्थान्तरत्वादिव्यपदेशात्' इत्यनेन नामरूपनिर्वोढृत्वादिलिङ्गद्वय-ग्रहणम् । अर्थान्तरत्वमादिर्यस्य व्यपदेशस्य प्रतिपादकस्य शब्दजातस्य तस्मादित्यर्थकेन तेन ब्रह्मामृतात्म-श्रुतित्रयग्रहणम् । अमृतशब्दोऽपि निखण्डुषु ब्रह्मण्यनुशिष्टत्वात् तत्र श्रुतिरेव । आकाशशब्दप्रतिपाद्यस्य यदर्थान्तरत्वं भूताकाशाद्भिन्नत्वं तस्यादेः कारणस्य भेदकधर्मस्य वैदिकप्रसिद्धिरूपस्य व्यपदेशादित्यर्थकेन तेन प्रसिद्धिलिङ्गग्रहणम् ।

यद्यप्युदाहृतश्रुतिलिङ्गानि सर्वाण्यपि भूताकाशाद्भेदकान्येव, तथाऽपि प्रसिद्धेरुद्देश्यविशेषणत्वपक्षे वेदप्रसिद्धाकाश इत्युद्देश्यधर्मिनिर्देशसमय एव भूताकाशात्तं भिनत्तीत्यनेन विशेषेणासाधारणस्तस्य भेदकत्व-व्यपदेशः । भेदज्ञापकेऽपि धर्मे कारणत्वोपचारेण भेदकव्यवहारवदर्थान्तरत्वस्यादिः कारणमिति निर्देशः । एवं बह्वर्थक्रोडीकारार्थं विषयवाक्यगतश्रुतिलिङ्गेषु नामरूपान्यत्वस्य प्राथमिकत्वाभावेऽपि 'अर्थान्तरत्वादिव्यप-देशात्' इति सूत्रितम् । विषयवाक्ये नामरूपयोर्निर्वोढेत्यत्र 'सर्वाणि हवा इमानि भूतानि' इत्यत्रेव सर्वशब्दाभावात्, 'ते यदनन्तरा' इत्यादेर्वाक्यान्तरगतत्वप्रतीतेश्चास्पष्टब्रह्मलिङ्गता । १. ३. ४१

इत्याकाशाधिकरणम् । १२



## सुषुप्त्युत्क्रान्त्योर्भेदेन । ४२ ।

बृहदारण्यके जनकयाज्ञवल्क्यसंवादे 'किंज्योतिरयं पुरुषः' (बृ. ४. ३. १) इति जीवस्य व्यवहारसाधनप्रकाशं पृष्टेनादित्यञ्चन्द्रमसमग्निं वागिन्द्रियमात्मानञ्च पूर्वपूर्वस्मिन्नसत्युत्तरोत्तरं तस्य व्यवहार-साधनप्रकाशमुक्तवता पुनः 'कतम आत्मा' इति पृष्टेन याज्ञवल्क्येन 'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ. ४. ३. ७) इत्यारभ्य भूयानात्मविषयः प्रपञ्चः कृतः । स तावत् संसार्यात्मविषयः; 'प्राणेषु'

इति प्राणसम्बन्धस्य 'हृदि' इति बुध्युपाधिकत्वस्य 'स समानस्सन्नुभौ लोकावनुसञ्चरति' (बृ. ४. ३. ७) इति बुध्यैक्यप्राप्तिपूर्वकलोकद्वयसञ्चारस्य 'ध्यायतीव लेलायतीव' (बृ. ४. ३. ७) इति बुद्धिधर्मेण ध्यानादिना ध्यानादिमत्तया प्रतीयमानत्वस्य 'स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः संसृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति' (बृ. ४. ३. ८) इति जननमरणभाक्त्वस्य पापफल-भोगसाधनसंयोगवियोगस्य चोपक्रमे श्रवणात्, मध्ये स्वप्नसुषुप्तिजागरावस्थानाम्, अमुमुक्षोरुत्क्रमण-पुनर्जननयोः, मुमुक्षोस्तदभावस्य च सप्रपञ्चमुपन्यासात्, अन्ते 'योऽयं विज्ञानमयः प्राणेषु' (बृ. ४. ४. २२) इत्युपक्रान्तप्राणसम्बन्धेनोपसंहाराच्च ।

ननु स्वप्नावस्थोपन्यासमध्ये 'स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति, शुक्रमादाय पुनरैति स्थानं हिरण्मयः पुरुष एकहंसः' (बृ. ४. ३. ११) इति श्लोके स्वप्नेन शारीरस्य जीवस्याभि-प्रहन्ता विमोहकः परमेश्वरो वर्ण्यते । नेति ब्रूमः, 'शुक्रमादाय पुनरेति स्थानम्' इति शुद्धमिन्द्रियगणमादाय पुनर्जागरितस्थानप्राप्त्युपन्यासेन तस्यापि जीवविषयत्वात् । 'तं नायतं बोधयेदित्याहुः दुर्भिषज्यं हास्मै भवति यमेष न प्रपद्यते' (बृ. ४. ३. १४) इत्यग्रे सुषुप्तस्य भृशं बोधने सम्भ्रान्ततया यमिन्द्रियदेशं अजहात् प्राक् प्रारम्भदशायामपनीतेन्द्रियं प्रतिपद्यमानस्तत्र तदिन्द्रियं न प्रवेशयति; तस्यान्ध्यबाधिर्यादिदोषप्राप्तौ तस्मै देशाय दुःखेन भिषक्कर्म कर्त्तव्यं भवेदिति दोषोपन्यासेन लिङ्गेनेन्द्रियगणमादाय जागरितस्थानप्राप्तेर्जीवधर्म-त्वावगमात्, 'प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः' 'स्वप्नान्तमुच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि । उतेव स्त्रीभिस्सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' (बृ. ४. ३. १२, १३) इत्युत्तरश्लोकयोर्जीवविषयत्वेनास्यापि तद्विषयत्वा-वश्यम्भावाच्च । पूर्वत्र 'स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषःस्वयं ज्योतिर्भवति' (बृ. ४. ३. ९) इति श्रवणाच्च । तत्र हि 'विहत्य' इति जाग्रच्छरीरस्यैव निस्सम्बोधतया मृतप्रायतापादनमुच्यते; अग्रे 'स्वयं निर्माय' इति स्वाप्नशरीरनिर्माणश्रवणात् । अत्रोऽत्रापि जीवेन हन्तव्यं शरीरमेव वाच्यमिति छान्दसो दीर्घो द्रष्टव्यः । एवं तर्हि तत्रापि परमेश्वरो वर्ण्यते; जीवस्य शरीरहनन-निर्माणयोः स्वयंशब्दोक्तस्वातन्त्र्यासम्भवादिति चेत्; न । तयोर्जीवकर्माधीनत्वाभिप्रायेण स्वयमुक्त्युपपत्तेः,

स्वापितिप्रक्रियायां 'किंज्योतिरयं पुरुषः' इत्युपक्रमे जीवे प्रयुक्तस्य 'अयं पुरुषः' इत्यस्य 'अत्रायं पुरुषः' इत्यत्र प्रत्यभिज्ञया पूर्वापरलिङ्गशतैश्च तत्परत्वावश्यम्भावात् ।

ननु 'कतम आत्मा' इति प्रश्नो न जीवविषयः; तस्य प्रत्यक्षसिद्धतया 'किंज्योतिरयं पुरुषः' इति पृच्छतः प्रश्नधर्मित्वेनासन्दिग्धतया च तत्र प्रश्नानवतारात्, किन्तु परमात्मविषयः । तदनुसारेण तस्य प्रश्नस्य प्रसञ्जकं 'आत्मैवास्य ज्योतिः' इति वचनमप्यस्य प्रकृतस्य जीवस्य परमात्मैव ज्योतिरित्येतत्परम् । एवञ्चोत्तरग्रन्थसन्दर्भे 'जायमानश्शरीरमभि संपद्यमानः' (बृ. ४. ३. ८) इत्यादिजीवलिङ्गजातं पर्यान्तर्भावादिना कथञ्चित् परमात्मन्येव योजनीयम् । एवञ्च सति 'हृद्यन्तर्ज्योतिः' इत्यारभ्य आदिम-ध्यावसानेषु ज्योतिश्शब्दोऽपि सङ्गच्छते । स हि 'अथ यदतः परो दिवो ज्योतिः' (छा. ३. १३. ७) इत्यादिश्रुत्यन्तरेषु परमात्मन्येव प्रसिद्धो न जीव इति चेत्, स्यादप्येवं जीवलिङ्गजातस्यान्यथानयनशङ्का यदि 'कतम आत्मा' इति प्रश्नो जीवे नोपपद्येत । उपपद्यते त्वहंप्रत्ययसिद्धेऽपि तस्मिन् देहेन्द्रियप्राण-बुद्धिष्वन्यतमस्तदन्यो वेति निर्दिधारयिषया प्रश्नः । एवमेवायं प्रश्नः प्रवृत्त इति चोत्तरपर्यालोचनयाऽवगम्यते । तत्र हि 'योऽयं विज्ञानमयः' इति प्रष्टुरपि प्रसिद्धं जीवमनूद्य 'प्राणेषु' इतीन्द्रियगणप्राणवायु-समीपवर्तित्वोक्त्या तस्य ततो व्यतिरेको 'हृद्यन्तः' इति बुद्ध्यन्तर्गतत्वोक्त्या बुद्धेर्व्यतिरेकः तत एव स्थूल-देहाद्व्यतिरेकश्च बोध्यते ।

. . . .

अपि च 'अत्रायं पुरुषस्स्वयंज्योतिः' इति वाक्यं ज्योतिस्साध्यव्यवहारफलभाजो जीवस्यैव ज्योतीरूपत्वप्रतिपादनपरमिति स्वयंशब्दबलादवसीयते । 'स्वयं होता' 'स्वयंदोही' 'स्वयंदासास्तपस्विनः' इत्यादिप्रयोगेषु होमफलादिभाजो होतृत्वादिविवक्षायामेव स्वयंशब्दप्रयोगदर्शनात् । एवञ्च तदेकार्थपरं 'आत्मैवास्य ज्योतिः' इत्यात्मप्रश्नप्रसञ्जकवाक्यमपि तत्रत्यस्वयंशब्दैकार्थ्यभाजाऽवधारणेनादित्याद्यभावे स्वप्नदशायां जीवः स्वयमेव स्वस्य व्यवहारसाधनमित्यमुमर्थं प्रतिपादयत् 'कतम आत्मा' इति प्रश्नमपि जीवविषयं व्यवस्थापयेदेव । ज्योतिश्शब्दस्तु प्रश्नोत्तरयोर्न परमात्मविषयत्वस्य व्यवस्थापकः; अस्मिन् प्रकरणे तस्यादित्यचन्द्रादिसाधारण्येन व्यवहारसाधनमात्रपरत्वात् । अपि च 'योऽयं विज्ञानमयः' इत्यारभ्य यो वर्णयितुं प्रक्रान्त आत्मा यत्र च 'हृद्यन्तर्ज्योतिः' इत्यादिप्रदेशेषु ज्योतिश्शब्दस्स एव सुषुप्त्युत्क्रान्तिरूपतदी-

यावस्थानिरूपणे परमेश्वराद्भेदेन व्यपदिश्यते 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्' (बृ. ४. ३. २१) इति 'तद्यथाऽनस्सुसमाहितमुत्सर्जद्यायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याति यत्रैत-दूर्ध्वोच्छ्वासी भवति' (बृ. ४. ३. ३५) इति च। अतोऽपि हेतोः संसार्यात्मविषयएवायं प्रपञ्चः, न तु परमेश्वरविषयः।

एवं स्थिते संशयः—किमयं संदर्भः संसारिस्वरूपमात्रान्वाख्यानपरः, उत संसारिणमनूद्य तस्यासंसारिब्रह्मरूपत्वप्रतिपादनपर इति। तत्र **पूर्वः पक्षः**—

आदिमध्यावसानेषु संसार्यत्रानुवर्ण्यते। तस्मात्तत्पर एवायं संदर्भ इति युज्यते।

नन्वस्यासंसारिब्रह्मरूपत्वप्रतिपादका अपि शब्दा उपसंहारे श्रूयन्ते 'एष सर्वेश्वर एष भूताधि-पतिरेष लोकपाल एष सेतुर्विधरणः' (बृ. ४. ४. २२) इत्याद्याः। अतोऽङ्गुष्ठाधिकरणन्यायात्संसार्यनु-वादेन तस्यासंसारिब्रह्मरूपत्वप्रतिपादनपरः संदर्भ इति युक्तम्। नेति ब्रूमः। 'अंगुष्ठमात्रः' इत्यत्र नोपक्रमोपसंहारौ जीवे। अतस्तत्र युक्तं 'अंगुष्ठमात्रः' इत्येतावताऽनूदितस्य संसारिणः परब्रह्मस्वरूपत्वप्रति-पादनपरत्वम्, इह तूपक्रममारभ्यासमाप्ति संसारिविषयः सन्दर्भः। अतो नामरूपनिर्वोढृत्वादिबहुप्रमाणबला-द्वाकाशशब्दस्येव संसारिविषयादिमध्यावसानानुवृत्तबहुप्रमाणबलात्क्वाचित्कस्याल्पीयसः परमेश्वरधर्मजातस्यान्य-थानयनं युक्तम्। एतेन—मध्येऽपि 'प्राज्ञेनात्मना संपरिष्वक्तः' इति, 'अन्वारूढः' इति च परमेश्वरपरामर्शो-ऽस्तीति निरस्तम्। तथाऽपि संसारिधर्मवर्णनात्तद्धर्मवर्णनस्याल्पीयस्त्वात्। किञ्च तत्रत्येन परामर्शेन न परमेश्वरस्य प्रकरणप्रतिपाद्यता सिध्यति; प्रकरणप्रतिपाद्यमयमिति परामृष्टं संसारिणं प्रत्युपसर्जनत्वेन तस्यान्वयात्। नापि तेन प्रकृतस्य संसारिणः परमेश्वराभेदेन प्रतिपाद्यता सिध्यति; भेदेन व्यपदेशस्याभेद-प्रतिपादनविरुद्धत्वात्। तस्मात्तत्र परमेश्वरपरामर्शः 'ता वा अस्यैता हिता नाम नाड्यः' इति नाडीपरामर्शवत् 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति' (बृ. ४. ३. ३८) इति प्राणपरामर्शवच्च प्रकृतस्य संसारिणस्तत्तदवस्थाविशेषनिरूपणोपयोगित्वेनेति न तेन परमेश्वरस्य, जीवे तदभेदस्य वा प्रतिपाद्यत्वसिद्धिः।

यद्वा 'प्राज्ञेन' इत्येतन्न परमेश्वरपरम्, किन्तु सुषुप्तौ मरणकालप्राप्तमूर्छायाञ्च प्रकर्षेणाज्ञ इति जीवपरम् । ततश्च तथाभूतेनात्मना स्वरूपेण संपरिष्वक्त इति अन्वारूढ इति चाभेदेऽपि भेदोपचारः । अतो नात्र परमेश्वरपरामर्शशङ्कावकाशः । नन्वेवं महान्सन्दर्भः संसारिस्वरूपमात्रान्वाख्यानपरः सन्ननर्थकः स्यात् । नानर्थकः; देहाद्यतिरिक्तधर्माधिकारिसिध्यर्थत्वात् । ननु 'अनन्वागतं पुण्येन अनन्वागतं पापेन' (बृ.४.३.२२) इति 'स न साधुना कर्मणा भूयान्नो एवासाधुना कर्मणा कनीयान्' (बृ. ४. ४. २२) इति च प्रतिपाद्यस्यात्मनः पुण्यपापास्पर्श उच्यते । स कथं कर्माधिकारसिध्यर्थः स्यात् ? नैष दोषः । सुषुप्तौ कर्मफलभोगराहित्याभिप्रायेण तद्वचनात् । 'स न साधुना' इत्याद्यपि सुषुप्तिविषयमेव भवति; 'य एषोऽन्तर्हृदय आकाशः तस्मिञ्छेते' इत्युपक्रमात् । सुषुप्तिप्रसङ्गाभावे तु पुण्यपापस्पर्श उच्यत एव 'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' (बृ. ४. ४. ५) इति । अथवा वैराग्यसिध्यर्थोऽयं 'उभौ लोकावनुसंचरति' इत्यारभ्य संसारिगतागतवर्णनप्रधानस्संदर्भः । अत एव 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरैति अस्मै लोकाय कर्मणे' (बृ. ४. ४. ६) इति कर्मफलक्षयिष्णुत्वमपि वर्ण्यते । अथवा पञ्चाग्निविद्यावदुपासनाविशेषविध्यर्थोऽयं 'तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्ते अयमायात्ययमागच्छतीति एवं हैवंविदं सर्वाणि भूतानि प्रतिकल्पन्ते इदं ब्रह्मायाति' (बृ. ४. ३. ३७) इति उक्तप्रकारसंसारिस्वरूपवेदनफलश्रवणात्, मानुषानन्दादिक्रमेण तत्प्राप्यब्रह्मलोकभोग्यानन्दप्रशंसादर्शनाच्च । तस्मात्संसारिस्वरूपान्वाख्यानपरोऽयं संदर्भ इति ।

एवं प्राप्ते **सिद्धान्तः**—संसारिणो जीवस्यासंसारिपरमेश्वराभेदपरत्वमस्य संदर्भस्य कुतो नाद्रियते? किं संसारिणोऽर्थान्तरभूतः परमेश्वरो नास्तीति, उतास्मिन्प्रकरणे सोऽर्थः कुतोऽपि शब्दान्न प्रतीयत इति ? नाद्यः । अस्ति हि संसारिणोऽर्थान्तरभूतः परमेश्वरः, जन्मादिसूत्रमारभ्य प्रवृत्तानां प्रवर्तिष्यमाणानां चाधिकरणानां विषयवाक्येषु परमेश्वरस्य ततोऽर्थान्तरत्वज्ञापकानां तत्स्रष्टृत्वतदानन्दयितृत्वतन्नियन्तृत्वतत्संहर्तृत्वादीनां स्पष्टमेव प्रतिपादनात् । अस्मिन्नपि प्रकरणे सुषुप्त्युत्क्रान्त्योस्तस्य ततो भेदेन व्यपदेशात् । न हि प्राज्ञशब्दः प्रज्ञाप्रकर्षशालिनि रूढः कथंचिदज्ञे व्याख्यातुमुचितः । न वा मुख्यभेदसंभवे भेदोपचारकल्पना युक्ता । नापि द्वितीयः । पत्यादिशब्देभ्यः संसारिणः परमेश्वराभेदप्रतीतेः 'एष सर्वेश्वर एष सर्वभूताधिपतिः' (बृ. ४. ४.

२२) इत्यादयः शब्दा हि परमेश्वरवाचकाः प्रकृतसंसारिवाचिभिः शब्दैः सामानाधिकरण्येन निर्दिष्टास्तस्य तदभेदं प्रत्याययन्ति । न च उपक्रमोपसंहारपरामर्शैः प्रकरणस्य कार्त्स्न्येन संसारिपरत्वावगमात् तस्मिन्नेव सर्वेश्वरादिशब्दाः कथञ्चिदापेक्षिकैश्वर्यादिपरतया योजनीया इति वाच्यम्; उपक्रमादिष्वभेदप्रतिपत्त्यर्थतयैव संसारिस्वरूपकीर्तनात् । तथाहि—

शुद्धस्य त्वंपदार्थस्य तत्पदार्थत्वसिद्धये । उपक्रमे च मध्ये च त्वंपदार्थोऽत्र शोधितः ।

उपक्रमे तावद्देहेन्द्रियप्राणबुद्धिव्यतिरेकप्रदर्शनेन, लोकद्वयसञ्चारस्याध्यासिकबुध्यैक्यापत्तिकृतत्व-प्रदर्शनेन, ध्यानचलनोपलक्षितानामात्मन्यवभासमानानां ज्ञानक्रियारूपाणां सर्वेषामागन्तुकरूपाणां वह्नि-गतचतुष्कोणत्वादीनामिवोपाध्यवच्छेदप्राप्तभ्रान्तिकृतत्ववर्णनया वस्तुतोऽसंसारित्वप्रदर्शनेन च त्वंपदार्थः शोधितः । मध्ये सम्प्रसादात् स्वप्नाय धावति स्वप्नाज्जागरिताय ततः पुनः सम्प्रसादायेत्यवस्थानामव्यवस्थि-तागन्तुकधर्मत्ववर्णनया तासामनात्मधर्मत्वप्रदर्शनेन, साक्षाच्च 'दृष्ट्वैव पुण्यञ्च पापञ्च' (बृ. ४. ३. १५) इति 'स यत्तत्र किञ्चित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः' (बृ. ४. ३. १६) इति च स्वप्नजागरोपनीतभोगेषु साक्षिमात्रत्वप्रदर्शनेन च शोधितः । एवं शोधनेन सर्वस्मात् सांसारिकादिरुद्धधर्मा-न्निष्कृष्टस्य शुद्धस्य तस्य परेणाभेद उपसंहारे 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानस्सर्वस्याधिपतिः' (बृ. ४. ४. २२) इत्या-दिना 'एष सेतुर्विधरण एषां लोकानामसम्भेदाय' (बृ. ४. ४. २२) इत्यन्तेन प्रतिपादितः । एतेन— अभ्यासाज्जीवे सांसारिकधर्मवति तात्पर्यमवसीयत इत्यपि शङ्का—निरस्ता; साभ्यासानामुपक्रमोपसंहार-तन्मध्यपरामर्शानामभेदप्रतिपत्तिशेषत्वात् तदनुरोधेन क्वचित् सांसारिकधर्मानुवादस्य ततो निष्कर्षार्थत्वात् । एवञ्च कर्माधिकारसिध्यर्थमिह देहव्यतिरिक्तस्यात्मनो निरूपणमित्यपि शङ्का निरवकाशा; अकर्त्रभोक्तात्म-निरूपणस्य कर्माधिकारप्रतिकूलत्वात् । क्वचित्क्वचित् 'साधुकारी साधुर्भवति पापकारी पापो भवति' (बृ. ४. ४. ५) 'पुण्यः पुण्येन' (बृ. ४. ४. ५) इत्यादिसत्त्वेपि तस्य पूर्वोत्तरग्रन्थपर्यालोचनया देहाद्यभेदाध्यासपरिनिष्पन्नविशिष्टात्मधर्मानुवादत्वावसायात् । वैराग्यसिद्धिस्त्वानुषङ्गिकं प्रयोजनं भवत् पञ्चाग्निविद्यायामिवात्रापि न निवार्यते ।

यत्तु पञ्चाग्निविद्यायामिवात्रापि जीवविषयोपासनाविधिरस्तीत्युक्तम्, तन्न युक्तम्; 'अत ऊर्ध्वं विमोक्षायैव ब्रूहि' (बृ. ४. ३. १४) इति पदे पदे प्रश्नेष्वनुवर्तमानेषु क्षयिष्णुफलकोपासनाविधिपरत्वकल्पनाऽयोगात्। उत्क्रान्तिप्रकरणे 'एवंविदं सर्वाणि भूतानि प्रतिकल्पन्ते' (बृ. ४. ३. ३७) इति फलमुक्त्वाऽपि 'प्राप्यान्तं कर्मणस्तस्य' (बृ. ४. ४. ६) इत्यग्रेतनमन्त्रेण तस्य फलस्य क्षयिष्णुत्वप्रतिपादनात्, तस्य मन्त्रस्याम्नानानन्तरं 'इति नु कामयमानः' (बृ. ४. ४. ६) इति प्रपञ्चेन निरूपितमुत्क्रान्तिपूर्वकपारलौकिकफलप्राप्तिप्रकारममुमुक्ष्वधिकारिकत्वेन हेयं प्रदर्श्य 'अथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति' (बृ. ४. ४. ६) इति मुमुक्षोः पूर्वोक्तफलविपरीतोत्क्रमणपरलोकगमनानपेक्षनित्यसिद्धब्रह्मरूपतापत्तिफलप्रतिपादनाच्च। 'एवंविदम्' इति तु कर्मानुष्ठातॄणामुपलक्षणम्; 'प्राप्यान्तं कर्मणस्तस्य' इति मन्त्रपर्यन्तेन ग्रन्थसन्दर्भेण सामान्यतः कर्मफलमात्रस्य कीर्त्यमानत्वात्।

अस्तु वा वर्णितोत्क्रान्तिप्रकारविदः फलविशेषप्रतिपादनपरं 'एवंविदं सर्वाणि भूतानि प्रतिकल्पन्ते' इति वाक्यम्, न तावताऽत्र प्रकरणपर्यवसानशङ्कावकाशः; प्रतिपिपादयिषितब्रह्मावाप्तिरूपनिरतिशयफलस्तुत्यर्थक्षयिष्णुसातिशयफलकीर्तनान्तःपातिनस्तस्य प्रासङ्गिकफलविधिरूपत्वात्। 'स एको ब्रह्मलोक आनन्दः' (बृ. ४. ३. ३३) इत्येतदपि नोपासनफलभूतब्रह्मलोकानन्दप्रशंसापरम्; किन्तु परब्रह्मानन्दापेक्षयाऽतितुच्छत्वप्रदर्शनेन तत्प्रशंसापरम्; मानुषानन्दादिक्रमेण ब्रह्मलोकानन्दपर्यन्तमुत्तरोत्तरशतगुणं वैषयिकानन्दमुक्त्वा 'अथैष एव परम आनन्दः' (बृ. ४. ३. ३३) इति परमब्रह्मानन्दस्यैव निरतिशयोत्कर्षविश्रान्तिभूमित्वेन वर्णितत्वात्। तस्मात् संसारिस्वरूपवर्णनप्रपञ्चोऽयं तस्यासंसारिब्रह्मरूपत्वप्रतिपादनपर इति युक्तम्।

निरूपितः सर्वोऽयमर्थः सूत्रारूढः क्रियते—'भावं तु बादरायणोऽस्ति हि' (ब्र. सू. १. ३. ३३) इति सूत्रात् अस्तीत्यनुवर्तनीयम्। पूर्वसूत्रतश्च 'अर्थान्तरत्वादिव्यपदेशात्' इति। पुनश्च 'सुषुप्त्युत्क्रान्त्योर्भेदेन' इति सूत्रपूरणार्थं व्यपदेशादित्यनुवर्तनीयम्। 'पत्यादिशब्देभ्यः' इति च तदनन्तरसूत्रम्। एवं स्थिते 'कतम आत्मा' इत्यारभ्य प्रवृत्तोऽयमात्मविषयप्रपञ्चः संसार्यात्मविषयः, न परमेश्वरविषय इति

साध्ये अर्थान्तरत्वादिव्यपदेशादिति हेतोस्तत्सन्दर्भप्रतिपाद्यस्य परमेश्वरादर्थान्तरत्वमाददते ज्ञाप्यत्वेन गृह्णन्ति ये जायमानत्वादिहेतवः ते अर्थान्तरत्वादयः । 'उपसर्गे घोः किः' (पा. सू. ३. ३. ९२) इत्याङ्पूर्वाद्दाते. किप्रत्यये सति आदिपदमादातृवाचि । तेषां 'स वा अयं पुरुषो जायमानः' इत्यादिषु व्यपदेशादित्यर्थः । तत्रैव साध्ये 'सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात्' इत्यपि हेत्वन्तरम् । एतत्सन्दर्भप्रतिपाद्यस्य सुषुप्त्युत्क्रान्त्योः परमेश्वराद्भेदेन व्यपदेशादित्यर्थः । यद्यपि परमेश्वरसम्परिष्वक्तत्वतदन्वारूढत्वव्यपदेशो भेदकव्यपदेश एव, स च प्रथमहेतुनैव क्रोडीकर्तुं शक्यः, तथापि परमेश्वरं स्वशब्देनोपादाय ततोऽयं भेदकव्यपदेश इति पृथगुक्तिः ।

अथ संसारिस्वरूपमात्रान्वाख्यानपरोऽयं सन्दर्भः, न तु तस्य परमेश्वराभेदप्रतिपादनपर इति वादिनं पूर्वपक्षिणं प्रति किं परमेश्वर एव नास्तीत्याद्यविकल्पनिरासे, अस्तीति साध्यम् । अस्ति संसारिणोऽर्थान्तरभूतः परमेश्वर इति तस्यार्थः । ततस्तस्यार्थान्तरत्वज्ञापकानां तत्स्रष्टृत्वादिहेतूनां पूर्वोत्तराधिकरणविषयवाक्येषु विशिष्यापदेशात् स्पष्टं प्रतिपादनादिति तस्मिन् साध्ये प्रथमहेतोरर्थः । इहापि तस्य संसारिणो भेदेन व्यपदेशादिति द्वितीयहेतोरर्थः । परमेश्वरस्यास्तित्वेऽपि तदभेदेन प्रतिपादनमिह कुतोऽपि शब्दान्नोपलभ्यत इति द्वितीयकल्पनिरासे 'पत्यादिशब्देभ्यः' इति द्वितीयं सूत्रम् । सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशेऽभ्युपगम्यमाने पत्यादिशब्देभ्यः कथमभेदप्रतिपत्तिः ? व्यावहारिकभेदस्य पारमार्थिकाभेदाविरोधित्वादित्यवेहि । इदमग्रे स्पष्टीभविष्यति । सांसारिकधर्मेभ्यो निष्कृष्टस्य शुद्धस्यापि जीवस्य कथं सर्वेश्वरत्वादिविशिष्टेनाभेदः प्रतिपादनीयः ? दहराधिकरणोक्तरीत्या मुक्तौ संसारिणः सर्वेश्वरभावापत्तिसत्त्वात् । तदनभ्युपगमे तत्पदार्थशोधनस्यापि प्रकरणान्त उपसंहारात् । इदमप्यग्रे स्पष्टीभविष्यति । अत्राप्यसिद्धब्रह्मलिङ्गानां प्रसिद्धजीवलिङ्गेभ्यो वस्तुगत्या बलवत्त्वेऽपि अतिबहुलजीवलिङ्गाभिभूतत्वादस्पष्टता । १. ३. ४२ ।

इति सुषुप्त्युत्क्रान्त्यधिकरणम् । १३ ।

इति भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजिश्रीरङ्गराजाध्वरिवरसूनोः श्रीमदप्पय्यदीक्षितस्य कृतौ शारीरकन्यायरक्षामणौ

**प्रथमस्याध्यायस्य तृतीयः पादः ।**

श्रीमच्छङ्करगुरुभ्यो नमः

# अथ चतुर्थः पादः



## आनुमानिकमप्येकेषामितिचेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च । १ ।

एवं पादत्रयेण वेदान्तानां ब्रह्मणि समन्वयः प्रसाधितः । स न सङ्गच्छते । यतः कानिचिद्वेदान्तवाक्यानि प्रधानकारणत्वादिप्रतिपादकान्यपि लक्ष्यन्ते । अत ईक्षत्यधिकरणोक्तं प्रधानस्याशब्दत्वमप्ययुक्तमित्याशङ्कानिरासेन प्रसाधितसमन्वयदृढीकरणमस्य पादस्यार्थः । नन्वेवं सति श्रुतिविगानपरिहारः पादार्थ इत्युक्तं स्यात् । स तु द्वितीयाध्याये वियत्प्राणपादयोः करिष्यते । सत्यम् । तत्र कार्यविषयश्रुतिविगानपरिहारः, अत्र तु जगत्कारणे ब्रह्मणि समन्वयप्रतिष्ठार्थं कारणविषयश्रुतिविगानपरिहार इति भेदः । यद्यपि सोऽप्यत्रैव कर्तुं शक्यः, तथापि कार्ये वेदान्तानां न तात्पर्यमिति गमयितुमिह न कृतः, द्वितीयाध्याये तु तर्कपादे परपक्षाणां विप्रतिषेधादुपेक्ष्यत्वे वर्णिते तर्हि वेदान्तानामपि ब्रह्मसृज्यकार्यतत्क्रमादिविषये विप्रतिषेधोऽस्तीति शङ्कापरिहारस्तत्र वेदान्तानां तात्पर्यमभ्युपेत्य कृतः ।

'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' (क. १.३.१०, ११) इत्यत्राव्यक्तपदं प्रधानपरं शरीरपरं वेति स्मार्तक्रमश्रौतपरिशेषाभ्यामुभयोः प्रत्यभिज्ञानात् संशयः । तत्र य एव यन्नामानो यत्क्रमकाश्च महदव्यक्तपुरुषाः सांख्यस्मृतिप्रसिद्धाः ते तथैव इह प्रत्यभिज्ञायन्ते । अतो महदादिसकलविकारमूलकारणत्वेन महतः परं पुरुषभोग्यत्वेन पुरुषादवरञ्च यदव्यक्तनामकं स्वतन्त्रं स्मृतिप्रसिद्धं प्रधानं तदेवात्राव्यक्तपदेनोक्तमिति श्रुतिसिद्धमेव प्रधानस्य स्वातन्त्र्येण जगत्प्रकृतित्वं कपिलादिभिर्महर्षिभिः परिगृहीतमिति च ज्ञायते । एवञ्च यद्यपि प्रतिवेदान्तं ब्रह्मावगतिरूपं गतिसामान्यमस्ति, तथापि क्वचित् प्रधानमपि कारणत्वेन समन्वयविषय इति न सर्ववेदान्तानां जगत्कारणे ब्रह्मणि ऐककण्ठ्येन समन्वयः, न प्रधानस्याशब्दत्वम् न च ब्रह्मलक्षणस्य शुद्धतेति पूर्वपक्षः ।

स्यादेतत् । पूर्वत्र 'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिन्तु सारथिं विद्धि मनः प्रग्रहमेव च । इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्' (क. १. ३. ३, ४) इत्यादावात्मशरीरबुध्यादयो रथिरथसारथ्याद्यात्मना रूपिताः । तत्र बुध्यात्मनोर्मध्ये शरीरस्य श्रुतत्वादिहापि तयोर्मध्ये श्रुतमव्यक्तं शरीरं भवितुमर्हति; स्मार्तक्रमतः श्रौतक्रमस्य बलीयस्त्वात् । न च वाच्यम्—अव्यक्तमिह महत्पुरुषयोर्मध्ये श्रुतम्, न तु बुध्यात्मनोर्मध्ये—इति । पुरुषशब्दस्यात्मवाचित्वान्महच्छब्दस्य हैरण्यगर्भबुद्धिवाचित्वात्, 'मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः' इति तन्नामसु पाठात्, बुद्धिशब्दस्य हिरण्यगर्भबुद्धिसाधारण्येऽपि व्यष्टिसमष्टिभेदेन पृथग्ग्रहणोपपत्तेः । महच्छब्दो महत्तत्त्ववाचीति सांख्यपक्षेऽपि तथैव पृथग्ग्रहणस्योपपादनीयत्वात् । तन्मते बुद्धिशब्दस्य महत्तत्वाभिधानत्वाभ्युपगमात् ।

अपि च 'आत्मानं रथिनं विद्धि' इत्यारभ्य 'विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' (क. १. ३. ९) इत्यन्तेन संयतमनोबुध्याद्युपकरणवता पुरुषेण प्राप्यं विष्णोः परमं पदमुक्त्वा किं तत् परमं पदमित्याकांक्षायामिन्द्रियादिभ्यः परत्वेन तत्प्रतिपादनार्थं तच्छेषत्वेन इन्द्रियादीन्यनुक्रान्तानि । तत्र पूर्वं रथिरथादिकल्पनायां गृहीता एवेन्द्रियादयोऽत्रापि ग्राह्याः; प्रकृतत्वात् । एवञ्च रथत्वेन रूपितं शरीरं पुरुषपरत्वप्रतिपादकवाक्यस्थेन केनचित्पदेनाभिधानमपेक्षमाणं सत् स्वाभिधेयावरुद्धानीन्द्रियादिपदानि विहाय परिशिष्टमव्यक्तपदमनुधावति । अव्यक्तपदञ्च रथिरथादिरूपकविषयार्थमध्ये कञ्चिदर्थमभिधातुमपेक्षमाणं सत् स्वशब्दोपात्तानीन्द्रियादीनि विहाय परिशिष्टं शरीरमनुधावति । एवमन्योन्याकांक्षालक्षणेन प्रकरणेनापि शरीरमेवाव्यक्तं भवितुमर्हतीति चेत्—

उच्यते—स्मार्तक्रमतः श्रौतक्रमस्य बलीयस्त्वं तावदसिद्धम्; शब्दस्य स्वातन्त्र्येण प्रामाण्यमनभ्युपगच्छतां सांख्यानां मते श्रुतिस्मृत्योरनुमानसिद्धार्थानुवादित्वेन तुल्यत्वात् । श्रौतक्रमोऽप्यसिद्धः; रूपकवाक्ये रथित्वेन रूपितस्य संसारिणः सारथित्वेन रूपितस्य तदध्यवसायस्य च मध्ये शरीरम्, पुरुषपरत्ववाक्ये सांख्यमते महत्तत्वरूपस्य सिद्धान्ते संसार्यात्मस्वरूपस्य च महत आत्मनः, प्राप्यवैष्णवपदरूपस्य पुरुषस्य च मध्ये अव्यक्तमिति भेदात् । सिद्धान्ते 'महानात्मा' इत्यस्य प्राग्रथित्वेन रूपिते संसारिणि वृत्तिसंभवे व्यष्टिसमष्टिभेदेन बुद्धिमहद्भेदकल्पनाक्लेशानौचित्यात् । अव्यक्तपदस्य शरीरपरत्वापादकं प्रकरणमप्यसिद्धम् । प्रधानस्याकांक्षावतः सन्निधावाम्नानं हि प्रकरणम् । तथाच किं तत्परं पदमिति निर्द्धारणा-

कांक्षस्य वैष्णवपदस्य सन्निधावाम्नानरूपेण प्रकरेणन इन्द्रियादीनि तदीयपरत्वप्रमिताववधितयोपयोगित्वेन तदंगानि भवन्तु नाम । इन्द्रियादयो रथिरथादिकल्पनायां गृहीता एवान्यूनानतिरिक्ता इहापि ग्राह्या इति केन प्रकरणेन सिध्यति ? न हीन्द्रियादिभिरसंयतैर्जीवः पुनःपुनः संसारमेव प्राप्नुयात्संयतैस्तु मुक्तिमिति प्रदर्शनार्थे रथिरथादिरूपणेऽङ्गभावमासाद्य निराकांक्षा इन्द्रियादयः पुरुषपरत्वप्रतिपादनेऽप्यङ्गभावमपेक्षन्ते । नापि प्रधानं वैष्णवपदं स्वकीयपरत्वप्रतिपादने तेषामवधितयाऽङ्गभावमपेक्षते । तद्धि 'सा काष्ठा सा परा गतिः' इति निरतिशयोत्कर्षप्रतिपादनानुसारेण कृत्स्नस्य जगतः परत्वावधितयाऽङ्गभावमपेक्षते । न च कृत्स्नं जगद्रूपकवाक्ये गृहीतम् । शरीरेन्द्रियतद्विषयमनोबुद्धिभोक्तॄणामेव तत्र ग्रहणात् । अतस्तदाकांक्षानुसारेण सांख्याभिमतपुरुषावरचतुर्विंशतितत्वात्मकसकलप्रपञ्चसमर्पकत्वमेवात्र इन्द्रियादिशब्दानां युक्तम् । तत्रेन्द्रियाणि ज्ञानकर्मार्थानि दश । अर्थाः पञ्च तन्मात्राः पञ्चमहाभूतरूपा दश । मनोऽन्तरिन्द्रियम् । बुद्धिरहङ्कारः । महानात्मा महत्तत्वम् अव्यक्तं प्रधानमिति सङ्घटते तेषां चतुर्विंशतितत्वसमर्पकत्वम् । बुद्धिशब्दाभिधेयमहत्तत्वप्रभवत्वादहङ्कारे बुद्धिशब्द उपपन्नः ।

एतेन—सन्निधानाद्रूपकवाक्यगतान्येवेन्द्रियादीनि ग्राह्याणीति निरस्तम्; आकांक्षायाः सन्निधानाद्बलीयस्त्वात् । '....अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसंबन्धः' (जै. सू. ४. ३. ११) इति जैमिनिसूत्रदर्शनात् 'यस्य येनार्थसंबन्धो दूरस्थेनापि तेन सः । अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्' इति वार्तिकोक्तेश्च । एतेनैव रूपकवाक्ये षडर्था रूपकविषयाः इहापि परत्वावधयस्तावन्त इति संख्यासामान्यात्त एव ग्राह्या इत्यपि शङ्का निरस्ता । संख्यासाम्यतोऽप्याकाङ्क्षाया बलीयस्त्वात् । सांख्यानां पञ्चविंशतिस्तत्वानि । इह परत्वावधयश्चतुर्विंशतिस्तत्वानि पुरुषः पञ्चविंशस्ततः परं तत्वान्तरं नास्तीति सांख्याभिमततत्वग्रहणेऽपि संख्यासाम्यसंभवाच्च ।

ननु वैदिकस्याङ्गापेक्षस्यान्यत्र निबद्धमपि वैदिकमेवाङ्गजातं ग्राह्यम्, न त्वनिबद्धमप्यवैदिकमिति पूर्वतन्त्रे निर्णीतत्वादिह परमपदस्य परत्वावधिरूपपरत्वप्रतियोग्याकांक्षायां मुक्तिसंसारप्राप्तिवर्णनोपयोगिरूपणार्थतया प्राङ् निबद्धमपि तदेवेन्द्रियादिकं ग्राह्यं 'एका देया षड् देयाश्चतुर्विंशतिर्देयास्सहस्रं देयमपरिमितं देयम्' इति श्रुताबाधानदक्षिणाकल्पभेदप्रतिपादकेनापरिमितशब्देन रूढ्या समर्पितस्य बहुत्वस्य प्रतियोग्याकांक्षायामाधानदक्षिणाकल्पान्तरत्वेन निबद्धमपि सहस्रमेव हि प्रतियोगित्वेन गृह्यते । तस्मात्क्वचिदङ्गत्वेना-

निबद्धमपि सांख्योदितं तत्वजातं न ग्राह्यमिति चेत्; स्यादप्येवं यद्यत्र तदाम्नानं न स्यात्। अस्ति त्वत्रैव साक्षादिन्द्रियाद्याम्नानम्। तथात्र यथा सोमस्येतिकर्तव्यताकांक्षायां स्वप्रकरणाम्नातं सोमलताया रसीभावार्थमपेक्षितं तदाकांक्षापूरणसमर्थमभिषवादिसंस्कारजातमस्तीति तदङ्गभूतदीक्षणीयादिषु सन्निहितमपि तदाकांक्षापूरणासमर्थमैष्टिकमङ्गजातं न गृह्यते, एवमिहापि स्ववाक्याम्नातं निरतिशयपरत्वात्रध्याकांक्षापूरणसमर्थञ्चतुर्विंशतितत्वात्मकं कृत्स्नं जगदस्तीति सन्निधिमात्रलब्धमाकांक्षापूरणासमर्थं रूपितमिन्द्रियादिकं न ग्राह्यम्। किञ्च तद्ग्रहणे परिशेषादव्यक्तपदेन शरीरं ग्राह्यमापतितम्; न तु तद्युज्यते। न ह्यव्यक्तपदस्य सांख्याभिमतप्रधान इव शरीरे रूढिरस्ति। न वा तस्मिन्प्रत्यक्षे 'न व्यक्तम्' इति योगस्संभवति।

ननु चतुर्विंशतितत्वग्रहणेऽपि 'महानात्मा' इत्यात्मश्रुतिर्न संभवति। नैष दोषः। व्यापकत्वाद्यर्थान्तरवृत्तितया तस्य महत्तत्वविशेषणत्वात्। अग्रे 'महतः परमव्यक्तम्' इति केवलमहच्छब्देनैव प्रतिनिर्देशदर्शनात्। 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि' (क. १. ३. १३) इत्यग्रेतनमन्त्रे ज्ञानशब्दोदितायां बुद्धावपि विशेषणतयाऽऽत्मशब्दप्रयोगदर्शनेन ततश्चेतनपरत्वनिर्णयायोगाच्च। तस्मात्तन्त्रसिद्धं स्वतन्त्रं जगत्कारणं प्रधानमिहाव्यक्तपदेनोच्यत इति जगत्कारणे ब्रह्मणि न सर्ववेदान्तवाक्यसमन्वयः; नापि जगत्कारणत्वं ब्रह्मलक्षणमिति।

एवं प्राप्ते **सिद्धान्तः**—परमपदशब्दोक्तस्य परमपुरुषस्य प्राप्यत्वेन प्रतिपादने य एवेन्द्रियादयो रूपकविषयाः संयतत्वगुणेन तत्प्राप्त्युपायतया तदङ्गत्वेन वर्णितास्त एव तस्य परत्वेन प्रतिपादनेऽपि स्वरूपेण तत्प्रमित्युपायतया तदङ्गत्वेन ग्राह्याः; सन्निहितत्वात्, प्राप्यत्वप्रतिपादने तदङ्गत्वेन क्लृप्तत्वात्, संख्यासाम्याच्च। तन्त्रसिद्धतत्वेष्वान्तरालिकभेदेन संख्यासाम्यसत्त्वेऽप्यत्र श्रुतविभाजकोपाधिभिः संख्यासाम्याभावात् 'दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः। भौतिकास्तु शतं पूर्णं सहस्रं त्वाभिमानिकाः। बौद्धा दशसहस्राणि तिष्ठन्ति विगतज्वराः। पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः। पुरुषं निर्गुणं प्राप्य कालसंख्या न विद्यते' इति तन्त्रसिद्धवचनान्तरमनुसृत्य इन्द्रियवर्गादीनामेकैकत्वेन परिगणनेऽपि तत्राव्यक्तान्तानां पाञ्चविध्यमिह षाड्विध्यमिति संख्याभेदानपायात्। ननु सोमाङ्गानामिव परत्वावधीनां पठितानां सत्वाद्रूपकवाक्यसन्निहितानीन्द्रियादीनि दीक्षणीयादिसन्निहितान्यैष्टिकाङ्गानीव न ग्राह्याणीति चेत्, तर्हि नतरामसन्निहितानि तन्त्रसिद्धतत्त्वानि ग्राह्याणीति क्व सांख्यतत्त्वशङ्कावकाशः? नन्विह पठितानामेवे-

न्द्रियादीनां तन्त्रसिद्धतत्वरूपतया पर्यवसानमुच्यत इति चेत्, तदेव प्राचीनरूपकाविषयरूपतयाऽस्माभिरुच्यते; सन्निहितत्वादिहेतुभ्यः ।

ननु सन्निहितपर्यवसाने परत्वावध्याकाङ्क्षापूरणं न भवति पुरुषावरकृत्स्नप्रपञ्चसङ्ग्रहाभावादिति चेत्, सांख्याभिमततत्वपर्यवसानेऽपि तथैव । तन्मात्रादीनामग्रहणादर्थशब्दस्य इन्द्रियपदसमभिव्याहारेणेन्द्रियेभ्यः परत्वलिङ्गेन चेन्द्रियग्राह्यपरत्वात् । इन्द्रियेभ्योऽर्थानां परत्वस्येन्द्रियाणां पुरुषवशीकर्तृतावा अर्थोपहाराधीनतया, वशीकृतानामपि तेषां निरतिशयसौन्दर्यवदर्थसन्निधाने क्षोभदर्शनेन च समर्थनीयत्वात् । यद्यप्यनयोर्मन्त्रयोर्नेन्द्रियादिभ्योऽर्थादीनामुत्तरोत्तरपरत्वे तात्पर्यम्, किन्तु इन्द्रियादिभ्यस्सर्वेभ्यः पुरुषस्य परत्व एव तात्पर्यमिति 'आध्यानाय प्रयोजनाभावात्' (ब्र. सू. ३. ३. १४) इत्यधिकरणे निर्णेष्यते ; तथाऽपि तात्पर्यविषयस्य तस्यैव प्रमितावुपायत्वेनोच्यमानमिन्द्रियादिभ्योऽर्थादीनां परत्वमर्थादिशब्दानां यस्य यस्यार्थस्य ग्रहणे सम्भवति तं तमर्थमादाय सम्भवदेव ग्राह्यम् । अर्थवादतात्पर्यविषयप्राशस्त्यप्रमित्युपायोऽपि तत्तदवान्तरवाक्यार्थः स्वतस्सम्भवन्नेवार्थवादस्थपदानां तदुचितार्थग्रहणेन गृह्यते । तदर्थान्येव ह्यर्थवादाधिकरणगुणसूत्राणि तत्सिध्यादीनि च । स्वतस्सम्भवदर्थाभावे चार्थवादान्तरकृतसंस्तवानुसारेण बुद्धिस (म्भ) वादयोग्योऽर्थस्तेषां तदुचितार्थग्रहणेन गृह्यते । यथा 'तस्माद्द्वाभ्यामिति' इत्यर्थवादस्यार्थवादान्तरकृतोरुसंस्तवानुसार्यर्थो द्वाभ्यामिति पदस्य मध्यमपर्वद्वयरूपार्थग्रहणेन गृह्यते । 'मध्यमयोर्वा गत्यर्थवादात्' (जै. सू. ७. ३. २५) इति सूत्रेण तथा निर्णयात् । सर्वथाऽप्यसम्भव एवासदर्थावलम्बनत्वं प्राशस्त्यस्य रुद्ररोदनाद्यर्थवादेषु । इहेन्द्रियेभ्यः परत्वमिन्द्रियग्राह्यणामुक्तरीत्या सम्भवति, अर्थवादान्तरकृतग्रहातिग्रहसंस्तवमनुसरति च ।

नन्वस्तु नाम अर्थपदं इन्द्रियग्राह्यपरम् । साक्षाद्भोग्यानामिन्द्रियग्राह्यणां पुरुषावरत्वोक्तौ तत्साधनत्वेन परम्परया पुरुषार्थपर्यवसायिनां तन्मात्रादीनां तत्कैमुतिकन्यायेन सिध्यतीति चेत् ; एवमेव सन्निहितग्रहणेऽपि कण्ठोक्त्या, कैमुतिकन्यायेन च कृत्स्नस्य जगतः पुरुषावरत्वं सिध्यतीति व्यर्थः सन्निहितपरित्यागस्तान्त्रिकतत्वपरिग्रहश्च । अवश्यञ्च कठवल्लिष्वेव उत्तरत्राम्नातयोः 'इन्द्रियेभ्यः परं मनः मनसः सत्वमुत्तमम् । सत्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषो व्यापको लिङ्ग एव च । यद् ज्ञात्वा मुच्यते जन्तुरमृतत्वञ्च गच्छति' (क. २. ३. ७८) इति मन्त्रयोः कृत्स्नस्य जगतः पुरुषावर-

त्वसिध्यर्थं कैमुतिकन्यायः समाश्रयणीयः; तत्रार्थानामपाठात्। स इहाप्यस्तु। तस्मादिहेन्द्रियादिशब्दानां सन्निहितपरित्यागे कारणाभावात् प्राग्दर्शितपरिशेषलब्धया शरीराव्यक्तपदयोरितरेतराकाङ्क्षया शरीरपरम-व्यक्तपदं न तु सांख्याभिमतस्वतन्त्रप्रधानपरमिति सिद्धम्।

सूत्रे 'एकेषाम्' इत्यनेन सर्वशाखागतकारणवाक्यानामीक्षत्याधिकरण इव प्रधानपरत्वं नाशंक्यत इति दर्शितम्। अपिशब्देन एकेषां कठानां शाखायामपि ब्रह्मकारणत्वप्रतिपादनं वाक्यान्तरैः क्रियमाणं नाक्षिप्यत इति दर्शितम्। तेन ब्रह्मलक्षणस्य नासम्भवः शंक्यते। नापि प्रतिवेदान्तं ब्रह्मकार-णत्वावगतिसद्भावरूपं गतिसामान्यमाक्षिप्यते, किन्तु ब्रह्मकारणत्वमभ्युपगम्यैव 'महतः परमव्यक्तम्' इत्यत्र सांख्यप्रक्रियाप्रत्यभिज्ञानात् तत्प्रक्रियानुसारेण प्रधानमपि क्वचित्कल्पे स्वतन्त्रकारणमभ्युपगन्तव्यमिति ब्रह्मलक्षणस्यातिव्याप्तिमात्रमाशंक्यत इति सूचितं भवति। यद्यपि उदाहृतमंत्रावष्टम्भेन शङ्का सांख्य-प्रक्रियाप्रसिद्धमहदादिकमपि तथैवाभ्युपगन्तव्यमिति प्रधानादिसकलतत्वसाधारणम् (णा), तथापि प्रधान-स्वीकरणमुखेन ब्रह्मलक्षणाक्षेपेण प्रकृतसङ्गतिरित्यभिप्रेत्य विशिष्य प्रधानस्यानुमानिकशब्देन ग्रहणम्। स्वेन रूपेण रथित्वादिना उपमेयमात्मादिकं रूपवत्कुर्वन्तीति रूपकाणि उपमेयात्मादिसामानाधिकरण्येन निर्दिष्टानि रथिरथसारथिप्रग्रहाश्वगोचररूपाण्युपमानानि। रूपवच्छब्दात् 'तत्करोति' इति णिचि 'णाविष्ठव-त्प्रातिपदिकस्य' इति इष्ठवद्भावान्मतुपो लुकि टेश्च लोपे रूपीत्यतः धातोः कर्तरि ण्वुलि 'णेरनिटि' इति णिलोपे च सति रूपवत्कुर्वन्तीत्यर्थे रूपकशब्दनिष्पत्तिः। रूपकात्मना विन्यस्ता आत्मशरीरादयस्तेषां मध्ये शरीराख्यं यद्रूपकविन्यस्तं तस्याव्यक्तपदेन गृहीतेरिति सिद्धान्तहेत्वर्थः।

ननु बहुषु रूपकविन्यस्तेषु विद्यमानेषु कुतश्शरीरस्यैवाव्यक्तपदेन ग्रहणमित्याशङ्कावारणाय परिशेषप्रदर्शनार्थोऽपि हेतुसाधकहेतुः 'शरीररूपकविन्यस्तगृहीतेः' इत्यनेनैव सङ्गृहीतः। तत्र हेतौ शरीरे अधिकरणे ये रूपकात्मना विन्यस्ता इन्द्रियमनोबुध्यात्मानः तेषां प्रातिस्विकैरिन्द्रियादिशब्दैर्ग्रहणादित्ये-कोऽर्थः। शरीररूपकस्य रथस्य ये विन्यः विशेषेण नेतारः विषयेष्वाकर्षका इद्रियाश्वास्तेषामस्तानि अस्यते गम्यते येष्विति गमनाधिकरणानि 'विषयांस्तेषु गोचरान्' इति मार्गात्मना रूपितानि तेषां रूपकवाक्ये विषयशब्दोक्तानामिहार्थशब्देन ग्रहणादित्यपरोऽर्थः। अत्र द्वितीयेऽर्थे विन्यस्तेत्यत्रास्तशब्दः 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (पा. सू. ३. ४. ७६) इति सूत्रेण 'अस गतिदीप्त्यादानेषु' इति

धातोरिह गत्यर्थादधिकरणार्थप्रत्ययान्तः । भूताधिकारविहितोऽयं प्रत्ययः इन्द्रियाश्वानां विषयमार्गेषु सञ्चार-स्यातीतस्यापि सत्त्वात्तद्विषयतयोपपन्नः । इडागमाभावस्तु 'स्तोश्चुना श्चुः' (पा. सू. ८. ४. ४०) इत्यादिषु नुमागमाद्यकरणेन 'अनित्यमागमशासनम्' इति ज्ञापितत्वादुपपन्नः । अस्तशब्दात्प्राचीनो विनीशब्दो विपूर्वान्नयतेः क्विबन्तः 'शरीररूपकविनि' इति च षष्ठीबहुवचनान्तं भिन्नं पदं 'तृतीया तत्कृतार्थेन गुणवचनेन' (पा. सू. २. १. ३०) इति सूत्रे तत्कृतपदमिव 'सुपां सुलुक्' (पा. सू. ७. १. ३९) इत्यादिसूत्रेण लुप्तविभक्तिकम् । अधिकरणार्थक्तयोगे 'अधिकरणवाचिनश्च' (पा. सू. २. ३. ६८) इति विहितायाष्षष्ठ्याः 'अधिकरणवाचिना च' (पा. सू. २. २. १३) इति समास-निषेधात् । एवमर्थद्वयपरिग्रहेण शरीरातिरिक्तानां सर्वेषां प्रातिस्विकशब्दैर्गृहीतत्वाच्छरीरमेवाव्यक्तपदेन ग्राह्यमिति परिशेषो लभ्यते ।

एवं सिद्धान्तहेतूपपादनार्थमन्ययोरपि द्वयोरर्थयोर्गर्भीकरणायैव 'गृहीतेः' इत्युक्तम् । ननु पुरुष-परत्ववाक्ये रूपकवाक्यनिर्दिष्टा एवेन्द्रियादयो ग्राह्या इति यदि सिद्धं स्यात्तदा शरीरातिरिक्तानां स्वस्वशब्दैर्गृहीततया परिशेषादव्यक्तशब्देन शरीरं ग्राह्यं सिध्येत्, तदेव कुत इत्याशङ्कायां सन्निहितत्वादि-हेतुभ्य इत्येतदपि अनेनैव हेतुवाक्येनार्थत्रयपरेण लभ्यते । तत्र 'रूपकविन्यस्त' इतीन्द्रियादीनां प्राङ्निर्दिष्ट-त्वप्रदर्शनेन सन्निहितत्वं लभ्यते । तेषां प्राङ्निर्दिष्टत्वमात्रमनुक्त्वा विशिष्य रूपकविन्यस्तत्वोक्त्या रथसंय-तैरिन्द्रियादिभिः परमपदमिति तेषां प्राप्त्युपायतया पुरुषशेषत्वक्रमिर्लभ्यते परिशेषप्रदर्शनेन तु संख्यासाम्यम् । एवमनन्तरातीतग्रन्थपर्यालोचनायां नास्ति तन्त्रसिद्धतत्त्वग्रहणप्रत्याशेत्युक्तम् । तथैवोत्तरग्रन्थपर्यालोचनाया-मपीति युक्त्यन्तरसमुच्चयार्थो 'दर्शयति च' इति सूत्रशेषः । तथाहि—शरीरेन्द्रियमनोबुद्धिविषयभोगसंयुक्तस्य संसारिणः शरीरादीनां रथादिरूपकत्वकल्पनया संसारमोक्षगतिनिरूपणेन यस्य परमपदशब्दितस्य परब्रह्मणो मोक्षे प्राप्यत्वमुक्तं यस्य च निरतिशयपरत्वं वर्णितं तथाभूतब्रह्मभावावगतिं संसारिणस्तद्भावप्राप्तौ साक्षादु-पायमभिप्रेत्य तदुपायमग्रे दर्शयति यथा 'सा परा गतिः' इत्येतदनन्तरं 'एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुध्या सूक्ष्मया सूक्ष्मदर्शिभिः' (क. १. ३. १२) इति मन्त्रेण तावत्तस्य परमपुरुषस्य परब्रह्मणः सर्वभूतेषु गूढतयाऽवस्थानमुक्त्वाऽत्यन्तदुरधिगमत्वमुक्तं तत्संसारिणस्तदेव परं ब्रह्म

तात्विकं स्वरूपं न भोक्तृत्वादिविशिष्टं संसारदशायां प्रकाशमानं रूपमिति विवक्षयैव। तथा सत्येव कथं भोक्तृत्वादिविशिष्टस्यातथाभूतब्रह्मभाव इति विचिकित्सया तदधिगमस्य दौर्लभ्योपपत्तेः जीववज्जीवादन्य-द्ब्रह्मापि भूतेषु गूढं वर्तत इति विवक्षायां हृदयकमलसंस्थानादिवत् तस्मिन्नपि वेदोक्तिविश्वासात् सुखेना-धिगमसम्भवात्।

एवं दुरधिगमत्वोक्त्यनन्तरं तदधिगमोपायं दर्शयति 'यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि' (क. १. ३. १३) इति। अत्र वागुपलक्षित-सकलबाह्येन्द्रियव्यवहारस्य विषयविकल्पाभिमुखस्य मनसो विषयप्रवणाया बुद्धेरिन्द्रियमनोबुद्धियोगाद्भोक्तृत्वमा-पन्नस्य जीवस्य च क्रमात् पूर्वपूर्वप्रविलापनेन जीवस्य तात्विके रूपे प्रकारिणि परब्रह्मणि प्रतिष्ठापनमुच्यते। एवमभ्यस्यतः क्रमेण ब्रह्मभावावगतिः स्थिरीभवतीति। एवमिदमद्वैतप्रकरणमिति कृत्स्नकठवल्लीपर्यालोचनयाऽपि 'त्रयाणामेव' इति सूत्रे व्यक्तीभविष्यति। एवञ्च देहेन्द्रियमनोबुद्धीनां रथत्वादिकल्पनं पुरुषावरत्ववर्णनञ्च न केवलं परमपदप्राप्तौ, तस्य परत्वप्रमितौ चोपायतया, किन्त्वात्मनो देहेन्द्रियमनोबुद्धिव्यतिरेकदार्ढ्यार्थतया-ऽपि। अन्यथा देहेन्द्रियादिधर्मैर्विरुद्धधर्मवत्तया भासमाने संसारिणि ब्रह्मभावावगतिदार्ढ्यासम्भवात्। अतः पुरुषपरत्ववाक्ये मनोबुद्धीन्द्रियाणामिव देहस्यापि व्यतिरेकप्रतिपत्त्यर्थमस्ति ग्रहणाकांक्षेति ततोऽप्यव्यक्तपदं शरीरपरमवसीयते। एवञ्च सति न्यायसाम्यात् 'इन्द्रियेभ्यः परं मनः' इत्यग्रेतनवाक्येऽप्यव्यक्तपदं शरीर-परमेव। तत्रापि ह्यत्रोक्त एवार्थो दार्ढ्यार्थं पुनरनुवर्णितः। अर्थाः परं तत्र न कीर्तिताः। आत्मनो देहादिव्यतिरेकवदर्थव्यतिरेकस्यास्पष्टत्वाभावेन कण्ठोक्त्या ततःपरत्वप्रतिपादनस्यात्यन्तोपयोगित्वाभावात्। एवं पूर्वापरपर्यालोचनया सांख्यानभिमताद्वैतप्रकरणे नास्ति तत्तन्त्रसिद्धतत्वग्रहणप्रत्याशावकाश इति। 'दर्शयति च' इति चकारो दर्शयतीत्यनेन युक्त्यन्तरं समुच्चीयते, न तु प्राचीनहेतुसाधकहेतुरुच्यते इति ज्ञापनार्थः। सन्निहितेन्द्रियादिग्रहणे पुरुषावरकृत्स्नप्रपञ्चसंग्रहो नास्तीत्यादिशङ्कानिरासार्थो वा। १. ४. १।

ननु तथाऽप्यव्यक्तं प्रधानमित्येव युक्तम्। तत्र ह्यव्यक्तपदस्य रूढिरस्ति, न व्यक्तमिति योगो-ऽप्यस्ति न तु शरीर इत्याशङ्कायामाह—

## सूक्ष्मं तु तदर्हत्वात् । २ ।

सांख्यानां पारिभाषिकी रूढिर्न वेदार्थनिर्णयोपयोगिनी । लौकिकी त्वव्यक्तपदस्य न प्रधानेऽस्ति । योगस्तु स्यात् । स त्वन्यस्यापि सूक्ष्ममात्रस्य साधारणः । तथाऽपि शरीरं स्थूलमेव इति चेत्; सत्यम् । सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते । तस्य कारणं ह्यव्याकृतं सूक्ष्मम् । तदात्मना शरीरमपि सूक्ष्मम् । यद्यपि सर्वं जगदव्याकृतात्मना सूक्ष्ममेव 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' इति (बृ. १. ४. ७) सर्वस्य जगतः प्रागव्याकृतभावश्रवणात्, तथाऽप्यत्र ग्राह्यग्राणामिन्द्रियादीनां शब्दान्तरैर्गृहीतत्वात् परिशिष्टं शरीरमेकमिति तदेव कारणवाचिना उपचाराद्गृह्यते ।

स्यादेतत्—अव्याकृतमपि नाव्यक्तशब्दार्हम् । तद्धि मायाऽविद्याक्षराकाशादिशब्दैः श्रुतिषु प्रसिद्धमज्ञानमिति भवद्भिरिष्यते । तत्र च 'न जानामि नाविदिषम्' इत्यादिप्रत्यक्षं प्रमाणमुपन्यस्यते । कथं तत्सूक्ष्ममस्पष्टम् ? अस्पष्टवचनो ह्यव्यक्तशब्दः, न त्वनिर्वाच्यवचनः; तथा लोकप्रसिध्यभावात्तान्त्रिकपरिभाषायाश्चानादिशब्दार्थनिर्णयानुपयोगित्वस्योक्तत्वात्, अनिर्वाच्यवचनत्वे च शरीरस्याप्यनिर्वाच्यत्वेनाभ्युपगततया तत्र साक्षादव्यक्तशब्दस्य वृत्त्युपपत्तौ प्रागवस्थितोपचारसमाश्रयणक्लेशायोगादित्याशंक्योक्तं सूत्रे 'तदर्हत्वात्' इति । कारणस्यास्पष्टस्याव्यक्तशब्दार्हत्वादित्यर्थः । अयमाशयः—यथा स्थूलमिदं शरीरं स्फुटतरबाह्येन्द्रियप्रत्यक्षसिद्धमनेकार्थक्रियाकार्यतिस्पष्टं नैवमज्ञानम् । अत एव 'न जानामि' इत्यादिप्रत्यक्षं क्वमज्ञानाभावविषयमस्त्विति कदर्थयन्तस्तद्वाप्यपलपितुं प्रयतन्ते । ततश्च यथैव 'अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेः' इति भाष्योक्तरीत्या सर्वेषां प्रत्यग्रूपतया प्रकाशमानमपि परं ब्रह्म विद्यादोषाद्यथावत् स्फुटतरमप्रकाशमानमद्यापि अनात्मस्वात्मप्रतिपत्तिमद्भिश्चोरैर्मुष्यमाणमस्पष्टमव्यक्तशब्दार्हम्, अत एव 'तदव्यक्तमाह हि' (ब्र. सू. ३. २. २३) इति सूत्रयिष्यते एवमिदमपीति । १. ४. २ ।

ननु यदि सर्वविकारप्रकृतिभूतमव्याकृतमिति किञ्चिदभ्युपगम्यते हन्त भोः स एव प्रधानकारणवादः प्राप्तः । सांख्यैरपि हि तदेव प्रधानमिति व्यपदिश्यत इत्याशंक्याह—

## तदधीनत्वादर्थवत् । ३ ।

अस्मदङ्गीकृतमव्याकृतं जगत्कारणस्य परमेश्वरस्य शक्तिरूपतया तदधीनमिति तदङ्गीकारेण न स्वतन्त्रप्रधानकारणवादाभ्युपगमप्रसञ्जनावकाशः । ननु यदि परमेश्वर एव जगत्कारणं कृतमव्याकृतेन

तदधीनेनेत्याशंक्योक्तं सूत्रे 'अर्थवत्' इति। अर्थवत् सफलमव्याकृतम्। न हि शक्तिरूपेण तेन विना निर्विकारचैतन्यरूपस्य परमेश्वरस्य जगदुपादानत्वं जगत्स्रष्टृत्वं वा सम्भवति। तदेतत् प्रकृत्यधिकरणे स्थापयिष्यमाणस्य ब्रह्मणः उभयविधकारणत्वस्य निर्वाहकमिह प्रसङ्गात् सूत्रितम्। तत्रैव व्यक्तीकरिष्यामः।

ननु यदव्यक्तं शरीरं कथं तद्भोक्तृभोगायतनतया तच्छेषभूतं ततः परं स्यादिति शङ्कायामप्ये-तदेवोत्तरं 'तदधीनत्वादर्थवत्' इति। यथा खल्विन्द्रियाणां पुरुषवशीकर्तृत्वस्यार्थाधीनत्वादर्थानामिन्द्रियेभ्यः परत्वम्, जीवभावेन भोक्तृत्वस्याव्यक्ताधीनत्वात् तस्य तावत्ततः परत्वं युक्तम्। तद्रूपतोपचारात्तु शरीरस्य तदौपचारिकम्। इदमेव श्रुतावव्यक्तपदप्रयोगेण शरीरस्य कारणावस्थात्मतोपचाराश्रयस्य फलं यत्तदीयमेव भोक्तृतः परत्वं शरीरे परिकल्प्य तद्द्वारा पुरुषपरत्वं वर्णनीयमिति।

ननु कैश्चिदाचार्यैः व्यक्तं शरीरं कथमव्यक्तशब्देनोच्यत इति शङ्कायां स्थूलशरीरं तेन नोच्यते, किन्तु लोकद्वयसञ्चारानुयायि स्थूलशरीरारंभकभूतसूक्ष्मरूपं सूक्ष्मशरीरमित्येतत्परतया 'सूक्ष्मं तु' इति सूत्रं व्याख्यातम्। 'तदधीनत्व' सूत्रञ्च संसारित्वस्य तदधीनत्वाल्लोकद्वयाननुयायिस्थूलशरीराधीनत्वाभावात्तस्यैव संसारितः परत्वमुपपद्यत इत्येतत्परतया व्याख्यातम्। युक्तं च तत्; 'सूक्ष्मं प्रमाणतश्च तथोपलब्धेः' (ब्र. सू. ४. २. ९) इत्यग्रेतनसूत्रेण नाडीनिष्क्रमणादिहेतुभ्यः सौक्ष्म्यावगत्या देहान्निष्क्रामत्सूक्ष्मशरीरं पार्श्वस्थै-र्नोपलभ्यत इति समर्थितत्वेनातीन्द्रिये तस्मिन्नव्यक्तशब्दस्य निर्विशङ्कवृत्तिसंभवात्। 'तदापीतेः संसारव्यपदेशात्' (ब्र.सू. ४.२.८) इति सूत्रेण तस्याऽऽसंसारमोक्षमनुवृत्तिरुक्ता; संसारित्वं तदधीनमित्यस्यापि निर्विशङ्कत्वात्। न च रूपकवाक्ये शरीरद्वयस्यापि प्रकृतत्वाविशेषे कथमिह सूक्ष्मशरीरमेव ग्राह्यमिति शङ्क्यम्। तत्रापि सूक्ष्मशरीरस्यैव रथत्वेन रूपणात्। रथेन परलोकप्राप्तेरपि वक्तव्यत्वात्। एवं युक्तं तद्व्याख्यानं किमिति भाष्यकृद्भिरुपेक्षितम्? व्याख्येयसूत्राभ्यामेव तत्प्रत्याख्यातमित्युपेक्षितम्। यद्यतीन्द्रियं सूक्ष्मशरीरमिह 'सूक्ष्मं तु' इत्यनेन गृहीतं स्यात् तदा कस्यामाशङ्कायां 'तदर्हत्वात्' इति सूत्रशेषः कर्त्तव्यो भवेत्?

यदि च परलोकाननुवृत्तस्थूलशरीराधीनं न भवति संसारित्वमिति स्थूलशरीरमिह त्यज्येत, तदा सूक्ष्मशरीरमपि किमिति न त्यक्तव्यं? तदपि महाप्रलये नानुवर्तते; सर्वस्यापि तदानीमव्याकृतशेषत्वात्; पुनः सर्गादौ भूतेन्द्रियसृष्टिवर्णनाच्च। यत्तु स्थूलशरीरं न प्रकृतमित्युक्तं तद्विपरीतम्। पुरुषार्थसिध्यर्थमिच्छापूर्वकप्रवृत्तौ हि

रथादिगमनसाधारणपरिकररूपणं युज्यते, न तु स्थूलदेहवियोगात्संपिण्डितकरणग्रामस्यातिवाहिकैः क्रियमाणे नयने । इच्छापूर्वप्रवृत्तौ चेन्द्रियाश्वैराकृष्यमाणतया स्फुटतरमुपलभ्यमानस्य चेष्टाभोगेन्द्रियाश्रयतया शरीरशब्द-मुख्यार्थस्य स्थूलशरीरस्यैव रथत्वरूपणमुचितं । परलोकानुयायित्वात्सूक्ष्मशरीरं रथत्वेन रूपितमिति कल्पना-प्रसक्तौ च प्रलयेऽप्यनुयायित्वादव्याकृतशरीरं तथा रूपितमित्येव कल्पना स्यात् । अस्तु वा सूक्ष्मशरीरस्यापि रूपकानुप्रवेशः । स्थूलशरीरमवश्यं रूपकानुप्रविष्टतया पुरुषपरत्वपरवाक्येऽप्यन्वयमाकाङ्क्षमाणं न परित्यागमर्ह-तीत्यलं विस्तरेण । १. ४. ३ ।

एवं पूर्वापरग्रन्थपर्यालोचनया वाक्यन्यायविचारणायां नास्त्यत्र सांख्यतन्त्रसिद्धतत्त्वग्रहणशङ्काव-काश इति समर्थितम् । ये त्वत्र क्रमिकमहदव्यक्तपुरुषश्रवणमात्रसन्तुष्टाः श्रद्धाजडा मन्यन्ते इदमेव वाक्यं सांख्यमतस्य मूलं भवितुमर्हति; नह्यवेदमूलमत्यन्ताप्ततमाः कपिलादयो महर्षयः प्रणयेयुरिति तान्प्रत्याह—

**ज्ञेयत्वावचनाच्च** । ४ ।

यदीदमेव वाक्यं सांख्यमतस्य मूलमभविष्यत्, तदा 'गुणपुरुषान्तरज्ञानात् कैवल्यम्' इति वदतां सांख्यानामभिमतं प्रधानस्य मुमुक्षुज्ञेयत्वमप्यत्रावक्ष्यत् । तदत्र नोच्यते । विभूतिविशेषप्राप्तये प्रधानस्योपास्यत्वं तस्य स्वतन्त्रकारणत्वमित्यादि च तेषामभिमतमत्र नोच्यते । अतो नैतन्मूलकं सांख्यतन्त्र-मिति श्रद्धेयम् । न हि यन्मूलमेव शास्त्रं प्रणयन्ति तत्र तच्छास्त्रवर्णितं नोक्तमिति युज्यते । १. ४. ४ ।

नन्वसिद्धं ज्ञेयत्वावचनम्; 'अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् । अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात् प्रमुच्यते' (क. १. ३. १५) इत्युत्तरमन्त्र एव हि तस्य ज्ञेयत्वं वदतीत्याशङ्कामुद्भाव्य परिहरति—

**वदतीति चेन्न प्राज्ञो हि प्रकरणात्** । ५ ।

शब्दादिहीनत्वोक्त्या महतः परत्वोक्त्या च प्रधानमिह निर्दिष्टमिति न भ्रमितव्यम् । प्राज्ञः परमात्मा हि निचाय्यत्वेन निर्दिष्ट इति 'एष सर्वेषु भूतेषु' इत्यादितस्तत्प्रकरणात् प्राग्दर्शितादवगम्यते । शब्दादिहीनत्वमक्षरवाक्ययोः परमात्मनोऽपि प्रसिद्धम् । महतश्चात्मनो भोक्तुः परत्वं तस्य प्रसिद्धम् । । १. ४. ५ ।

ननु अस्तु नाम परमात्मनः प्रकरणं, तथापि यथा 'योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः। स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम्' इति मन्त्रे जीवस्य गतिवर्णनमेवमशब्दमिति प्रधानस्यापि मुमुक्षुज्ञेयत्ववर्णनं स्यादित्याशङ्क्याह—

**त्रयाणामेव चैवमुपन्यासः प्रश्नश्च । ६ ।**

त्रयाणामेव पदार्थानामग्निजीवपरमात्मनां कठवल्लीषूपन्यासो दृश्यते तद्विषय एव प्रश्नः। तत्र तावत् 'स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम्' (क. १. १. १३) इत्यग्निविषयः प्रश्नः। 'येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। एतद्विद्यामनुशिष्टस्त्वयाऽहं वराणामेष वरस्तृतीयः' (क. १. १. २०) इति जीवविषयः। 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद' (क. १. २. १४) इति परमात्मविषयः। प्रतिवचनमपि 'लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा' (क. १. १. १५) इत्यग्निविषयम्। 'हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्। यथा च मरणं प्राप्यात्मा भवति गौतम। योनिमन्ये प्रपद्यन्ते' (क. २. २. ६) इत्यादि जीवविषयम्। 'न जायते म्रियते वा विपश्चित्' (क. १. २. १८) इत्यादि बहुप्रपञ्चं परमात्मविषयम्। एवञ्च मृतजीववृत्तान्तविषयप्रश्नसत्वात्तद्गतिवर्णनं युक्तं, न तु प्रधानस्य मुमुक्षुज्ञेयत्ववर्णनम्, अपृष्टत्वात्। ननु त्रयाणामेवोपन्यास इत्यसिद्धम्; परमात्मप्राप्तौ तदवगतौ च उपाययोरपि 'विज्ञानसारथिर्यस्तु' (क. १. ३. ९) 'यच्छेद्वाङ्मनसी प्राज्ञः' (क. १. ३. १३) 'नाविरतो दुश्चरितान्नाशान्तः' (क. १. २. २४) इत्यादिषूपन्यासो दृश्यते। एवं प्रधानस्य ज्ञेयत्वोपन्यासोऽपि स्यात्। न स्यात् संदर्भविरोधात्।

एवं श्रूयते—वाजश्रवसो महर्षिः सर्ववेदसदक्षिणेन यज्ञेनेष्ट्वा जरद्गवीः दक्षिणाः प्रयच्छन् बालेन नचिकेतसा पुत्रेणानर्हदक्षिणादाननिमित्तक्रतुवैकल्यात्पितुरनिष्टमाशङ्कमानेन तदनिष्टं स्वात्मप्रदापनेनापि क्रतुसंपत्तिं कारयित्वा निवारणीयमिति मन्यमानेन 'तात कस्मै मां दास्यसि' इति पुनः पुनः पृष्टो बहुवार-प्रश्ननिर्बन्धसंजातकोपस्सन् 'मृत्यवे त्वा ददामि' इत्युवाच। नचिकेताः किं मयोक्तमित्यनुशयानं पितरं प्रति 'पूर्वे पितामहाद्या यथा मृषावादं विना स्थिता यथा चापरे साधवोऽद्यापि तिष्ठन्ति तान्वीक्ष्य तथा

वर्तितव्यम् । मर्त्यस्सस्यवदल्पेनैव कालेन जीर्यति जीर्णश्च मृत्वा सस्यमिव पुनर्जायते । एवमनित्ये जीवलोके किं मृषाकरणेन, पालय सत्यम्, प्रेषय मां मृत्यवे' इत्युक्त्वा तथैव पित्रा प्रेषितः प्रवसतो मृत्योर्द्वारि तिस्रो रात्रीरनश्नन्नुवास । प्रवासादागतो मृत्युरनश्नतैवं ब्राह्मणेन द्वारि स्थितमिति भीतस्तं प्रसाद्य तस्मै त्रीन्वरान्ददौ । नचिकेताः प्रथमेन वरेण पितृप्रसादं, द्वितीयेनाग्निविद्यां, तृतीयेन मरणानन्तरदेहातिरिक्तात्मानुवृत्त्यस्तित्वनास्तित्वसन्देहनिवर्तिकामात्मविद्यां वव्रे ।

यद्यपि नचिकेता देहातिरिक्तात्मास्तित्वे विश्वासवानेव, अन्यथा पितुः क्रतुवैकल्यस्य मृषावादस्य च परिहारार्थं महतः प्रयत्नस्य 'सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः' (क. १. १. ६) इति वचनस्य स्वर्गफलकाग्निविद्यावरणस्य चानुपपत्तेः; तथाऽपि हितैषिवचनादिलब्धस्यास्यैव विश्वासस्य दृढीकरणाय विशेषान्तरज्ञानाय च प्रश्न उपपद्यते । इदानीमपि हि पारलौकिककर्मानुष्ठाननिष्ठा एव किमवलम्बनेन देहात्मवादः, कथञ्च तन्निरसनमिति जिज्ञासमाना दृश्यन्ते । तत्प्रकारावगत्यर्थं वेदाध्ययनानन्तरं वैदिककर्मानुष्ठानवद्भिः पठितव्येषु शास्त्रेषु देहात्मवादतन्निराकरणनिबन्धनञ्च दृश्यते । मृत्युस्तु—अस्य प्रश्नस्योत्तरं यथावदात्मरूपविवेचनेनोच्यमानं परब्रह्मोपदेशः पर्यवस्येत् । वस्तुतः प्रत्यग्ब्रह्मणोरैक्यात् । तदुपदेशश्च उपदिश्यमानार्थस्यातिगहनतया विषयासक्त्यन्तरायेण पारं प्राप्तुमप्रभवते मध्ये पतिष्णवे न कर्तव्य इति प्रथमं शिष्यः परीक्षणीयः । विशिष्य च नचिकेता देहातिरिक्तात्मास्तित्वविचिकित्सया पृच्छन् किमविद्वदधिकारिकर्मानुष्ठानार्थं पारलौकिकर्मफलभोक्तृजीवस्वरूपज्ञानार्थीति तावन्मात्रं बोधनीयः ? किं वा मोक्षार्थजीवस्वरूपभूतब्रह्मविद्यार्थीति तावत्पर्यन्तं बोधनीय इत्यपि परीक्षणीय इति मत्वा 'देवैरत्रापि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः । अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मासृजैनम्' (क. १. १. २१) इत्युवाच । नचिकेताश्च 'देवैरत्रापि विचिकित्सितं किल त्वञ्च मृत्यो यन्न सुविज्ञेयमात्थ । वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित्' (क. १. १. २२) इति प्रत्युवाच । अनेन प्रतिवचनेन दुरधिगमो विषय इति मध्ये न विस्रक्ष्यत्ययमिति मृत्युर्निश्चित्य मुमुक्षुर्वा बुभुक्षुर्वाऽयमिति विवेचनार्थं मुमुक्षास्थैर्यावगत्यर्थञ्च प्रलोभयन्नुवाच 'शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् । भूमेर्महदायतनं वृणीष्व स्वयञ्च जीव शरदो यावदिच्छसि' (क. १. १. २३) इत्यारभ्य 'इमा

रामास्सरथास्सतूर्या न हीदृशा लम्भनीया मनुष्यैः। आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं माऽनुप्राक्षीः' (क. १. १. २५) इत्यन्तम्। यमेनैवं प्रलोभ्यमानोऽपि नचिकेतास्तु 'श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणाञ्जरयन्ति तेजः। अपि सर्वञ्जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते' (क. १. १. २६) इति मृत्युना दित्सितान् स्त्र्यादिविषयान् अस्थायित्वेऽपि सन्धिग्धत्वेन सर्वेन्द्रियतेजःक्षपयितृत्वेन च निन्दित्वा तेन दित्सिताश्चिरकालजीविकामपि ब्रह्मादिकीटान्तसकलप्राणिवर्तिनः सर्वस्यापि जीवितस्याल्पकालत्वेन निन्दित्वा 'यस्मिन्निदं विचिकित्सन्ति मृत्यो यत्साम्पराये महति ब्रूहि नस्तत्' (क. १. १. २९) इति प्राचीनप्रश्नमेव मृत्युना 'मरणं मानुप्राक्षीः' इति हेयतया उपन्यस्तमपि स्थिरीचकार।

यदैवमतितरां तैस्तैः कामैः प्रलोभ्यमानोऽपि न चचाल नचिकेताः, तदा मृत्युर्निश्रेयसमभ्युदयश्चेति पुरुषानुबन्धि फलद्वयं श्रेयःप्रेयःशब्दाभ्यां प्रविभज्य तदुभयं विविच्य धीरः श्रेयो वृणीते, मन्दस्तु प्रेय इत्याद्युक्त्वा नचिकेतसो वरं प्रशस्य 'विद्याभीप्सिनं नचिकेतसं मन्ये' (क. १. २. ४) इति कर्मफललिप्सया कर्मानुष्ठानोपयोगिभोक्त्रात्मज्ञानार्थी न भवति नचिकेताः, किन्तु मुमुक्षया ब्रह्मविद्यार्थी; देहातिरिक्तात्मप्रश्नोऽयं मुमुक्षुज्ञेयतदीयतात्त्विकरूपविषय एवेति निश्चित्य 'न त्वा कामा बहवोऽलोलुपन्त' (क. १. २. ४) इति विविधैः प्रलोभनैरच्छिन्नतयाऽवगतं तस्य मुमुक्षायास्स्थैर्यञ्चोद्घाट्य 'अविद्यायामन्तरे वर्तमानास्स्वयंधीराः पण्डितम्मन्यमानाः। दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः। न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनःपुनर्वशमापद्यते मे' (क. १. २. ५, ६) इति देहात्मैक्याध्यासरूपाविद्यामूलकमेव केचिद्देहात्मवादमवलम्ब्य गतानुगतिकाः परिभ्रमन्ति। तथाभूतपण्डितम्मन्यवचनश्रवणाज्जडचित्तस्य परलोकानुभाव्यफलसद्भावो न प्रतिभाति। तादृशो नास्तिकः पुनःपुनः मत्कार्यमाणयातनाविषयो भवतीति देहात्मवादनिराकरणेन तृतीयप्रश्नस्य यथाश्रुतस्योत्तरमुक्त्वा मुमुक्षवेऽस्मै आत्मयाथात्म्यजिज्ञासवे यथावदात्मस्वरूपं ब्रह्मात्मकमुपदेष्टव्यमिति देहातिरिक्तत्वेन प्रदर्शितस्यात्मनः 'श्रवणायापि बहुभिर्यो न लभ्यः' (क. १. २. ७) इत्यादिनाऽत्यन्तदुरवगाहत्वमुक्त्वा उवाच 'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति' (क. १. २. १२) इति। अत्र बुद्धिगुहायां प्रतिबिम्बभावेनाहितं गूढमनुप्रविष्टं गहनं प्राप्तं बुद्ध्युपाधिकविषयज्ञानसहस्रजटिलतया प्रच्छन्नतात्त्विकनिर्विशेषरूपं गह्वरेष्ठमाध्यासिकानन्तरागद्वेषसुख-

दुःखाद्यनर्थसङ्कटे स्थितं पुराणं एवमनादिकालप्रवृत्ताध्यासिकरूपं अत एव तात्विकरूपेण दुर्दर्शं तं संसारिणं अध्यात्मयोगाधिगमेन 'यच्छेद्वाङ्मनसी' (क. १. ३. १३) इत्यादिवक्ष्यमाणेन देवं मत्वा परदेवतारूपं परं ब्रह्म निश्चित्य हर्षशोकौ जहातीति जीवस्य ब्रह्मरूपत्वं तथात्वावगतेर्मोक्षफलत्वञ्चोपदिदेश ।

तदनन्तरं 'एतच्छ्रुत्वा संपरिगृह्य मर्त्यः प्रवृह्य धर्म्यमणुमेतमाप्य' (क. १. २. १३) इत्यादिना मयाऽत्यन्तं संक्षिप्योक्तमेतदेवाचार्यमुखाच्छ्रुत्वा श्रद्धया सम्यक्परिगृह्य प्रवृह्य देहादिभ्यो निष्कृष्य धर्मादनपेतं देहात्मवदधर्मत्वरहितं सूक्ष्ममेतं देहादिभ्यो निष्कृष्टमात्मानं स्वस्वरूपतया प्राप्य मोदते इत्युक्त्वा विशिष्यात्मविषये शुश्रूषाञ्चोत्पादयामास । एवमुत्पादितशुश्रूषो नचिकेताः प्रत्यगात्मनोऽसंसारिब्रह्मात्मकं स्वरूपं विविच्य ज्ञातुं पप्रच्छ 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्' (क. १. २. १४) इति। अत्र धर्माधर्मशब्दाभ्यां तत्फलं लक्ष्यते; तथा च धर्माधर्मफलाच्च परिदृश्यमानादस्मात्कार्यकारणप्रपञ्चाच्च भूतभविष्यदात्मकादनित्याच्चान्यद्वस्तु प्रत्यगात्मनस्स्वरूपभूतं पश्यसि; तथाभूतं वस्तु पश्यन्खलु त्वं 'जानाम्यहं शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत्' (क. १. २. १०) इति मन्त्रेण कर्मफललक्षणं निधिमनित्यं जानामि अनित्यैर्द्रव्यसाध्यैः कर्मभिर्नित्यं तन्न प्राप्यमिति कर्मभिर्न प्राप्यं नित्यञ्च तदवोचः । 'श्रवणायापि बहुभिर्यो न लभ्यश्शृण्वन्तोऽपि बहवो यन्न विद्युः' (क. १. २. ७) इति 'नैषा तर्केण मतिरापनेया प्रोक्ताऽन्येनैव सुज्ञानाय प्रेष्ठ' (क. १.२.९ ) इत्यन्तेन 'शृण्वन्तोऽपि न विद्युः' इति मनुष्येण सतोक्तं ज्ञातुमशक्यमित्यनन्येन मनुष्यादिभावं हित्वा तद्रूपतां प्राप्तेनाचार्येण प्रोक्ते तस्मिन्पुनःसंसारगतिर्नास्तीति तद्विषया मतिस्तर्केणापि प्राप्तुमशक्येति चानीदृशं परिदृश्यमानकार्यकारणात्मकप्रपञ्चविलक्षणमवोचः । 'तं दुर्दर्शम्' इति मन्त्रेण प्रत्यगात्मस्वरूपभूतं चावोचः तत्तथाभूतं वस्तु वदेति प्रश्नार्थः ।

आचार्येण 'श्रवणायापि' इत्यारभ्यात्मविषये वर्णितस्य सर्वस्याप्यनुवादः स्वस्योपदेशयोग्यत्वप्रकटनेन सम्यगस्मै उपदेष्टव्यमिति स्वस्मिन्मृत्योः प्रीत्युत्पादनाय । अग्निविद्याप्राप्त्यनन्तरं नचिकेतसा कृतं तदनुवादमाकर्ण्य प्रीतो मृत्युः नचिकेतसे वरान्तरमपि ददाविति प्रागुक्तं 'स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः । तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि भूयः । तवैव नाम्ना भविताऽयमग्निस्सृङ्काञ्चेमामनेकरूपां गृहाण' (क. १. १. १५, १६) इति । सृङ्कां रत्नमालाम् । 'त्वादृङ्नो

भूयान्नचिकेतः प्रष्टा' (क. १. २. ९) इति पुनरपि नचिकेतस्तुल्यशिष्यान्तरलाभप्रार्थनया योग्यशिष्यप्रियो मृत्युरित्यवसितम् ।

एवं पृष्टो मृत्युः 'तत्ते पदं संग्रहेण ब्रवीमि' (क. १. २. १५) इति पृष्टं मुक्तप्राप्यं प्रत्यगात्मनोऽसंसारिस्वरूपं वक्तव्यत्वेन प्रतिज्ञाय पुनरपि तस्य देहातिरिक्तत्वं 'न जायते म्रियते वा विपश्चित्' (क. १. २. १८) इत्यादिमन्त्राभ्यां स्थिरीकृत्य 'अणोरणीयान्' (क. १. २. २०) इति मन्त्रेण परिदृश्यमानशरीरान्तर्वर्तिगुहानिहितं जीवं महिमानमीशं कर्मनिमित्तवृद्धिक्षयरहिततया नित्यमेव महान्तं परमेश्वरं यः पश्यति, स वीतशोको भवतीति 'तं दुर्दर्शम्' (क. १. २. १२) इति मन्त्रोक्तमर्थमनुवदन्दुर्दर्शस्य केनोपायेन दर्शनमित्याकांक्षायां 'अक्रतुः' इत्यनेन निष्कामत्वं 'धातुप्रसादात्' इत्यनेन शरीरधारणकारणमनःप्रभृतीनां प्रसादं च तदुपायमप्युपदिदेश । मध्येऽपि 'यदेवेह तदमुत्र यदमुत्र तदन्विह । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' (क. २. १. १०) इत्यादिप्रदेशेषु प्रत्यग्ब्रह्मैक्यं स्फुटीचकार ।

न च वाच्यम्—इह देहे विद्यमानस्यामुत्रादित्यमण्डले ब्रह्मलोकस्थाने वा विद्यमानस्य परमेश्वरस्यैव नानात्वं निषिध्यते, न तु देहे विद्यमानस्य जीवस्यादित्यमण्डलादौ सतः परमेश्वरस्य भेदो निषिध्यते—इति । स्थानभेदेन परमेश्वरभेदप्रसक्त्यभावात् । अंगुष्ठमन्त्रेण जीवब्रह्मैक्यप्रतिपादनानन्तरं विरुद्धधर्मवतोस्तयोः कथमैक्यं संभवतीत्याशङ्कायां 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान् पृथक् पश्यन् तानेवानुविधावति' (क. २. १. १४) इति मन्त्रेण जीवे ब्रह्मणि च पृथग्व्यवस्थिता धर्मा अभेदविरोधिनः सन्तीति पश्यतस्तथैव पृथग्धर्मवत्तया संसार एवानुवर्तत इति दोषमुक्त्वा 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति । एवं मुनेर्विजानत आत्मा भवति गौतम' (क. २. १. १५) इति मन्त्रेण शुद्धयोरैक्यमिति तयोरैक्यमुपपादयामास । अन्ते च 'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये सन्निविष्टः । तं स्वाच्छरीरात् प्रवृहेन्मुञ्जादिवेषीकां धैर्येण । तं विद्याच्छुक्रममृतम्' (क. २. ३. १७) इति मन्त्रेण 'अंगुष्ठमात्र' इत्यादिनाऽनूदितं जीवं शरीरान्निष्कृष्य शुक्रं स्थूलसूक्ष्मशरीरद्वयान्निष्कर्षेण शुद्धं विरुद्धधर्मरहितं तममृतं ब्रह्म विद्यादिति प्रत्यग्ब्रह्मैक्यं सोपपादनमुपसञ्जहार । 'येयं प्रेते' इति जीवस्य देहातिरिक्तत्वप्रश्नेन ब्रह्मविद्योपक्रमोऽप्यैक्योपपादनार्थं शुद्धत्वसम्पादनायेत्युपनिषदा दर्शितम् ।

इत्थं नचिकेतःप्रश्नोपक्रमा मृत्युनाचिकेतस्संवादरूपेयमुपनिषदासमाप्तेः प्रत्यग्ब्रह्मैक्यपरैव लक्ष्यते। एवमद्वैतप्रकरणेऽस्मिन् कः स्वतन्त्रस्य प्रधानस्य ज्ञेयत्ववर्णनशङ्कावकाशः? यदीदं प्रकरणं भिन्नात्मविषयमिति शङ्कास्पदं स्यात्, तदा जीवेश्वरभेदज्ञानमिव प्रधानपुरुषभेदज्ञानमपि मोक्षसाधनमिति तदर्थं प्रधानस्य ज्ञेयत्वं 'अशब्दम्' इति मन्त्रेण वर्ण्यत इति शंक्येतापि, न त्विदं शङ्कास्पदम्; प्रश्नच्छायया प्रतिवचनसन्दर्भेण च प्रकरणस्याभेदपरतायाः प्रतिष्ठितत्वात्। तथा हि 'येयं प्रेते' इति प्रश्नस्तावत् प्रश्नवाक्यस्य 'मरणं माऽनुप्राक्षीः' इति प्रश्नप्रतिषेधस्य 'न साम्पराये' इति प्रश्नोत्तरस्य च पर्यालोचनया जीवविषय इति निर्विचिकित्समवगम्यते। 'अन्यत्र धर्मात्' इति प्रश्नस्तु प्रश्नवाक्यस्य ब्रह्मनिरूपणपरतदुत्तरसन्दर्भस्य च पर्यालोचनया ब्रह्मविषय इति। न चायं जीवविषयप्रश्नादन्यःस्वतन्त्र इति शक्यं वक्तुम्; वरत्रयोपक्रमविरोधात्। 'वरन्तवेहाद्य ददामि भूयः' इतिवत् पुनरत्र वरदानान्तराश्रवणाच्च। किन्तु विशेषजिज्ञासया जीवविषय एव प्रश्नः पुनरनुकृष्ट इति वक्तव्यः। ततश्च ब्रह्मविषयत्वेनावधार्यमाणप्रश्नस्य जीवो विषय इति सिद्धौ प्रश्नसामर्थ्यादेव जीवब्रह्माभेदतात्पर्यं सिध्यति।

एवं प्रश्नसामर्थ्येन जीवब्रह्माभेदतात्पर्याविष्करणं वेदच्छायानुकारिणि धर्मशास्त्रेऽपि याज्ञवल्कीये दृश्यते। तत्र हि प्रायश्चित्तकाण्डे 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति परमेश्वरज्ञानस्य सकलपापप्रायश्चित्तत्वोपदेशप्रसङ्गात् सकलजगत्स्रष्टृत्वादिरूपं परमेश्वरस्य महिमानमुपवर्ण्य ततः कर्मविपाकप्रतुष्टूषया 'यद्येवं स कथं ब्रह्म पापयोनिषु जायते' इति प्रश्नोऽवतारितः। तत्र 'कथं पापयोनिषु जायेत' इत्युक्त्या जीवविषयत्वेनावगम्यमानस्य प्रश्नस्य स इति प्रकृतपरमेश्वरवाचिना सर्वनाम्ना प्राग्वर्णितनिरतिशयस्वातन्त्र्यरूपतदीयमहिमपरामर्शिना 'यद्येवम्' इति वचनेन ब्रह्मविषयतामानीयाभेदतात्पर्यमाविष्कृतमिति विशेषः। एवमत्रोपक्रमगतवरत्रयप्रदानरूपाख्यायिकाकल्पनं ब्रह्मविषयप्रश्नस्य प्राचीनजीवविषयप्रश्नानन्यत्वापादनेन जीवब्रह्माभेदतात्पर्यप्रत्यायनार्थतायामेव दृष्टार्थं भवति। इत्थमेव हि विद्यासन्निधिपाठितानामाख्यायिकानां विद्याप्रतिपत्त्यर्थत्वं पारिप्लवाधिकरणे वक्ष्यमाणमुपपादनीयम्। एवं तावत् प्रश्नच्छायया जीवब्रह्माभेदपरं प्रकरणमिति सिद्धम्। प्रतिवचनसन्दर्भगतोपक्रमोपसंहारमध्यपरामर्शैस्तस्य तत्परत्वं दर्शितमधस्तात्।

ननु प्रतिवचनमध्ये जीवब्रह्मभेदप्रत्यायकोऽपि 'ऋतं पिबन्तौ' इति मन्त्र आम्नातः? सत्यम्। स तु रथसारथ्यादिकल्पनया प्राप्यत्वेन वक्ष्यमाणस्य ब्रह्मणः तदनन्तरं 'अत्र ब्रह्म समश्नुते' इति अत्रैव प्राप्यत्वेन विशेषणात् तन्निर्वाहाय प्राप्यस्य प्राप्तृसन्निकर्षापेक्षायां प्राप्तुर्जीवस्य प्राप्यपारमार्थिकरूपत्वेन शरीरगुहायामेवं नित्यसन्निहितं तस्यासंसारिस्वरूपमिति प्रदर्शयितुं स मन्त्र इति व्यवस्थापितं गुहाऽधिकरणे। प्राप्तृप्राप्य-भेदस्तु कल्पितप्राप्तृरूपापेक्षः। मोक्षशास्त्रेषु तद्व्यपदेशश्च ताद्रूप्यप्राप्तिपरः, न तु ग्रामादिप्राप्तिवद्भेदसापेक्ष इति व्यवस्थापितमानन्दमयाधिकरणे। अतः प्राप्तृप्राप्यभावव्यपदेशादपि न जीवब्रह्मभेदासिद्धिप्रत्याशा। तस्माद-द्वितीयब्रह्मपरप्रश्नप्रतिवचनसन्दर्भविरोधादद्वितीयब्रह्मप्राप्त्युपायोपन्यास इव प्रधानस्य ज्ञेयत्वेन उपन्यासो न संगच्छते।

सूत्रस्यायमर्थः—त्रयाणामग्निजीवपरमात्मनामेव एवं वक्तव्यत्वेन, ज्ञेयत्वेन च उपन्यासः। तेषां त्रयाणामेव च प्रश्नः। अतो जीवस्य मुक्तिप्राप्यपारमार्थिकरूपतया परमात्मनि पृष्टे 'तत्ते पदं संग्रहेण ब्रवीमि' इति परमात्मनो वक्तव्यत्वेन प्रतिज्ञया तदनुबन्धित्वेन तत्प्राप्त्युपायो बहुधा परमात्मनो दुरधिगमत्वोक्त्या तदवगत्युपायश्च यथाऽर्थात्प्रतिज्ञातो भवति ब्रह्मविचारप्रतिज्ञयेव साधनादिविचारः, न तथा स्वतन्त्रस्य सांख्या-भिमतस्य प्रधानस्य ज्ञेयत्वमर्थात्प्रतिज्ञातं भवतीति 'अशब्दम्' इति मन्त्रस्य तत्परत्वकल्पनमयुक्तमिति। 'त्रया-णामेव' इत्येवकारः प्रधानव्यावृत्त्यर्थः। चकारः परमात्मानुबन्धतत्प्राप्तितदवगत्युपायसमुच्चयार्थः। द्वितीय-श्चकारः प्रतिवचनसन्दर्भवत्प्रश्नोऽपि पर्यालोच्यमानः शङ्कितपूर्वपक्षनिरासमर्थस्वतन्त्रो हेतुः, न तु त्रयाणामे-वोपन्यास इति हेतोः साधको हेतुरिति ज्ञापनाय हेतुद्वयसमुच्चयार्थः। १. ४. ६।

सांख्याभिमतमहत्तत्त्वपरप्रत्यभिज्ञामात्रमवलम्ब्याव्यक्तं प्रधानमिति मन्दशङ्कायां 'ज्ञेयत्वावचनात्' इत्युक्तम्। तामेव च प्रत्यभिज्ञामालम्ब्य 'महतः परं ध्रुवम्' इत्यत्र ज्ञेयत्ववचनमप्यस्तीति शङ्कायां सविशेषं प्रदर्श्य तन्नास्तीति उपपादितम्। इदानीं यां प्रत्यभिज्ञामवलम्ब्यैव शङ्काद्वयं प्रसक्तं साऽपि असिद्धेत्याह—

**महद्वच्च। ७।**

उभयत्रापि महच्छब्दः सांख्याभिमततत्त्वविशेषपर इति तावदयुक्तम्; 'महान्तं विभुमात्मानम्' (क. २. १. ४) इत्यादिवैदिकप्रसिद्धिविरोधेन तस्य तत्र सांख्यकल्पिताया रूढेस्त्याज्यत्वात्। तद्वदेवाव्यक्तपदस्य

प्रधाने रूढिरपि त्याज्या; वैदिकेन प्रकरणादिना तस्य शरीरपरत्वावधारणात्, 'महतः परं प्रधानं निचाय्यम्' इत्येतदपि त्याज्यम्; प्रकरणस्याद्वैतपरत्वावसायादिति सूत्रार्थः। चकारेण 'अव्यक्तात् पुरुषः परः' इति श्रुतपुरुषवच्चेति समुच्चीयते। तस्यापि हि पुरुषशब्दस्य मोक्षार्थं प्रधानविविक्तत्वेन ज्ञेय इति सांख्यभिमते पुरुषे वृत्तिस्त्याज्या; तस्य प्रकरणेन मोक्षार्थं प्रत्यगभिन्नत्वेन ज्ञातव्ये निर्विशेषे परमात्मनि वृत्तेराश्रयणीयत्वात्। तस्मादव्यक्तशब्दश्शरीरपरो न प्रधानपर इति सिद्धम्। १. ४. ७।

इत्यानुमानिकाधिकरणम्। १।

(२ अधिकरणम्)

**चमसवदविशेषात्। ८।**

श्वेताश्वतरशाखिनस्समामनन्ति—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजास्सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः' (श्वे. ४. ५) इति। अयं मन्त्रः किं सांख्याभिमतस्वतन्त्रमूलप्रकृतिपरः, उत तेजोऽबन्नलक्षणावान्तरप्रकृतिपर इति संशये—

**पूर्वपक्षः**—न जायत इत्यजेति मूलप्रकृतौ युज्यते, न त्ववान्तरप्रकृतौ। न च— च्छागावाचकस्याजाशब्दस्यावान्तरप्रकृतौ गौणी वृत्तिः स्यादिति वाच्यम्। मुख्ययोगवृत्तिसम्भवे जघन्यवृत्त्ययोगात्। 'एकाम्' इत्यपि मूलप्रकृतौ युज्यते, न तु तेजोऽबन्नेषु बहुषु। लोहितशुक्लकृष्णशब्दैस्तु कुसुम्भसलिलान्धकारगतरञ्जकत्वप्रसन्नत्वावारकत्वगुणयोगाद्रजस्सत्वतमोगुणात्मिका मूलप्रकृतिर्लक्षयितुं शक्यते। गुणवाचिनां लोहितादिशब्दानां तेजोऽबन्नेषु द्रव्येष्वपि लक्षणैव हि गतिः। 'सृजमानाम्' इत्युच्यमानं स्वातन्त्र्येण सृष्टिकर्तृत्वं तु सांख्याभिमतायां मूलप्रकृतावेव युज्यते। उत्तरार्द्धार्थोऽपि तस्यामेव सङ्गच्छते। 'एकोऽनुशेते, अन्यो जहाति' इत्यात्मभेदेन सांख्यमतप्रत्यभिज्ञानात्; औपनिषदैरैकात्म्यस्याभ्युपगतत्वात्। न ह्यत्र पूर्वाधिकरण इवाद्वैतप्रकरणतामापाद्य वा स्वतन्त्रकारणत्वंनोच्यत इति वा न सांख्यमतप्रत्यभिज्ञेति वक्तुं शक्यते। एतेन—अस्य मन्त्रस्य मूलप्रकृतिरर्थश्चेदौपनिषदाभिमता परमेश्वराधीनाऽर्थोऽस्तु न तु सांख्याभिमता स्वतन्त्रेत्यपि शङ्का— निरस्ता; आत्मभेदाभिधानेन स्वातन्त्र्याभिधानेन च सांख्यमतप्रत्यभिज्ञानात्। तस्यां 'एकाम्'

इत्यस्यायोगाच्च, बन्धमुक्तिव्यवस्थार्थं प्रतिजीवमविद्याभेदाभ्युपगमावश्यम्भावात्, 'जहाति' इति त्यागोक्त्ययोगाच्च; मुक्तिदशायां तस्या निरवशेषोच्छेदाभ्युपगमात्, अनुवर्तमानत्व एव त्यागोक्तिसाङ्गत्यात्। तस्मात् सांख्याभिमतस्वतन्त्रमूलप्रकृतिरेवास्य मन्त्रस्यार्थ इति एवं प्राप्ते—

**राद्धान्तः**—अस्य मन्त्रस्य स्वरसतस्तावदेतावानर्थः प्रतीयते—काश्चिच्छागां त्रिवर्णां सरूपबहुबर्करामेकश्छागः प्रीयमाणोऽनुवर्तते, अन्यस्तामुपभुक्तां त्यजति—इति। लोके सम्भवन्नप्ययमर्थो वेदे विशिष्य चाध्यात्मप्रकरणे न निबन्धमर्हतीत्याध्यात्मिके क्वचिदर्थे योजनं कार्यम्। स्वमनीषिकया च तत्कर्तुं न शक्यते; विशेषहेत्वभावाच्चमसवत्। यथा हि 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' (बृ. २. २. ३) इति मन्त्रे प्रसिद्धस्य चमसस्योर्ध्वबिलस्य तिर्यग्बुध्नस्य ग्रहणासम्भवे सति 'अनाकाशे कोऽयं गलितहरिणःशीतकिरणः' इत्यादिव्यतिरेकानुप्राणितातिशयोक्त्युदाहरणकाव्यवचने प्रसिद्धचन्द्रग्रहणासम्भवे सति कविविवक्षया मुखे चन्द्रत्वकल्पना क्रियत इति वदमुष्मिंश्चमसत्वकल्पना क्रियत इति निश्चेतुं न शक्यते; गिरिगुहागृहविशेषादीनां बहूनामर्वाग्बिलत्वोर्ध्वबुध्नत्वसम्भवात्। नन्वत्र सांख्याभिमतस्वतन्त्रप्रकृतिग्रहणे विशेषहेतुरुक्तः। को विशेषहेतुः? न तावत्स्रष्टृत्वम्; अन्येन प्रेर्यमाणस्यापि स्रष्टृत्वानपायात्। न ह्याधोरणेन प्रेर्यमाणो गजो गच्छन्नगच्छति। नाध्यात्मभेदः। न हि सोऽत्र प्रतिपाद्यते, किन्तु प्रसिद्धन्तमनूद्य बन्धमोक्षव्यवस्थितिः। अनूद्यमानश्च लोकप्रसिद्धो भेदः 'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दण्डेन वञ्चसि त्वञ्जातो भवसि विश्वतोमुखः' (श्वे. ४. ३) 'एको देवस्सर्वभूतेषु गूढः' (श्वे. ६. ११) इति पूर्वापरमन्त्रानुरोधेन काल्पनिकोऽङ्गीकर्तुं युक्तः। एतेनैक्यमपि व्याख्यातम्। तस्याप्यनूद्यमानस्य 'यो योनिं योनिमधितिष्ठत्येकः' (क. ४. ११) इत्यत्रत्यमन्त्रान्तरानुसारेण एकजातीयतारूपत्वसम्भवात्, 'चैत्रमैत्रावौषधं सेवमानौ स्थितौ तयोश्चैत्रस्तदद्यापि सेवते मैत्रस्तत् जहाति' इति व्यवहारदर्शनात्, ऐक्यस्य तेजोऽबन्नसङ्घातैक्यरूपत्वसम्भवाच्च। सांख्याभिमतप्रकृतावपि हि गुणत्रयसङ्घाताभिप्रायेणैवैक्यमुपपादनीयम्। १. ४. ८।

नन्वेवमिहान्यथासिद्ध्युपन्यासेन सांख्यतन्त्रप्रत्यभिज्ञाऽनादरे केन तर्हि विशेषावगतिरस्तु? न खलु 'अर्वाग्बिलश्चमसऊर्ध्वबुध्न इति इदन्तच्छिरः' इति चमसमन्त्र इवात्र व्याख्यानरूपो वाक्यशेषोऽस्ति। तदभावे च सांख्यस्मृतिप्रत्यभिज्ञादर एव युक्त इति शङ्कायामाह—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ।९।**

परमेश्वराधीना तेजःप्रमुखा तेजोऽबन्नलक्षणा जरायुजाण्डजस्वेदजोद्भिज्जचतुर्विधभूतग्रामप्रकृतिरियमजा प्रतिपत्तव्या । न तु गुणत्रयसङ्घातलक्षणा सांख्यतन्त्रसिद्धा स्वतन्त्रा प्रकृतिः । तथा हि एके शाखिनस्ताण्डिनः तेजोऽबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषां रोहितादिरूपाण्यामनन्ति 'यदग्नेरोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति । तान्येवेह तेजोऽबन्नानि रोहितादिशब्दसामान्यात्प्रत्यभिज्ञायन्ते । श्रुत्यन्तरप्रत्यभिज्ञैव च ग्राह्या; सर्वशाखाप्रत्ययं ब्रह्मेति स्थितेः, न तु स्मृतिप्रत्यभिज्ञा; बहिरङ्गत्वात् । एवञ्च रोहितादिशब्दानामपि सामञ्जस्यं भवति; गुणवत्सु गुणवाचकशब्दानां लक्षणायाः लोके वेदे च निरूढत्वात्, रञ्जकत्वादिभिः सत्वादिषु लक्षणाया विप्रकृष्टत्वात् । १. ४. ९

स्यादेतत्—तेजोऽबन्नात्मिकायां प्रकृतावजाशब्दस्य रूढिनिर्वाहिका नास्ति छागत्वजातिः । नापि योगनिर्वाहको जन्माभावः । न च तस्यां छागजातिकल्पनया गौणी वृत्तिस्स्यादिति वाच्यम्; प्रयोजनाभावेन कल्पनानुपपत्तेः । न हि शरीरादिषु रथत्वादिकल्पनप्रयोजनवदिह प्रकृतौ छागजातिकल्पनस्य किञ्चित्प्रयोजनमस्ति । 'चमसवत्स्यात्' इति चेत्, न । तस्यापि 'चमु भक्षणे' इति धातोर्निष्पन्नस्य भक्षणसाधने शिरसि योगवृत्त्युपपत्तेः । किंच चराचरात्मकसकलप्रपञ्चकारणभूतायाः सर्वेषां चेतनानां बहुविधपुरुषार्थोपयोगिन्यास्तेजोऽबन्नात्मिकायाः प्रकृतेः कतिपयप्रजोत्पादककतिपयचेतनाकांक्षितात्यल्पप्रयोजनोपयोगिच्छागत्वकल्पनमप्ययुक्तम् । कल्पनायां विवक्षितसाधर्म्यसत्वे यथाकथञ्चिद्वैधर्म्यं न दोषाय । अन्यथा शरीरादीनामपि रथत्वादिकल्पनानुपपत्तेः इति चेत्; सत्यम् । तथापि तत्र रूपकानङ्गीकारे रूप्यरूपकवाचिपदद्वयश्रवणं व्यर्थं स्यादिति तत्परिहाराय यथाकथञ्चित्सम्भावितसाधर्म्यमवलम्ब्य रूपकनिर्वाहः क्रियते । न चेह तथा रूप्यरूपकवाचिपदद्वयश्रवणमस्ति, केवलस्त्वजाशब्दो योगेन मूलप्रकृतौ वर्तयितुं शक्यः । योगाच्च मुख्यवृत्तिरूपाद्गौणी वृत्तिर्जघन्या । कृत्स्नश्चात्रैव मन्त्रे 'अजो ह्येको' 'अजोऽन्य' इति अजाशब्दयोर्योगः । तयोरपि गौणत्वकल्पनायामत्यन्तमेव प्रकृतिसम्बन्धविमुक्तस्य परब्रह्मस्वरूपतां प्राप्तस्य पुनश्छागासंसर्गयोग्यात्यन्ताविवेकप्राणिप्रथमोदाहरणच्छागत्वपरिकल्पनमयुक्तम् । 'अजोऽन्य' इत्यस्य औपनिषदाभिमतमुक्तपरत्वे च 'जहाति' इत्येतदयुक्तमित्याशङ्कायामाह—

**कल्पनोपदेशाच्च मध्वादिवदविरोधः । १० ।**

कल्पनोपदेशोऽयमजामन्त्रः । तत्र 'अजाम्' इति तेजोऽबन्नात्मिकायां प्रकृतौ छागत्वकल्पना । 'प्रजा' इति तत्कार्येषु छागापत्यत्वकल्पना । मुक्तौ विद्यया तदुच्छेदे मुच्यमानकर्तृकत्यागत्वकल्पना, मुक्तसंसारिणोरजत्वकल्पना च । कुतः कल्पनोपदेश इति अवसीयते ? 'द्वा सुपर्णा' (श्वे. ४. ६) इत्यग्रिममन्त्रे प्राग्दृष्टान्ततयोपात्ते चमसमन्त्रे च कल्पनोपदेशात् । 'द्वा सुपर्णा' इति मन्त्रे हि शरीरे वृक्षत्वकल्पना तदाश्रितयोर्जीवान्तःकरणयोः पक्षित्वकल्पना, कर्मफले वृक्षफलत्वकल्पना च दृश्यते । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम् । तस्यासते ऋषयस्सप्त तीरे वागष्टमी ब्रह्मणा संविदाना' (बृ. २. २. ३) इति चमसमन्त्रे च कण्ठादुपरिभागरूपे शिरसि चमसत्वकल्पना, तद्गते मुखविवरे बिलत्वकल्पना, तदूर्ध्वभागे मूर्द्धावयवे घटचमसपादपादिस्थूलमूलभागरूपबुध्नत्वकल्पना, तस्मिन्विसृमरतया स्थितेषु प्राणादिवायुषु यशस्त्वकल्पना, तस्मिन् परितस्स्थितेषु श्रोत्रादिष्विन्द्रियेषु ऋषित्वकल्पना च दृश्यते । न च—चमसादिशब्दानां शिरःप्रभृतिषु यथासम्भवं कथञ्चिद्योगो रूढिश्च कल्प्यतामिति—वाच्यम् । अग्रे 'इमावेव गौतमभरद्वाजौ' इत्यादिना श्रोत्रचक्षुर्घ्राणयुगलरसनानां सप्तानां गौतमभरद्वाजविश्वामित्रजमदग्निवसिष्ठकाश्यपात्रिरूपत्वेन वर्णयिष्यमाणतया 'तस्यासते ऋषयस्सप्त तीरे' इत्यत्र श्रोत्रादिषु ऋषित्वकल्पनानिश्चये सति ततः प्रागपि कल्पनोपदेश इति निश्चयात्, बिलबुध्नशब्दयोराकारसाम्येन मुखविवरे मूर्द्धनि च यशश्शब्दस्य विवरणक्रियासाम्येन प्राणवायुषु च गौणत्वं विना योगरूढ्योरसम्भवाच्च । तत्र 'द्वा सुपर्णा' इति मन्त्रे लोके सम्भवन्त्या रीत्या प्रतिपत्तिसौकर्यं विना न प्रयोजनान्तरमस्ति । तत्प्रयोजनमिहापि च समानम् । चमसमन्त्रे तु लोकविलक्षणया रीत्या विस्मयनीयया कौतुकमुत्पाद्य प्रतिपत्तिसौकर्यं प्रयोजनमिति विशेषः । प्रसिद्धो हि चमस ऊर्ध्वबिलस्तिर्यग्बुध्नश्च । तस्मिंश्च सोमरसो निधीयते, न तु यशः । सोमरसपूरितस्य तद्बिलस्य जलपूर्णस्य कूपस्येव तीरस्थानीयात्परितो वर्तमानादूर्ध्वभागाद्बहिरेव सप्तहोतृका ब्राह्मणा ऋत्विजा सह यां काञ्चन संविदं कुर्वाणाश्चासते, न तु तीरस्थानीये चमसावयवे । अनयोश्च मन्त्रयोर्विषयविषयिसामानाधिकरण्यं विनैव कल्पनादर्शनादजामन्त्रेऽपि तथैव युक्तम् ।

काव्येष्वपि विषयविषयिसामानाधिकरण्यं विना कल्पनादर्शनाच्च तच्छायापन्नत्वादप्ययं कल्पनोपदेशः । न हि रूपकोदाहरणेष्वित्रातिशयोक्त्युदाहरणेषु तत्सामानाधिकरण्यमस्ति, यथा—

'वापी कापि स्फुरति गगने तत्परं सूक्ष्मपद्या सोपानालीमधिगतवती काञ्चनीमैन्द्रनीली।
तस्यां शैलौ सुकृतिसुगमौ चन्दनच्छन्नदेशौ तत्रत्यानां सुलभममृतं सन्निधानात्सुधांशोः'

इति। यत्तूक्तं योगवृत्तिसम्भवे गौणीवृत्तिर्न कल्पनीयेति तद्विपरीतम्। प्रथमप्रतीतरूढिपूर्वक-गौणीवृत्तिस्वीकारसम्भवे रूढिपरित्यागेन योगपरिग्रहायोगात्। अत एव 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य' इति प्रैषे उद्गातृशब्दस्य बहुवचनान्तस्य बहुषु वृत्तौ वक्तव्यायां सुब्रह्मण्यसाधारणं योगं परित्यज्यान्तरङ्गप्रत्यासत्त्या सदःप्रवेशवत्सु त्रिषु रूढिपूर्विका लक्षणाऽङ्गीकृता।

मुक्तस्य छागत्वकल्पनं बहूपकारिण्याः प्रकृतेश्छागात्वकल्पनं च विरुद्धम्, इति चेत्; नास्त्ययं विरोधो मध्वादिवत्। आदित्यस्य हि त्रयीमयस्य देदीप्यमानदिव्यज्योतिर्मण्डलस्य मधुत्वं कल्प्यते। तद्वत् प्रहीणजातिकल्पनायां नास्ति विरोधः। छागः पुनश्छागया संसर्गयोग्यः मुक्तः प्रकृत्या न संसर्गयोग्य इत्ययमपि न विरोधः। रथः प्रापणीयदेशपर्यन्तं नीतस्तत्प्राप्त्युपायो भवति शरीरं तु न तथा; 'अत्र ब्रह्म समश्नुते' (बृ. ४.४,७) इति श्रुतेः, ब्रह्मलोकादिस्थानस्थितस्य परब्रह्मणो मुक्तप्राप्यत्वाङ्गीकारेऽपि ज्ञान-साधनतया मुक्त्युपायस्य वशीकृतेन्द्रियमनोबुध्याश्रयस्य शरीरस्य तावत्पर्यन्तं नयनाभावादिति विशेषे सत्यपि यथाकथञ्चित् प्राप्त्युपायत्वमात्रेण शरीरस्य रथत्वकल्पनादर्शनात्।

सूत्रे 'कल्पनोपदेशात्' इति प्रथमान्तं पदं 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' (पा. सू. ७.१.३९) इति सूत्रविहितेन प्रथमाविभक्तेः आदादेशेन लब्धरूपम्। कल्पनोपदेशोऽयमजामन्त्र इति तेन प्रतिज्ञा लभ्यते। तेनैव पञ्चम्यन्ततया पुनर्विवक्षितेन तत्र हेतुरुच्यते। स्वयमेव स्वस्मिन् हेतुर्भवितुं नार्हतीति सामर्थ्यादन्यस्मिन् कल्पनोपदेशे हेतूकर्तव्ये सन्निहितत्वात् 'द्वा सुपर्णा' इत्यग्रिमकल्पनोपदेशः प्राग्दृष्टान्तीकृततया बुद्धिस्थत्वात् 'अर्वाग्बिलः' इति कल्पनोपदेशश्च हेतुर्लभ्यते। चकारः काव्येषु कल्पना-दर्शनरूपहेत्वन्तरसमुच्चयार्थः। 'मध्वादि' इत्यादिशब्दो रथादिरूपकपरिग्रहार्थः। तस्मादजामन्त्रस्तेजोऽ-बन्नरूपावान्तरप्रकृतिपरः, न तु सांख्याभिमतस्वतन्त्रप्रधानपर इति सिद्धम्।

स्यादेतत्—स्वतन्त्रप्रकृतिपरो न भवतीति युक्तमेव, अवान्तरप्रकृतिपर इति न युक्तम्। यतोऽस्य मन्त्रस्य परमेश्वराधीनमूलप्रकृतिपरत्वमेव 'ज्ञाज्ञौ द्वावजावीशानीशावजा ह्येका भोक्तृभोगार्थयुक्ता' (श्वे. १.९)

'क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः' (श्वे. १.१०) 'छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति। तस्मान्मायी सृजते विश्वमेतदस्मिंश्चान्यो मायया सन्निरुद्धः। मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्। तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' (श्वे. ४.९,१०) 'स विश्वकृद्विश्वविदात्मयोनिः ज्ञःकालकालो गुणी सर्वविद्यः। प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः' (श्वे. ६.१६) इत्यादिपूर्वापरमन्त्रसन्दर्भपर्यालोचनया स्पष्टमेव प्रतीयते। शाखान्तरोक्तरोहितादिशब्दप्रत्यभिज्ञानानुरोधादपि पूर्वापरमन्त्रानुरोध एव युक्ततरः। सत्यम्। पूर्वापरमन्त्रपर्यालोचनायां मूलप्रकृतिपर एवायं मन्त्रः। तत्पर्यालोचनायां च नास्ति पूर्वपक्षावकाशः। तैत्तिरीयशाखायामपि अजामन्त्रस्य जगत्स्रष्टृपरमेश्वरप्रकरणपठितत्वात् स्फुटतरपूर्वापरमन्त्रनियमितपरमेश्वराधीनप्रकृतितात्पर्यकैतन्मन्त्रसरूपत्वाच्च नास्ति पूर्वपक्षावकाशः। तथाऽपि न्यायव्युत्पादनाय प्रकरणं करेण पिधाय कृत्वाचिन्तारूपेण न्यायबलादवान्तरप्रकृतिपरत्वनिर्णयार्थमिदमधिकरणम्। अत एव भाष्ये प्रकरणानुसारेणास्य मन्त्रस्य मूलप्रकृतिपरत्वपक्षमपि प्रदर्श्य कृत्वाचिन्तोद्घाटनं कृतमिति सर्वमनवद्यम्। १. ४. १०

इति चमसाधिकरणम्। २।

( ३ अधिकरणम् )

**न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ।११।**

बृहदारण्यके श्रूयते—'यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः। तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्' (बृ. ४. ४. १७) इति। अयं मन्त्रः सांख्याभिमतानि पञ्चविंशतितत्वानि 'पञ्च पञ्चजना' इति प्रतिपादयति, उत वाक्यशेषगतान् प्राणादीनिति सन्देहे **पूर्वपक्षः**—पञ्चशब्दद्वयेन पञ्चविंशतिसंख्यानिष्पत्तेः तया संख्यया संख्येयाकाङ्क्षिण्या सांख्यतन्त्रसिद्धान्येव तत्वान्युपसङ्ग्राह्याणि। तावन्त्येव हि तत्वानि सांख्यैः परिगण्यन्ते।

स्यादेतत्—कथमत्र पञ्चविंशतिसंख्यानिष्पत्तिः। यदि 'पञ्चपञ्च' इति पञ्चकद्वयमुच्यते तदाऽवयवद्वारेण समुदायलक्षणाश्रयणेऽपि दशसंख्यैव निष्पद्यते 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः' इत्यत्र यथा

द्वादशसंख्या । यदि तु वीप्सा, तदाऽपि पञ्चसंख्यानि पञ्चकानि ग्राह्याणीत्यत्र गमकाभावात् पञ्चविंशति-संख्या न निष्पद्यत एव । यथा 'दश दशैकैकश्चमसमनुप्रसर्पन्ति' इत्यत्रानुप्रसर्पणीयानां चमसानां दशसंख्य-त्वादनुप्रसर्पकाणां पुरुषाणां शतसंख्या निष्पद्यते । एवं 'यस्मिन् पञ्च पञ्चजना' इत्यत्राधिकरणानि यदि पञ्च स्युस्तदा प्रत्यधिकरणमाधेया जनाः पञ्चसंख्यावीप्सया लभ्यन्त इति तेषां पंचविंशतिसंख्या निष्पद्येत, न त्वत्राधिकरणपञ्चकश्रवणमस्ति । ननु पञ्चसंख्यतया प्रतिपन्नेष्वर्थेषु पुनः पञ्चसंख्याऽन्तरविशेषणोपादानात् पञ्चविंशतिसंख्या लभ्यत इति चेत्; किं प्रथमं पंचसंख्यया विशेषिता एवार्थाः पुनरपि पंचसंख्यया विशेष्यन्ते, उत तद्विशेषणीभूता पञ्चसंख्या ? न तावत् पंचसंख्या । विशेष्यं विहाय विशेषणयोरन्वयासम्भवात् । नापि तद्विशेषिताः; आकाङ्क्षाऽभावात् । रक्तपटन्यायेन उत्थापिताकाङ्क्षा स्यात् इति चेत्; न । श्रुतविशेषण-सजातीये तद्विरोधिनि चाकांक्षोत्थापनासम्भवात् । न हि 'रक्तो रक्तः पटो भवति' इत्यत्र 'मृण्मयो हिरण्मयो घटो भवति' इत्यत्र वा भवत्याकांक्षा । ननु 'पंच पंचपूल्य' इत्यत्र पंचविंशतिपूलाः प्रतीयन्ते । नेति ब्रूमः । तत्र समस्ता पंचसंख्यैव पूलानां विशेषणं व्यस्ता तु तत्समाहाराणाम् । न चात्र तथा समाहारार्थःसमासोऽ-स्ति 'पंचजन्य' इति स्त्रीलिङ्गनिर्देशाभावादिति चेत्;

उच्यते—अनेकावान्तरसंख्यानिर्देशे सति महासंख्यालाभो यथा 'पञ्च सप्त च वर्षाणि' इत्यत्रा-वयवद्वारेण समुदायलक्षणया, यथा 'दशदशैकैकम्' इत्यत्र वीप्सया तथैव तस्मिन्सत्येकया संख्यया विशेषितानामर्थानां, संख्याया एव वा सजातीयेन विजातीयेन वा संख्यान्तरेण विशेषणात्संवर्धनेन महासंख्यालाभोऽपि वैदिकेषु लौकिकेषु च प्रयोगेषु प्रसिद्धो नापह्नोतुं शक्यते । दृश्यंते हि 'वयसो वयसः सप्तदशसप्तदशानि ददाति' 'पञ्च पञ्चाशतस्त्रिवृतः संवत्सरा' इत्यादयः प्रयोगाः । प्रथमान्वितविशेषण-सजातीयस्य तद्विरोधिनो वा यत्रैतेषूदाहरणेष्विव विवक्षितमहासंख्यालाभार्थत्वेन पौनरुक्त्यस्य विरोधस्य वा परिहारो न संभवति तत्रैव तदनाकांक्षा विशेषणयोरन्वयोऽपि साक्षादेव न संभवति । विशिष्टान्वयिनो विशेषणस्य विशेष्यान्वयानुपपत्तौ विशेषणे संक्रमस्तु 'दध्ना जुहोति' इत्यादौ सुप्रसिद्ध एव । यदि च एवमप्यपरितोषः, तदा 'पञ्च पञ्चपूल्य' इतिवदिहापि समाहारविवक्षाऽस्तु । तद्विवक्षायामपि स्त्रीलिङ्गाभावस्तु छान्दसत्वेनोपपादनीयः । 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' (पा. सू. १. २. २७) इत्यत्र 'स नपुंसकम्'

(पा. सू. २. ४. १७) इति नपुंसकलिङ्गाभाववच्छन्दोवद्भावेन। तस्मादिह प्रतिपन्नया पञ्चविंशति-संख्ययोपसंग्रहात् 'पञ्च पञ्चजनाः' इत्येतत्सांख्याभिमतानि तत्वानि प्रतिपादयतीति युक्तम्।

एतेन—'पञ्च पञ्चजना' इत्येतत्कथं सांख्यतत्वानि प्रतिपादयेत्, न हि तेषु पञ्चशःपञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तराळे पञ्च पञ्च संख्या निविशेरन्। एकैकधर्मावच्छेदनिबन्धनो हि महासंख्यायामवान्तरसंख्यानिवेशः यथा 'त्रयस्त्रिंशद्देवता' इति महासंख्यायामष्टौ वसव इत्याद्यवान्तरसंख्या-निवेश इति—निरस्तम्; 'पंच सप्त च वर्षाणि' 'पंच पंचाशतस्त्रिवृतः संवत्सरा' इत्यादिषु विनाऽप्येकै-कमवच्छेदकं विवक्षितमहासंख्यालाभोपायतामात्रेण यत्किंचिदवान्तरसंख्यानिवेशदर्शनात्। न हि द्वादश-वार्षिक्यामनावृष्टौ पञ्चसु सप्तसु च वर्षेषु, विश्वसृजामयने पञ्चाशदुत्तरद्विशतसंख्यानां त्रिवृतां संवत्सराणां मध्ये पञ्चाशति पञ्चाशति संवत्सरेषु चैकैको धर्मोऽस्ति। इह तु भूतानि तन्मात्राणि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि अवशिष्टानि प्रकृतिपुरुषमहदहङ्कारमनांसि च पञ्चपञ्चेति पञ्चशःपञ्चशस्साधारणधर्मोऽपि लभ्यते।

ननु यदि 'पञ्चपञ्चजना' इत्येतावदेव सांख्यतन्त्रसिद्धानि सर्वाणि तत्वानि प्रतिपादयेत्तर्ह्यात्मा-काशाभ्यां संख्याऽतिरेकः स्यात्। न स्यात्। सेश्वरसांख्यपक्षेऽधिकरणत्वेन निर्दिष्टस्यात्मन ईश्वरत्व-सम्भवात्। पक्षान्तरेऽपि तस्य 'स्वे महिम्नि प्रतिष्ठित' इतिवदाधेयत्वेनापि निर्देशसम्भवात्। आकाश-शब्दोक्तस्य भूताकाशस्य प्रधानस्य वा स्वेतरसकलवस्त्वाधारतया विशिष्टत्वादादरेण पुनः कीर्तनसम्भवात् 'ग्रामीणाः सर्वेऽपि त्वां द्रष्टुमागताः, साक्षाद्वसिष्ठकल्पश्चैत्रोऽपि समागतः' इति यथा। यद्वा गुणसङ्घात-रूपायां प्रकृतौ सत्वादिगुणानां प्रत्येकपरिगणनया विनैवात्मानं भूताकाशञ्च पञ्चविंशतिसंख्या सम्पादनीया। नन्वेवं कथञ्चिल्लब्धयाऽपि पञ्चविंशतिसंख्यया सांख्यतन्त्रोपसंग्रहः पक्षद्वयेऽपि क्लिष्ट एव। कस्ततोऽप्यक्लिष्टः 'पञ्चपञ्चजना' इत्यस्यार्थो वर्णनीयः? न हि पञ्चजनशब्दस्य मनुष्यरूढिं परिगृह्य पञ्च मनुष्या यस्मिन् प्रतिष्ठिता इत्यर्थो वर्णयितुं शक्यते; आत्मनस्तावता कस्यचिदतिशयस्यालाभेन वाक्यस्य निस्तात्पर्यत्व-प्रसङ्गात्। अतोऽध्यात्मप्रकरणे छागाया अनन्वयादजामन्त्रस्याजाशब्दरूढिविषयादन्यस्मिन्निवास्यापि मन्त्रस्य पंचजनशब्दरूढिविषयादन्यस्मिन्नर्थे पर्यवसाने वक्तव्ये तद्वदिह शाखान्तरान्वेषणेन पूर्वापरपर्यालोचनया वा

लभ्यस्य कस्यचिदर्थस्याभावात् 'पंचपंच' इत्यस्य पंचविंशतिसंख्यापरतां जनशब्दस्य जायमानाजायमानेषु छत्रिन्यायेन लक्षणां चाङ्गीकृत्य सांख्यतन्त्रतत्वान्येव ग्राह्याणि ।

ननु वाक्यशेषे 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' (बृ. ४. ४. १८) इति प्राणादयः पञ्च वर्ण्यन्ते । ते पञ्चजनशब्दलक्ष्या भवितुमर्हन्ति; तद्वाच्यपुरुष-सम्बन्धित्वात्, 'ते वा एते पञ्च ब्रह्मपुरुषाः' (छा. ३. १३. ६) इति पुरुषशब्दस्य तत्र प्रयोगदर्शनाच्च । यद्वा वाक्यशेषदर्शनादाज्यशब्दस्यान्यत्र रूढस्यापि स्तोत्रविशेषेष्विव प्राणादिषु पञ्चजनशब्दस्य शक्तिरस्तु । एवं वाक्यशेषाम्नातप्राणादिपरत्वकल्पनायां न कोऽपि क्लेश इति चेत्; उच्यते । 'यस्मिन् पञ्च पञ्चजनाः' इत्येतदनन्तरमुत्तरस्मिन् मन्त्रे माध्यन्दिनानां प्राणादयः पञ्च पठिताः सन्ति, न तु काण्वानां । ते हि 'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः । ते निचिक्युर्ब्रह्म पुराणमग्र्यम्' (बृ. ४. ४. १८) इत्यन्नं विनैव पठन्ति । न च तेषां 'यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' (बृ. ४. ४. १६) इति पूर्वमन्त्रपठितेन ज्योतिषा पञ्चसंख्यानिर्वाहः; काण्वानामपि पूर्वमन्त्रपाठसत्वेन तेषां ज्योतिषा षट्संख्याप्रसङ्गात् । न हि समाने ज्योतिराम्नानं तत्केषाञ्चिद्गृह्यते केषाञ्चिन्नेति वैषम्यं सम्भवति । तथाऽपि केषांचिदन्नेन संख्यापूरणं केषांचिज्ज्योतिषेति विरोधोऽपरिहार्यः । न च विकल्पितः; वस्तुनि तदयोगात् । नचेदमुपासनम् । तस्मादिह गत्यन्तरा-भावात् पंचविंशतिसंख्यया उक्तप्रकारेण निष्पादितया सांख्यतत्वोपसंग्रह एव कार्यः इति ।

एवं प्राप्ते **राद्धान्तः**—उक्तप्रकारेण निष्पादितया पंचविंशतिसंख्यया तावतां संख्येयानामुप-संग्रहादपि न सांख्यतन्त्रसिद्धानां तत्वानां श्रुतिमूलप्रत्याशा कर्त्तव्या । नानाभावादतिरेकाच्च । नानाभावः पञ्चशः पञ्चशः क्रोडीकारकैकधर्माभावेन सर्वेषां पृथग्भावः । अतिरेक आत्माकाशाभ्यां संख्याऽतिरेकः । तदुभयमपि पूर्वपक्षिणा यद्यपि क्लेशेन समाहितम्, तथापि पंचविंशतिसंख्यानिर्वाहार्थं नैवं सांख्यतत्वान्युप-संगृह्य क्लेशः समाश्रयणीयः; 'इन्द्रियेभ्यः परा ह्यर्थाः' इति शाखान्तरे पुरुषावरत्वेन वर्णितैरिन्द्रियादिभिरपि तन्निर्वाहसम्भवात् । तत्र हि ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि भूतानि तन्मात्राणि ततोऽवशिष्टानि मनोबुद्धि-भोक्तृस्थूलसूक्ष्मशरीराणि च पंचपंचेत्यक्लेशेनैव पंचशः पंचशो विभागार्हाः पंचविंशतिरर्था वर्णिताः ।

तेषामिहोपसंग्रहे च नास्त्यतिरेकाशङ्का । तेभ्यः परस्य पुरुषस्येहात्मशब्देन निर्देशः, तेष्वगृहीतस्याव्याकृतस्याकाशशब्देनेत्युपपत्तेः, तत्राव्यक्तशब्दस्याजहल्लक्षणया स्थूलसूक्ष्मशरीरद्वयमात्रपरत्वोपपत्तेश्च । एवमन्तरङ्गशाखान्तरदृष्टसंख्योपसंग्रह एव युक्तः, न तु बहिरङ्गाप्रामाणिकस्मृतिदृष्टतत्वोपसंग्रहः । एवं च संख्येयानामात्मनि प्रतिष्ठितत्ववर्णनमपि सङ्गच्छते । न हि सांख्यतत्वानामात्मनि प्रतिष्ठितत्वमस्ति; प्रधानस्य स्वतन्त्रत्वादन्येषां प्रधानाश्रितत्वात् ।

अपिच देवाः पितरो गन्धर्वा दैत्या दानवा राक्षसा भूताः प्रेताः पिशाचाश्चत्वारो वर्णाः स्वर्ण्यम्बष्ठोग्रनिषाददौष्यन्तपारशवाष्षडनुलोमाः सूतमागधायोगवक्षत्तृवैदेहकचण्डालाः षट् प्रतिलोमाश्चेति पंचविंशतिर्जनाः संख्येया इत्यपि निर्वाहः संभवति । एवंच जनशब्दोऽपि सङ्गच्छते । तिर्यक्स्थावरातिरिक्तेषु वागिन्द्रियपाटववत्सु देवादिमनुष्यपर्यन्तेष्वेव हि जनशब्दः प्रयुज्यते । अपिचात्र 'पंचपंच' इति पञ्चविंशतिसंख्येति कुतो निर्धार्यते येन तदुपसंग्राह्याणि सांख्यतत्वानीति शंक्येतापि । तस्य पञ्चकद्वयपरतया दशसंख्याऽस्तु । तत्संख्येयाः 'ते वा एते पंचान्ये पंचान्ये दश सन्त' (छा. ४. ३. ८) इति संवर्गविद्यायामुक्तानि वायौ लयवन्त्यग्निसूर्यचन्द्रांभांसि वायुना सह पंच, प्राणे लयवन्ति वाक्चक्षुः श्रोत्रमनांसि प्राणेन सह पंचेत्येवं दश पदार्थास्सन्तु ।

अथवा तस्य वीप्साऽर्थतया प्रतिपुरुषं पंचात्मनाऽवस्थिताः प्राणवृत्तयस्तत्संख्येयाःसन्तु 'न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (क. २. ५. ५) इति श्रुत्यन्तरे प्राणापानशब्दोपलक्षितानां सर्वपुरुषसम्बधिनीनां सर्वासां प्राणवृत्तीनां ब्रह्माश्रितत्वश्रवणात् । यद्वा एकस्य पंचशब्दस्य जनसंख्यापरतयाऽन्यस्यैकैकजनगतपञ्चात्मकत्वपरतया च शिरःपक्षाद्यवयवैः प्रत्येकं पंचात्मानो ये पंचसंख्या जना अन्नमयादयस्ते संख्येयाःसन्तु । तेषां पंचानां सर्वप्रतिष्ठारूपपुच्छब्रह्माश्रितत्वादेकैकस्मिन्नप्यन्नमयादौ पाशवदवयवगतबहुत्वोपचारसम्भवात् । सांख्यतत्वग्रहणेऽपि अहङ्कारादीनामान्तर्गणिकभेदसत्वेनाहङ्कारत्वादिगतैक्योपचारकल्पनावश्यम्भावात् । आनन्दमयपुच्छस्य ब्रह्माश्रितत्वाभावेन पंचात्मकत्वविशिष्टानां ब्रह्माश्रितत्वासम्भवेऽपि चित्रगुन्यायेन तदुपलक्षितानां तत्सम्भवात् । एवं च 'चमसवदविशेषात्' इति प्रागुक्तस्यैव न्यायस्य विषयेऽस्मिन्मन्त्रे कःसांख्यतत्वग्रहणप्रत्याशावकाशः? एतदभिप्रायेणैवोक्तं भाष्ये 'कथंच

संख्यामात्रश्रवणे सति अश्रुताना पंचविंशतेस्तत्वानामुपसंग्रहः प्रतीयेत ? जनशब्दस्य तत्वेष्वरूढत्वादर्थान्तरोप-संग्रहेऽपि संख्योपपत्तेः' इति । तत्र कथं तत्वानामुपसंग्रहः ? शाखान्तरोक्तानामिन्द्रियादीनां जनिमतां देवादि-प्रतिलोमान्तानां जनशब्दविषयत्वेन प्रसिद्धानां वा संख्येयत्वेऽपि पंचविंशतिसंख्योपपत्तेः । कथंच पंचविंशते-रुपसंग्रहः ? 'पंचपंच' इत्यस्य पंचकद्वयपरतया वाय्वादिप्राणादिविषयदशसंख्योपपत्तेः । तस्य वीप्सार्थतया प्रतिपुरुषं पंचधा विभक्तप्राणादिवृत्तिविषयपंचसंख्योपपत्तेश्चेति तस्याभिप्रायो द्रष्टव्यः ।

अङ्गीकृत्य 'पंचपंच' इत्यस्य संख्यापरत्वं तल्लब्धसंख्यया संख्येयोपसंग्रहं चेदं सर्वमुक्तम् । वस्तुतस्तदेवासिद्धम् । तथाहि—पंचजनशब्दस्तावदन्तानुदात्तस्वरेण भाषिकाख्यशतपथब्राह्मणस्वरविधायक-ग्रंथविहितेन 'पंचानां त्वा पंचजनानां यंत्राय धर्त्राय गृह्णामि' इति श्रुत्यन्तरप्रयोगदर्शनेन च समस्तोऽ-वसीयते । समासश्च न समाहारद्विगुः संभवति । गत्यन्तरे छान्दसरूपकल्पनाऽयोगात्, किन्तु पंचभिर्भू-तैर्जन्मवन्त इति व्यधिकरणतत्पुरुषो वा पंच च ते जनाश्चेति समानाधिकरणतत्पुरुषो वा वक्तव्यः । तत्राद्य-पक्षे समस्तपंचशब्दस्य जनान्वयिसंख्यापरत्वशङ्कैव नास्ति । द्वितीयपक्षेऽपि तथैव 'दिक्संख्ये संज्ञायाम्' (पा. सू. २. १. ५०) इति सूत्रेण प्रत्यस्तमितावयवार्थायां संज्ञायामेव सप्तर्षिशब्दवत्तस्य समासस्य विधानात् । न हि सप्तर्षय इति संज्ञासमासे सप्तशब्दस्य संख्यासमर्पणे तात्पर्यमस्ति, किन्तु व्युत्पत्तावुपलक्षणमात्रं संख्या गोशब्दव्युत्पत्तौ गमनामिव । अत एव यथा 'गौस्तिष्ठति' इत्यत्र न व्याघातः 'गौर्गच्छति' इत्यत्र न पुनरुक्तिः, एवमिहापि 'सप्त सप्तर्षयः' इत्यत्र न पुनरुक्तिः, वसिष्ठ एकस्मिन् सप्तर्षिशब्दप्रयोगे च न व्याघातः । एवंच यथा 'सप्त सप्तर्षयोऽमलाः' इति विष्णुपुराणप्रयोगे बहुवचनेन बहुत्वेऽवगतेऽपि समस्तसप्तशब्दस्य सप्तसंख्यापरत्वाभावात् ते कतीत्याकाङ्क्षायां पुनस्सप्तशब्दप्रयोगः एवमिहापि समस्तपंच-शब्दस्य पंचसंख्यापरत्वाभावात् ते कतीत्याकाङ्क्षायां पुनः पंचशब्द इत्यसमस्तमेकमेव पंचपदं संख्यापरमिति युक्तम् ।

सूत्रस्यायमर्थः—पञ्चपञ्चेतिशब्दाभ्यां संख्यापराभ्यां तावत्संख्येयोपसंग्रहादपि न सांख्यतत्वग्रहण-सिद्धिः; सांख्यतत्वानां परस्परं पृथग्भावात् पंचशःपंचशः क्रोडीकारकधर्मरहितत्वात्, आत्माकाशाभ्यां संख्याऽतिरेकात् । चकारःस्वतन्त्रहेतुद्वयसमुच्चयार्थः । अपिचात्मनि प्रतिष्ठितत्वोक्त्या इह संख्येयानामपि स्वतन्त्रेभ्यः सांख्यतत्वेभ्यः पृथग्भावादपि न सांख्यतत्वग्रहणासिद्धिः । किञ्च 'पञ्चपञ्च' इति पंचकद्वयग्रहणेन

वीप्सया वा नानाविधसंख्यान्तरसम्भवान्न सांख्यतत्वग्रहणसिद्धिरित्यपि हेतुद्वयं 'नानाभावात्' इत्यनेन विवक्षितम्। अपिशब्देन पञ्चजनशब्दस्य संज्ञासमासरूपत्वात् पञ्चशब्दद्वयलब्धसंख्यासंख्येयोपसंग्रहो वस्तुतो नास्तीत्यपि सूचितम्। १. ४. ११.

स्यादेतत्—उक्तरीत्या पञ्चजनशब्दस्य व्यधिकरणतत्पुरुषाङ्गीकारे पञ्चभूतप्रभवशरीरयुक्ताः पञ्चजनशब्दरूढिविषयत्वेन प्रसिद्धा मनुष्या इह ग्राह्याःस्युः। ते च चातुर्वर्ण्यानुलोमरूपान्तरप्रभवभेदेन पञ्चविधा इति पञ्चेत्यपि विशेषणं तेषु योजयितुं शक्यम्। समानाधिकरणसमासे तु 'सप्तर्षय' इतिवत् पञ्चजनाः नाम केचन वक्तव्याः स्युः। किमत्र तत्वमित्याकाङ्क्षायामाह—

**प्राणादयो वाक्यशेषात्। १२।**

वाक्यशेषे तावत् प्राणादयः पञ्चाम्नायन्ते। तेषु च मनुष्यसम्बन्धिषु पंचजनशब्दो लक्षणया वर्तयितुं शक्यते। वाक्यशेषानुसारेण वाऽऽज्यादिशब्दवत् तस्य शक्त्यन्तरं कल्पयितुं शक्यते। एवं वाक्यशेषे सन्निहितेषु प्राणादिषु ग्रहीतुं योग्येषु न युक्तं स्वबुध्युपस्थापनीयानां मनुष्याणां ग्रहणम्। १. ४. १२

ननु प्राणादयो नात्र ग्रहणयोग्याः। काण्वपाठे पंचानामनाम्नानादित्याशङ्कायामाह—

**ज्योतिषैकेषामसत्यन्ने। १३।**

काण्वानामसत्यन्ने पूर्वमन्त्रपठितेन ज्योतिषा संख्यापूरणमस्तु। न ह्यनाम्नातान्नानां पंचसंख्यापूरणार्थं ज्योतिर्ग्रहणे सति आम्नातान्नानामपि तद्ग्रहणेन भाव्यमिति राजाज्ञा, येन तेषां षट् पंचजनाः स्युः। आकाङ्क्षासद्भावासद्भावाभ्यां हि ग्रहणाग्रहणे युज्येते। विरोधस्तु विकल्पेन समाधेयः। न च वस्तुनि विकल्पायोगः। न ह्यत्र ब्रह्माश्रिताः पंच पंचजनाः प्रतिपिपादयिषितानि वस्तूनि, किन्त्वद्वितीयं निर्विशेषं प्रत्यगभिन्नं ब्रह्मैकमेवात्र प्रतिपिपादयिषितम्। पंचजनास्तु कल्पितास्तत्प्रतिपत्त्युपायाः। न ह्यकल्पितार्थप्रतिपत्त्युपायेषु कल्पितेष्वैकरूप्यनियमोऽस्ति; नानाप्रकारेण भिन्नव्याकरणनिष्पाद्यैः कल्पितशब्दैरुपायैरकल्पितसिद्धशब्दप्रतिपत्तिदर्शनात्। अत्र च मन्त्रे पंचजनाः केवलप्रतिपत्त्युपायाः, न तु ज्ञेयवस्त्वन्तर्गता इत्येतत् सुषुप्त्युत्क्रान्त्यधिकरणविषयवाक्यभूतनिष्प्रपंचप्रत्यगभिन्नब्रह्मप्रकरणमध्यपातेन 'मनसैवानुद्रष्टव्यं नेह

नानास्ति किंचन । मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति' (बृ. ४. ४. १९) इत्यादिमन्त्रान्तर-सन्निधानेन च स्पष्टम् । उत्तरार्द्धेनापि स्पष्टम् । तत्र हि 'तमेव' इत्येवकारेण तत्र प्रतिष्ठितान्वेद्यकोटेर्बहिर्भाव्य तमेव निष्प्रपंचमात्मानममृतं ब्रह्म मन्ये न चाहं तमात्मानं ततोऽन्यः सन्वेद्मि, किन्तु विद्वान् सन् अहमप्य-मृत एव अमृतशब्दोक्तं ब्रह्मैव, अज्ञानमात्रेण तु प्राक् मर्त्य आसामिति मन्त्रद्रष्टुरुक्तिः प्रतिपाद्यते । एवमेव विवृतं वार्तिकेऽपि 'कार्यकारणयोस्तत्वं यस्मादात्मैव निर्द्वयम् । मन्य आत्मानमेवातः कार्यकारणवज्जगत् । प्रध्वस्तभेदहेतुत्वात्कारणादेरसम्भवात् । अमृतोऽमृतमित्याह विद्वानिति श्रुतिस्स्वयम्' इति । केचित्तु निष्प्रपंचप्रत्यगभिन्नब्रह्मसाक्षात्कारोपायत्वेन उपासनाऽत्र विवक्षितेत्याहुः । तदा सुतरां विकल्पो युज्यते ।

अत्रेदमालोचनीयम्—'प्राणादयो वाक्यशेषात्' इति सूत्रं तावदयुक्तम् । सन्दिग्धे हि वाक्यशेषान्निर्णयः । न चात्र सन्देहोऽस्ति; पंचजनशब्दरूढया प्रथमं मनुष्याणामेव तदर्थतया निश्चयात् । न च पंच मनुष्या यस्मिन् प्रतिष्ठिता इत्यर्थपरिग्रहे वाक्यस्य निस्तात्पर्यत्वप्रसङ्गादर्थान्तराकांक्षायामाकांक्षि-तार्थसमर्पको वाक्यशेषः स्यादिति वाच्यम् । पंचशब्दस्य व्यक्तिसंख्यापरत्वं विहाय ब्राह्मणत्वाद्यन्तर-प्रभवत्वान्तक्रोडीकारकधर्मोपाधिकसंख्यापरत्वपरिग्रहोपपत्तेः । अपि च नात्र वाक्यशेषन्यायावतरणम् । एकार्थप्रतिपादकत्वे हि स न्यायः । अत एव 'सन्दिग्धे तु [षु] वाक्यशेषात्' (जै. सू. १. ४. २४) इति पूर्वतन्त्रसूत्रात् कथं वाक्यशेषस्य सन्दिग्धार्थनिर्णायकत्वमित्याकांक्षायां 'अर्थाद्वा कल्पनैकदेशत्वात्' (जै. सू. १. ४. २५) इत्युत्तरसूत्रगतमेकदेशत्वादित्यंशमस्यापि सूत्रस्य शेषं कृत्वा एकोऽर्थो दिश्यते—प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्यां तत्त्वादेकार्थप्रतिपादकत्वादिति व्याख्यातम् । वार्तिकेऽपि' 'विधिस्तुत्योस्स-दावृत्तिस्समानविषयेष्यते । तस्मादेकत्र सन्दिग्धमितरेणावधार्यते' इति विध्यर्थवादयोरेकार्थप्रतिपादकत्वमनयोः क्वचित् सन्दिग्धस्यान्येन निर्णये हेतुत्वेनोक्तम् । न चात्र पंचजनमन्त्रस्य प्राणमन्त्रस्य चैकार्थप्रतिपाद-कत्वमस्ति । एकः पंचजनाकाशाधारत्वेन उपायेन ब्रह्मप्रतिपत्तिपरः, अन्यस्तु प्राणादीनां प्राणनव्यापारादि-सामर्थ्यं यदधीनं तं प्रत्यगात्मानं ये विदुः ते ब्रह्म निरचैषुरिति महावाक्यार्थनिश्चयस्य त्वंपदार्थावगत्यधीनत्व-प्रतिपादनपर इति भिन्नप्रस्थानत्वात् । एवं च 'ज्योतिषैकेषाम्' इति सूत्रमप्यनुपपन्नम्; पूर्वमन्त्रस्यापि कालापरिच्छिन्नं ज्योतिषामादित्यादीनां ज्योतिरमृतं ब्रह्म आयुष्यगुणविशिष्टं देवा उपासत इति

पुराकल्पप्रदर्शनमुखेन आयुष्कामस्तद्गुणविशिष्टं ब्रह्मोपासीतेति निर्गुणप्रकरणेऽप्यस्मिन् प्रासङ्गिकोपासना-विधिपरत्वात् ।

अपि च सर्वशाखाप्रत्ययन्यायान्माध्यन्दिनशाखापठितान्नोपसंहारेणैव काण्वशाखायां पचसंख्या-पूरणसम्भवादप्यनुपपन्नम् । पंचसंख्यापूरणार्थं ज्योतिरपेक्षायामपि 'ज्योतिर्भिः' इति सूत्रं प्रणेतव्यम्; पूर्वमन्त्रे बहुवचननिर्दिष्टानामेव ज्योतिषामिह पंचजनमध्ये ग्राह्यत्वात् द्वितीयानिर्दिष्टस्य ब्रह्मतया तस्य तदाश्रितमध्ये परिगणनायोगात् । अपि च सांख्यतत्वेषु पंचशःपंचशः क्रोडीकारकैकधर्माभावात्तत्परिग्रहो न युज्यत इति 'नानाभावात्' इति सूत्रभागेन दूषितवता सूत्रकृता प्राणादिषु ज्योतिःपंचमेष्वन्नपंचमेषु च पृथक् पृथक् क्रोडीकारकमेकैकधर्मं दृष्ट्वेदं सूत्रद्वयं प्रणीतमित्युपपादनीयम् । तमपि धर्मं न पश्यामः । न हि महासंख्यायां विभज्यावान्तरसंख्यानिवेशन एव क्रोडीकारकधर्मापेक्षा, न तु संख्यानिवेशनमात्र इति विशेषे प्रमाणमस्ति । तस्मादसमञ्जसमेवेदं सूत्रद्वयं प्रतिभाति ।

अत्र ब्रूमः— 'पंच पंचजनाः' इत्यत्र मनुष्यपरिग्रहे पंचजनशब्दस्वारस्यं लभ्यते । पंचसंख्या तु पुरुषबुद्ध्युपस्थापनीयेन ब्राह्मणत्वाद्युपाधिना निर्वहणीया । प्राणादिपरिग्रहे मन्त्रान्तरश्रुतेन प्राणत्वाद्युपाधिना पंचसंख्यानिर्वाहात्पंचशब्दस्वारस्यं लभ्यते । पंचजनशब्दस्तु प्राणादिषु लक्षणया शक्त्यन्तरकल्पनेन वा नेतव्यः । किमत्र युक्तमिति विवक्षायां प्रथमश्रुतपंचशब्दस्वारस्यमनुरुध्य पंचजनशब्दस्य प्राणादिषु वृत्त्यन्तर-कल्पनं युक्तमित्याभिप्रेत्य भगवता सूत्रितं 'प्राणादयो वाक्यशेषात्' इति । एवमेव हि जैमिनिनाऽपि सप्तदश-शरावे चरौ 'चतुरो मुष्टीन्निर्वपति' इत्यस्य प्राप्तौ संख्यामुष्ट्यन्यतरबाधे चावश्यंभाविनि प्रथमश्रुतसंख्याबाध-परिहाराय मुष्टिबाधोऽङ्गीकृतः । यद्यपि पंचजनवाक्यस्य प्राणवाक्यं विधेरर्थवाद इव शेषो न भवति, तथापि अपरिमितवाक्यस्य सहस्रवाक्यमिवाकांक्षितमर्थं सन्निधानमात्रेण समर्पयत् शेष इव भवतीति 'वाक्यशेषात्' इत्युक्तम् । श्रुतावपि हि पर्यग्निकरणान्तोत्सृष्टस्य पात्नीवतपशोस्तदनन्तरं क्रियमाणः पत्नीवद्देवत्य आज्ययागः संस्थाप्यमानश्शेष इव भवतीत्येतावतोक्तं 'पर्यग्निकृतं पात्नीवतमुत्सृजत्याज्येन शेषं संस्थापयति' इति । एतेन— ज्योतिषा संख्यापूरणानुपपत्तिरपि —परिहृता । 'ज्योतिषां ज्योतिः' त्यस्य पंचजनवाक्यशेषत्वाभावेऽपि अप-रिमिताधिकरणन्यायात्संनिधानमात्रेणाकांक्षितार्थसमर्पकत्वसंभवात् ।

यत्तु माध्यंदिनशाखात उपसंहृतेऽन्ने सति ज्योतिषा सख्यापूरणं नापेक्षितमिति तत्तथैव । कृत्वा-चिन्तया तु सूत्रं प्रणीतम् । कृत्वाचिन्तेत्येतदपि 'असत्यन्न' इत्यनेनैव दर्शितम् । यदि शाखान्तरादुपसंहृत-मन्नं न स्यात्तदानीं ज्योतिषा संख्यापूरणं कार्यमित्येतदर्थ एव हि 'असत्यन्न' इति सूत्रशेषः, न तु तस्य प्रयोजनान्तरमस्ति । यदि हि शाखान्तरादन्नोपसंहारं सूत्रकारो नान्वमंस्यत 'असत्यन्न' इति सूत्रशेषं नावक्ष्यत्; काण्वशाखायामन्नाभावस्य स्पष्टत्वात् । शाखान्तरादन्नोपसंहाराभावप्रतिपादनार्थत्वे 'अन्नाभावात्' इत्येवावक्ष्यत्, न तु 'असत्यन्न' इति । 'ज्योतिषा' इत्येकवचनं तु 'ज्योतिः' इति मन्त्रे बहुवचननिर्दिष्टानां ज्योतिषां ज्योतिष्ट्वेन एकीकृत्य परिग्रहणं सूचयितुम् । अन्यथा हि पंचजनानां संख्याऽतिरेकः स्यात् । प्राणादीनामन्नपंचमानां क्रोडीकारकं ब्रह्माधीनस्वव्यापारत्वेन उत्तरमंत्राम्नातत्वम् । ज्योतिःपंचमानां ब्रह्माधी-नस्वव्यापारत्वेन सन्निहितमन्त्राम्नातत्वम् । संख्यानिवेशनार्थमेतदनपेक्षायामपि 'प्राणादय' इतिसूत्रगतेन तद्गुणसंविज्ञानबहुव्रीहिणा तेषां वाच्यत्वस्य, लक्ष्यत्वस्य वा सिध्यर्थमवश्यं तेष्वनुगतमेकं रूपमेतदन्यद्वा वक्तव्य-मेव । कृत्वाचिन्ता किमर्थेति चेत् न्यायव्युत्पादनार्थम् । यथा शर्करांजनवाक्ये द्रवद्रव्यमाकांक्षितं वाक्यशेषा-द्गृह्यते, यथा वा अपरिमितवाक्ये स्ववाक्यशेषाभावेऽपि अन्यार्थप्रवृत्तात्सन्निहितात्सहस्रवाक्यादाकांक्षितं बहुत्व-प्रतियोगि गृह्यते, एवमेकस्मादन्यार्थप्रवृत्तात्सन्निहितवाक्यादाकांक्षितस्य सर्वस्यालाभे तथाभूतादनेकस्माद्वा कुतश्चित्किंचिदित्यनेन प्रकारेण तद्ग्राह्यमिति न्यायो ह्यनेन सूत्रेण व्युत्पादितो भवति । १. ४. १३

इति नसंख्योपसंग्रहाधिकरणम् । ३ ।

---

## कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः । १४ ।

एवं त्रिभिरधिकरणैः किंचित्किंचिद्वेदवाक्यमवलंब्य प्रधानकारणवादिनां प्रत्यवस्थानं निराकृतम् । इह तु प्रायःकारणवाक्यानां मिथोविलक्षणकारणसमर्पकाणामन्योन्यविरोधादप्रामाण्यप्रसङ्गे तानि स्मृतिन्याय-प्रसिद्धे प्रधाने लाक्षणिकानीति कल्पनं युक्तमिति तेषां प्रत्यवस्थानं निराक्रियते । तथाहि—तैत्तिरीये तावद-सत्पूर्विका सृष्टिराम्नायते 'असद्वा इदमग्र आसीत् ततो वै सदजायत' (तै. २. ७) इति । बृहदारण्यकेऽपि 'असदेवेदमग्र आसीत् तत्सदासीत्' इति । छान्दोग्ये त्वसत्कारणपक्षप्रतिक्षेपेण सत्पूर्विका सृष्टिः प्रतिज्ञायते—

'तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतस्सज्जायत इति। कुतस्तु खलु सोम्य एवं स्यादिति होवाच। कथमसतस्सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्' (छां. ६. २. १,२) इति। बृहदारण्यक एव क्वचित्स्वयंकर्तृका जगद्व्याक्रिया निगद्यते 'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यां व्याक्रियत' (बृ. १. ४. ७) इति। एवमनेकधा विप्रतिपत्तेः उदितानुदितहोमवद्वस्तुनि विकल्पायोगात्कारणवस्तुसदसत्वविप्रतिपत्तेश्च तत्प्रतिपत्त्युपायवियदादिकार्यतत्क्रमाक्रमादिविषयविप्रतिपत्तिवददोषत्वस्य वक्तुमशक्यत्वात् मिथोव्याहतार्थैर्वेदान्तैर्न जगत्कारणं ब्रह्मेत्यवधारयितुं शक्यम्। शक्यं तु सांख्यस्मृत्या तदुपपादितन्यायैश्च प्रधानं जगत्कारणमित्यवधारयितुम्। अतः कारणवाक्यानां प्रामाण्यं रिरक्षिषता स्मृतिन्यायसमर्पिते प्रधान एव तेषामपि पर्यवसानं वाच्यम्। ईक्षणादयोऽपि कथंचिद्गौणवृत्त्या तत्रैव नेतव्या इति पूर्वःपक्षः।

स्यादेतत्—तैत्तिरीये यद्ब्रह्मानिरतिशयानन्दावाप्तिः तत्सत्यज्ञानादिलक्षणं ब्रह्म प्रस्तुत्यान्नमयादिकोशपरम्परया सर्वान्तरं तत्प्रत्यग्रूपं निर्धार्य 'असन्नेव' (तै. ३. ६) इति मन्त्रेण तस्य सत्त्वासत्त्ववेदनयोर्वेदितुःसाधुत्वासाधुत्वप्राप्तिरूप गुणदोषाभिधानेनासद्वादं निराकृत्य 'सोऽकामयत' (तै. ३. ६) इत्यादिना तस्यैव कामनापूर्वकं सकलप्रपंचस्रष्टृत्वमुक्त्वा 'तत्सत्यमित्याचक्षते' (तै. ३. ६) इति चोपसंहृत्य 'तदप्येष श्लोको भवति' (तै. ३. ६) इति तस्मिन्नेवार्थे श्लोकोऽयमवतारितः 'असद्वा इदमग्र आसीत्' (तै. ३. ७) इति। कथमयमसत्कारणपरःस्यात्? कथं चासतः 'आसीत्' इत्यास्तित्वमुच्येत। तस्मान्नामरूपव्याकरणात् प्राक् सदपि ब्रह्मासदिवेत्युपचारादसदित्युक्तम्। एवैव असदेवेदमग्र आसीत् इत्यत्रापि योजना स्यात्। असच्छब्दस्य ब्रह्मपरतायाः क्वचिद्दृष्टत्वादिहापि तत्सदासीत् इत्यग्रे वचनाच्च। शून्यत्वे हि किं 'सदासीत्' इति परामृश्येत। छान्दोग्येऽपि असद्वादोऽनुदितहोम इव न श्रुत्यन्तरप्राप्तो निराकृतः येन तैत्तिरीयबृहदारण्यकश्रुत्योरसत्कारणपरत्वं वाच्यं स्यात्। किन्तु सर्वश्रुतिपरिगृहीतसत्कारणपक्षदार्ढ्याय मन्दमतिपरिकल्पित एवानूद्य निराकृतः। 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते; अग्रे 'स एष इह प्रविष्ट आनखाग्रेभ्यः' (बृ. १. ४. ७) इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशश्रवणात्।

किंच 'व्याक्रियत' इत्ययं लकारः कर्मणि वा स्यात्कर्मकर्तरि वा। कर्मणि चेद्गम्यते ग्राम इत्यत्रेवाक्षेपतः कर्तृलाभः स्पष्टः। कर्मकर्तरि चेदपि तथैव। कर्त्रा क्रियमाणमेव यत्कर्म स्वगुणैः सुकरं

भवति तत्सौकर्यमपेक्ष्य कर्तृत्वेन विवक्ष्यमाणं हि कर्मकर्तेत्युच्यते। यथाऽऽहुः 'क्रियमाणं तु यत् कर्म स्वयमेव प्रसिध्यति। सुकरैःसुगुणैर्युक्तं कर्मकर्तेति तद्विदुः' इति। एवं च यथा करणस्य, अधिकरणस्य वा गुणसौष्ठवेन कर्तृत्वविवक्षया 'साध्वसिश्छिनत्ति' 'साधु स्थाली पचति' इति कर्तृत्वव्यवहारेऽपि वस्तुतः कर्तृव्यापारविषयत्वं न हीयते, एवमिहापि। इयांस्तु विशेषः— कर्मणः कर्तृत्वविवक्षायां 'कर्मवत् कर्मणा तुल्यक्रियः' (पा. सू. ३. १. ८७) इति सूत्रेण कर्मवत् कार्यविधानात् 'लूयते केदारःस्वयमेव' इत्यादि-प्रयोगेषु यगात्मनेपदादयः। करणाधिकरणयोः कर्तृत्वविवक्षायां तथा विशेषविधानाभावात् कर्तरि विहिताः श्नम्शबादयः प्रत्ययाः। तस्मात् कारणवाक्यानामविरोधेन सद्रूपे ब्रह्मणि कारणे तात्पर्यस्य निर्धारयितुं शक्यत्वान्न प्रधानपरत्वं कल्पनीयम्। कथं चानन्दमयाधिकरणादृश्यत्वाधिकरणादिषु बहुभिर्न्यायैः प्रधानाद्व्यवच्छिन्न ब्रह्मपरत्वेन निर्णीतानां तैत्तिरीयच्छान्दोग्यमुण्डकोपनिषदादिगतकारणवाक्यानां पुनरिह प्रधानपरत्वमिति शङ्कोन्मज्जनं लभेत? तस्मान्नायं पूर्वपक्षो युक्त इति चेत्—

अत्र ब्रूमः— तैत्तिरीये यत् कारणं ब्रह्म प्रतिपादितं तत् प्राक् 'असद्वा' इति श्लोकावतरणात् सदसदिति वा न निर्धारयितुं शक्यम्। 'असन्नेव स भवति' इति श्लोकस्य असद्ब्रह्मेति वेद चेत् स्वभाविकासद्रूपतापत्तिरूपां सकलसांसारिकदुःखरहितां मुक्तिं प्राप्तो भवति। ब्रह्मणः काल्पिसद्रूपत्ववेदने तु स्वयमपि सद्रूपतानुवृत्त्या सकलसांसारिकदुःखभाजनं भवेदित्येवमभिप्रायवर्णनोपपत्तेः। 'सोऽश्नुते सर्वान् कामान्' (तै. २. १. १) इति मुक्तौ सर्वकामावाप्तिवचनस्य मुक्तः सम्प्राप्तसकलकाम इव निर्दुःखो भवतीत्येतदर्थलक्षकत्वोपपत्तेः निरतिशयब्रह्मानन्दप्राप्तिपरत्वपक्षेऽपि तस्य तत्र लक्षणाऽवश्यम्भावात्। उपक्रमे वाक्यशेषे च श्रुतस्य सत्यशब्दस्य 'सत्यकामः सत्यसङ्कल्पः' (छा. ८. १. ५) 'यच्चिकेत सत्यमित्तन्न मोघम्' इत्यादिप्रयोगदर्शनादमोघमसद्रूपं ब्रह्म यस्मात् सद्रूपं जगदवश्यञ्जायत इत्येवमपि तात्पर्यवर्णनोपपत्तेः। सिद्धान्ते चेतनब्रह्मणः काल्पनिकाचेतनप्रपंचस्येवासद्रूपाद्ब्रह्मणः काल्पनिकसद्रूपप्रपंचस्य जननोपपत्तेश्च कार्य-प्रपंचपरशब्दानां काल्पनिकपरत्ववत् कारणब्रह्मपरशब्दानामसत्परत्वोपपत्तेश्च। सिद्धान्तेऽपि वैदिशब्दानां सदर्थपरत्वनियमाभावात्। तस्मात् 'पंच पंचजना' इत्यस्येव तैत्तिरीयगतकारणवाक्यस्यानेकधाऽर्थवर्णन-सम्भवादनिर्णयप्रसङ्गे वाक्यशेषादर्थनिर्णयो युक्तः। एवं 'असद्वा इदमग्र आसीत्' इति वाक्यशेषानुसारेणा-

स्यासत्कारणपरत्वे सति 'असदेवेदम्' इति बृहदारण्यकवाक्यमप्यसत्कारणपरमेवावतिष्ठते। न चोभयत्रापि 'आसीत्' इति अस्तित्वोक्त्या सत्येवासच्छब्दयोर्लक्षणा स्वीकर्तव्येति शंक्यम्। 'तद्धैक आहुरसदेवेदमग्र-आसीत्' इति छान्दोग्ये निराकरणीयासत्कारणपक्षानुवादे अत्यन्तासत्येव 'आसीत्' इति प्रयोगदर्शनात्। एवं च उदाहृतं छान्दोग्यवाक्यमपि श्रुत्यन्तरप्रतिपादितासत्कारणपक्षनिराकरणपरमेवावतिष्ठते।

यत्तु 'व्याक्रियत' इत्यत्र 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इत्यग्रे कर्तृश्रवणमस्तीत्युक्तम्; तन्न। तत्र 'स यत् पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत्' (बृ. १. ४. १) इति प्राक् प्रकृतस्य जीवस्य व्याकृतशरीरानुप्रवेशस्यैव प्रतिपाद्यमानतया जगत्कर्तुरप्रतिपादनात्। यदप्याक्षेपतः कर्तृलाभोऽस्ति 'लूयते केदारःस्वयमेव' इत्यादाविवेत्युक्तं तदपि न युक्तम्। 'भिद्यते कुसूलेन' इत्यादिषु व्यभिचारेण कर्मकर्तृ-विवक्षायां कर्त्रन्तराक्षेपनियमाभावात्। अत एव महाभाष्ये कर्मणः कर्तृत्वरूपस्वातन्त्र्यविवक्षास्थले 'किं सतस्स्वातन्त्र्यस्य विवक्षा उत विवक्षामात्रम्' इति पक्षं परिगृह्य तत्र 'भिद्यते कुसूलेन' इत्युदाहृत्य तत्रापि कुसूलातिरेकेण भेदने कर्तारो वातातपवर्षकालाः सन्तीत्याशंक्य 'यस्य खलु निवाते निरभिवर्षे अचिरकालकृतः कुसूलः स्वयमेव भिद्यते तस्य नान्यः कर्ताऽस्ति अन्यदतः कुसूलात्' इति परिहृतम्। पुनश्च यत्र तर्हि 'लूयते केदारःस्वयमेव' इत्यत्र कर्त्रन्तरमस्ति तत्र केदारे लवनं प्रति सतस्स्वातन्त्र्यस्य विवक्षा न सम्भवतीत्याशंक्य 'अत्रापि याऽसौ सुकरता नाम तस्या नान्यः कर्ताऽस्ति अन्यदतःकेदारात्' इति परिहृतम्। एवं कर्मकर्तृप्रयोगेषु कर्त्रन्तराभावे कृत्स्नस्वातन्त्र्यविवक्षा, तत्सद्भावे सौकर्यांशमात्रस्वातन्त्र्य-विवक्षेति द्वैविध्यं वर्णयता भगवता पतञ्जलिना कर्त्राक्षेपनियमो नास्तीति स्पष्टमेव दर्शितम्। एवञ्च सति द्वैविध्ये 'व्याक्रियत' इत्यत्र कृत्स्नस्वातन्त्र्यविवक्षैव न्याय्या, अन्यथा कर्त्राक्षेपगौरवप्रसङ्गात्। अत एव कृत्स्न-स्वातन्त्र्ययुक्ते कर्मकर्तर्येवायं लकारः न तु कर्मणि; तथात्वेपि कर्त्राक्षेपगौरवप्रसङ्गात्। तस्मात् तत्कारण-वाक्यस्वारस्यपर्यालोचनायामवश्यमस्त्येव विरोध इति तत्परिहारेण प्रामाण्यसंरक्षणार्थं तेषां स्मृतिन्यायसिद्धे प्रधाने पर्यवसानं कल्पयितुं युक्तम्।

आनन्दमयाधिकरणादिषु तन्निराकृतम्, इति चेत्; सत्यमानन्दमयाधिकरणे 'कामाच्च नानुमानापेक्षा' (ब्र. सू. १. १. १८) इति निराकृतम्। 'सोऽकामयत' इति श्रुतः कामः प्रधान इव

ब्रह्मण्यप्यनुपपन्नः । स हि 'कामस्सङ्कल्पो विचिकित्सा' (बृ. १. ५. ३) इत्यादिश्रुतावन्तःकरणधर्मत्वेन प्रतिपन्नः । न च ब्रह्मणोऽन्तःकरणमस्ति । एतेन—ईक्षत्यधिकरणे वर्णितमीक्षणमपि— व्याख्यातम् । तदपि खलु 'ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' (बृ. १. ५. ३) इत्यन्तःकरणधर्मत्वेन श्रुतम् । ब्रह्मणस्स्वरूपज्ञानेन सर्वज्ञत्वं सम्भवति इति चेत्; सत्यं 'यस्सर्वज्ञस्सर्ववित्' इति श्रुतं सर्वज्ञत्वं सम्भवति, न तु 'तदैक्षत' इति सर्गाद्यकालोत्पन्नत्वेनेदानीमतीतत्वेन च श्रुतमनित्यमीक्षणम् । किञ्चेच्छामात्रे अनित्यज्ञानमात्रे च शरीरस्यापि कारणत्वावगमात् सर्गाद्यकाले भूतसृष्टेः प्रागशरीरस्य ब्रह्मणः कामेक्षणे सुतरां न सम्भवतः । गौणे तु प्रधानेऽपि सम्भवतः । एतेन—कारणवाक्यगतात्मब्रह्मादिशब्दास्तत्त्वमसीत्याद्यभेदव्यपदेशाश्च व्याख्याताः ।

किञ्च पञ्चजनशब्दस्य प्राणादिष्विवात्मादिशब्दानां प्रधाने वृत्तिः कल्प्यत इत्यपि वक्तुं शक्यम् । 'तस्य तावदेव चिरम्' (छा. ६. १४. २) इति मोक्षोपदेशस्तु न जीवजगत्कारणाभेदनिष्ठस्य, किन्तु केवलं जगत्कारणनिष्ठस्येति प्रधानेऽपि सङ्गच्छते । मोक्षाय प्रधानमपि हि सांख्यमते ज्ञेयम् । अत एवानुमानिकाधिकरणे 'ज्ञेयत्वावचनाच्च' (ब्र. सू. १. ४. ४) इति सूत्रितम् । 'स्वमपीतो भवति' इत्यत्र स्वशब्दः स्वीयपरोऽस्तु । भिन्नेऽप्यप्ययः प्रसिद्धो 'यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति' (श. ब्रा. १०. ३. ३. ६) इत्यत्र । मुण्डके जगत्कारणमक्षरं प्रधानं अक्षरात्परः पुरुषो जीव इत्येवं प्रकारेण सर्वाणि कारणवाक्यानि यथाकथंचिद्गौणलक्षणाध्याहारानुषङ्गवाक्यभेदव्यवधारणकल्पनादिभिः स्मृतिन्यायप्राप्ते प्रधान एव नेतव्यानि । तत्तत्कारणवाक्यस्वारस्यलभ्यार्थपरिग्रहे तेषां परस्परविलक्षणकारणसमर्पकत्वादप्रामाण्यमेव प्रसज्यते । वरं चाध्ययनविधिपरिगृहीतानां वैदिकशब्दानामतिक्लेशाश्रयणेनापि 'सृण्येवजर्भरि' इत्यादिमंत्राणामिव प्रामाण्यसंरक्षणमित्येवं सर्वाक्षेपेण **पूर्वपक्षे** प्राप्ते—

**राद्धान्तः**—श्वेताश्वतरादिषु प्रदर्शितानि बहूनि कारणवाक्यानि प्रधानपुरुषातिरिक्तं तयोर्नियामकं सर्वज्ञं सर्वेश्वरं सर्वेषां प्रत्यग्रूपं जगत्कारणं प्रतिपादयन्ति । यत्राप्यानन्दवल्ल्यामसत्कारणवाद इव दृश्यते, साऽपि तथैव सर्वज्ञं सर्वेश्वरं सर्वान्तरं सर्वेषां प्रत्यग्रूपं कारणं प्रतिपादयत्येव । तथैवहि छान्दोग्यश्रुतिरपि चेतनं प्रत्यगभिन्नं कारणं प्रतिपादयति यत्रासत्कारणवादनिराकरणमतिस्फुटं श्रूयते । एवं च परमेश्वर-

कारणत्वप्रतिपादकानां कारणवाक्यानां बाहुल्ये सति बहूनामेकविषयाणां परस्परविरोधेनार्थानिर्णयप्राप्तौ प्रमाणान्तरानुसारेण सर्वेषां शब्दानां लाक्षणिकत्वादिकल्पनाद्वरं स्वान्तर्वर्तिबहुशब्दानुसारेण कतिपयशब्द-लक्षणाकल्पनं लाघवादिति प्रधाने सर्वेषां कारणवाक्यानां क्लेशेन नयनं परित्यज्य क्वाचित्कस्यासच्छब्दस्य ब्रह्मलक्षणाश्रयणं कामेक्षणशब्दयोश्च श्रुतिबलाच्छरीरानपेक्षोत्पत्तिकमायावृत्त्युपाधिप्राप्तानित्यभावस्वरूपज्ञानात्मक-सङ्कल्पविशेषपरत्वकल्पनम् । एवं च जीवजगत्कारणाभेदस्वाप्ययादिश्रुतयोऽपि न क्लेशेन नेतव्याः ।

एवं बृहदारण्यकेऽप्यसच्छब्दस्य गतिर्द्रष्टव्या । प्रायेण व्याकृतवस्तुविषयः खलु सच्छब्दः प्रसिद्धः । ब्रह्म तु प्राग्जगदुत्पत्तेर्व्याकरणाभावापेक्षया सदेवासदित्युपचर्यत इति । 'व्याक्रियत' इति कर्मणि लकारो न तु कर्मकर्तरि । 'अव्याकृतमासीत्' इति कर्मण्येव निष्ठांतस्य प्राक्प्रयोगात्, एकविषययोः 'प्रागव्याकृतम्, पश्चाद्व्याक्रियत' इति प्रयोगयोः 'प्रागच्छिन्नं वनमिदानीमच्छिद्यत' इति प्रयोगयोरिवैकार्थ्य-परत्वावश्यंभावात् । न चाव्याकृतमित्यपि कर्मकर्तरि प्रयोग इति शङ्कनीयम् । तदानीमनेनाव्याकृतमिति तृतीयाप्रयोगप्रसङ्गादिदमिति प्रथमाऽनुपपत्तेः । कर्मणः कर्तृत्वविवक्षायां हि धातोरकर्मकत्वाद्भावे निष्ठेति कर्तुरनभिहितत्वात् तृतीयैव भाव्यम् । न च 'कर्मवत्कर्मणा तुल्यक्रियः' (पा. सू. ३. १. ८७) इति सूत्रेण कर्मकर्तुः कर्मवद्भावातिदेशान्निष्ठया कर्तुरभिहितत्वेन प्रथमा स्यात् यथा 'लूयते केदारस्स्वयमेव' इत्यत्र कर्तुरभिहितत्वेन केदार इति प्रथमेति वाच्यम् । 'लिङ्याशिष्यङ्' (पा. सू. ३. १. ८६) इति पूर्वसूत्रे द्विलकारको निर्देश इत्येकस्य लकारस्यानुवृत्त्या लान्तस्य यः कर्मणा तुल्यक्रियः कर्ता तस्यैव कर्मवद्भावविधानात्कृत्यक्तखलर्थेषु कर्मकर्तुः कर्मवद्भावाभावात् । तस्मात् कर्मण्येवायं लकार इत्यनिवार्यः कर्त्राक्षेपः ।

सूत्रे कारणत्व इति सप्तमी नेति प्रतिषेधः । पुनश्च कारणत्वेनेति तृतीया । चस्त्वर्थः । तथाचायमर्थः—आकाशादिषु कार्येषु क्रमादिविषये विगाने सत्यपि न ब्रह्मणः कारणत्वे अस्ति विगानम् । कुतः? यथाव्यपदिष्टोक्तेः; यथाभूतो ह्येकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मकोऽद्वितीयः कारणत्वेन व्यपदिष्टः तथाभूतस्यैव वेदान्तान्तरेष्वपि कारणत्वेनोक्तेः । तथाच बहुशब्दानुसारेण क्वाचित्कस्यासच्छब्दस्य व्याकृतप्रपञ्चात्मनाऽनभिव्यक्ते ब्रह्मणि लक्षणा न्याय्या । न हि तत्र कारणमेव नास्तीति प्रतिक्षिप्यते, किन्तु

कारणमभ्युपेत्य तत्रासच्छब्दः प्रयुज्यते । तथापि व्याक्रियतेत्यत्र कारणान्तरप्रतिक्षेपोऽस्तीति शङ्कानिवारणार्थश्चकारः । तन्निराकरणप्रकारो दर्शित एव । १. ४. १४

एवं प्रकरणान्तरगतबहुकारणवाक्यानुसारेण ब्रह्मकारणवादविरोधी क्वाचित्कः शब्दो लक्षणादिना नेतव्य इत्युक्तम् । इदानीं पूर्वापरवाक्यानुसारेणापि तथा नेतव्य इत्याह—

**समाकर्षात् । १५ ।**

आनन्दवल्यामुपक्रमे वाक्यशेषे च श्रूयमाणः सत्यशब्दस्त्रिकालाबाध्यरूपपरमार्थवाची; तत्रैव तस्य शब्दस्य व्युत्पन्नत्वात् । अमोघे तत्प्रयोगस्तु लाक्षणिकः । प्रायः शुक्तिरजतादेर्बाध्यस्य कार्यकरत्वादर्शनेनामोघत्वस्याबाध्यसम्बन्धित्वावगमात् लक्षणया तत्र प्रयोगनिर्वाहे शक्त्यन्तरस्याकल्पनीयत्वात् । 'असन्नेव' इति मन्त्रोऽप्युपक्रमोपसंहारानुरोधाच्छन्दोगश्रुतावसद्वादनिराकरणस्य क्रमत्वेन तदनुरोधाच्चासद्वादनिराकरणपरः । एवञ्च सद्रूपं ब्रह्म प्रकृत्य तस्मात् प्रत्यग्रूपादाकाशाद्युत्पत्तिमुक्त्वा तस्य सर्वान्तरत्वमुपपाद्य तस्यासत्यत्वपक्षञ्च निराकृत्य सकलजगत्स्रष्टृत्वञ्चोक्त्वा 'तत्सत्यमित्याचक्षते' इति चोपसंहृत्य 'तदप्येष श्लोको भवति' इति अनया तस्मिन्नर्थे श्लोकोऽयमित्यवतारिकया तदेव सद्रूपं कारणं ब्रह्मानुकृष्य पठ्यमानोऽयं 'असद्वा इदमग्र आसीत्' इति श्लोकः कथमसत्कारणपरः स्यात् । अतः सत्समाकर्षानुरोधादसच्छब्दः सत्येवानभिव्यक्त्यभिप्रायो लाक्षणिकः कल्पनीयः । 'असदेवेदम्' इति श्रुतावपि 'तत्सदासीत्' इति सद्भावविधाने तत्पदेनासच्छब्दोक्तस्यैव समाकर्षादत्यन्तासतश्च 'नासतो दृष्टत्वात्' इति न्यायेन सद्रूपतापत्त्ययोगादसच्छब्दः पूर्ववल्लाक्षणिकः कल्पनीयः । 'तद्धेदं तर्ह्यव्याकृतमासीत्' इत्याद्यनन्तरं 'स एष इह प्रविष्ट' इति वाक्ये तच्छब्देन व्यवहितप्रकृतपुरुषस्यैवैतच्छब्देनाव्यवहितप्रकृताव्याकृतस्यापि समाकर्षादव्याकृतरूपतया प्रविष्टपुरुषाभिधानसामर्थ्यादव्याकृतशब्दोऽनभिव्यक्तब्रह्मपर इति तत्र न चेतनस्य कर्तुः प्रतिक्षेपः । तस्मात् 'नामरूपाभ्यां व्याक्रियत' इत्यत्र स्वेनेत्येव कर्तृवाचिपदमध्याहार्यम्; 'तदात्मानं स्वयमकुरुत' इत्यनेनैकार्थ्यात् । तस्मात् सिद्धं सर्वेषां कारणवाक्यानामविरोधेन ब्रह्मपरत्वम् । १. ४. १५

इति कारणत्वाधिकरणम् । ४ ।

## जगद्वाचित्वात् ।१६।

कौषीतकिब्राह्मणे अजातशत्रुर्नाम काशीराजः स्वसमीपमागत्य 'ब्रह्म ते ब्रवाणि' (कौ. ब्रा. ४. १) इत्युक्तवन्तं बालाकिं गार्ग्यं 'सहस्रन्दद्म एतस्यां वाचि जनको जनक इति वै जना धावन्ति' (कौ. ब्रा. ४. १) इति प्रशस्य बालाकिना 'य एवैष आदित्ये पुरुषस्तमेवाहमुपासे' (कौ. ब्रा. ४. ३) इत्यादिभिर्वाक्यैर्ब्रह्मत्वेनोपदिष्टानादित्यचन्द्रविद्युत्स्तनयित्न्वाकाशवाय्वग्न्यादिगतान् पुरुषानब्रह्मत्वेन तत्तत्पुरुषोक्त्यनन्तरमेव प्रत्याख्याय ततस्तूष्णींभूते तस्मिन्किमेतावदेव तव परिज्ञानमिति पृष्ट्वा तेनैतावदेवेत्यभिहिते 'मृषा वै किल मा संवदिष्ठाः ब्रह्म ते ब्रवाणि' (कौ. ब्रा. ४. १९) इत्युक्त्वा तमपोद्य 'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः' (कौ. ब्रा. ४. १९) इति स्वयमुपदिदेश इति श्रूयते। अत्र यो वेदितव्य उपदिष्टः उपसंहारे च 'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति यद्वेदनस्य फलं वर्णितं स किं जीवः, उत मुख्यप्राणरूपो हिरण्यगर्भः, अथवा परं ब्रह्मेति 'यस्य वै तत्कर्म' इत्यत्र कर्मशब्दरूढियोगाभ्यां संशये जीव इति तावत्प्राप्तम्। ब्रह्मणि परिस्पन्दरूपस्य, यज्ञादिरूपस्य वा कर्मणःसम्बन्धाभावात् जीवे यज्ञादिसम्बन्धसत्वात्। न च ब्रह्मण्यपि तदाराधनरूपेण यज्ञादिना सम्बन्धोऽस्तीति वाच्यम्; पुण्यापुण्यसाधारणकर्ममात्रस्य तदाराधनत्वाभावात्। न च क्रियत इति व्युत्पत्त्या यस्यैतत्कृत्स्नं जगत्कार्यमिति यस्य वै तत्कर्मेत्यस्यार्थो ग्राह्यः। तथा सति 'एतेषां पुरुषाणां कर्ता' इति पृथङ्निर्देशवैयर्थ्यात्।

जीवपक्षे एतेषामादित्यमण्डलाद्यधिकारिणां भोगोपकरणभूतानां पुरुषाणां यः कर्ता एतत्कर्तृभावे द्वारभूतं पुण्यापुण्यलक्षणं च कर्म यस्यास्ति स वेदितव्य इत्युपपत्तेः योगाद्रूढेः प्रबलत्वाच्च। कर्मशब्दस्य परिस्पन्द एव रूढिः, तत्साध्यत्वात्तु पुण्यापुण्यरूपे कर्मणि लक्षणा इति चेत्, न। परिस्पन्दासाध्येष्वपि दर्शनस्पर्शनश्रवणादिसाध्यपुण्यपापेषु कर्मशब्दप्रयोगदर्शनात्। तत्रापि यथाकथञ्चित्परम्परया परिस्पन्दसाध्यत्वाश्रयणेन लक्षणेत्यङ्गीकारेऽपि योगाद्रूढिपूर्वलक्षणायाः प्रबलत्वात्, जीवस्यापि तत्प्रेर्यदेहाश्रयपरिस्पन्देनासाधारणसंबंधसत्वाच्च। अग्रेऽपि जीवलिङ्गदर्शनाच्च। तत्र ह्यजातशत्रुणा वेदितव्यतयोपन्यस्तस्य पुरुषाणाङ्कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषं प्राणादिसंबोधनैरामन्त्र्य आमंत्रणशब्दा-

श्रवणात्प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातेनोत्थापनात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रत्यबोधयदिति श्रूयते 'तं ह पाणावभिपद्य प्रवव्राज तौ ह सुप्तं पुरुषमीयतुस्तं हाजातशत्रुरामन्त्रयाञ्चक्रे बृहन्पाण्डरवासस्सोमराजन्निति सह तूष्णीमेव शिश्ये । तत उ हैनं यष्ट्या व्याचिक्षेप । स तत एव समुत्तस्थौ' (कौ. ब्रा. ४. १९) इति ।

नन्विदं जीवसंकीर्तनं जीवस्य वेदितव्यपुरुषरूपत्वप्रतिपत्त्यर्थं न भवति, किंतु जीवस्य सुषुप्तिप्रबोधयोरधिकरणापादानतया ब्रह्मप्रतिपत्त्यर्थम् । यष्टिघातेन जीवे प्रबोधिते 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदगात्' इत्यजातशत्रोः प्रश्नस्य बालाकिना तस्मिन्नविज्ञाते पृष्टेऽर्थे 'यदा सुप्तस्स्वप्नं कञ्चन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इति अजातशत्रुणैव कृतस्य स्वपृष्टार्थविवरणस्य च दर्शनादिति चेत्; मैवम् । न हि सुषुप्तिस्थानतया ब्रह्म तत्र प्रतिपाद्यते, किंतु नाड्य एव । 'हिता नाम हृदयस्य नाड्यः' (कौ. ब्रा. ४. १९) इति नाडीः प्रक्रम्य 'तासु तदा भवति' इत्युक्त्वा हि कदेत्याकांक्षायां 'यदा सुप्तः स्वप्नं कञ्चन पश्यति' त्युक्तम् । 'अथास्मिन्प्राण एवैकधा भवति' इत्यनेन तु ब्रह्मणि जीव एकधा भवतीति नोच्यते, प्राणशब्दोऽपि न ब्रह्मपरः, किंतु नाडीस्थे जीवे कारणग्राम एकीभवतीत्युच्यते । 'तदैनं वाक्सर्वैर्नामभिस्सहाप्येति, चक्षुस्सर्वैरूपैस्सहाप्येति, श्रोत्रं सर्वैश्शब्दैस्सहाप्येति, मनस्सर्वैर्ध्यानैस्सहाप्येति' इत्यग्रे तद्विवरणदर्शनात् । प्राणशब्दोऽपि प्राणभृत्त्वनिबंधनो जीवपरः; 'स यदा प्रतिबुध्यते' इति प्राणशब्दनिर्दिष्टस्य प्रबोधोपन्यासात्; ब्रह्मणःसुप्तिप्रबोधयोरसंभवात् ।

ननु नाड्यस्सुप्तिस्थानतया नोच्यन्ते, किंतु स्वप्नस्थानतया 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट' इति स्वप्नस्थानस्य 'क्व वा एतदभूत्' इति सुषुप्तिस्थानस्य च प्राक्पृष्टत्वात् । अन्यथा प्रथमप्रश्नस्यैव सुषुप्तिस्थानविषयत्वे यत्र प्रसुप्तस्तत्रैव यावत्प्रबोधमभूदित्यस्यार्थसिद्धतया द्वितीयप्रश्नवैफल्यप्रसङ्गात् साफल्यसंभवे च तदङ्गीकारायोगात् तत्र 'तासु तदा भवति' इति स्वप्नस्थानप्रश्नस्य प्रतिवचनं 'यदा सुप्तः' इत्यादि 'एकधा भवति' इत्यंतं सुप्तिस्थानप्रश्नस्य । युक्तं ह्यनन्तरश्रुतप्रतिषेधप्रसक्तस्वप्नविषयत्वं पूर्ववाक्यस्य । युक्तं च 'न पश्यति' 'एकधा भवति' इत्यनयोस्समानकर्तृकत्वम् । अन्यथा 'एकधा भवति' इत्यत्र करणग्राम इत्यध्याहारः कार्यः, अथशब्दश्च तदाऽर्थं नेतव्यः । 'यदा सुप्तस्स्वप्नं न कञ्चन पश्यति' इत्यस्य 'तासु तदा

भवति' इत्यनेनान्वये हि सुषुप्तिप्राप्त्यनन्तरं कारणग्रामाप्यय इत्यर्थः स्यात्। न च सोऽर्थो युक्तः; सुषुप्तेः सर्वेन्द्रियोपरतिलक्षत्वेनानयोः पौर्वापर्यायोगात्। तस्मात्प्राणशब्दो जीवस्य सुषुप्तिस्थानं वदन्जीवातिरिक्तं वेदितव्यं पुरुषं परामृशतीत्येव वक्तव्यम्। 'स यदा प्रबुध्यते' इति तच्छब्दस्तु य एकधा भवति तं सुषुप्तं जीवं परामृशति, न तु यत्रैकधा भवति तं वेदितव्यं पुरुषमतो न किंचिदवद्यामिति चेत्—

उच्यते—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट' इति प्रश्न उत्थापितस्य सुषुप्तिस्थानविषयः। 'क्व वा एतत्' इति प्रश्नस्तदुत्थापनात् पूर्वमुपरतव्यापारस्य तदनन्तरं व्याप्रियमाणतयाऽनुभूयमानस्य तदीयकरण-ग्रामस्य सुषुप्तिकालिकाधिकरणविषयः। 'कुत एतदागात्' इति प्रश्नस्तस्यैव करणग्रामस्योद्गमनापादानविषयः। एवञ्च 'तासु तदा भवति यदा सुप्तस्स्वप्नं न कञ्चन पश्यति' इति प्रथमप्रश्नस्य प्रतिवचनम्। 'अथास्मिन् प्राण एव एकधा भवति' इति द्वितीयप्रश्नस्य। 'तदैनं वाक्' इत्यादि तद्विवरणम्। 'स यदा प्रतिबुध्यते यथाऽग्नेर्विष्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' इति तृतीयप्रश्नस्य प्रतिवचनमिति सङ्गच्छते। अन्यथा प्रश्नत्रयस्यापि जीवसुषुप्त्यधिकरणतद्भवनाधिकरणतदुद्ग-मनापादानविषयत्वे तान्येव प्रतिवचनेषु वक्तव्यानि स्युः। न च प्रतिवचनेषु कुतश्चिदपादानाज्जीवस्योद्गमन-प्रतिपादकं किञ्चिदस्ति, किन्त्वेतस्मादात्मनः प्राणा इति जीवादिन्द्रियोद्गमनविषयमेव प्रतिवचनं दृश्यते। न च—'अथास्मिन् प्राण एवैकधा भवति' इत्यस्य जीवः प्राणशब्दिते ब्रह्मण्येकधा भवतीत्यर्थाङ्गीकारे 'एतस्मादात्मनः' इत्यस्य प्रकृतब्रह्मपरामर्शितया प्राणशब्दस्य जीवपरतया चैतदेव जीवोद्गमनापादानप्रश्न-प्रतिवचनं स्यादिति— वाच्यम्। 'एतस्मात्' इत्यनेन 'यदा सुप्तस्स्वप्नं न कञ्चन पश्यति' इति प्राधान्येन प्रकृतस्य सुषुप्तस्य परामर्शसम्भवे सप्तमीनिर्दिष्टस्योपसर्जनस्य परामर्शायोगात्। 'कुत एतदागात्' इति प्रश्नस्य यष्टिघातोत्थापितजीवमात्रोद्गमनापादानविषयत्वाङ्गीकारे आत्मनः प्राणशब्दितानां बहूनामुद्गमनप्रति-पादनस्य तत्प्रतिवचनत्वायोगाच्च, 'स यदा प्रबुध्यते' इति तत्प्रबोधस्य प्राणोद्गमनकालोपलक्षणतयोपात्तत्वेन प्राणानां ततोऽन्यत्वप्रतीतेश्च, 'तद्यथा क्षुरः क्षुरधानेऽवहितस्स्यात् विश्वम्भरो वा विश्वम्भरकुलाये एवमेवैष प्राज्ञ आत्मेदं शरीरमात्मानमनुप्रविष्टः आ लोमभ्य आनखेभ्यः' (कौ. ब्रा. ४. २०) इति समनन्तरवाक्ये 'शरीरमात्मा-नम्' इति निर्देशेन शरीरात्माभिमानित्वेन ज्ञापितस्य जीवस्य प्रकृतप्राणाद्युद्गमनापादानपरामर्शिना 'एव प्राज्ञ

आत्मा' इत्येतच्छब्देन परामर्शाच्च 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्ति एवमेवैष प्राज्ञ आत्मा एतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' (कौ. ब्रा. ४. २०) इति तदनन्तरवाक्येऽप्यालोकदानादिना भोगोपकारकैः प्राक् 'एतेषां पुरुषाणाम्' इति प्रकृतैः आदित्यादिपुरुषैर्हेतुभिर्विषयभोक्तृत्वेन लिङ्गेन ज्ञापितस्य जीवस्य पूर्ववत् प्रकृतपरामर्शिनैतच्छब्देन निर्देशाच्च ।

एवं कर्मसम्बन्धयष्टिघातोत्थानशरीरात्माभिमानभोक्तृत्वलिङ्गैर्जीव एव वेदितव्यः पुरुषोऽस्मिन् प्रकरणे प्रतिपाद्यत इति निश्चये सति 'अथास्मिन् प्राण एवैकधा भवति' इति वाक्ये कर्त्रध्याहारोऽथशब्दास्वारस्यञ्च न दोषः । किञ्च न कर्त्तव्योऽत्र कर्त्रध्याहारः । 'क्व वा एतदभूत्' इति प्रश्नवाक्ये एतच्छब्देन निर्दिष्टस्य करणमण्डलस्य कर्तुस्तत्प्रतिवचनेऽपि क्व चैत्र इति प्रश्नस्य कांच्यामिति प्रतिवचने चैत्रस्येव स्वयमेवान्वयात् । नाप्यथशब्दस्तदाऽर्थमस्माभिर्नेतव्यः 'तदैनं वाक्' इत्यादिविवरणवाक्स्थतदाशब्दानुसारेण स्वयमेव तदाऽर्थे पर्यवसानात् । बृहदारण्यके बालाक्यजातशत्रुसंवादरूपे समानप्रकरण एव 'तानि यदा गृह्णात्यथ हैतत् पुरुषस्स्वपिति नाम' (बृ. २. १. १७) इति स्वापकरणग्रामोपरमयोर्विपरीतपौर्वापर्यश्रवणेन परस्परविरोधपरिहारायोभयत्राप्यथशब्दस्तदार्थपर इत्यवश्यं वक्तव्यत्वाच्च । 'यदा सुप्त' इत्यादेः 'एकधा भवति' इत्यन्तस्य सुषुप्तजीवाधारप्रश्नप्रतिवचनरूपत्वेऽपि यदाशब्दप्रतिनिर्देशतयाऽथशब्दस्य तदाऽर्थपर्यवसायित्वावश्यम्भावाच्च । तस्यानन्तर्यार्थत्वेऽपि सुषुप्तेरेकधाभावस्य च पौर्वापर्याभावेन 'तासु तदा भवति' इत्येतदनन्तरं तस्य योजनीयतया व्यवहितयोजनाक्लेशसत्वाच्च ।

नन्वेवमपि 'तदैनं वाक्' इत्यादिना प्रतिपाद्यमानः सुषुप्तौ विषयैः सह करणग्रामस्य लयो न जीवे सम्भवति, प्रबोधे तैः सह तदुत्पत्तिश्च न जीवात् सम्भवतीति चेत्; न । सुषुप्तौ वागादीनामुपरतव्यापाराणां जीवेऽवस्थानस्य प्रबोधे जीवान्निर्गत्य स्वस्वायतनप्राप्तेश्च सम्भवात् । तावत्येवार्थे 'तदैनं वाक्' इत्यादेस्तात्पर्यात् । प्रत्यक्षादिविरोधेन विषयैः सहेन्द्रियाणां सुषुप्तौ लयस्य प्रबोधे पुनरुत्पत्तेश्च तदर्थत्वाङ्गीकारायोगात् । प्रत्यक्षविरुद्धोऽप्यर्थो यथाश्रुति ग्राह्य इति चेत्, तर्हि प्रकरणस्य जीवविषयत्वस्वारस्यानुरोधेन सुषुप्तौ जीवे सविषयाणामिन्द्रियाणां लयः प्रबोधे जीवात् तेषां पुनरुत्पत्तिरित्येवाङ्गीक्रियताम् । प्रत्यक्षविरोधस्याकिञ्चित्करत्वेनासम्भवाभावात् ।

यदि च 'यदा सुषुप्त' इत्याद्येकधा भवतीत्यन्तं सुषुप्तजीवाधारप्रश्नप्रतिवचनं 'तदैनं वाक्' इत्यादि सुषुप्तजीवाधारे विषयेन्द्रियाणां लयस्य ततस्तेषां पुनरुत्पत्तेश्च प्रतिपादकमित्येव वक्तव्यम् । कौषीतकिब्राह्मण एव पूर्वस्यामिन्द्रप्रतर्दनाख्यायिकायां प्राणशब्देन ब्रह्मोपक्रम्य 'तस्यैषैव दृष्टिरेतद्विज्ञानम्' (कौ. ब्रा. ३. ३) इति तद्‌ज्ञप्तिप्रकारं प्रतिज्ञाय 'यत्रैतत्पुरुषः सुप्तःस्वप्नं न कञ्चन पश्यत्यथास्मिन् प्राण एवैकधा भवति' (कौ. ब्रा. ३. ३) इति सुषुप्तजीवाधारत्वेन 'तदैनं वाक् सर्वैर्नामभिस्सहाप्येति' इत्यादिना वागादिलयोद्गमापादानत्वेन च प्रतिपादनादस्यापि तदैकार्थ्यस्य वक्तव्यत्वादिति निर्बन्धः, तथाऽपि सुषुप्तजीवाधारो वेदितव्यः पुरुषो भवन् समष्टिप्राणात्मा हिरण्यगर्भ एव स्यात्, नतु ततोऽतिरिक्तं परं ब्रह्म । प्राणशब्दात् प्राणात्मना परिस्पन्दरूपस्य तदभिमानिजीवात्मना पुण्यापुण्यरूपस्य च कर्मणस्तत्र सम्भवात् । बृहदारण्यकश्रुतौ 'आत्मैवेदमग्र आसीत्पुरुषविधः' (बृ. १. ४. १) इत्युपक्रम्य देवमनुष्यादि-सकलमिथुनस्रष्टृत्वेनोक्तस्य तस्यादित्यादिपुरुषकर्तृत्वस्यापि सम्भवात् । तत्रैव तदनन्तरं यथा क्षुरो नापितोप-करणभूतस्तत्कोशे भवत्यवहितः, यथा वा पचनादिना विश्वं बिभ्रदग्निररण्यादौ तन्नीड इति दृष्टान्तोपन्यास-सहितस्य नखपर्यन्तकृत्स्नशरीरानुप्रवेशस्य हिरण्यगर्भे प्रतिपादितस्यात्रापि वाक्यशेषे दर्शनाच्च ।

स्यादेतत्—वेदितव्यः पुरुषो जीवः प्राणात्मा हिरण्यगर्भो वेति पक्षद्वयमप्ययुक्तम्; वेदितव्य-पुरुषकार्यत्वेन श्रुतानां बालाक्युपदिष्टपुरुषाणां मध्ये 'य एव एष शारीरः पुरुषस्तमेवाहमुपासे' इति सामान्यतो जीवमात्रस्यापि परिगणितत्वेन तत्कारणस्य वेदितव्यपुरुषस्य तदन्यत्वप्रतीतेः । प्राणनामभिरा-मन्त्रणेऽपि सुषुप्तस्योत्थानाभावेन प्राणान्यत्वप्रतीतेश्चेति चेत्; उच्यते—'य एवैष शारीरः पुरुषः' इति पर्यायः स्थूलशरीराभिमानिजाग्रदवस्थपुरुषविषयः 'य एवैष प्राज्ञ आत्मा येनैतत्सुषुप्तस्स्वप्न्यया चरति तमेवाहमुपासे' इति तदन्तरपर्यायस्य स्वप्नावस्थजीवविषयत्वदर्शनात् । एवं च शोकभीत्यादिकलुषितौ जाग्रत्स्वप्नदशौ प्रत्याख्याय सुषुप्त्यवस्थः पुरुषो वेदितव्य उपदिष्टो भविष्यति । अत एव उपदिष्टवेदितव्यपुरुष-प्रादिदर्शयिषया सुषुप्तपुरुषगमनमग्रे वर्ण्यते । 'यदा सुप्तः स्वप्नं न कञ्चन पश्यति' इत्यनेन दीर्घस्वप्नं जाग्रत्प्रपञ्चमवान्तरस्वप्नं स्वप्नप्रपञ्चं वा न कंचन पश्यतीति शोकभीत्यादिकारणप्रपंचदर्शनाभावेन सुषुप्तस्य वेदितव्यत्वमुपपाद्यते ।

यदपि प्रश्नप्रतिवचनाभ्यां सुषुप्तस्य नाडीस्थत्ववर्णनम्, तदपि पाप्मास्पृष्टतया तन्मूलकशोक-भीत्यादिराहित्यप्रदर्शनेन वेदितव्यत्वोपपादनार्थम् । 'तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति' (छा. ८. ६. ३) इति छान्दोग्ये हि सौषुप्तिकनाडीरुपगतस्य पाप्मास्पर्शः श्रूयते । पुनः प्रश्नप्रतिवचनाभ्यां करणग्रामस्य जीवे वृत्तिविलय-प्रतिपादनमपि सकलसांसारिकानर्थसम्पादकस्य करणग्रामस्य विलयेन सुषुप्तः शुद्ध इति तस्य वेदितव्यत्वो-पपादनार्थमेव । पुनरन्याभ्यां प्रश्नप्रतिवचनाभ्यां करणग्रामस्य पुनरुद्गमनप्रतिपादनं तु जाग्रतस्स्वप्नदशयोश्चेन्द्रि-यव्यापारैः कलुषितत्वेनावेदितव्यत्वस्थिरीकरणार्थमिति सर्वं सगच्छते ।

यत्तु प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन प्राणान्यत्वप्रदर्शनं, तेन सुप्तपुरुषसम्बन्धिव्यष्टिप्राणान्य-त्वमात्रं सिध्यति, न तु समष्टिप्राणाभिमानिदेवतारूपहिरण्यगर्भान्यत्वमपि । ननु प्रसिद्धानि प्राणादिनामानि विहायाप्रसिद्धैः बृहन्नित्यादिनामभिरामन्त्रणं देवताऽन्यत्वसिध्यर्थं स्यादिति चेत्, तर्हि तेन चन्द्रदेवतान्यत्वमेव सिध्येत् । अस्मिन्नेव प्रकरणे 'य एवैष चन्द्रमसि पुरुषस्तमेवाहमुपासे' इति चन्द्रपर्याये 'मामैतस्मिन् संवादयिष्ठा बृहन्पाण्डरवासास्सोमो राजा अन्नस्यात्मेति वा अहमुपासे' (कौ. ब्रा. ४. १९) इति तेषां नाम्नां चन्द्रविषयत्वश्रवणात् पाण्डरैरंशुभिरच्छादितत्वेन तत्र पाण्डरवासस्त्वोपचारस्य सम्भवात् ।

वस्तुतस्तु सुषुप्तपुरुषं गत्वा कैश्चिन्नामभिर्द्दिरामन्त्रणेऽप्यनुत्थानप्रदर्शनं सुषुप्तजीवस्य तन्नामविषयान्यत्वज्ञापनेनैव सप्रयोजनं वाच्यम् । तत्र च चन्द्रतादात्म्यस्याप्रसक्तत्वात्तदन्यत्वं न ज्ञापनीयम् । सुषुप्तिदशायामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमिति तस्यामपि दशायामनुपरतव्यापारात् प्राणादन्यत्वमेव ज्ञापनीयम् । तदा हि तत्प्रयोजनवत्तरं भवति । सम्भवति च बृहदादिशब्दानां श्रुत्यन्तरप्रसिध्यनुरोधेन प्राणे वृत्तिः । प्राणः खलु बृहन्महान् 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' इति प्राणविद्यायां श्रैष्ठ्यश्रवणात् 'स एषोऽसपत्न' इति सप्तान्नब्राह्मणे तस्यासपत्नत्वश्रवणाच्च । पाण्डरवासाश्च प्राणः । पाण्डरवर्णाः खल्वापोऽस्यः वासः । प्राणविद्यायां 'किं मे वासः' (बृ. ६. १. १४) इति प्राणप्रश्ने 'आपो वासः' इत्युत्तरश्रवणात्, सप्तान्नब्राह्मणे 'अथैतस्य प्राणस्य आपश्शरीरं ज्योतीरूपमसौ चन्द्रः' (बृ. १. ५. १३) इत्यप्शरीरत्वोक्त्या तद्वासस्त्वोपचारसम्भवाच्च । अत एव चन्द्ररूपत्वादेवायं

सोमराजश्च। यदि च 'बृहन् पाण्डरवासाः' इत्यादिचन्द्रपर्यायवाक्यानुसारेणात्रापि चन्द्रनामान्येतानि तदापि सप्तान्नब्राह्मणोक्तरीत्या चन्द्ररूपे प्राण एवैतेषां पर्यवसानं वाच्यम्; सप्रयोजनत्वायेति सर्वथा हिरण्यगर्भामन्त्रणस्यात्र न प्रसक्तिः। किं चामन्त्रणेऽप्यनुत्थानेन हिरण्यगर्भान्यत्वं सिध्यदपि यष्टिघातोत्थाप्यस्य सुषुप्तजीवस्यैव सिध्येत्, न तु सुषुप्तौ तदाधारतया प्रतिपाद्यस्य प्राणस्य। किन्तु तन्नामभिरामन्त्रणेऽपि तदनुत्थानेन चेतनस्य जीवस्य तदन्यत्वसिद्धौ तदुपपादकतया तस्याचेतनत्वमपि सिध्येदित्यलमतिप्रपञ्चेन।

स्यादेतत्—जीवो, हिरण्यगर्भो वा वेदितव्यपुरुष इति पूर्वपक्षे यद्यपि वेदितव्यपुरुषस्य जीवान्यत्वं हिरण्यगर्भान्यत्वं च न प्रतिपन्नमिति बाधकं नास्ति; तथाऽपि ब्रह्मोपक्रमःसकलपापप्रदाहपूर्वकानन्याधीनत्वरूपस्वाराज्यात्मकमोक्षफलोपसंहारश्चेति बाधकद्वयं जागर्तीतिचेत्; उच्यते। येन बालाकिना 'ब्रह्म ते ब्रवाणि' इति प्रतिज्ञातं न तेन ब्रह्मोक्तं, अन्यदन्यदेवोक्तम्। येनाजातशत्रुणा वेदितव्यः पुरुष उपदिष्टः न तेन ब्रह्माभिधानं प्रतिज्ञातम्। अतो न ब्रह्मपरमजातशत्रुवाक्यम्। ननु ब्रह्मोपक्रमाद्बालाकिवाक्यदेव तदपि वाक्यं ब्रह्मपरं स्यादुपकोसलविद्यायामग्निवाक्यादिवाचार्यवाक्यम्। न। वैषम्यात्। तत्र हि वक्तृभेदेऽप्येकवाक्यतापादकमग्निवाक्यमस्ति 'आचार्यस्तु ते गतिं वक्ता' इति; न त्वत्र तथाभूतं वाक्यमस्ति। तर्हि किं बालाकिवचसि ब्रह्मोपक्रमःसर्वथा निरर्थकः? निरर्थक एव; भ्रान्तवाक्यत्वात्। किमर्थं श्रुतौ भ्रान्तवाक्योपन्यासः? असद्वादवत् पूर्वपक्षनिराकरणार्थम्। तद्वादस्य निराकरणं न दृश्यत इति चेत्, दृश्यत एव वाक्यच्छायाविमर्शचतुरैः। ब्रह्म ते ब्रवाणि इति प्रतिज्ञातवता बालाकिना उपदिष्टान् पुरुषान् तत्तत्स्वरूपोपन्यासेन निराकृत्य ततःपरं ब्रह्मत्वेन वक्तव्यपुरुषाभावात् तूष्णींभूते तस्मिन् पुण्यपापकर्मसम्बन्धिनमेव पुरुषं मोक्षाय वेदितव्यमुपन्यस्यन्नजातशत्रुस्तदतिरेकेण मुमुक्षुभिर्ज्ञातव्यं ब्रह्म नाम किञ्चिन्नास्तीति मन्यत इत्येव हि स्पष्टतरं प्रतीयते। यथा 'रसवादिनं ब्रवाणि' इति प्रतिज्ञातवतोदाहृतान् पुरुषान् विप्रलम्भकत्वादितत्तत्स्वरूपोपन्यासेन प्रत्याख्याय ततःपरमुदाहरणीयपुरुषाभावात्तूष्णींभूते तस्मिन् राजानमेव धनार्थिभिरुपसर्पणीयमुपन्यस्यन्नुत्तरवादी रसवादी नाम कोऽपि नास्तीत्येव मन्यत इति प्रतीयते।

एतेन—इदं निरस्तम्— गार्ग्यस्य भ्रान्तत्वेऽपि ब्रह्मोपक्रमो न भ्रान्तः; 'ब्रह्म ते ब्रवाणि' इति प्रतिज्ञामात्रे राज्ञा गोसहस्रस्य दत्तत्वात्। अतो वक्तुं प्रतिज्ञातं ब्रह्म यथाद्वक्तुमजानन्तं गार्ग्यं प्रति राज्ञा

यथावत्तदुपदिष्टमित्येव गार्ग्यराजवाक्ययोरेकवाक्यत्वमुपपादयितुं युक्तम्। अन्यथा 'ब्रह्म ब्रवाणि' इति प्रतिज्ञायाब्रह्माणि ब्रह्मत्वेन वदन्तं गार्ग्यं मृषावादीत्यपोह्य स्वयं राजा जीवं प्राणं वा वदति चेत् स्वयमप्य-सम्बन्धप्रलापी स्यात्। जीवं प्राणं वा ब्रह्मत्वेन वदति चेत् तद्वदेव मृषावादी स्यात्। ततश्च यथा केनचिन्मणितत्त्वज्ञानाभिमानिना काचं प्रदर्श्य 'मणिरेष' इत्युक्ते 'काचोऽयं न मणिः' इति तं प्रत्याख्याय ततः आत्मनो विशेषं जिज्ञापयिषताऽन्येन वस्तुतो मणिरेव प्रदर्शनीयः; एवं राज्ञाऽपि ब्रह्मोपदेष्टव्यम्। अतो गार्ग्य-वचनगतब्रह्मोपक्रमसामर्थ्यादेव राजवाक्यस्य ब्रह्मपरत्वमवसीयत—इति। न हि राज्ञा गोसहस्रं दत्तम्, किन्तु 'सहस्रं दद्मः' इत्युक्तम्। तत्तु असम्भावितमेव ब्रह्मनाम किञ्चिद्वक्तुमयमारभत इति मन्यमानस्य राज्ञः परिहा-सवाक्यमित्यपि सङ्गच्छते; 'जनको जनक इति वै जना धावन्ति' इति परिहासवाक्यसमभिव्याहारात्। 'तथाऽपि 'दद्मः' इति प्रतिश्रुतं दत्तमेव स्यात्' इति चेत्; न। 'अदत्तन्तु भयक्रोधशोकमोहरुजाऽन्वितैः। तथोत्कोचपरीहासव्यत्यासफलयोगतः' इति परिहासेन दत्तस्यापि प्रत्याहरणार्हत्वेनादत्तेषु परिगणनात्। ब्रह्मान्यस्याभिधानेऽपि न राज्ञोऽसम्बन्धप्रलापित्वमापतति। मोक्षार्थं वेदितव्यं ब्रह्म नाम किञ्चिन्नास्ति, किन्तु मुमुक्षूणामुपदिष्टः पुरुष एव वेदितव्य इति साङ्गत्यात्, रसवादिवचनप्रत्याख्यातृवचनस्यापि तदन्यविषयस्यै-वमेव साङ्गत्यदर्शनात्। मणिप्रवक्तृदृष्टान्तस्त्वत्र न प्रवर्तते। न हि 'काचो मणिर्न भवति किन्त्वयं मणिः' इति प्रतिवक्तृवचने मणिशब्दवदिह राजवचने ब्रह्मशब्दोऽस्ति 'आदित्यादिपुरुषा ब्रह्माणि न भवन्ति किन्त्विदं ब्रह्म' इति।

यदि च गार्ग्यवचनागतोपक्रमानुसारेण राजवचनमप्यवश्यं ब्रह्मपरं वक्तव्यम्, तदप्युपपद्यत एव। आदित्यादिपुरुषा ब्रह्म न भवन्ति, किन्तु तेषां कर्ता पुण्यापुण्यवान्जीवः प्राणो वा ब्रह्मेति राजवचनाभिप्राय-वर्णनोपपत्तेः। अस्ति हि जीवे ब्रह्मशब्दस्सिद्धान्तिनोऽपि सम्मतः 'इदं ब्रह्मायाति इदमागच्छति' (बृ. ४. ३. ३७) इति श्रुतौ। अस्ति च प्राणात्मनि हिरण्यगर्भे 'कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते' (बृ. ३. ९. ९) इति श्रुतौ। एवञ्च सर्वपाप्माहतिपूर्वकस्वाराज्यफलप्रतिपादक-स्योपसंहारस्यापि जीवे, प्राणे वा नानुपपत्तिः। तस्माद्बालाक्यजातशत्रुसंवादरूपस्यास्य प्रकरणस्य जीवः प्राणो वा ब्रह्म, न तदतिरिक्तं ब्रह्मास्तीत्यस्मिन्नर्थे पर्यवसितत्वात् सर्वेषां वेदान्तानां वियदादिसर्वजगत्स्रष्टृत्वोप-

लक्षिते निर्विशेषे ब्रह्मणि समन्वय इत्येतदयुक्तम् । ब्रह्मलक्षणं चायुक्तम्ः तदुपलक्षणीयस्य निर्विशेषस्य ब्रह्मण एवास्मिन् प्रकरणे प्रतिक्षेपप्रतीतेरिति ।

एवं प्राप्ते **सिद्धान्तमाह**— 'जगद्वाचित्वात्' इह वेदितव्यः पुरुषो जीवसामान्यात् तद्व्यतिरिक्ताद्धिरण्यगर्भाचातिरिक्तं परं ब्रह्म; 'यस्य वैतत्कर्म' इति वाक्ये एतच्छब्दस्य कर्मशब्दस्य च जगद्वाचित्वात् । एतदुक्तं भवति—अत्रैतच्छब्दः प्रत्यक्षादिसन्निधापितसकलजगद्वाची; विशिष्य कस्यचित्पुरुषसम्बन्धनिर्देशाकांक्षस्य नपुंसकैकवचनान्तनिर्देशार्हस्य प्रकृतस्याभावेन तस्य संकुचितवृत्तिकल्पकाभावात् । तथा कर्मशब्दोऽपि कार्यत्वाकारेण सकलजगद्वाची; चलनादृष्टरूढयोरन्यतरपरिग्रहे नियामकाभावेन क्रियते इति कर्मेति योगस्य समाश्रयणीयत्वात्, रूढिद्वयस्य परस्परपराहतौ लब्धोन्मेषस्य योगस्य प्रबलत्वात् । न च चलन एव रूढिस्तत्साध्यत्वाददृष्टे लक्षणेति शक्यं वक्तुम्; मानसपुण्यपापरूपस्यादृष्टस्य चलनसाध्यत्वाभावेनादृष्टसामान्ये कर्मशब्दस्य रूढ्यन्तरस्वीकारावश्यम्भावात् । अपि च कर्मशब्दस्य चलनादृष्टान्यतरपरत्वे 'यस्यकर्म स वेदितव्य' इत्येतावदेव वक्तव्यं स्यात् । प्रत्यक्षादिसन्निधापितवाची एतच्छब्दोऽवधारणार्थो वाशब्दश्चानर्थकः स्यात् । तस्य कार्यपरतायां 'एतेषां पुरुषाणां कर्ता' इति वाक्यमेव व्यर्थं स्यात् इति चेत्, न । बालाकिना ब्रह्मत्वेन कीर्तितानां पुरुषाणामब्रह्मत्वख्यापनेन तस्य सप्रयोजनत्वात् । तथा च वाक्यद्वयस्याप्येवमर्थः सम्पद्यते । य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता किमनेन विशेषेण यस्य वा प्रत्यक्षादिसन्निधापितं कृत्स्नमेव जगत्कार्यमिति । एवञ्च वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थो भवति । तस्मादेतत्कर्मपदयोर्जगद्वाचित्वेन तच्छब्दात् सप्राणसजीवसकलजगदीक्षापूर्वकस्रष्टृत्वरूपात् तत्कर्तृत्वलिङ्गात् प्राणजीवातिरिक्तं परं ब्रह्म वेदितव्यः पुरुष इति सिद्धम् । १. ४. १६ ।

ननु जीवमुख्यप्राणातिरिक्तब्रह्मलिङ्गवज्जीवमुख्यप्राणलिङ्गमप्यत्र दृश्यते इत्याशङ्कामुद्भाव्य परिहरति—

**जीवमुख्यप्राणलिङ्गान्नेतिचेत्तद्व्याख्यातम् । १७ ।**

तद्व्याख्यातमिति 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र. सू. १. १. ३१) इति प्रतर्दनाधिकरणे परिहृतमित्यर्थः । एतदुक्तं भवति—यथा 'तद्यथा श्रेष्ठी' इत्यादिवाक्ये प्रधानपुरुषस्य

स्वैर्भृत्यैरिवादित्यादिपुरुषैरालोकदानादिनोपकारकैरात्मनो भोक्तृत्वं प्रधानपुरुषं प्रति भृत्यानामिवादित्यादिपुरुषाणामात्मानं प्रति स्वोचितैरुपकारैः पालयितृत्वञ्च वर्ण्यमानं जीवलिङ्गमस्ति, यथा वा 'तद्यथा क्षुर इत्यादिवाक्ये बृहदारण्यकप्रतिपन्नं मुख्यप्राणात्माहिरण्यगर्भलिङ्गमस्ति, एवं वेदितव्यपुरुषोपदेशवाक्य एवासंकुचितप्रत्यक्षादिसिद्धसकलकार्यकर्तृत्वं तदतिरिक्तब्रह्मलिङ्गम् । तद्धि सजीवसहिरण्यगर्भसर्वजगत्कर्तृत्वरूपम्; 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः' (मु. २. १. १) 'इदं सर्वमसृजत यदिदं किंच' (तै. २. ६) 'यस्सर्वज्ञस्सर्ववित्' (मु. १. १. ९) 'हिरण्यगर्भं पश्यत जायमानम्' (श्वे. ४. १२) इत्यादिश्रुत्यन्तरेऽपि जीवमुख्यप्राणयोरपि कार्यत्वप्रसिद्धिसत्वात् । एवं च जीवमुख्यप्राणलिङ्गयोरप्यनुरोधे ब्रह्मजीवमुख्यप्राणानां त्रिविधमुपासनं विवक्षितमत्र वक्तव्यमिति वाक्यभेदः प्रसज्येत । न चात्र वाक्यभेदो न्याय्य इति वर्णितं प्रतर्दनाधिकरणे । ननु तत्रोपक्रमोपसंहाराभ्यां ब्रह्मविषयत्वं वाक्यस्यावगतमिति वाक्यभेदः परिहरणीयः, न त्वत्रेति चेत् । अत्रापि परिहरणीय एव; 'ब्रह्म ते ब्रवाणि' इत्युपक्रमेण 'सर्वान्पाप्मनोऽपहत्य' इत्याद्युपसंहारेण च वाक्यस्य ब्रह्मविषयत्वावगमात् । वेदितव्यपुरुषोपदेशवाक्यस्य गार्ग्यप्रतिज्ञातब्रह्मान्यविषयत्वावगमे हि रसवादिकथनप्रत्याख्यातृवचनदृष्टान्तः क्रमते । इह जगत्कर्तृत्वलिङ्गेन तस्य ब्रह्मविषयत्वावगमान्माणीतत्त्ववक्तृवचनदृष्टान्त एव प्रवर्तते ।

एतेन—ब्रह्मोपक्रमोऽपि जीवमुख्यप्राणान्यतरविषयः; तयोरपि क्वाचित्कब्रह्मशब्दप्रयोगदर्शनात्; उपसंहारोऽपि तद्वेदनफलप्रतिपादनपर इति शङ्काऽपि—निरस्ता । श्रुत्यन्तरेषु जीवमुख्यप्राणातिरिक्ते परब्रह्मण्येव ब्रह्मशब्दस्य तद्वेदनादेव परमपुरुषार्थलाभस्य च प्रसिद्धतरत्वाच्च । 'सहस्रं दद्म' इत्यपि परिहासवाक्यत्वेन न योजनीयं, किन्तु ब्रह्मवचनप्रतिज्ञापूजनार्थत्वेनैव योजनीयम् । परिहासवाक्यत्वेन योजनेऽपि बालाकिरयं ब्रह्मतत्वं वक्तुं न प्रभवतीत्येव परिहासाभिप्रायो वर्णनीयः, न तु जीवातिरिक्तं ब्रह्मनामकं किञ्चिन्नास्तीत्येवमभिप्रायः; स्वयमेव सकलजीवव्यावृत्तासंकुचितसर्वजगत्कर्तृत्वरूपतल्लिङ्गवर्णनात् । एवञ्चैकस्मिन्वाक्ये ब्रह्माब्रह्मलिङ्गेषु सन्निविष्टेष्वब्रह्मलिङ्गानि ब्रह्मणि योजनीयानि, न तु ब्रह्मलिङ्गान्यब्रह्मणीति प्रतर्दनाधिकरणे दर्शितन्यायेनैव जीवमुख्यप्राणलिङ्गानि अभेदाभिप्रायेण ब्रह्मणि योजनीयानि ।

नन्वेवं प्रतर्दनाधिकरणेन गतार्थमिदमधिकरणम् । नेति ब्रूमः । 'यस्य वैतत्कर्म' इत्यस्य ब्रह्मलिङ्गपरत्वोपपादकन्यायव्युत्पत्त्यर्थत्वादस्याधिकरणस्य तदधीनत्वाच्चोपक्रमोपसंहारयोर्ब्रह्मविषयतात्मकार्थला-

भस्य। ननु तथाऽपि पूर्वाधिकरणन्यायेनैव निर्णेतुं शक्यमिदं वाक्यं नैतदधिकरणव्युत्पाद्यं कर्मशब्दस्य जगद्वाचित्वोपपादकं न्यायमपेक्षते। पूर्वाधिकरणे हि ब्रह्मकारणत्वप्रतिपादकबहुवाक्यानुरोधेन तद्विरोधिनामसत्कारणत्वादिप्रतिपादककतिपयवाक्यानां नयनं कृतम्, ततः कथमिह सकलजीवातिरिक्ततत्सृष्टिस्थितिसंहारतन्नियमनादिस्वतन्त्रानादिसिद्धपरब्रह्मप्रतिपादकबहुवाक्यानुरोधेनास्यैकस्य वाक्यस्य पूर्वपक्षे वर्णितं जीवमुख्यप्राणातिरिक्तपरब्रह्मनिराकरणपरत्वं तयोरन्यतरस्य वेदितव्यपरत्वं च प्रत्याख्याय परब्रह्मपरतया नयनं कर्तुमशक्यम्? सत्यम्। न्यायव्युत्पादनार्थं कृत्वाचिन्तयेदमधिकरणम्। तदेतदनन्तरसूत्रे स्फुटीकरिष्यामः। १. ४. १७।

जीवमुख्यप्राणातिरिक्तपरब्रह्मपरमिदं बालाक्यजातशत्रुसंवादरूपं प्रकरणमित्येतत् हेत्वन्तरेणापि द्रढयति—

**अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके। १८।**

अन्यार्थं जीवमुख्यप्राणाभ्यामन्यद्ब्रह्म तदर्थमेवेदं प्रकरणं, न तु तन्निराकरणार्थमिति जैमिनिराचार्यो मन्यते। कुतः, प्रश्नव्याख्यानाभ्याम्। प्रश्नस्तावदजातशत्रोर्ब्रह्मत्वेन बालाकिनोपदिष्टेष्वादित्यादिपुरुषेषु प्रत्याख्यातेषु ततःपरमविज्ञानात्तूष्णीं भूते च बालाकौ बालाकिं प्रति 'एतावन्नु बालाके' इति। 'एतावद्धि' इति बालाकेः प्रतिवचनानन्तरं 'मृषा वै किल मा संवदिष्ठा ब्रह्म ते ब्रवाणि' इत्यजातशत्रोर्वचनं मृषात्वव्याख्यानम्। एताभ्यां प्रश्नव्याख्यानाभ्यां ब्रह्मप्रतिपदानार्थमेवेदं प्रकरणं, न तु तस्य निराकरणार्थमित्यवसीयते। यदि हि तन्निराकरणार्थं स्यात्तदा ब्रह्मनाम किञ्चिन्नास्तीत्यभिमन्यमानस्तन्निराकरणप्रवृत्तो राजा बालाकेर्वक्तव्यपुरुषांतरसद्भावेऽपि तत्प्रतिज्ञाया मृषात्वं प्रतिज्ञाकालमारभ्य मन्येतैवेति 'एतावन्नु' इति प्रश्नपूर्वकं 'एतावदेव' इत्युत्तरमपेक्ष्य तन्मृषात्वं न व्याचक्षीत। ब्रह्मप्रतिपादनार्थत्वे तु ब्रह्मास्तीत्यवगच्छन्राजा किमयं गार्ग्यः स्थूलारुन्धतीन्यायेनाब्रह्माणि ब्रह्मत्वेनोपादिक्षत्, किं वा भ्रान्त्येति निश्चेतुमशक्नुवन्नुदाहृतप्रश्नप्रतिवचनेन गार्ग्यस्य भ्रान्तत्वं निश्चित्य तत्प्रतिज्ञाया मृषात्वं व्याचष्ट इति युज्यते।

अपिच एवमेके शाखिनो वाजसनेयिनोऽस्मिन् बालाक्यजातशत्रुसंवादेऽस्मिन्नेव स्थले प्रश्नव्याख्यानाभ्यां प्रकरणमिदं ब्रह्मप्रतिपादनार्थं, न तु तन्निराकरणार्थमिति स्पष्टयन्ति। 'सहोवाचाजातशत्रुरेतावन्नु

३ इति एतावद्वीति । नैतावता विदितं भवति' (बृ. २. १. १४) इति । अत्र हि आदित्यपुरुषा-दिवेदनमात्रेण ब्रह्म विदितं न भवतीति व्याचक्षाणो राजा वेदितव्यमन्यद्ब्रह्मास्तीति मन्यत इति स्पष्टमेव प्रतीयते । ननूदाहृतप्रश्नव्याख्यानबलाद्ब्रह्मप्रतिपादनार्थं प्रकरणमित्यवसयितां नाम । प्रतिपिपादयिषितं ब्रह्म जीवमुख्यप्राणयोरन्यतरद्भविष्यति । तयोरपि ब्रह्मशब्दप्रयोगस्योदाहृतत्वादिति द्वितीयपूर्वपक्षेऽप्येतदेवोत्तरं 'अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके' इति । इह जीवमुख्यप्राणप्रसञ्जनमन्यार्थं, ब्रह्मप्रतिपत्त्यर्थं, न तु प्राधान्येन जीवस्य, मुख्यप्राणस्य वा प्रतिपादनार्थमिति जैमिनिर्मन्यत इति । कुतः 'क्वैष एतद्बालाके' इत्यादिना 'प्राण एवैकधा भवति' इत्यन्तेन ग्रन्थेन वर्णिताभ्यां प्रश्नव्याख्यानाभ्याम् । 'क्वैष एतद्बालाके' इति प्रश्नस्तावज्जीवो वेदितव्य इति प्रतिपादनार्थं न भवति । तथा सति तत्स्वरूपस्यैव प्रष्टव्यतया तदाधार-प्रश्नायोगात् । न च तस्य नाड्याधारत्ववर्णनेन पापास्पृष्टतया तन्मूलशोकभीत्यादिराहित्यप्रदर्शनेन वेदितव्यत्वोपपादनार्थमाधारप्रश्न इति वाच्यम् । तथा सति 'तासु तदा भवति' इति नाडीस्थत्ववत्पापा-स्पर्शस्यापि बालाकिं प्रति वर्णनीयत्वापत्तेः । न च सौषुप्तिकनाडीः प्रविष्टस्य पापास्पर्शश्छान्दोग्ये श्रुतः प्रसिद्ध इति तदवर्णनमिति वाच्यम् । 'क्वैष एतत्' इति प्रश्नानन्तरं 'तदुह बालाकिर्न विजज्ञौ' इत्युक्तत्वेन सुषुप्तौ नाडीप्रवेशमेवाजानतो बालाकेस्तत्प्रवेशकृतपापास्पर्शप्रसिध्यभावात् । तस्माज्जीवाधारो वेदितव्यः पुरुष इति प्रतिपादनार्थ एव स प्रश्नः । 'प्राण एवैकधा भवति' इत्येतदेव च तस्योत्तरं, न तु 'तासु तदा भवति' इत्येतत्; नाडीनां वेदितव्यपुरुषत्वाभावात् । तत्तु 'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृ. २. १. १९) इति श्रुत्यन्तरानुसारेण हृदयावच्छिन्नब्रह्मप्राप्तये मार्गोपदेशपरं नेतव्यम् ।

एवञ्च द्वितीयप्रश्नः करणग्रामाधिकरणविषय इति न युक्तम्; अग्रे तदुत्तरादर्शनात् । 'जीवाधि-करणविषय इत्यपि न युक्तम्; प्रथमप्रश्नेन पुनरुक्तिप्रसङ्गात्' इति चेत्; न । तयोरेकः कास्मिन्नधिकरणे शयितोऽभूदिति जीवाधिकरणधर्मिविशेषविषयः, अपरस्तु जीवः किमन्यः सन्नन्यस्मिन् शयितोऽभूदुतानन्यः सन्नात्मनीत्यधिकरणगतान्यत्वानन्यत्वरूपविशेषणवैशिष्ट्यविषय इति भेदोपपत्तेः । अत एव प्रश्नद्वयस्यापि व्याख्यानार्थं 'प्राण एवैकधा भवति' इत्युक्तम् । अत्र हि 'प्राणे' इत्यधिकरणभूतधर्मिविशेषप्रश्नस्य प्रतिवचनं 'एकधा भवति' इति धर्मविशेषवैशिष्ट्यप्रश्नस्य । एकधा भवति एकीभवतीत्यर्थः; 'स्वमपीतो

भवति' इति हि श्रुत्यन्तरम् । 'तदैनं वाक्' इत्यत्र 'एतस्मादात्मनः प्राणाः' इत्यत्र च एतत्पदं प्राणपरामर्शि । प्राणस्य सप्तम्यन्तनिर्दिष्टत्वेऽपि प्रतिपिपादयिषितत्वेन प्राधान्यात् 'तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा' इत्यत्र सप्तम्यन्तनिर्दिष्टस्यापि पयस एव व्याप्यकर्मत्वेन प्रधानस्य सर्वनाम्ना परामर्शदर्शनात् । अत्र च वाक्यद्वये प्राणानां वृत्तिलयोद्गममात्रं न प्रतिपाद्यते; विषयैः सह लयोद्गमप्रतिपादनात् । न हि सुषुप्तौ विषयाणां व्यापारविलयः प्रबोधे तदुद्भवश्चानुभवानुरोधी । श्रुतौ भारनिवेशे तु यथाश्रुति इन्द्रियाणां तद्विषयभूतस्य नामरूपात्मकस्य कृत्स्नप्रपञ्चस्य लयः स्वीकर्तुं युक्तः । एवं जीवैकीभावाधिकरणस्य प्राणस्य सुषुप्तौ सेन्द्रियसकलप्रपञ्चलयाधिकरणतया, प्रबोधे तदुद्गमापादानतया, प्रतिपादनं तस्य गार्ग्योपदिष्टेभ्य आदित्यादिपुरुषेभ्योऽन्यत्वं दृढीकर्तुम् । तत एव—जीवो, मुख्यप्राणो वा वेदितव्यः पुरुष इति पूर्वपक्षोऽपि निरस्तो भवति । न हि यतः कुतश्चिज्जीवाद्धिरण्यगर्भाद्वा सर्वे लोकास्सर्वे देवाश्चोद्भवन्तीति युज्यते ।

यदि च देवशब्द इन्द्रियाधिष्ठातृदेवपरः, तदाऽपि हिरण्यगर्भव्यावृत्तिरस्त्येव; 'बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्म तत्राधिदैवतम्' इति तस्यान्तरिन्द्रियाधिष्ठातृत्वोक्तेः । 'स यदा प्रबुध्यते यथाऽग्नेर्विष्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा' इत्यादिनैव 'कुत एतदागात्' इति प्रश्नस्य प्रतिवचनमप्यर्थाल्लब्धम् । तथा हि 'कुत एतदागात्' इति प्रश्नो न जीवागमनापादानविषयः; यत्र धर्मिणि शयितोऽभूत् तत आगादिति स्वयमेव ज्ञातुं शक्यत्वात्, किन्तु किमन्यस्मादागत उतात्मन्येव भेदकोपाधिविलयादेकीभूय स्थितः पुनः प्रबोधसमये भेदकोपाध्युद्भवात्ततो भेदेनागत इत्यपादानस्यान्यत्वानन्यत्वधर्मविशेषवैशिष्ट्यविषयः । यद्यप्यधिकरणान्यत्वानन्यत्वविषयस्य प्राचीनप्रश्नस्य प्रतिवचनं यद्धर्मविषयं वक्ष्यते तद्धर्मविशिष्टादयमागादित्येतदपि निश्चेतुं शक्यम्, तथाप्यनन्यत्वपक्षस्य प्रतिवचने वक्तव्यत्वेन विवक्षितत्वात्, तस्य चालौकिकत्वेनासम्भावनीयत्वात् तद्दृढीकरणार्थमधिकरणत्वदशायामिवापादानत्वदशायामप्यनन्यत्वं वक्तव्यमिति तद्विषयः प्रश्नो घटते । तत्प्रतिवचनलाभार्थं सुषुप्तो यदा प्रबुध्यते, तदानीमात्मनः सुषुप्तभूतादेतस्मात् प्राणशब्दोक्तादिन्द्रियादयो विप्रतिष्ठन्त इति व्याख्येयम् । एवञ्चोदाहृतप्रश्नपर्यालोचनया, तत्प्रतिवचनपर्यालोचनया च प्रकरणमिदमन्यार्थं, न तु जीवो, हिरण्यगर्भो वा वेदितव्यः पुरुष इति प्रतिपादनार्थमिति सिद्धम् ।

अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्प्रकरणे प्रकरणमिदमन्यार्थमिति स्पष्टयन्ति । तत्र हि 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाऽभूत्कुत एतदागात्'(बृ. २. १. १६) इति प्रश्नद्वयं श्रूयते । तदनन्तरं च 'यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदयआकाशस्तस्मिञ्छेते' (बृ. २. १. १७) इति प्रथमप्रश्नस्य प्रतिवचनम् । द्वितीयप्रश्नस्य प्रतिवचनं तु 'एवमेवास्मादात्मनस्सर्वे प्राणास्सर्वे लोकास्सर्वे देवास्सर्वाणि भूतानि व्युच्चरन्ति' (बृ. २.१.२०) इत्यग्रिमवाक्ये । अत्र 'क्वैष तदाऽभूत्' इति प्रश्ने करणग्रामाधिकरणविषयत्वशङ्काया नास्त्यवकाशः; 'य एष विज्ञानमयः पुरुषः' (बृ. २. १. १६) इति प्राङ्निर्देशात् । तदधिकरणविषयस्य प्रतिवचनस्य च नास्ति मुख्यप्राणविषयत्वशङ्कावकाशः; आकाशशब्देनाधिकरणनिर्देशात् । अस्याकाशशब्दस्य एतत्स्थाने कौषीतकिब्राह्मणपठितस्य प्राणशब्दस्य चैकार्थ्यस्य वक्तव्यतया तयोर्ब्रह्मविषयत्वावश्यम्भावात् । ब्रह्मण्येव तयोश्श्रुत्यन्तरेषु निरूढिदर्शनात् आनन्दवल्ल्यां 'को ह्येवान्यात् कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्' (तै. २. ७) इत्याकाशशब्दनिर्दिष्टस्य चापरिच्छिन्नानन्दस्य ब्रह्मण उत्तरोत्तरशतगुणमात्रपरिच्छिन्नानन्दशालिषु परिगणितान्मुख्यप्राणरूपात् हिरण्यगर्भाद्भिन्नत्वावगमात् । तस्मात्प्रकरणमिदं जीवमुख्यप्राणातिरिक्तब्रह्मविषयमिति तत्रैव तयोर्लिङ्गं सार्वात्म्याभिप्रायेण योजनीयम् ।

ननु वाजसनेयिशाखायां 'नैतावता विदितं भवति' इति राजवाक्येन गार्ग्योपक्रान्तब्रह्मविषयमेवाग्रेतनं सुषुप्तपुरुषोत्थापनोपक्रमं कृत्स्नं राजवाक्यमित्यवगतम् । तच्च ब्रह्म जीवो न भवतीति सुषुप्तजीवाधिकरणप्रश्नेनावगतम् । तदधिकरणं ब्रह्म मुख्यप्राणो न भवतीति प्रतिवचनगताकाशशब्देन सर्वभूतलोकदेवोद्गमापादानत्वप्रतिपादनेन चावगतम् । अतस्तदेकार्थं कौषीतकिब्राह्मणवाक्यमपि जीवमुख्यप्राणातिरिक्तविषयमिति निश्चेतुं शक्यमेव । किमर्थमिदमधिकरणमिति चेत्; उक्तमेवोत्तरं कृत्वाचिन्तयेदमधिकरणं प्रवृत्तमिति । तदेव उत्तरमत्रापि द्रष्टव्यम् । 'अपि चैवमेके' इत्यस्याः कृत्वाचिन्ताया उद्घाटनं कृतं । प्राचीनसूत्रदर्शितायास्तु कृत्वाचिन्ताया 'वाक्यान्वयात्' इत्यग्रिमसूत्रमस्मिन्नप्यधिकरणे प्रविष्टं मत्वा तेन बहूनां वेदान्तवाक्यानां जीववर्गात्तद्विशेषाद्धिरण्यगर्भाच्च भिन्ने ब्रह्मणि समन्वितत्वादपि प्रकरणमिदमन्यार्थमित्येवंपरेणोद्घाटनं कृतमित्यनुसन्धेयम् । यत्तु भाष्ये प्राणनिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्य-

तिरिक्तोपदेशोऽभ्युच्चय इत्युक्तं, तद्धिरण्यगर्भनिराकरणार्थं न भवति, किन्तु प्रतर्दनाधिकरणपूर्वपक्षन्यायेन मन्दशङ्कनीयः प्राणवायुरेवात्र वेदितव्यः पुरुषोऽस्तु तत्र परिस्पन्दरूपस्य कर्मणस्सदा सत्वादिति सर्वमनवद्यम् । १. ४. १८ ।

। इति जगद्वाचित्वाधिकरणम् । ५ ।

---

(६ आधिकरणम्)

**वाक्यान्वयात् ।१९।**

बृहदारण्यके मैत्रेयीब्राह्मणे याज्ञवल्क्यः स्वयं प्रविव्रजिषया मैत्रेयीकात्यायन्योः स्वभार्ययोर्वित्तस्य विभागं चिकीर्षन्वित्तेन किममृतत्वं प्राप्तुं शक्यमिति मैत्रेय्या पृष्टो 'यथैवोपकरणवतां जीवितं तथैव ते जीवितं स्यादमृतत्वस्य तु नाशाऽस्ति वित्तेन' (बृ. २. ४. २) इत्युक्त्वा 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि' (बृ. २. ४. ३) इति तया पुनरमृतत्वसाधनं पृष्टो 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति' (बृ. २. ४. ५) इत्यादिभिः 'न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियम्भवति' (बृ. २.४.५) इत्यन्तैः वाक्यैः पतिजायापुत्रवित्तपशुब्रह्मक्षत्रलोकदेववेदभूतप्रभृति सर्वं यस्य भोगार्थतयैव प्रियं भवति, तत्पत्यादिसर्वभोक्तारमात्मानमुपक्रम्य 'आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ. २. ४. ५) इत्यमृतत्वसाधनमात्मदर्शनं दर्शनसाधनानि श्रवणादीनि चोपदिश्य 'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' (बृ. २. ४. ५) इत्यात्मविज्ञानेन सर्वविज्ञानं प्रतिजज्ञे । तत्र यद्दर्शनममृतत्वसाधनमुपदिदेश सोऽयमात्मा किं जीव उत परमात्मेति जीवब्रह्मलिङ्गाभ्यां संशये —

**पूर्वपक्षः**—जीव एवायमात्मा । उपक्रमे पतिजायादिप्रियत्वलिङ्गात्, मध्ये 'विज्ञानमय एवैतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविश्यति' (बृ. २. ४. १२) इत्युत्पत्तिविनाशलिङ्गाद्, अन्ते 'विज्ञातारमरे केन विजानीयात्' (बृ. २. ४. १४) इति विज्ञातृत्वलिङ्गाच्च । तद्विज्ञानेन सर्वविज्ञानप्रतिज्ञानं तु भोग्यजातस्य भोक्तृशेषत्वादौपचारिकं योजनीयम् । युक्तं ह्युपक्रमोपसंहारपरामर्शानुसारेण पूर्वाधिकरणविषयवाक्ये जीवलिङ्गस्य ब्रह्मणीवात्र ब्रह्मलिङ्गस्य जीवे योजनम् ।

स्यादेतत्—उपक्रमादीनां जीवनिष्ठत्वे भवेदेवं, तदेवासिद्धम् । तथाहि—उपक्रमे 'न वा अरे पत्युः कामाय' इत्यादिकं आत्मैव द्रष्टव्य इति वक्ष्यमाणार्थस्योपपादकतया वर्ण्यते । न च—जीवात्मनः कामाय पत्यादयः प्रिया भवन्तीति वचनं प्रियं पत्यादिकं परित्यज्य तद्वियुक्तं केवलं जीवात्मस्वरूपमन्वेष्टव्य-मित्यत्रोपपादकं भवति । प्रियमेव ह्यन्वेष्टव्यं, न प्रियवियुक्तं स्वरूपं । परमात्मनः कामायेष्टनिर्वृत्तये पत्यादयः प्रिया भवन्तीति वचनं तु पत्यादिकं परित्यज्य परमात्मैव द्रष्टव्य इत्यत्र भवत्युपपादकम् । परमात्मा खलु 'एष ह्येवानन्दयाति' इति श्रुतः पतिजायादीनां कादाचित्कं प्रियत्वमापादयति । तस्मात् स एव निरतिशयानन्दरूपोऽन्वेष्टव्य इति । एवञ्च पतिजायादिवाक्यानामित्थमर्थो ग्राह्यः— न हि पतिजायापुत्रवित्तादयो मदिष्टनिर्वृत्तये अहमस्य प्रियः स्यामिति स्वसङ्कल्पतः प्रिया भवन्ती, किन्तु परमात्मनः तत्तज्जीवप्रियप्रति-लम्भनरूपेष्टनिर्वृत्तये अहमस्य प्रियः स्यामिति स्वसङ्कल्पतः प्रिया भवन्तीति । परमात्मा हि तत्तत्कर्मानु-सारेण जीवात्मनः प्रियमनुभावयितुमिच्छन् प्रतिनियतदेशकालपरिमाणं तत्तद्वस्तुषु प्रियत्वमापादयति । एवमुपक्रमगतोपपादकसहितस्य द्रष्टव्यवाक्यस्य परमात्मपरत्वे सति मध्ये जीवोत्पत्तिविनाशसङ्कीर्तनं मुण्डके 'तथाऽक्षराद्विविधास्सोम्य भावाः प्रजायन्ते तत्र चैवापियन्ति' (मु. २. १. १) इति तदुत्पत्तिलयसङ्कीर्तन-मिव प्रकृतब्रह्मभावप्रतिपत्त्यर्थतया, तत्स्तुत्यर्थतया वा सम्भवदन्वयं न प्रकरणस्य जीवपरतामापादयति । 'विज्ञातारम्' इति श्रुतं विज्ञानकर्तृत्वं तु ब्रह्मण्यपि प्रसिद्धमेव 'तदैक्षत' 'स ईक्षांचक्रे' 'यस्सर्वज्ञः' इत्यादि-श्रुतिष्विति; चेत्—

उच्यते— परमात्मनः पुण्यापुण्यकर्मण इव पतिजायादिषु कदाचित्प्रियत्वापादनेनानन्दरूपत्वं कदाचिदप्रियत्वापादनेन दुःखरूपत्वमिव न सिध्यति । नतरां निरतिशयानन्दत्वम् । नतमां पत्यादिकं परित्यज्य द्रष्टव्यत्वम् । तस्मात्पतिजायादिवाक्यानां परमात्मविषयत्ववर्णनं परमात्मैव द्रष्टव्य इत्यस्योपपदकम् । तेषां जीवात्मविषयत्ववर्णनमपि जीवात्मैव द्रष्टव्य इत्यस्योपपादकं न भवतीत्युक्तम्, इति चेत्, सत्यमुक्तम् । विमृश्य तु नोक्तम् । तेषां जीवात्मविषयत्ववर्णने तस्य पतिजायाद्यपेक्षयाऽतिशयितपुरुषार्थत्वालाभे हि पतिजायादिकं परित्यज्य तस्यैवान्वेष्टव्यत्वे तदुपपादकं न भवेत्, तत्तु लभ्यत एव । तथाहि—सर्वेषामपि स्वात्मा प्रियः, पतिजायादयोऽपि प्रिया इत्यनुभवसाक्षिकमेतत् । तत्र पतिजायादीनां स्वात्मव्यतिरिक्तानां सर्वेषां प्रियत्वं पतित्वादिप्रयुक्तं न भवति, किन्तु स्वात्मप्रयुक्तमिति अस्मिन्नर्थे तेषां स्वेष्टसंपादकत्वदशायामिव

स्वानिष्टसंपादकत्वदशायां प्रियत्वादर्शनेन सर्वसंप्रतिपत्तियोग्ये वर्ण्यमाने स्वात्मनः पतिजायादीन्प्रति इष्टसंपादकत्वदशायामनिष्टसंपादकत्वदशायाञ्चाविशेषेण प्रियस्य कथं पतिजायाद्यपेक्षयाऽतिशयितपुषार्थत्वं न लभ्यते। तस्मादात्मानात्मनोर्लोकप्रसिध्यनुसारिमुख्यगौणपुरुषार्थत्वरूपं तत्त्वमालोच्य गौणं परित्यज्य मुख्यमेव समाश्रयेदित्ययमर्थः पतिजायादिवाक्यसहितेन द्रष्टव्यवाक्येन वर्ण्यते इत्येव युक्तम्। उक्तञ्च सुरेश्वराचार्यैः 'दृष्टत्वाऽनुभवतस्तत्वमात्मानात्मपदार्थयोः। उपादित्सा जिहासा च तत्कृतैवानुपाल्यताम्' इति। 'स्वत एवाप्रियोऽनात्मा ह्यात्मप्रीत्यर्थसाधनात्। जायादिः स्यात्प्रियो भक्त्या बन्धक्याः कामुको यथा। निर्हेतुका स्वतः प्रीतिरात्मन्येव यतस्ततः। भाक्तं प्रियं परित्यज्य मुख्यं प्रियमुपाश्रयेत्' इति च।

एवञ्च 'न वा अरे पत्युः कामाय' इत्यादिवाक्येषु प्रसिद्धिद्योतको वैशब्दोऽपि सङ्गच्छते। प्रसिद्धं ह्येतल्लोके यत्पत्यादयो जायादीनां पत्यादिप्रयोजनाय प्रिया न भवन्ति, किन्तु जायादीनामेव प्रयोजनायेति। पतिजायादिवाक्यानां परमात्मविषयत्वे तु स न सङ्गच्छेत। न हि परमात्मेच्छाधीनं पतिजायादीनां कादाचित्कं प्रियत्वमित्येतल्लोकप्रसिद्धम्। 'श्रुतिप्रसिद्धं तत्' इति चेत्; न। अनधीतिनीमविज्ञातश्रुत्यर्थां केवलममृतत्वार्थिना पत्या सह चिरसंवासेन तच्चरणपरिचरणबाहुल्यलब्धयाऽन्तःकरणशुध्या च स्वयमप्यमृतत्वार्थिनीं मैत्रेयीं प्रत्यमृतत्वोपायमुपदिदिक्षुणा पत्या तदधिकारिविशेषणवैराग्यदृढीकरणाय तद्बुध्युपारूढाया लोकप्रसिद्धेरेव तेन द्योतनीयत्वात्। पतिजायादिवाक्येषु पतिवाक्यप्राथम्येन मैत्रेयीं प्रति तद्बुध्युपारूढमर्थं प्रथमं प्रदर्श्य तद्दृष्टान्तेन तत्सम्मतियोग्यान्येवार्थान्तराण्यपि पतिरवर्णयदिति प्रतीतेश्च। तस्मादुपक्रमस्य परमात्मविषयत्ववर्णनं तावदयुक्तम्।

यत्तूत्पत्तिविनाशवाक्यं प्रकृतद्रष्टव्यात्मविषयं न भवति; किन्तु तत्सृज्यात्मविषयमिति; तदपि न युक्तम्। षष्ठे मैत्रेयीब्राह्मणे 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यस्समुत्थाय' (बृ. ४. ५. १३) इत्यादिना प्रकृतस्य द्रष्टव्यात्मन एव 'अयमात्मा' इति परामृष्टस्योत्पत्तिविनाशवर्णनात्, 'एवं वा अरे इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः' (बृ. २. ४. १२) इत्यादौ चतुर्थे मैत्रेयीब्राह्मणे 'अयमात्मा' इति शब्दाभावेऽपि प्रकृतपरामर्शिन इदंशब्दस्य सत्वाच्च। मुण्डकवाक्यदृष्टान्तोपन्यासस्तु विषमः; तत्र 'तथाऽक्षरात्'

इति विशेषणेन सृज्यात्मना प्रकृताक्षरब्रह्मोपादानकत्वप्रतिपादनात् । यत्तु विज्ञातृत्वं ब्रह्मणोऽपि प्रसिद्ध-मित्युक्तं, तदपि न युक्तम्; विजानामीत्यनुभवसिद्धस्य मनोवृत्तिविशेषरूपं विज्ञानं प्रति कर्तृत्वस्य मुख्यस्य जीव इव ब्रह्मण्यसम्भवात् । तस्मान्मैत्रेयीब्राह्मणेन प्रतिपाद्यमान आत्मा जीव एवेति जगत्कारणत्वोपलक्षितो मुमुक्षुभिर्विज्ञेयः परमात्मा, तत्रैव वेदान्तानां समन्वय इत्येतन्न युक्तमिति । एवं प्राप्ते पूर्वपक्षे—

राद्धान्तः— परमात्मैवायम्; वाक्यान्वयात् । वाक्यं हीदं मैत्रेयीब्राह्मणरूपं विमृश्यमानं परमा-त्मन्येवान्वितावयवं लक्ष्यते । तथा हि—'अमृतत्वस्य तु नाशाऽस्ति वित्तेन' इति याज्ञवल्क्यवचनेन वित्तसाध्यैः कर्मभिरमृतत्वं न प्राप्यत इति निश्चित्य वित्तमनादृत्यामृतत्वप्राप्त्युपायोपदेशमाशंसमानायै मैत्रेय्यै तत्प्राप्त्यर्थं विज्ञेयमात्मानमुपदिदेश याज्ञवल्क्यः । तद्विज्ञानमेवामृतत्वसाधनमित्युपसञ्जहार च षष्ठे मैत्रेयी-ब्राह्मणान्ते 'एतावदरे खल्वमृतत्वम्' इति । जीवात्मविज्ञानात्तु नामृतत्वप्राप्तिः; 'नान्यः पन्थाः' इति श्रुतेः; अहंप्रत्ययरूपे जीवात्मविज्ञाने सर्वदा अनुवर्तमानेऽपि अमृतत्वप्राप्त्यदर्शनाच्च जीवस्य यदलोकसिद्धं तात्त्विकं रूपम्, तद्विज्ञानममृतत्वसाधनमित्यस्य सिद्धान्तेऽप्यङ्गीक्रियमाणत्वात् । तथा मध्येऽपि ब्रह्मलिङ्गानि वर्णयां-मास । तत्र एकविज्ञानेन सर्वविज्ञानं तावदेकं लिङ्गम् । न चैतदौपचारिकं नेतुं युक्तम्; अग्रे भेददर्शन-निन्दया सार्वात्म्यप्रतिपादनेन दुन्दुभ्यादिदृष्टान्तैश्च तदुपपादनाच्च । तत्र 'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' (बृ. २. ४. ६) इत्यादिभिः 'सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद' (बृ. २. ४. ६) इत्यन्तैर्वाक्यैर्ब्र-ह्मक्षत्रलोकदेववेदभूतादिकस्य सर्वस्य ब्रह्मान्यत्वदर्शननिन्दा कृता । ब्रह्म ब्राह्मणजातिः 'ब्राह्मणोऽहम्' इत्य-भिमानविषयभूता तं पराकुर्यात् पुरुषार्थात् प्रच्यावयेद्यस्तां ब्राह्मणजातिमात्मनो भिन्नां वेदेति प्रथमवाक्यार्थः। एवं क्षत्रादिवाक्यानामप्यर्थो द्रष्टव्यः । सर्वेष्वेतेषु वाक्येषु सार्वविभक्तिकस्तस्प्रत्ययः 'समं समाधानमन्यत्रा-भिनिवेशात्' 'अन्यत्र भीष्माद्गाङ्गेयात्' इत्यादिप्रयोग इव प्रथमार्थो द्रष्टव्यः । 'इदं ब्रह्म इदं क्षत्रमिमे लोकाः इमे वेदा इमानि भूतनीदं सर्वं यदयमात्मा' (बृ. २. ४. ६) इति सार्वात्म्यं दर्शितम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञां तदुपपादनार्थां भेददर्शननिन्दापूर्विकां सार्वात्म्यप्रतिज्ञाञ्चोपपादयितुं दुन्दुभ्यादिदृष्टान्ता दर्शिताः ।

'स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दान् शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघा-तस्य वा शब्दो गृहीतः' (बृ. २. ४. ७) इति दुन्दुभिदृष्टान्तः चिद्रूपात्मस्फुरणं विना स्फुरणशून्यं जगच्चिदात्मनो न व्यतिरिच्यत इति प्रतिज्ञापेक्षिते 'यत् यस्य स्फुरणं विना न स्फुरति, तत्ततो न व्यतिरिच्यते' इति नियमे दृष्टान्तोऽयम् । तत्र 'दुन्दुभेर्हन्यमानस्य' इत्यनेन हन्यमानदुन्दुभिप्रभवशब्दसामान्यं लक्ष्यते । 'दुन्दुभेस्तु' इत्यनेनापि तदेव लक्ष्यते । दुन्दुभ्याघातः— संग्रामभूमिषु वीररसाद्यनुकूलः दुन्दुभिध्वनिविशेषः। ततश्चायमर्थः— यथा दुन्दुभिशब्दसामान्यविशेषभूतान् शब्दान् दुन्दुभिशब्दसामान्याद्बाह्यत्वेन ततो निष्कृष्य न कश्चिदपि ग्रहीतुं शक्नुयात्; किन्तु दुन्दुभिशब्दसामान्यग्रहणेनैव तद्विशेषशब्दो गृहीतो भवति; दुन्दुभ्याघातसंज्ञकस्य शब्दविशेषस्य ग्रहणेन वा तदवान्तरविशेषशब्दो गृहीतो भवति; दुन्दुभिशब्द इत्येव हि तद्विशेषो गृह्यते, दुन्दुभ्याघातशब्दसामान्याच्च तथा तद्विशेषा न भिद्यन्ते, एवं चिद्रूपादात्मनः प्रपञ्च इत्याशयः। शंखवीणादृष्टान्तावप्येवमेव योजनीयौ। यद्यपि दृष्टान्तानामर्थान्तरं वर्णयितुं शक्यम्; तथा हि— यथा दुन्दुभौ हन्यमाने ततो बहिर्निस्सरतश्शब्दान्न कश्चिदपि निरोद्धुं शक्नुयात्; किन्तु दुन्दुभेर्निरोधेन, तदाहन्तृपुरुषनिरोधेन वा दुन्दुभिशब्दो निरुद्धो भवति—इत्यादि, तथाऽपि नैतादृगर्थान्तरं प्रकृतोपयोगि। सार्वात्म्यं हि प्रकृतं दृष्टान्तेनोपपादनीयम्, न त्वन्यत्। तत्तु नैतादृशार्थे-नोपपादितं भवति। प्रकृतानुपयोग्यर्थान्तरं त्वितोऽपि समञ्जसमुन्नेतुं शक्यम्—दुन्दुभौ हन्यमाने बाह्यान्दुन्दुभिशब्दव्यतिरिक्तान्मानुषादिशब्दान्दुन्दुभिशब्दाभिभूतान्ग्रहीतुं न शक्नुयात्; दुन्दुभेस्तदाहन्तृ-पुरुषस्य वा निरोधेन मानुषादिशब्दो गृहीतो भवति— इति।

यद्वा हन्यमानदुन्दुभिमनादृत्य तद्दर्शनमनपेक्ष्य बाह्यान्पिहितकर्णत्वेन कर्णपुटमप्रविष्टतया कर्णपुटाद्बहिरेव वर्तमानान्दुन्दुभिशब्दान्ग्रहीतुं न शक्नुयात्। कर्णपुटस्य पिहितत्वेन तत्प्रत्यक्षासंभवात् हन्यमानदुन्दुभिरूपकारणलिङ्गादर्शनेनानुमानानवताराच्च। किन्तु प्रागुक्तहन्यमानत्वविशेषितस्य दुन्दुभेर्वा तदाहननव्यापृतस्य पुरुषस्य वा कारणलिङ्गस्य ग्रहणेनानुमानावतारे सति दुन्दुभिशब्दो गृहीतो भवतीति। अत्र हि पक्षद्वयेऽपि प्रथमपक्ष इव बाह्यशब्दः सप्रयोजनः। बहिर्निस्सरत इत्यर्थवर्णने तु निष्प्रयोजनः; दुन्दुभिशब्दे ततो बहिर्निस्सरणस्य स्वाभाविकत्वेन व्यावर्त्याभावात्। शब्दान्वयी ग्रहणशब्दश्च ज्ञानपरः

सन्युक्तार्थः । निरोधार्थवर्णने त्वयुक्तार्थः । न हि ग्रहणशब्दस्य ज्ञानवदुपादानवच्च निरोधार्थः प्रसिद्धः, न वा चोरादाविव शब्दे निरोधोऽन्वेति । दुन्दुभिर्यथा नाहन्येत तथा तन्निरोधेन वा पुरुषो यथा तं नाहन्यात्तथा पुरुषनिरोधेन वा शब्दस्योत्पत्तिप्रतिबंधमात्रं हि भवति, न तु द्रव्यविषयत्वेन प्रसिद्धो निरोधः । प्रथमपक्षे 'दुन्दुभेः' इति शब्दस्य दुन्दुभिप्रभवशब्दे लक्षणा तु ग्रहणान्वयानुरोधाद्भवन्ती न दोषाय । शब्दस्य ह्युपादानं न संभवतीति ज्ञानमेवात्र ग्रहणं वाच्यम् । दुन्दुभिज्ञाने च तदीयशब्दविशेषाणां स्फुरणं न भवति, किन्तु दुन्दुभिशब्दसामान्यज्ञान एव । उक्तञ्च वार्तिके 'दुन्दुभिध्वनिरित्येतत्कुतो लब्धं विशेषणम् । दुन्दुभेर्ग्रहणेनेति लब्धमेतद्विशेषणम् । दुन्दुभेस्तु रवा एत इत्येवं ग्रहणे सति । गृहीतास्तद्विशेषास्स्युस्तेषां तादात्म्यकारणात् ' इति । दुन्दुभ्याघातशब्दस्तु यद्यपि कर्मोपपदप्रत्ययान्तो दुन्दुभ्याहन्तृवाची, तथाऽपि घञन्तो दुन्दुभिध्वनिशेषवाच्यप्यस्तीति तद्ग्रहणं युज्यते । तदप्युक्तं वार्तिके 'भेर्याघातग्रहाद्वाऽपि तद्विशेषग्रहो भवेत् । वीरादिरससंयुक्तो दुन्दुभ्याघात उच्यते' इति । तस्मात् 'चमसवदविशेषात्' (ब्र. सू. १. ४. ८) इति न्यायेनानेकधा योजयितुं शक्यस्य दृष्टान्तवाक्यस्य प्रकृतसार्वात्म्योपपादकदार्ष्टान्तिकानुगुण एवार्थो ग्राह्यः ।

ननु शङ्काग्रन्थदर्शितोऽप्यर्थः किञ्चिद्दार्ष्टान्तिमध्याहृत्य तद्दृष्टान्ततया वर्णयितुं शक्यः, दुन्दुभ्याहननव्यापारानुवृत्तौ दुन्दुभिशब्द इव इन्द्रियव्यापारानुवृत्तौ बाह्यार्थप्रत्ययो निरोद्धुं न शक्य इति । ततश्चात्मदर्शनार्थिना तद्विरोधिबाह्यार्थप्रत्यय इन्द्रियनिरोधेन तद्विजृम्भणहेतुमनोनिरोधेन वा निरोद्धव्य इति प्रकृतोपयोगश्च सम्भवति' इति चेत्; मैवम् । श्रुतसार्वात्म्योपपादनार्थतयैव यथाकथञ्चन दृष्टान्तनयनसम्भवे दृष्टान्तस्वारस्यानुरोधेन दार्ष्टन्तिकांतराध्याहारायोगात् । श्रुत एव ह्यवकाविधौ स्तावकत्वेन 'आपो वै शांताः' इत्यर्थवादः यथाकथञ्चिन्नीयते, न तु तत्स्वारस्यानुरोधेनापां विधिरध्याह्रियते । यदि च दृष्टांतस्वारस्यमनुरोद्धव्यम्, तदाऽप्यनंतरदर्शितार्थद्वयमध्य एव कश्चिदर्थो ग्राह्यः, न तु शङ्काग्रन्थदर्शितोऽर्थः; तयोः प्राक्प्रस्तुतमननादिविधानोपयोगवर्णनसम्भवात् । तथा हि—प्राक् 'आत्मा द्रष्टव्यः' इत्युपदिश्य तद्दर्शनसाधनश्रवणादीन्युपदिष्टानि । अत्रेयमाशङ्का भवति—पतिजायादिप्रियसंसूचितस्य जीवस्येदं द्रष्टव्यत्वमुपदिश्यते न चैतदुपपद्यते; अहंप्रत्ययेन नित्यमेव तस्य दृश्यमानत्वात् ।

अथोच्येत—अहंप्रत्यये प्रकाशमानात्कर्तृत्वभोक्तृत्वादिविशिष्टाद्रूपादन्यदस्ति निरतिशयानंदरूपं ब्रह्मात्मकं जीवस्य रूपं तदभिप्रायेणामृतत्वार्थिना द्रष्टव्यत्वमुपदिश्यते—इति । तदाऽपि 'मन्तव्यो निदिध्यासितव्यः' इति न वक्तव्यम्; मनसा नित्यमहमिति गृह्यमाणे जीवे तदगृहीतसूक्ष्मरूपसद्भावे तद्वेदान्तेभ्यः श्रुतवता पुरुषेण तेनैव मनसा पुनरवहितेन तस्य ग्राह्यत्वोपपत्तेः । चक्षुषा गृह्यमाणे तारकादौ तद्गते सूक्ष्मे विशेषे केनचित्कथिते तद्ग्रहणाय तदेव हि चक्षुः पुनः सावधानं व्यापार्यते—इति । तत्रेदमुत्तरम्—यथा दुन्दुभिशब्दे प्रतिबन्धे सति मानुषादिशब्दो ग्रहीतुं न शक्यत इति तद्ग्रहणाय दुन्दुभिशब्दस्य निरोधकमपेक्ष्यते, एवमिहाप्यसम्भावनादिप्रतिबन्धे सति जीवस्य ब्रह्मात्मकं रूपं ग्रहीतुं न शक्यत इति तन्निवर्तकमननादिकमपेक्ष्यत इति । यद्वा यथा कर्णस्य पिधानादिदोषेण दुन्दुभिशब्दग्रहणासामर्थ्ये सति तद्ग्रहणाय दुन्दुभ्याहननादिलिङ्गमपेक्ष्यते, एवमिहापि 'पराञ्चि खानि व्यतृणत्स्वयंभूः' (क. २. १. १) 'यन्मनसा न मनुते' (के. ३. ५) इत्यादिश्रुतेर्मनसः स्वत एव ब्रह्मदर्शनासामर्थ्ये सति तद्दर्शनाय उपायांतरमन्वेषणीयमिति ।

वस्तुतस्तु 'इदं सर्वं यदयमात्मा' इति सार्वात्म्याभिधानानन्तरमुच्यमानो दृष्टान्तस्तदुपपादनार्थतयैव योजयितुं युक्त इति प्राग्दर्शित एव दृष्टान्तवचनस्यार्थ इति तत्त्वम् । एवमुपपत्त्युपबृंहितं सर्वविज्ञानप्रतिज्ञानं तावदेकं ब्रह्मलिङ्गम् । तदुपपादकं सार्वात्म्यमपरम् । तथा 'स यथाऽऽर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेदस्सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदश्श्लोकास्सूत्राण्यनुव्याख्यानानि व्याख्यानानि इष्टं हुतमाशितं पायितमयञ्च लोकः परश्च लोकस्सर्वाणि च भूतान्यस्यैव तानि सर्वाणि निश्वसितानि' (बृ. ४. ५. ११) इति वर्णितं नामरूपात्मकसकलप्रपञ्चकारणत्वं 'स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनम्' (बृ. ४. ५. १२) इत्यादिना 'सर्वेषां वेदानां वागेकायनम्' (बृ. ४. ५. १२) इत्यन्तेन प्रतिपादितं ज्ञानेन्द्रियकर्मेन्द्रियविषयरूपसकलप्रपञ्चलयाधारत्वं च ब्रह्मलिङ्गम् । ननु 'सर्वासामपाम्' इत्यादिना सदृष्टान्तमिन्द्रियाणां स्वस्वविषयायतनमात्रत्वमुच्यते, न तु ब्रह्मणः प्रपञ्चलयाधारत्वमिति ।

उच्यते । 'यथा सर्वासामपाम्' इत्यादिदृष्टान्तवचनेन समुद्रस्य नद्यादिसकलसलिललयाधारत्वमुच्यते; 'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तङ्गच्छन्ति नामरूपे विहाय' (मु. ३. २. ८) 'यथेमा

नद्यस्स्यन्दमानास्समुद्रायणास्समुद्रं प्राप्यास्तङ्गच्छन्ति भिद्येते चासां नामरूपे समुद्र इत्येवं प्रोच्यते' (प्र. ६. ५) इत्यादिश्रुत्यन्तरेषु तथैव समुद्रसलिलदृष्टान्तवर्णनदर्शनात् । ततश्च तदनुसारेण दार्ष्टान्तिकवचनेन त्वगादिशब्दैस्त्वगिन्द्रियादिग्राह्याणि स्पर्शरसगन्धरूपशब्दसङ्कल्पनीयादिसामान्यानि लक्षणीयानि । तथा च यथा नद्यादिसलिलानि समुद्रे विलीय समुद्रात्मतां प्राप्नुवन्ति एवं महाप्रलये मृदुकर्कशादयस्स्पर्शविशेषा मधुराम्लादयो रसविशेषा गन्धादिविशेषाश्च स्पर्शादिसामान्येषु विलीनास्सन्तस्तत्तत्सामान्यात्मतां प्राप्नुवन्तीत्यर्थः । एवञ्च क्रमेण परमकारणे 'अस्य महतो भूतस्य' इत्यादिना प्राग्वर्णिते विलीयन्त इति तात्पर्यम्; महाप्रलये भूतलयस्य परमकारणपर्यन्ततया श्रुत्यन्तरेषु पुराणेषु च प्रतिपन्नत्वात्, ब्रह्मविद्यानिमित्तात्यन्तिकप्रलयवर्णनपरे 'यथा सैन्धवघनः' इत्यादिवाक्ये 'एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवानुविनश्यति' इति वर्णितस्य भूतलयस्य 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति परमकारणपर्यन्तत्वेन विवरणाच्च । एवञ्च त्वगादिशब्दानां स्पर्शादिसामान्येषु लक्षणा न दोषाय; त्वगिन्द्रियादीनां स्पर्शादिलयाधारत्वस्य बाधितत्वाच्च । तस्मादुपक्रमोपसंहारपरामर्शैः परमात्मैवात्र द्रष्टव्य आत्मा । १. ४. १९ ।

स्यादेतत्— जीवविषया अप्युपक्रमोपसंहारपरामर्शा उदाहृताः । कस्तेषान्निर्वाहः? ननु सुषुप्त्युत्क्रान्त्यधिकरणादिदर्शितो निर्वाहःस्यात् । तत्र ह्युक्तमेकस्मिन्वाक्ये ब्रह्माब्रह्मलिङ्गेषु कंरवितेषु प्रसिद्धजीवानुवादेनाप्रसिद्धब्रह्मात्मत्वविधानमङ्गीकर्तव्यमिति । सत्यमुक्तम् । दुरुक्तं तु तत्; अत्यन्ताभेदे भेदसापेक्षस्योद्देश्यविधेयभावस्यायोगादित्याशङ्कायामेकदेशिमतेन तात्त्वपरिहारमाह—

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः । २० ।**

'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गास्सहस्रशः प्रभवंते सरूपाः' (मु. २. १. १) इत्यादिश्रुतेः परमात्मकार्यभूता जीवाः परमात्मनो नात्यन्तभिन्नाः, किन्तु वह्निकार्यभूता विस्फुलिङ्गा वह्नेरिव ततो भिन्नाभिन्नास्ते । तथाऽपि परमात्मनि द्रष्टव्यत्वेनोपदेष्टव्ये यदादिमध्यावसानेषु जीवात्मत्ववर्णनेन परमात्मनस्तदभेदप्रदर्शनम्, तत्प्रतिज्ञासिद्धेर्लिङ्गम् । सर्वविज्ञानप्रतिज्ञा ह्यभेदांशेनोपपादनीया, न तु भेदांशेनेत्याश्मरथ्य आचार्यो मन्यते । १. ४. २० ।

अथैकदेश्यन्तरमतेन परिहारान्तरमाह—

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः । २१ ।

औडुलोमिस्त्वाचार्यो मन्यते— संसारदशायां परमात्मनो भिन्न एव जीवः स्वभाविकानां कर्तृत्व-भोक्तृत्वादिधर्माणामाश्रयस्तत्तद्धर्मप्रवृत्तिनिमित्तकानां नाम्नाञ्च विषयभूतः स मुक्तिकाले स्वकीयं नामरूपजातं विहाय परमात्मनैक्यं प्राप्नोति 'यथा नद्यस्स्यन्दमानास्समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय। तथा विद्वान्नाम-रूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' (मु. ३. २. ८) इति श्रवणात् । तथा च मुक्तिकाले देहेन्द्रिय-संघातादुत्क्रमिष्यतो जीवस्य परमात्मैक्यं भविष्यतीति भविष्यदैक्यमपेक्ष्य भेदकालेऽप्यभेदवर्णनमिति। एतदेव मतं पाञ्चरात्रिका अप्याध्यिषत 'आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च। मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः' इति । १. ४. २१ ।

अथास्मिन्मतद्वयेऽप्यपरितुष्यन्नाचार्यस्स्वाभिमतं मतमाह—

अवस्थितेरिति काशकृत्स्नः । २२ ।

रज्जोरेव भुजङ्गरूपेणेव व्याधकुलसंप्रवृद्धस्य राजपुत्रस्यैव व्याधभावेनेव च परमात्मन एव जीवभावेनावस्थितेरादिमध्यावसानेषु जीववर्णनमिदं परमात्मप्रदर्शनमेव भवति । स्थूलदर्शिलोकप्रतीतिसौकर्यार्थं जीवरूपेणोपक्रम्य मध्यावसानयोरपि जीवरूपप्रदर्शनमिति काशकृत्स्न आचार्यो मन्यते । न खलु जीवस्य तेजःप्रभृतिवदनन्योपाधिकं कार्यत्वमुपपद्यते; विनाशित्वप्रसङ्गात् । नन्विष्टापत्तिः; अत्रैव 'तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्ति' (बृ. ४. ५. १३) इत्युक्तत्वादिति चेत्; मैवम् । तदनंतरं 'अत्रैव मा भगवन्मोहांतमापीपदत् न वा अहमिदं विजानामि' (बृ. ४. ५. १४) इति वाक्येन कथमुपक्रांतामृत-फलभाक्त्वेन विवक्षितस्यात्मनो विनाशित्वं, कथञ्च विज्ञानैकस्वभावत्वेनोक्तस्य तस्य संज्ञाऽभाव इत्यभिप्रायवत्या मैत्रेय्या शंकिते याज्ञवल्क्येन 'न वा अरे अहं मोहं ब्रवीमि' (बृ. ४. ५. १४) इत्यारभ्य तस्य विनाश-संज्ञाऽभाववचनयोरभिप्रायांतरस्य स्वयमेव वर्णितत्वात् । तत्र 'अविनाशी वा अरेऽयमात्मा अनुच्छित्तिधर्मा' (बृ. ४. ५. १४) इति विनाशवचनस्याभिप्रायो वर्णितः । 'अविनाशी' इति विनाशकारणशून्यत्वलक्षणं विनाशायोग्यत्वमुच्यते । विपूर्वान्नशेर्णिजन्तात्पचाद्यचि 'णेरनिटि' इति णिलोपे सति विनाशशब्दो

विनाशकारणवाची । एवमविनाशिशब्दस्य विनाशकारणवद्व्यतिरिक्तपरत्वं बृहदारण्यक एव जनकयाज्ञवल्क्य-संवादेऽपि दृश्यते 'न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात्' (बृ. ४. ३. २३) इति । 'अनुच्छित्तिधर्मा' इत्यत्र धर्मशब्दः स्वभाववचनः; 'धर्माः पुण्ययमन्यायस्वभावाचारसोमपाः' इति, 'सहजं निजमाजानं धर्मःसर्गो निसर्गवत्' इति च तस्य स्वभाववाचित्वस्मरणात् । उच्छित्तिर्विनाशो धर्मःस्वभावो यस्य सोयमुच्छित्तिधर्मा, स न भवतीत्यनुच्छित्तिधर्मा—स्वाभाविकविनाशरहित इत्यर्थः । अनेन औपाधिक-विनाशोऽस्य व्यपदेष्टुं शक्योऽस्तीति तदभिप्रायं प्राग्विनाशवचनमित्युक्तं भवति ।

माध्यन्दिनपाठे तु 'अनुच्छित्तिधर्मा' इत्येतदनन्तरमुपाधिरपि विशिष्य दर्शितः 'मात्रा-ऽसंसर्गस्त्वस्य भवति' इति । मात्रा—देहेन्द्रियादयः संसारदशायां जीवोपाधित्वेन स्थितास्तासां ब्रह्मविद्यया समूलं नाशान्मुक्तिकाले ताभिरसंसर्गोऽस्य भवतीत्यर्थः । तथाच देहेन्द्रियादिनाशोपाधिकोऽस्य नाशव्यपदेश इति भावः । 'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति' (बृ. ४. ५. १५) इत्यादिना 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् तत्केन कं जिघ्रेत्' (बृ. ४. ५. १५) इत्यादिना च संसारदशायामेवापारमार्थिकभेदप्रतिभासवत्यां कर्तृकरणकर्मक्रियादिभेदसद्भाववद्रूपगन्धरसादिविशेषविज्ञान-मस्ति, मुक्तिदशायां तु सर्वस्य भेदप्रपञ्चस्य विद्यया प्रविलयेन कर्तृकरणकर्मक्रियादिभेदाभावात् तद्विशेष-विज्ञानं नास्तीत्युक्त्या संज्ञाऽभाववचनं विशेषविज्ञानाभावपरमिति तदभिप्रायो वर्णितः । एतेन—आश्मरथ्याभिमतं जीवस्य परमात्मनो भिन्नाभिन्नत्वमपि—निरस्तम् । 'यत्र हि द्वैतमिव' इतीवकारेण द्वैतस्यापारमार्थिकत्वद्योतकेन सर्वथैव भेदस्य निषिद्धत्वात्, 'तत्केन कं पश्येत्' इत्यादिभिर्भिन्नवस्तुदर्शनस्य निषिद्धत्वाच्च ।

ये तु ब्रह्मनियम्यत्वरहितस्य स्वतन्त्रस्य द्वैतस्य, तद्दर्शनस्य च निषेध एभिर्वाक्यैः क्रियते; ब्रह्म-नियम्यस्य द्वैतस्य श्रुतिविहितत्वेन तस्य तद्दर्शनस्य च निषेधायोगादिति वदन्तो व्याचक्षते—'यस्यामवस्थायां द्वैतं ब्रह्मात्मकं स्वतन्त्रमिव भाति, तदानीं स्वतन्त्र इतरः स्वतन्त्रवस्तुदर्शनसाधनेन चक्षुरादिना स्वतन्त्र-वस्त्वन्तरमनुभवति । यदा तु सर्वं ब्रह्मात्मकं प्रकाशते, तदा कश्चेतनः केन करणेन कं स्वतन्त्रमर्थमनुभवेत्' इत्यर्थः । मुक्तः सर्वं ब्रह्मात्मकत्वेनानुभवतीति मुक्तिदशायामब्रह्मात्मकत्वेन भासमानं वस्तु तद्दर्शनसाधनं तद्द्रष्टा

च नास्तीति तात्पर्यम् —इति। तेषां व्याख्यानमेतावदध्याहारक्लेश एव निराकुर्यात्। अपिच षष्ठे जनकयाज्ञवल्क्यसंवादे स्वप्नावस्थायां जीवस्य स्वयंज्योतिष्ट्वे सुषुप्त्यवस्थायां तस्य बाह्यान्तरवेदनराहित्ये चोक्ते कथं ज्योतिःस्वरूपस्य वेदनराहित्यमिति शङ्कायां विषयाभावान्न तु द्रष्टृस्वरूपाया दृष्टेर्विपरिलोपादित्येतत्प्रतिपादनार्थं प्रवृत्तेषु 'यद्वैतं न पश्यति पश्यन्वैतं न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' (बृ. ४. ३. २३) इत्यादिवाक्येषु श्रुतं द्वैतं तावत्स्वातन्त्र्येण विशेषयितुं न शक्यते; सुषुप्तौ स्वतन्त्रस्येव परतन्त्रस्यापि द्वैतस्य प्रतीत्यभावात्। ततश्च तेषु श्रुतं द्वितीयमपि तेन विशेषयितुं न शक्यते; द्वैतमात्रप्रतीत्यभावस्य द्वैतविशेषाभावेनोपपादयितुमशक्यत्वात्। एवं च तदनन्तरश्रुते 'यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्येदन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्योऽन्यद्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्यद्विजानीयात्' इति वाक्ये अन्यदपि स्वातन्त्र्येण विशेषयितुं न शक्यते; सुषुप्तौ यस्य विषयस्य व्यतिरेकात्प्रतीत्यभाव उक्तस्तस्यैव स्वप्नजागरयोरन्वयात्प्रतीतेर्वक्तुमुपक्रान्तत्वात्।

ननु स्वप्नजागरयोस्सुषुप्तौ च विषयप्रतीतितदभावौ करणव्यापारसत्त्वासत्त्वाभ्यां सूपपादौ, किमर्थं विषयसत्त्वासत्त्वप्रदर्शनमिति चेत्, श्रुतिमुपालभस्व, या सुषुप्तौ करणव्यापाराणामिव दृश्यावघ्रेयरसनीयश्रोतव्यमन्तव्यस्प्रष्टव्यज्ञातव्यविषयाणामप्यभावं मन्यमाना विषयाभावेनाप्युपपादयितुं शक्यस्तत्प्रतीत्यभाव इत्यभिप्रेत्य 'यद्वै तन्न पश्यति' इत्यादिष्वष्टस्वपि वाक्येषु द्रष्टुरन्यत्वेन विभक्तं यद्द्रष्टोपलभेत तथाभूतं तस्य द्वितीयमेव नास्तीत्युद्घुष्यति। ततश्च सुषुप्त्यवस्थाविषयेषूदाहृतवाक्येषु स्वातन्त्र्यविशेषणाभावे व्यवस्थिते मुक्त्यवस्थाविषयेष्वपि वाक्येषु तद्विशेषणं विवक्षितुमयुक्तम्; उभयेषामपि वाक्यानामेकप्रकारेण प्रवृत्तत्वात्। किञ्च तद्विशेषणविवक्षायामपि नार्थसङ्गतिर्लभ्यते; मुक्तिदशायामपि ब्रह्मण एवात्रब्रह्मात्मकस्य तद्दर्शनस्य च सत्त्वेन तयोर्निषेधायोग्यत्वात्। तस्मात् 'यत्र हि द्वैतम्' इत्यादिवाक्यानां सर्वात्मना द्वैतनिषेध एव तात्पर्यमिति युक्तम्।

ननु नैतद्युक्तम्; श्रुतिविहितस्य द्वैतस्य स्वरूपेण निषेधायोगादिति चेत्; न। द्वैतस्य श्रुतिविहितत्वासिद्धेः, केवलं प्रत्यक्षादिना सिद्धस्य तत्र तत्र प्रयोजनान्तरोद्देशेन श्रुत्याऽनूद्यमानत्वात्।

तस्मात् 'यत्र हि द्वैतम्' इत्यादिवाक्यविरोधाज्जीवस्य परमात्मना न युक्तो भेदाभेदः । किञ्चायं भेदाभेदो मुक्तिदशायामपीष्यते; उत तदानीं केवलाभेदः? आद्ये 'यत्र त्वस्य सर्वमात्मैवाभूत्' (बृ. ४. ५. १५) इत्यवधारणेन 'ब्रह्म वेद ब्रह्मैव भवति' (मु. ३. २. ९) इति सावधारणश्रुत्यन्तरेण च विरोधः । द्वितीये स्वविरोध्यभेदज्ञाननिवर्त्यस्य; स्वाश्रयगताभेदकालरूपमुक्तिकालानुवृत्तात्यन्ताभावप्रतियोगिनश्च संसारदशायां प्रतीतस्य भेदस्य मिथ्यात्वमेवापततीत्येषा दिक् ।

एवं संसारदशायां जीवपरयोः केवलं भेदः, मुक्तौ केवलमभेद इति पक्षोऽप्ययुक्तः; पतिजायादिप्रियसंसूचितस्य जीवात्मन एव द्रष्टव्यत्वोक्तिपूर्वकं तद्विज्ञानेन सर्वविज्ञानस्य सर्वकारणत्वस्य च ब्रह्मलिङ्गस्य वर्णनेन संसारदशायामप्यभेदप्रतीतेः । भविष्यन्तमभेदमपेक्ष्य भेदकालेऽप्यभेदव्यपदेश इति तु न युक्तम्; 'तत्त्वमसि' (छा. ६. १६) 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथापशुरेवं स देवानाम्' (बृ. १. ४. १०) 'त्वं स्त्री त्वं पुमानसि' (श्वे. ४. ३) इत्यादिश्रुत्यन्तरानुसारेणास्या अपि श्रुतेःसंसारदशासाधारणाभेदविषयत्वौचित्यात् । किञ्च मुक्तौ भेदस्य निवृत्तिः किं जीवब्रह्माभेदज्ञानेनेष्यते, उत जीवज्ञानेन, अथवा ब्रह्मज्ञानेन? आद्ये प्रागपि सत्त्वमभेदस्याकामेनापि स्वीकरणीयम्; भविष्यदभेदस्यापरोक्षज्ञानविषयत्वायोगात् । ततश्च पूर्वोक्तप्रकारेण मिथ्यात्वमप्यङ्गीकरणीयम् । द्वितीये किं कर्तृत्वादिविशिष्टजीवज्ञानाद्भेदनिवृत्तिः, उत अकर्त्रभोक्तृजीवज्ञानात्? आद्ये सांसारिकादहंप्रत्ययादपि भेदनिवृत्तिप्रसङ्गः । द्वितीये कर्तृत्वादिराहित्यस्य प्रागपि सत्त्वमङ्गीकरणीयमिति कर्तृत्वादेर्भेदकस्य, तत्प्रयुक्तभेदस्य च मिथ्यात्वमेव पर्यवस्यति । तृतीये पतिजायादिप्रियसंसूचितस्य जीवस्य द्रष्टव्यत्वोक्तिविरोधः । एवमन्यदपि सार्वदिकभेदाभेदपक्षे कालभेदव्यवस्थितभेदाभेदपक्षे च दूषणं द्वितीयाध्याये प्रपञ्चयिष्यते । नदीसमुद्रयोरपि पूर्वं भिन्नयोः पश्चादभेदो नास्तीति दर्शयिष्यते । तस्मात् काशकृत्स्नीयस्सार्वदिकात्यन्ताभेदपक्ष एव सकलश्रुतिस्मृतिन्यायानुगुण्यात् सूत्रकारस्याभिमतः ।

न चात्यन्ताभेदपक्षे भेदापेक्ष उद्देश्यविधेयभावो न स्यादिति वाच्यम् । भेदो हि न वाक्यार्थतयाऽपेक्ष्यते, नापि वाक्यार्थज्ञानकारणतया, किन्तु यस्य वाक्यस्यार्थः संसर्गो भेदनियतस्तत्र तद्व्यापकतया परमवतिष्ठते । यत्र तु प्रमेयत्वे प्रमेयत्वं, प्रमेयत्वं प्रमेयत्ववदिति प्रमेयत्वस्य स्वेन सहाभेदेऽप्याधाराधेयभावो विशे-

षणविशेष्यभावो वा संसर्गो वाक्यार्थः, न तत्र कथञ्चिदपि भेदापेक्षा। एवञ्च तत्त्वमस्यादिवाक्येषु जीवब्रह्मणो-रभेद एव वाक्यार्थः, न तु 'दण्डी देवदत्तः' इत्यादाविव पदार्थद्वयसंसर्गः, एकपदार्थविशिष्टोऽपरपदार्थो वा वाक्यार्थः, 'तत्त्वंपदार्थौ निर्णीतौ वाक्यार्थश्चिन्त्यतेऽधुना। तादात्म्यमत्र वाक्यार्थस्तयोरेव पदार्थयोः। संसर्गो वा विशिष्टो वा वाक्यार्थो नात्र सम्मतः' इत्याचार्यवचनादित्यत्र को भेदापेक्षाशङ्काऽवकाशः। यदि तु अपर्यायशब्दानामेकप्रातिपदिकार्थनिष्ठत्वं वेदान्तानामखण्डार्थत्वमिति लक्षणानुसारेण जीवब्रह्मणोर्नोद्देश्य-विधेयभावः; किन्तु प्रातिपदिकार्थस्वरूपमात्रं महावाक्यानामर्थ इतीष्यते, तदा सुतरां न भेदापेक्षाशङ्काऽ-वकाशः।

केचित्तु 'अवस्थितेरितिकाशकृत्स्नः' (ब्र. सू. १. ४. २२) इति सूत्रस्थस्यावस्थितेरिति पदस्य 'य आत्मनि तिष्ठन्' इत्यादिश्रुत्युक्तायां जीवात्मनि परमात्मनः स्थितौ स्वारस्यं मन्यमानाः परिदृश्यमाने शरीरे जीवात्मन इव जीवात्मनि परमात्मन आत्मतयाऽवस्थितेः जीवशब्देन परमात्माभिधानमुपपन्नमिति सूत्रार्थं वर्णयन्ति। अत्र विपरीतमपि वक्तुं शक्यं—अस्मिन्नर्थे 'अवस्थितेः' इति पदस्य स्वारस्यं नास्तीति। तदा हि 'स्थितेः' इत्येव सूत्रणीयं 'य आत्मनि तिष्ठन्' इति मूलश्रुत्यनुरोधाल्लाघवाच्च 'स्थानादिव्यपदेशात्' इति अत्रोपसर्गाभावाच्च। तस्मादिहावोपसर्गसत्त्वात्ततोऽन्य एव कश्चिदर्थो विवक्षितः परमात्मन एव जीवात्म-भावेनावस्थानादित्येवंरूपः 'सर्वं तं परादात्' 'इदं सर्वं यदयमात्मा' 'यत्र हि द्वैतमिव भवति' 'यत्र त्वस्य सर्वमात्मैवाभूत्' इति स्वप्रकरण एव भेददर्शननिन्दाद्युपलम्भादिति अयमेव पारमार्थिकोऽस्य सूत्रस्यार्थः।

यदि ह्यस्मिन् प्रकरणे श्रूयमाणान्युदाहृतानि वाक्यान्यद्वैतप्रवणानन्यांश्च श्रुतिस्मृतिप्रवादान-विगणय्य जीवपरयोर्भेद एव पक्षपाती सूत्रकारोऽभविष्यत्तदा अस्मिन्प्रकरणे जीवशब्दैर्ब्रह्माभिधानं सिद्धं कृत्वा तदुपपादनार्थमित्थं यत्नं नाकरिष्यत्। शक्यते हि तयोर्भेदस्याभिमतत्वे तैर्जीवाभिधानमङ्गीकृत्य प्रकरणं सङ्गमयितुम्। तथाहि—यस्मात्पतिजायादयः पतिजायादिप्रयोजनाय प्रिया न भवन्ति, किन्तु स्वप्रयोजनायैव तस्माद्यस्य स्वप्रयोजनस्य पतिजायादिविषयो रागः प्रतिकूलस्तस्यामृतस्य सिध्यर्थं पतिजाया-दिभ्यो विरज्य परमात्मैव द्रष्टव्य इत्युपक्रमस्तावत्सङ्गमयितुं शक्यः। अस्मिन्पक्षे द्रष्टव्यवाक्यगतात्मशब्दस्य प्रकृतात्मपरत्वं नास्तीति तत्स्वरसहानिमात्रमस्ति। तत्तु जीवब्रह्मणोर्भेदे निश्चिते पतिजायादिवाक्यस्य

लिङ्गाज्जीवपरत्वे द्रष्टव्यवाक्यस्य 'नान्यः पंथाः' इति श्रुतेः परमात्मपरत्वे चावश्यवक्तव्ये सति 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति न्यायेनापि तत्सोढव्यमिति वक्तुं शक्यम् । एतावदद्वैतश्रुतिस्मृतिजालमहाप्रासादनिगरण-प्रवृत्तस्य किमेकात्मशब्दस्वरसनिगरणमशक्यम् !

एवं मध्ये सैन्धवघनदृष्टांतमारभ्य जीवोत्पत्तिविनाशवचनं तद्विनाशवचनाभिप्रायवर्णनञ्च परमात्म-प्रमित्यर्थतया सङ्गमयितुं शक्यम् । तत्र 'अयमात्मा' इति शब्दस्य 'इदं महद्भूतम्' इति इदंशब्दस्य च व्यवहितप्रकृतजीवपरामर्शित्वं 'महद्भूतम्' इत्यादेश्च मुक्तिभाक्त्वेन जीवस्य पारमार्थिकत्वात् 'नित्यस्सर्व-गतस्स्थाणुः' इति श्रवणाच्च तद्विषयत्वं वक्तुं शक्यम् । एवं जीवे, परमात्मनि च प्राक् प्रस्तुतेऽङ्गीकृते 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्युपसंहारवाक्यं 'येन' इति तृतीयांतस्य परामर्शनीयं परमात्मानं विजानातेः कर्तारं जीवञ्चासाद्य समञ्जसं भवति । जीवस्य ब्रह्माभेदेन प्रस्तुतत्वाङ्गीकारे तु 'येन' इति तृतीया प्रथमार्थे योजनीयेति क्लेशस्स्यात् । 'ग्राहकादिजगत्सर्वं येन कूटस्थसाक्षिणा । लोकस्सर्वो विजानाति जानीयात् केन तं वद' इति वार्तिकोक्तप्रकारेण वा ब्रह्माभिन्नतया प्रस्तुत एव जीवो निष्कृष्य साक्षिरूपतया 'येन' इति परामृश्यते । अन्तःकरणादिविशिष्टरूपेण तु विजानतेः कर्ता भवतीति क्लेशेन योजनीयम् । 'विज्ञातारम्' इत्येतत्तु परमात्मन्यपि योजयितुं शक्यम्; बहुप्रयोगदर्शनात् । एवमादौ मध्ये च जीवपरामर्शस्य जीवविषयत्वमङ्गीकृत्यैव भेदपक्षे तदुपपादनस्य कर्तुं शक्यत्वेऽपि तस्य ब्रह्मविषयत्वं सिद्धं कृत्वा यत्तदुपपादनाय यत्नमस्थितवान् सूत्रकारः तेन ज्ञायते जीवपरयोरभेद एवास्य सिद्धान्तः । 'येनेदं सर्वं विजानाति' इत्यस्य योजनाक्लेशोऽपि अद्वैतप्रस्तावानुरोधार्थत्वान्न दोषायेत्याशय इति ।

ननु मोक्षधर्मे जनकयाज्ञवल्क्यसंवादे 'पश्यन्तश्चैवापश्यञ्च पश्यत्यन्यस्तथाऽनघ । षड्विंशः पञ्चविंशञ्च चतुर्विंशञ्च पश्यति' इति चतुर्विंशपञ्चविंशतत्वरूपयोर्जडचेतनतया परस्परविलक्षणयोः प्रकृति-पुरुषयोर्द्रष्टारं परमात्मानमुपक्रम्य 'यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विज । तदा स केवलीभूतष्षड्-विंशमनुपश्यति' इति प्रकृतिपुरुषविवेकज्ञानानन्तरं जीवविलक्षणपरमात्मज्ञानमुक्त्वा 'अन्यश्च राजन् स परस्तथाऽन्यः पञ्चविंशकः । तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः' इति परमात्मनो जीवस्थत्वनि-बन्धन ऐक्यव्यवहार इति प्रदर्श्य 'तेनैतं नाभिजानन्ति पञ्चविंशकमच्युतम्' इति जीवस्थत्वादेव हेतोर्जीवस्य

परमात्मनश्चाच्युतशब्दवाच्यस्य स्वरूपैक्यं साधवो न पश्यन्तीत्युपन्यस्य 'जन्ममृत्युभयाद्भीतास्सांख्या योगाश्च काश्यप। षड्विंशमनुपश्यन्ति शुचयस्तत्परायणाः। यदा सार्वार्थसिद्धत्वान्न पुनर्जन्म विन्दति' इति प्राज्ञानां पञ्चविंशविलक्षणषड्विंशदर्शनं तद्वतस्ततोऽपवर्गञ्चोपदिश्य 'एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ। अर्थश्चोक्तो यथातत्वं यथाश्रुतिनिदर्शनात्' इति प्रकृतिपुरुषपरमात्मानः परस्परवैलक्षण्येन निरूपिता इत्युपसंहृतम्। एवं सूत्रकारेणैव प्रबन्धान्तरे तत्स्थत्वनिबन्धन एकत्वव्यवहार इति समर्थिते कथमवस्थितेरिति सूत्रस्य स एवार्थो न स्यात्। कथञ्चास्य सूर्यप्रसादादवाप्तयजुर्वेदेन शतपथब्राह्मणप्रवर्तकेनात्रापि जनकयाज्ञवल्क्य-संवादे 'यथार्षेणेह विधिना चरतावमतेन ह। मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाऽधिप। कर्तुं शतपथं वेदमपूर्वं काङ्क्षितञ्च मे'। इत्यादिवचनैस्स्वयमेव तमर्थं वर्णितवता च याज्ञवल्क्येन प्रतिपाद्यमानः 'तत्स्थत्वादनुपश्यन्ति' इत्ययमर्थः शतपथान्तर्गतस्य याज्ञवल्क्यवक्तृकस्य च मैत्रेयीब्राह्मणस्य तात्पर्यगोचरो न स्यादिति चेत्—

उच्यते— जनकयाज्ञवल्क्यसंवादोऽयं प्रकृतिविविक्तजीवयाथात्म्यनिरूपणे पर्यवसितः, न तु तदुभयातिरिक्तपरमात्मस्वरूपनिरूपणेऽपि तात्पर्यवान्। तथा हि— उपक्रमे तावत् 'किमव्यक्तं परं ब्रह्म तस्मात्तु परतस्तु किम्' इत्यव्यक्तशब्दिताया 'मम योनिर्महद्ब्रह्म' इति प्रसिद्धायाश्चतुर्विंशतत्वरूपायाः प्रकृते-स्ततः परस्य पञ्चविंशतत्वरूपस्य च प्रश्नवत्ततः परमात्मनः प्रश्नो न दृश्यते। उत्तरवाक्यसन्दर्भे च प्रकृतिकार्यदेहद्वयतादात्म्याध्यासेन तत्सम्पिण्डितरूपस्य पुरुषस्यैव 'अन्यस्स पुरुषोऽव्यक्तादध्रुवाद्ध्रुवसंज्ञकः। यथा मुञ्ज इषीकायास्तथैवैतद्विजायते' इति मुञ्जेषीकान्यायेन तद्विविक्ततया ग्राह्यत्वमुपदिश्यते। तदनन्तरं च 'अन्यं तु मशकं विद्यादन्यं चोदुम्बरं तथा। न चोदुम्बरसंयोगे मशकस्तत्र लिप्यते' इत्यादिना उदुम्बर-जलोखासलिलानां दोषसंयोगेन तेषु स्थितानां मशकमत्स्यानलकमलानामिव जीवोपाधेर्देहद्वयस्य दोषसंयोगेन तत्स्थस्य पुरुषस्य लेपाभावः प्रतिपाद्यते। पुनश्च 'अव्यक्तस्थं परं ब्रह्म यत्तत्पृष्टस्तेऽहं (यत्पृष्टोऽहं) नराधिप। परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप' इत्युपक्रम्य तत्र च गन्धर्वराजस्य विश्वावसोर्याज्ञवल्क्यस्य चास्मिन् विषये प्राक् प्रवृत्तां प्रश्नोत्तरपरम्परामुपाक्षिप्य तन्मध्ये प्रकृतिपुरुषयोर्विश्वाविश्वज्ञाज्ञविद्याऽविद्यादिरूपेण बहुशो वैलक्षण्यं प्रतिपाद्य 'द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना। अथास्य जन्मनिधने न भवेतां पुनःपुनः' इति तयोः परस्परविलक्षणतया दर्शनं मुक्तिफलकं विधाय कथं तद्दर्शनं मुक्तिफलकं 'ब्रह्म वेद ब्रह्मैव भवति'

इत्यादिना श्रुतिषु ब्रह्मसाक्षात्कारस्य मुक्तिफलकत्वप्रसिद्धेरित्याकांक्षायां 'यदा तु पश्यतेऽन्यं तमहन्यहनि केवलम् । तदा स केवलीभूतं षड्विंशमनुपश्यति' इति श्लोकेन प्रकृतिविविक्तमत एव तद्धर्मकर्तृत्वादि-रहिततया केवलं जीवं दिने दिनेऽनुसन्दधानस्तमेव केवलीभूतं षड्विंशं परं ब्रह्म पश्यति, न तु तद्व्यतिरिक्त-ब्रह्मसाक्षात्कारापेक्षाऽस्तीत्युपदिश्य कथं जीवः कर्तृत्वादिरहितः केवलः; तस्य स्वाभाविककर्तृत्वादिमत्तया तान्त्रिकैरपि कैश्चिदङ्गीकृतत्वात् इत्याशङ्कानिरासार्थं 'अन्यच्च शश्वदव्यक्तं तथाऽन्यः पञ्चविंशकः । तत्स्थं समनुपश्यन्ति तमेक इति साधवः' इति श्लोकेन वस्तुतः कर्तृत्वादिमदन्तःकरणरूपापन्नादव्यक्तादन्य एव जीवः, स तु तत्स्थत्वोपाधिना जपाकुसुमसन्निधानोपाधिना स्फटिको लोहितात्मनेव कर्त्रात्मना लोके भासत इति तमेव लोकानुभवं श्रद्दधानाः केचन साधवो लोकानुभवप्रवणबुद्धयस्तं जीवं कर्तृत्वादिमदव्यक्ताभिन्नं पश्यन्तीत्युक्त्वा 'तेनैतन्नाभिजानन्ति पञ्चविंशकमच्युतम् । जन्ममृत्युभयाद्योगास्सांख्याश्च परमर्षयः' इति श्लोकेन सांख्या योगाश्च परमर्षयस्त्वव्यक्तपुरुषयोः परस्परभिन्नत्वहेतुना पञ्चविंशं पुरुषमच्युतं वस्तुतः परमात्मभूतमेतं नाभिजानन्ति, कर्तृत्वादिमदव्यक्तात्मना न पश्यन्तीत्युपदिश्यते । ततश्च कथं जीवस्य लोकानुभवसिद्धकर्तृत्वादिराहित्यं कथञ्च तदसिद्धपरमात्मरूपत्वमित्यभिप्रायवता विश्वावसुना 'पञ्चविंशं यदेतच्च प्रोक्तं ब्राह्मणसत्तम । तदहं न तथा वेद्मि तद्भवान्वक्तुमर्हति' इत्यारभ्य पञ्चविंशस्यैव स्वरूपे पृष्टे सति तत्रोत्तरं याज्ञवल्क्येन 'पश्यं तथैवापश्यञ्च' इत्यारभ्योपदिष्टम् । तत्कथं पञ्चविंशविलक्षणपरमात्मप्रतिपादनपरं स्यात् ? तस्मात् प्रकृतिं तदुपहितं पुरुषञ्च निष्कृष्टसाक्षिरूपतया ततोऽन्यो वस्तुतस्तत्स्वरूपभूत एव षड्विंशः पश्यतीत्यर्थो ग्राह्यः ।

पुनश्च जीवस्य कर्तृत्वादिमत्त्वभ्रान्तिवारणायैव 'पञ्चविंशोऽभिमन्येत नान्योऽस्ति परमो मम । न चतुर्विंशको ग्राह्यो मनुजैर्ज्ञानदर्शिभिः' इति श्लोकेनाध्यासिकं कर्तृत्वादिमच्चतुर्विंशतादात्म्यं स्वस्य स्वाभाविकं मन्यमानस्सन् मम परमः कर्तृत्वादिसकलसांसारिकधर्मनिर्वाहकतयोत्कृष्टो मदन्यो नास्तीत्यभिमन्यते पञ्चविंशः; वस्तुतो न तथा; ज्ञानदर्शिभिर्मनुजैस्तु स्वात्मा चतुर्विंशैक्येन न ग्राह्य इत्युक्त्वा 'स निमज्जति कालास्ये यदेकत्वेन बुध्यते । उन्मज्जति च कालास्यान्ममत्वेनाभिसंवृतः' इति श्लोकेन चतुर्विंशे स्वात्मैकत्व-बुद्धेः संसारदोषावहत्वं तत्र स्वव्यतिरिक्ततया स्वात्मीयत्वबुद्धेर्मुक्तिहेतुत्वञ्चोपदिश्य तदनन्तरं पठितो 'यदा तु

मन्यतेऽन्योऽहम् ' इति श्लोकः प्राक् पठितेन 'यदा तु मन्यतेऽन्योऽहम् ' इति श्लोकेन समानार्थो ग्राह्यः । ' अन्यच्च राजन् स परः' इति श्लोकस्तु ' अन्यच्च शश्वदव्यक्तम् ' इति. श्लोकेन समानार्थः । तत्र परशब्दः परमात्मपर इति न भ्रमितव्यं ' महतः परमव्यक्तम् ' इति श्रुत्यन्तरे जीवात्परत्वेनाव्यक्तस्य प्रतिपादनात् , इहापि ' नान्योऽस्ति परमो मम' इति परमशब्दस्याव्यक्ते प्रयोगाच्च । ' तेनैतं नाभिजानन्ति' इति श्लोकोऽपि तेनैव प्राक् पठितेन समानार्थः । ' एवमप्रतिबुद्धश्च' इत्युपसंहारश्लोके बुध्यमानश्च-तुर्विंशैक्याभिमानी संसारे निमग्नः; बुद्धः चतुर्विंशातिरिक्तं परमात्मस्वरूपं पञ्चविंशमवगच्छन् संसारा-दुन्मग्नः; 'निस्सन्दिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचर' इति पूर्वं याज्ञवल्क्यं प्रति विश्वावसुवचनदर्शनात् । तस्मात् 'अन्यश्च स परो राजन् ' इति श्लोकस्य पूर्वापरपरामर्शविकलैरुत्प्रेक्षितोऽर्थोऽग्राह्य इत्यवस्थिति-सूत्रस्य जनकयाज्ञवल्क्यसंवादस्वारस्यादपि यथोक्त एवार्थः । तदेवं मैत्रेयीब्राह्मणस्य जीवपरामर्शिनोपि ब्रह्मपर्यवसन्नत्वान्नास्ति प्रतिज्ञातसमन्वयविरोध इति सिद्धम् । १. ४. २२ ।

इति वाक्यान्वयाधिकरणम् । ६ ।

(७ अधिकरणम्)

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । २३ ।

जन्मादिसूत्रे जगन्निमित्तोपादानरूपोभयविधकारणत्वं लक्षणत्वेनोक्त्वा तदुपलक्षिते निष्प्रपञ्चे ब्रह्मणि वेदान्तानां समन्वयः प्रसाधितः । इदानीं ब्रह्मणो निमित्तत्वमेव न तु उपादानत्वम् । उपादानं तु जगतः सांख्याभिमतं प्रधानमभ्युपगन्तव्यम् । ततश्च नोक्तरूपं ब्रह्मणो लक्षणं युक्तं, न वा तदुप-लक्षिते निष्प्रपञ्चे ब्रह्मणि वेदान्तानां समन्वयो युक्तः इत्याक्षिप्य समाधीयते ।

तथा हि— ईक्षापूर्वकस्रष्टृत्वश्रवणात् निमित्तत्वं तावदभ्युपगन्तव्यम् । लोके घटपटादिषु निमित्तानां कुलालकुविन्दादीनां तदुपादानत्वं न दृष्टम्, क्वचिदपि चेतनानां द्रव्योपादानत्वं न दृष्टम्, तद्वदिहापि भवितुमर्हति ।

ननु कुलालादीनां घटाद्युपादानत्वग्राहकप्रमाणाभावात् तत्र तथा भवतु नाम । इह तु जगन्निमित्तस्यैव सतः परब्रह्मणस्तदुपादानत्वमप्यावेदयन्ति सर्वविज्ञानप्रतिज्ञादयः । तथा हि—छान्दोग्ये तावत् 'स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा. ६. १. १) इत्येकेन ब्रह्मणा विज्ञातेन सर्वमन्यदविज्ञातमपि विज्ञातं भवतीति प्रतिज्ञायते । 'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् । यथा सोम्यैकेन नखकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्यात्' (छा. ६. १. ४) इति तत्र दृष्टान्ता अप्युपादीयन्ते ।

एवं बृहदारण्यकेऽपि 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञाते इदं सर्वं विदितम्' (बृ. ४. ५. ६) इति सर्वविज्ञानप्रतिज्ञा 'स यथा दुन्दुभेर्हन्यमानस्य' (बृ. ४. ५. ८) इत्यादिदृष्टान्तवर्णनं च दृश्यते । मुण्डकेऽपि 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मु. १. १. ३) इति तत्प्रतिज्ञा 'यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयःसम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथाऽक्षरात् सम्भवतीह विश्वम्' (मु. १. १. ७) इति दृष्टान्तोपन्यासश्च दृश्यते । तथा 'तदैक्षत बहु स्यां प्रजायेय इति ईक्षितुरेव बहुभवनाभिधानात् । 'सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' (छा. १. ९. १) इत्युत्पादकस्य सतः प्रलयाधारत्वस्यापि प्रतिपादनात् 'तदात्मानं स्वयमकुरुत' (तै. २. ७) इति कर्तुःसतः कर्मत्वस्यापि वर्णनात् 'सच्च त्यच्चाभवत्' इति ब्रह्मण एव विकारात्मना परिणामोपदेशात् 'यद्भूतयोनिं परिपश्यन्ति धीराः' (मु. १. १. ६) इति ब्रह्मणि उपादानवाचकयोनिशब्दश्रवणाच्च ब्रह्म उपादानमित्यवसीयते । एवं सत्यपि निमित्तस्यैव उपादानत्वग्राहकप्रमाणे, लोके तन्न दृष्टमिति निमित्तोपादानयोर्भेद एव दृष्टः इति च तत्परित्यागे, लोके कतिपयकार्यकर्तुः कार्यान्तराकर्तृत्वदर्शनात् 'इदं सर्वमसृजत' इत्यादिश्रुतिप्रतिपन्नं ब्रह्मणः सर्वकर्तृत्वमपि परित्यज्येत । ततःश्रुतिप्रतिपन्नत्वाविशेषात् अलोकदृष्टं सर्वकर्तृत्वमिव ब्रह्मणः सर्वोपादानत्वमपि अङ्गीकरणीयम्—इति चेत्—

उच्यते— छान्दोग्ये तावत् सर्वविज्ञानप्रतिज्ञा सह दृष्टान्तवचनैर्गौणी । ब्रह्मज्ञानेन वियदादेः सर्वस्य मृत्पिण्डलोहमणिनखनिकृन्तनज्ञानैर्घटशरावकटकमकुटखनित्रकुद्दालादीनां च तद्ज्ञानानन्तरमपि संशय-

विषयत्वेनानुभूयमानानां मुख्यवृत्त्या ज्ञातत्वासम्भवात् । प्रतिज्ञावाक्ये 'अश्रुतममतमविज्ञातम्' इति ब्रह्म-श्रवणादिषु सत्स्वपि अश्रुतत्वाद्युपन्यासेन दृष्टान्तवाक्येषु घटकटककुद्दालादिवत् मृल्लोहायःकार्यविशेषतया घटाद्य-नुपादानानां मृत्पिण्डलोहमणिनखनिकृन्तनानां ज्ञानेन घटादीनां ज्ञातत्वोपन्यासेन च तदमुख्यत्वस्य श्रुत्यैव स्फुटीकरणाच्च । तस्मात् अन्यविषयज्ञानैर्यत् फलं प्राप्तव्यं तत् सर्वं निरतिशयानन्दरूपब्रह्मज्ञानेन प्राप्यते इति फलतस्तद्‍ज्ञानेन अज्ञातान्यपि ज्ञातानि भवन्तीति गौणं तेषां ज्ञातत्वं प्रतिज्ञायते; यथा 'अस्य ग्रामस्य प्रधानभूते चैत्रे दृष्टे सर्वेऽपि दृष्टा भवन्ति' इति अदृष्टानामेव फलतो दृष्टत्वं व्यवह्रियते । दृष्टान्तवचनैश्च मृल्लोहादिज्ञानैरज्ञाता अपि घटादयो मृद्रूपत्वादिसादृश्येन ज्ञातप्रायाः इति गौणमेव ज्ञातत्वं दृष्टान्ततया उपन्यस्यते । यथा 'एतेन गवादयोऽपि व्याख्याताः' इति ज्योतिष्टोमव्याख्यानेन अव्याख्यातानामपि गवादीनां तद्विकृतितया तत्सदृशानां व्याख्यातत्वं व्यवह्रियते । एतेन—मुण्डकबृहदारण्यकयोरपि सर्वविज्ञानप्रतिज्ञा—व्याख्याता । दुन्दुभ्यूर्णनाभिदृष्टान्ता न सर्वविज्ञानोपपादकाः; एकेन दुन्दुभिशब्दसामान्यज्ञानादिना यावत्तद्विशेषादीनामगृह्यमाणत्वात् । नापि निमित्तोपादानैक्योपपादकाः; शब्दसामान्यस्य शब्दविशेषान् प्रत्यनुपादानत्वादनिमित्तत्वाच्च । ऊर्णनाभिदेहः तन्तुषूपादानं जीवो निमित्त इति तत्र निमित्तोपादान भेदात् । केशलोमस्वपि जडोपादानकेषु चेतनस्य निमित्तमात्रत्वात्, पृथिव्याश्चौषधीः प्रति निमित्तोपा-दानभावाभावात् । बहुभवनसङ्कल्पोऽपि न निमित्तोपादानैक्ये प्रमाणम् । तेजःप्रभृतीनां नियामकरूपे 'बहु स्याम्' इति सङ्कल्प्य नियामकबहुभावस्य नियम्यबहुभावसापेक्षत्वेन तदर्थं नियम्यतेजःप्रभृतिसृष्टेरुपपत्तेः ।

एतेन—'तदात्मानं स्वयमकुरुत' इत्यपि व्याख्यातम्; 'तदात्मानं सृजाम्यहम्' इत्यादि-वदुपपत्तेः । न ह्यत्र आत्मानं वियदादिरूपेण अकुरुत इति श्रूयते । लयाधारत्वमनुपादानेऽपि सम्भवति । 'भूतले घटो ध्वस्तः' इत्यादिव्यवहारात् । 'यथोर्णनाभिः सृजते गृह्णते च' इति सृष्टिनिमित्ते तन्तुलय-प्रतिपादनाच्च । 'तत् सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत्' इति जगत्सृष्टितदनु-प्रवेशानन्तरभावितया श्रूयमाणं सदादिभवनं ब्रह्मणो विकारात्मना परिणाम इति वक्तुमयुक्तम्; तस्य जगदुत्पत्तिरूपत्वेन जगत्सृष्ट्याद्यनन्तरभावित्वानुपपत्तेः । योनिशब्दस्तु नोपादाने नियतः । 'योनिष्ट इंद्र निषदे अकारि' इति स्थानेऽपि तत्प्रयोगदर्शनात् । योनिः स्थानं ते निषदे तत्रोपवेशाय अकारि इति हि

मन्त्रस्यार्थः । स्थानवचनश्च योनिशब्दो ब्रह्मण्युपपन्नः; तस्य अनुपादनत्वेऽपि सर्वभूताधारत्वात् । एतेन 'सर्वं खल्विदं ब्रह्म' 'इदं सर्वं यदयमात्मा' इत्यादिश्रुतयोऽपि—व्याख्याताः । सार्वात्म्यश्रुतीनां 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति तद्व्याख्यानरूपस्मृत्यनुसारेण सर्वाधारतया सर्वानुस्यूते ब्रह्मणि तात्पर्यात् । अत एव 'इदं सर्वं यदयमात्मा' इत्यतः प्राचीने सर्वं तं परादात् योऽन्यत्रात्मनस्सर्वं वेद' इति ब्रह्मप्रत्ययस्स-मप्यर्थ एव ग्राह्यः । दुन्दुभ्यादिदृष्टान्तास्तु यथाकामं योजयितुं शक्याः; न पूर्वाधिकरणोक्तरीत्या सार्वात्म्यो-पपादकत्वेन योजनीयाः । यदि सार्वात्म्यं प्राक् प्रास्तोष्यत तदा ते तदुपपादकत्वेनैवायोजयिष्यन्त । न तु सार्वात्म्यं प्रकृतं, किन्तु सर्वाधारत्वमेव इत्युक्तम् । तत्तु 'आत्मन आकाशस्सम्भूतः' 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते' इत्यादिश्रुतिगतपञ्चमीबलात् ब्रह्म जगदुपादानं सिध्येदिति; तन्न । कारणसामान्ये पञ्चमीविधानात् । ननु 'जनिकर्तुःप्रकृतिः' (पा. सू. १. ४. ३०) इत्युपादानकारणस्यैवापादानसंज्ञा स्मर्यते, न कारणमात्रस्य । मैवम् । 'पुत्रात् प्रमोदो जायते' इत्यपि व्यवहारदर्शनेन सूत्रे प्रकृतिग्रहणस्य कारणसामान्यपरत्वात् 'प्रकृतिः कारणं हेतुः' इत्येव वृत्तिकारादिभिर्व्याख्यातत्वाच्च । तस्माल्लोके द्रव्येषु कर्तुरुपादानत्वादृष्टेः तद्भिन्नस्यैव च उपादानत्वदृष्टेः श्रुतिष्वपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं' (श्वे. ४. १०) इत्यादिश्रुतिषु उपादानान्तरप्रतिपादनात् 'कूटस्थमचलं ध्रुवं' इति ब्रह्मणो निर्विकारत्वश्रवणाच्च सांख्याभिमतं प्रधानं उपादानं, ब्रह्म तु निमित्तमात्रं इति युक्तम् । अतो निमित्तोपादानरूपो-भयविधजगत्कारणत्वं ब्रह्मणो लक्षणमिति तदुपलक्षिते ब्रह्मण्यद्वितीये वेदान्तानां समन्वयः इति च न युक्तं इति **पूर्वःपक्षः**—

**सिद्धान्तस्तु**— प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं, न केवलं निमित्तका-रणमेव । कुतः? प्रतिज्ञादृष्टान्तानुपरोधात् । एवं हि सर्वविज्ञानप्रतिज्ञायाः मृत्पिण्डादिदृष्टान्तस्य च अनुपरोधो भवति । अन्यथा तावुपरुध्येयाताम् । न च तौ गौणाविति वक्तुं युक्तम् । ब्रह्मज्ञानेन प्रपञ्चस्य ज्ञातत्वमनुपपन्नमित्याशयवतः श्वेतकेतोः 'कथं नु भगवः स आदेशः' इति प्रश्नेन तदुपपादनार्थं प्रवृत्तेन पितुरुत्तरवाक्येन च प्रतिपिपादयिषितस्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानस्य तदुपपादयतो दृष्टान्तस्य च गौण-त्वायोगात् । न च ब्रह्मज्ञानेन प्रपञ्चस्य मृत्पिण्डज्ञानेन घटादीनां च ज्ञातत्वस्य अननुभवादिपराहतत्वात् गौणत्व-

मेवात्रवाचमभ्युपगन्तव्यमिति वाच्यम् । मृत्सुवर्णकालायसानां पिण्डमणिनखनिकृन्तनाद्यात्मकानेकरूपशालि-नामुपादानानां तत्तत्कार्येषु तादात्म्यं येन मृत्सुवर्णकालायसरूपेण 'मृत् घटः' 'सुवर्णं कुण्डलं' 'कालायसं खनित्रम्' इत्यादिलौकिकप्रतीतिष्ववभासते तेन कार्यानुविद्धेन रूपेण तत्तदुपादानविषयं ज्ञानं तेन रूपेण तत्तत्कार्यविषयमपि भवति । न ह्युपादानभूतमृदादिव्यतिरिक्तानि 'मृत् घटः' इत्यादिप्रतीतिष्ववभास-मानानि मृदादीनि, येन तस्य ज्ञानस्य तानि विषया न स्युः ।

एवं सच्चिदानन्दरूपस्य ब्रह्मणः प्रपञ्चे तादात्म्यं सदात्मना 'सन् घटः' इत्यादिप्रतीतिष्ववभासते इति सदात्मना ब्रह्मज्ञानं सदात्मना प्रपञ्चविषयमपि भवति । ब्रह्मज्ञाने प्रतीयमानस्य ब्रह्मरूपस्यैव सतः 'सन् घटः' इत्यादिप्रतीतिष्ववभाससम्भवे तदतिरिक्तसत्ताजात्यादिकल्पनाऽयोगात् इत्यभिप्रायवर्णनेन उभयोरपि मुख्यत्वोपपादनसम्भवात् । अत एव श्वेतकेतुं प्रति जगत्कारणत्वेनोपदिश्यमाने ब्रह्मणि सच्छब्द एव प्रयुक्तः, न तु ब्रह्मादिशब्दः, सद्रूपेण ब्रह्मज्ञानमाश्रित्य हि कृतप्रतिज्ञानिर्वाहः कार्य इति । 'आत्मनो वा अरे दर्शनेन' (बृ. २. ४. ५) इत्यादिबृहदारण्यकश्रुतौ तु छान्दोग्यगतस्य सर्वविज्ञानप्रतिज्ञाविषय-गोचरस्य जगत्कारणे प्रयुक्तस्य सच्छब्दस्य मैत्रेयीब्राह्मणप्रतिपाद्ये आत्मनि उपसंहारो दर्शितः । तत्र षष्ठाध्यायश्रुतः खलुशब्दः चतुर्थाध्यायश्रुतो वैशब्दश्च प्रसिध्यर्थः । तथा च यस्य दर्शनादिना सर्वं विज्ञातं भवतीति श्रुत्यन्तरे प्रसिद्धं स सच्छब्दवाच्यः एतत्प्रतिपाद्य आत्मेति तस्यार्थः । मुण्डके यद्ज्ञानेन सर्वविज्ञानं श्रुत्यन्तरे प्रसिद्धं तत् किं सच्छब्दवाच्यं जगत्कारणं वस्त्विति प्रश्ने 'यत्तदद्रेश्यम्' (मु. १. १. ६) इत्यादिना विशिष्य तत्स्वरूपं निरूपितमिति सर्वं समञ्जसम् ।

स्यादेतत्—मृत्पिण्डादीनां घटशरावाद्युपादानत्वे सर्वमेतदुपपद्यते—तदेवानुपपन्नम् । पिण्डादी-नामपि घटादिवत् मृदादिकार्यविशेषत्वात्, घटादिषु पिण्डाद्याकारानुवृत्त्यभावाच्च । यदि तु यदीयपूर्वाकारोपमर्देन आकारान्तरमुपजायते तदुपादानमित्येव नियममाश्रित्य मृत्पिण्डादीनां घटाद्युपादानत्वं समर्थ्येत तदा ब्रह्मणः प्रपञ्चोपादनत्वं न स्यात् । तदीयेषु सच्चिदानन्दाकारेषु कस्याप्याकारस्य उपमर्दाभावात् । ननु मृत्पिण्डादीनां घटादिवत् मृत्कार्यान्तरत्वेऽपि मृत्त्वाकारेण तद्ज्ञानं तदाकारेण उपादानज्ञानमिव घटादिसर्वमृद्विकारविषयं स्यात् इति चेत्; न । वैषम्यात् । यस्या मृदो यावन्तो विकाराः तेषु सर्वेषु सैव मृत् केनचित् केनचिदंशेनानुवर्तते

इति तद्ज्ञानेन सर्वे तद्विकारा ज्ञाता भवन्तीत्युपपद्यतां नाम । कार्यविशेषेऽनुवर्तमाना मृत्तु कार्यविशेषान्तरा-व्यावृत्तेति तद्ज्ञानात् कथमन्ये विकाराः ज्ञाताःस्युः ? तस्मात् दृष्टान्तभागे मृत्पिण्डादिज्ञानेन घटादीनां ज्ञातत्वं गौणं वाच्यमिति तदनुसारेण सर्वविज्ञानमपि सह तदनुवादकश्रुत्यन्तरैः गौणमेव स्यात् इति चेत्—

उच्यते—कार्योत्पत्तौ क्वचिदुपादानगतस्य कस्यचिदाकारस्य तिरोधानं भवति क्वचिदुपमर्दो भवति इति द्वैविध्यं लोके दृश्यते । तद्यथा—प्राकारगृहपटलाद्युपादानानामिष्टकातृणविशेषादीनां चतुरश्रत्वतनु-दीर्घत्वाद्याकारतिरोधानमात्रं भवति, न कस्याप्याकारस्योपमर्दः । ऋषभतरुणीमहापादपाद्युपादानां तर्णककु-मारिकांकुरादीनां ककुदकुचोन्नतिफलपुष्पादिरहितस्वल्पपरिमाणाद्याकारस्योपमर्दो भवति, न तु कस्याप्या-कारस्य स्थितस्य तिरोधानम् । न चेष्टकादय उपादानानि प्रकारादयस्तदुपादेयद्रव्याणि इत्यत्र विवादः कार्यः । पूर्वतन्त्रे 'अग्निधर्मः प्रतीष्टकं सङ्घातात् पौर्णमासीवत्' इति नावमिकाधिकरणे 'हिरण्यशकलैरग्निं प्रोक्षति' इति विहितमग्निप्रोक्षणं प्रतीष्टकं कर्तव्यं 'चतुर्होत्रा पौर्णमासीमभिमृशेत्' इति विहितमभिमर्शनमिव प्रतिपुरोडाशं, संहतानामिष्टकानामेवाग्निशब्देन उक्तत्वात्, इष्टकासङ्घातव्यतिरेकेण अग्न्याख्यस्य एकद्रव्यस्य अभावात्, तत्सत्वे पटस्यैकदेशे कृष्यमाणे कृत्स्नपटाकर्षणवत् एकेष्टकाकर्षणे कृत्स्नस्थण्डिलाकर्षणप्रसङ्गात्, इति पूर्वपक्षं कृत्वा 'एकमिदं स्थण्डिलं' इत्येकबुद्धिविषयत्वादनेकतन्त्वारब्धपटवदनेकेष्टकारब्धमग्न्याख्यं स्थण्डिलमेकं द्रव्यमभ्युपगन्तव्यम् । तथा सत्येव 'इष्टकाभिरग्निश्चिनुते' इति श्रुतिरप्युपपद्यते । अन्यथा 'इष्टकाभिश्चिनुते' इत्येवं श्रुतिः स्यात । आकर्षणं तु वृक्षादिष्वनैकान्तिकम् । वृक्षे हि या शाखा आकृष्यते सैवायाति । तस्मादग्न्युद्देशेन सकृदेव प्रोक्षणमिति सिद्धान्तितत्वात् ।

पाणिनीयेऽपि 'तदर्थं विकृतेः प्रकृतौ' (पा. सू. ५. १. १२) इति सूत्रेण विकृत्यर्थायां प्रकृतावभिधेयायां विकृतिवाचिनः प्रातिपदिकात् प्रत्ययविधाने 'प्राकारीया इष्टका' इत्युदाहृतत्वात् । तत्रैवाधिकारे 'छदिरुपधिबलेर्ढञ्' (पा. सू. ५. १. १३) इति सूत्रेण छदिश्शब्दाद्गृहपटलार्थकात् तदर्थायां प्रकृतावभिधेयायां ढञ्प्रत्ययविधाने 'छादिषेयाणि तृणानि' इत्युदाहृतत्वात् । तत्रैवाधिकारे 'ऋषभोपानहोर्ञ्यः' (पा. सू. ५. १. १४) इति सूत्रेण ऋषभार्थायां प्रकृतावभिधेयायां ञ्यप्रत्ययविधाने

'आर्षभ्यो वत्सः' इत्युदाहृतत्वाच्च । एवञ्च घटाद्युत्पत्तौ मृदाद्यात्मनाऽनुवृत्तेषु मृत्पिण्डादिषु सतां पिण्डत्वमणित्वनखनिकृन्तनत्वाकाराणामुपमर्देऽपि तेषां घटाद्युपादानत्वं वत्सादीनामृषभाद्युपादानत्ववदुपपद्यते ।

ननु ऋषभाद्यवस्थोत्पत्तौ वत्सादीनां नोपमर्दः किन्त्ववयवोपचयादिगुणान्तरम् । अतो यत्र पूर्वाकारोपमर्दोऽस्ति तस्योपादानत्वे नेदमुदाहरणम् । तथाभूतस्य नोपादानत्वमिष्यते । अत एव महाभाष्ये 'छदिरुपधिबलेर्ढञ्' 'ऋषभोपानहोर्ञ्यः' इति सूत्रयोः 'तदर्थं विकृतेः प्रकृतौ' इति सूत्रात् प्रकृतिविकृतिग्रहणानुवृत्तौ बल्यृषभयोस्तण्डुलवत्सविकारत्वाभावात् तयोर्न सिध्यतीति शङ्कामुद्भाव्य 'कं पुनर्भवान् विकारं मत्वाऽऽह बल्यृषभयोर्न सिध्यतीति' इति शङ्कितुराशयं पृष्ट्वा 'यदि तावत् य एव प्रकृत्युपमर्देन भवति स विकारः' इति तस्याशयमुद्भाव्य 'वैभीतको यूपः खादिरश्चषालं' इति न सिध्यतीति तत्पक्षे दूषणमुक्त्वा 'अथ मतमेतत् तदेव गुणांतरयुक्तं विकार इति' इति स्वाभिमतं पक्षं प्रदर्श्य 'बल्यृषभयोरपि सिद्धं भवति, गुणांतरयुक्ता हि तण्डुला बालेयाः गुणांतरयुक्तश्च वत्स आर्षभ्यः' इति समाहितं इति चेत् —

उच्यते— विभीतकवत्सादीनामथाश्रितत्वात्त्रयवोपचयादिगुणांतरप्रादुर्भावे तद्विरुद्धस्य वृत्ताकारत्वाल्पपरिमाणादेर्गुणस्योपमर्दः प्रत्यक्षेणानुभूयमानो नास्तीत्यपलपितुं न शक्यते । अतस्तत्रोपमर्दाभावाभ्युपगमः कुण्डलं विनाश्य कटकनिर्माणे इव सर्वात्मना पूर्वाकारस्योपमर्दो नास्तीत्यभिप्रायेण । यत्र सर्वात्मनोपमर्दस्तत्राप्युपादानत्वमिष्यत एव 'कुण्डलमेव कटकं कृतम्' इत्यादिप्रत्यभिज्ञानसत्वात् । किन्तु तदेवोपादानं न त्वल्पोपमर्देन गुणांतराविर्भाववत् इत्येतत् परं शङ्कितुरभिमतं नेष्यते । तदत्र च 'य एव प्रकृत्युपमर्देन भवति स विकारः' इत्यनूद्य निराक्रियते । अत एव तत्र 'य एव' इत्येवकारः उपमर्दनीये प्रकृतिपदप्रयोगश्च । तस्मात् मृत्पिण्डादीनां घटाद्युपादानत्वात् तद्ज्ञानेन घटादीनां ज्ञातत्वं मुख्यमिति तद्वद्ब्रह्मज्ञानेन सर्वविज्ञानप्रतिज्ञानमपि मुख्यमेव ।

इयांस्तु विशेषः—मृत्पिण्डादीनां घटादिभावापत्तौ पिण्डत्वाद्याकारस्योपमर्दः; ब्रह्मणः प्रपञ्चभावापत्तौ तु आनन्दत्वाद्याकारस्य तिरोधानम् इति ।

एवं मृत्पिण्डादिज्ञानेन घटादीनां ब्रह्मज्ञानेन प्रपञ्चस्य च ज्ञातत्वस्य मुख्यतायामेव कृत्स्नोऽयं श्रुतिसन्दर्भः समञ्जसो भवति । एवं ह्युपाख्यायते—उद्दालको महर्षिः स्वपुत्रं श्वेतकेतुं स्वनियोगात् द्वादश वर्षाणि गुरुकुले स्थित्वा सर्वान् वेदानधीत्य प्रतिनिवृत्तं वैदुष्यगर्वेण स्तब्धं सर्वानवधीरयन्तं अविनीतोऽयम-प्राप्तब्रह्मविद्य इति निश्चित्य तं विनतं ब्रह्मविविदुषुञ्च कर्तुं 'यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा. ६. १. २, ३) इति पृष्ट्वा 'कथन्नु भगवःस आदेशः' (छा. ६. १. ३) इत्येकविज्ञानेन सर्वविज्ञानं कथमुपपद्यत इत्याशयवता तेन पुनः पृष्टो मृत्पिण्डादिदृष्टांतैस्तदुपपादयामासेति । यद्यत्र सर्वविज्ञानप्रतिज्ञानं प्राधान्याभिप्रायं गौणं स्यात्, तदा प्रधानज्ञानेन सर्वमन्यदप्रधानमविदितमपि फलतो विदितप्रायं भवतीत्यस्यार्थस्य लोकसिद्धत्वादेकविज्ञानेन सर्वविज्ञानस्यानुपपत्तिमपश्यतः 'कथन्नु भगवःसआदेशः' इति प्रश्नो न स्यात् ।

ननु 'तमादेशम्' इत्यत्रादेशशब्दः आदिश्यते प्रशिष्यते अनेनेति व्युत्पत्त्या प्रशास्तृपरः । तथाच प्रशास्तृत्वेन प्राधान्यप्रत्यायकेन तद्विज्ञानतः सर्वविज्ञानं भाक्तमिति ख्याप्यते । अतस्तदनुसारेण 'कथं नु भगवस्स आदेशः' इति प्रश्नस्तथाभूतवस्तुविशेषनिर्दिधारयिषया, न तु तद्विज्ञानेन सर्वविज्ञान-मनुपपन्नमित्याशयेन इति कल्पनीयमिति चेत् ।

मैवम्— आदेशशब्दस्य आदिश्यते उपदिश्यते इति कर्मणि व्युत्पन्नस्य आचार्योपदेशावगन्तव्यत्व-परत्वात् । तत्प्रतिपादनं हि यद्विज्ञानात् सर्वविज्ञानं पिता प्रतिजानीते तमर्थमहमेवाधीतवेदालोचनेन ज्ञास्यामीति स्वयमन्यनिरपेक्षविद्वत्त्वाभिमानिनः श्वेतकेतोर्भ्रान्तिःसम्भावितेति तद्वारणेन प्रकृतोपयुक्तम् । अत एव 'तमादेशमप्राक्ष्यः' इत्येव पिता प्रपच्छ न त्वज्ञासीरिति । अग्रे च वक्ष्यति 'आचार्यवान् पुरुषो वेद' इति । एवञ्च आदेशशब्दस्य कर्तरि करणत्वोपचारमाश्रित्य करणव्युत्पत्त्या प्रशास्तृपरत्वक्लेशाश्रयणमपि परिहृतं भवति । यदि च सर्वविज्ञानप्रतिज्ञाविषयवस्तुनिर्दिधारयिषया प्रश्नःस्यात्; तदा 'कोनु भगवः' इत्येव प्रश्नशरीरं स्यात्, न तु 'कथं नु भगवः' इति । प्रश्नोत्तरे च तत्स्वरूपनिर्धारणमेव कार्यं स्यात् न तु सर्वविज्ञानप्रतिज्ञोपपादनम् । तस्मात् कथमन्येन श्रुतेन मतेन विज्ञातेन च ततोन्यदश्रुतममतम-विज्ञातञ्च सदेव श्रुतं मतं विज्ञातञ्च स्यात् इत्यभिप्रायेण प्रश्नः, उत्तरे 'एवं सोम्य स आदेशो भवति'

इत्यन्ते मृत्पिण्डादिदृष्टान्तैस्तदुपपादनं इत्येव युज्यते। अत एव तदनंतरं 'न वै नूनं भगवन्तस्ते एतदवेदिषुर्यद्येतदवेदिष्यन् कथं मे नावक्ष्यन्' (छा. ६. १. ७) इति 'भगवांस्त्वेव मे तद्ब्रवीतु' इति तत्स्वरूपप्रश्नः, 'सदेव सोम्येदमग्र आसीत्' (छा. ६. २. १) इत्याद्युत्तरे तन्निरूपणञ्च दृश्यते। तस्मात् सर्वविज्ञानप्रतिज्ञानं तावत् मुख्यम्।

एवं दृष्टान्तवचनेषु मृत्पिण्डादिभिर्ज्ञातैर्घटादीनां ज्ञातत्ववर्णनमपि मुख्यमेव, मुख्यसर्वविज्ञानप्रतिज्ञोपपादकत्वात्। 'एते दृष्टान्ता अप्यनुपपन्नाः; मृत्पिण्डादिभिर्ज्ञातैस्तद्व्यतिरिक्तानां घटादीनां ज्ञातत्वासम्भवात्' इत्युपादानोपादेयभेददृष्ट्या शङ्कायां 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं' 'लोहमित्येव सत्यम्' 'कृष्णायसमित्येव सत्यं' इति वचनैस्तेषामप्युपपादनदर्शनाच्च। तत्र दृष्टान्तोपपादकवचनानामयमर्थः— योऽयं मृदादिव्यतिरिक्त इव अवभासमानो घटशरावादिरूपो विकारःस सर्वोऽपि वाचाऽऽरम्भणम् आरभ्यत इत्यारम्भणं, वाचाया आरम्भणमिति षष्ठीसमासः। पुँल्लिङ्गविशेषणत्वेऽपि लिङ्गसामान्यविवक्षया नपुंसकनिर्देशः, 'द्विगुरेकवचनं' इतिवत्। वाचा केवलमारभ्यते इत्यर्थः। ननु मृदादिभिरारम्भणीयो विकारः कथं वाचारम्भण इत्याशङ्कायां वाचारम्भणमित्यस्य आशयं स्फोरयति' नामधेयं' इति। नामधेयमात्रं विकारः न त्वर्थतोऽस्तीत्यर्थः। लोकेऽपि ह्यर्थासत्त्वविवक्षयां नाममात्रमेतदित्युच्यते। यद्यपि श्रुतौ मात्रपदं नास्ति, तथाऽपि नामधेयवाच्यस्य विकारस्य नामधेयत्वोक्त्या तदर्थो लभ्यते। ननु किं असन्नेव विकारो भासते? इत्याशङ्क्याह 'मृत्तिकेत्येव सत्यं' इत्यादि। मृदादिरेव सत्यः तद्व्यतिरिक्ततयाऽवभासमानो घटशरावादिनामधेयविशेषगोचरःतत्तदर्थक्रियाविशेषकारी विकारस्तु असत्योऽपि रज्जुसर्पवदनिर्वचनीयो मायामयोऽवभासते इत्यर्थः। मृत्पिण्डलोहमणिनखनिकृन्तनशब्दैरुपात्तानामुपादानानां मृत्तिकालोहकृष्णायसशब्दैः प्रत्यवमर्शस्तु तेषु पिण्डाद्यवस्थाया अप्यसत्यत्वज्ञापनाय।

अत्रायं भावः—नैयायिकादिप्रक्रियया मृदादिव्यतिरिक्तं तदारभ्यं घटशरावादि यदि द्रव्यान्तरं सत्यं स्यात् तदा कारणगुणप्रक्रमेण तस्य गुरुत्वांतराधिकरणतया गुरुत्वद्वैगुण्यमुपलभ्येत। अपिच महति कनकसूत्रे कालायसशृङ्खले वा लोहकारैः सङ्ग्रथ्यमाने तत्रांतरांतरा खण्डसूत्राणि खण्डशृङ्खलानि च जायन्ते इत्यभ्युपगन्तव्यं। अन्यथा किञ्चिद्ग्रथनानन्तरमुपरिसूत्रशृङ्खलग्रथने परित्यक्ते सति ग्रथितभागे सूत्रशृङ्खलव्यवहारो

न स्यात् । महासूत्रशृङ्खलग्रथनानन्तरं खंडिते तस्मिन्खंडेषु सूत्रशृङ्खलव्यवहारश्च न स्यात् । एवञ्च यत्रोपर्युपरि खंडसूत्रशृङ्खलग्रथनक्रमेण महासूत्रशृङ्खलग्रथनसमाप्तिः तत्र यदि खंडसूत्रशृङ्खलवृन्दारब्धं महासूत्रशृङ्खलमभ्यु- पगम्येत तदा सूत्रशृङ्खलनिर्माणार्थं यावत् सुवर्णकालायसं लोहकारहस्ते दत्तं तावत उपादानस्य गुरुत्वं तदारब्धखंडसूत्रशृङ्खलानां प्रत्येकगुरुत्वानि तदारब्धमहासूत्रशृङ्खलगुरुत्वञ्च इत्यतिमहत्तरं गुरुत्वमु पलभ्येत । तस्मात् मृत्पिण्डखंडसूत्रशृङ्खलव्यतिरिक्तं घटशरावमहासूत्रशृङ्खलरूपं द्रव्यान्तरं यथा नास्तीति, तथैव मृत्पिण्डखंडसूत्रशृङ्खलाद्यपि मृल्लोहकृष्णायसादिव्यतिरिक्तं द्रव्यान्तरं नास्तीत्युपग- न्तव्यम् । एवं सति मृल्लोहकालायसाद्यपि तत्तदुपादानव्यतिरिक्तं सत्यं न स्यादिति चेत्, कः सन्देहः ?

कथं तर्हि 'मृत्तिकेत्येव सत्यं' इत्याद्युक्तमिति चेत्, उच्यते । नेमानि वाक्यानि मृदादिसत्यत्व- विधित्सया प्रवृत्तानि; 'षड्विंशतिरित्येव ब्रूयात्' इतिवदेवकारोपहतविधिशक्तिकत्वात् । किन्तु तद्विकार- सत्यत्वनिषिषेधयिषया । ततश्च यथा षड्विंशतिपदग्रहणे तात्पर्याभावात् षड्विंशतिपदस्थाने तपरगो- मृगयोरश्वस्य च वङ्क्रीणां समस्यसंख्यावाचिपदनिवेशनस्य न्यायप्राप्तस्य न प्रतिक्षेपः, एवं 'मृत्तिकेत्येव सत्यं' 'लोहमित्येव सत्यं' 'कृष्णायसमित्येव सत्यं' इतिवाक्यानां विकारसत्यत्वनिषेधे एव तात्पर्यवतां मृदादिसत्यत्व- विधाने तात्पर्याभावात् घटशरावादिन्यायप्राप्तस्य मृदादीनामसत्यत्वस्य न प्रतिक्षेपः । प्रत्युत मृत्तिकादि- शब्दानामितिशब्दशिरस्कत्वेन मृदादीनामसत्यत्वमेव सूच्यते; 'मनो ब्रह्मेत्युपासीत' इत्यादिवाक्येषु मनः- प्रभृतीनां ब्रह्मभावस्येव । एवञ्च दृष्टान्तेषु उपादानातिरिक्तविकारसत्यत्वाभावप्रतिपादनस्य दार्ष्टान्तिकेऽपि तथात्वमिति प्रत्यायनार्थत्वात् तदनुरोधेन 'येनाश्रुतं श्रुतं भवत्यमतम्मतमविज्ञातं विज्ञानम्' इति वाक्येषु अश्रुतश्रुतादिपदानां 'योऽयं स्थाणुरयं पुमान्' इत्यादिव्यवहारेषु स्थाणुपुरुषादीनामिव बाधायां सामानाधि- करण्यं, न तु तत्त्वमस्यादिवाक्येष्विव अभेदे । अतो येन श्रुतेन मतेन विज्ञातेन च लोकदृष्ट्या अतदात्मकमपि तदात्मकमेव भवतीति दृष्टान्तैः 'येनाश्रुतम्' इत्यादिवाक्यान्युपपादितानि भवन्ति । युक्तश्च उक्थ्याग्निष्टो- माधिकरणन्यायेन विधेयश्रुतमतविज्ञातसद्रूपोपादानब्रह्मात्मकत्वविरुद्धस्य अश्रुतामताविज्ञातरूपस्य भूतभौतिक- प्रपञ्चस्योपमर्दः ।

तस्मात् प्रतिज्ञादृष्टान्तयोर्मुख्यतया तदनुपरोधात् ब्रह्म प्रकृतिश्चेति युक्तम् । चकारेण निमित्तश्चेति समुच्चीयते । तदपि प्रतिज्ञादृष्टान्तानुपरोधादेव । उपादानातिरिक्तकर्तृसद्भावे हि तद्विज्ञानेन सकलविज्ञानासम्भवात् पुनरपि प्रतिज्ञोपरोधे च तदानुगुण्येन वर्णनीयस्य दृष्टान्तस्याप्युपरोधः स्यात् । तस्मात् प्रतिज्ञादृष्टान्तानुपरोधान्निमित्तमुपादानञ्च ब्रह्म ।

यत्तु दुन्दुभ्यादिदृष्टान्तजातं सर्वविज्ञानप्रतिज्ञोपपादकं न भवतीत्युक्तं तत् तथैव । किन्तु सर्वविज्ञानप्रतिज्ञोपपादकतया 'इदं सर्वं यदयमात्मा' इति वर्णितस्य सार्वात्म्यस्य उपपादनद्वारा तदुपपादकं, न तु साक्षात् । तथैव पूर्वाधिकरणे व्याख्यातम् । ततश्च 'इदं सर्वं यदयमात्मा' इत्यादिश्रुतयः 'सर्वं समाप्नोषि' इत्यादिस्मृत्यनुसारेण सर्वगतत्वपरा इति शङ्काप्यनवकाशा । तासां दृष्टान्तदार्ष्टान्तिकसामञ्जस्यानुरोधेन सार्वात्म्यपरत्वावश्यम्भावात् । तदनुसारेण 'सर्वं समाप्नोषि' इति समुपसर्गानुसारेण च स्मृतेरेव सार्वात्म्यपरत्वात् । ऊर्णनाभेर्जडांशेन उपादानत्वं चेतनांशेन निमित्तत्वमिति भेदे सत्यपि कार्यकरणसम्पिण्डितचेतनविशेषरूपस्य तस्य आध्यासिकाविशिष्टरूपेणैक्यमाश्रित्य स्रष्टृत्वलयाधारत्वाभ्यामेकस्यैव निमित्तोपादानभावः सर्वविज्ञानप्रतिज्ञामनूदितामुपपादयितुं 'यथोर्णनाभिः' इति मन्त्रे दर्शितः । तत्र द्वितीयतृतीयदृष्टान्तौ उपादानत्वमात्रविषयौ ब्रह्मज्ञानेन कृत्स्नस्य कार्यवर्गस्य ज्ञातत्वोपपादकौ । ननु दृष्टान्तवाक्ये मृल्लोहकृष्णायसपृथिव्यादीनां तत्तद्विकारोपादानत्वं वर्ण्यते, कथं दृष्टान्तबलाद्ब्रह्मणस्सर्वोपादानत्वसिद्धिः ? उच्यते । घटादिषु कुलालादीनां कर्तृत्वेऽपि ब्रह्मणोऽपि कर्तृत्ववत् मृदादीनामुपादानत्वेऽपि ब्रह्मणोऽप्युपादानत्वं प्रमाणबलादुपपद्यते । तस्माद्यथाऽर्हं प्रतिज्ञादृष्टान्तबलान्निमित्तमुपादानञ्च ब्रह्म । १. ४. २३ ।

## अभिध्योपदेशाच्च । २४ ।

'तदैक्षत बहु स्यां प्रजायेय' (छा. ६. २. ३) इति बहुभवनसङ्कल्पोपदेशादप्येवम् । न च नियन्तृस्वरूपैर्बहुभवनरूपविषयसङ्कल्पो, न तु तेजःप्रभृतिरूपैः इति वाच्यम् । सर्वज्ञस्य सर्वगतस्य च एकस्य ब्रह्मणः स्रष्टृत्ववन्नियन्तृत्वस्यापि सम्भवेन नियन्तृत्वसिद्ध्यर्थं नियन्तृरूपबहुत्वस्यानपेक्षिततया 'तत्तेजोऽसृजत' (छा. ६. २. ३) इत्यादिना सृज्यत्वेनानन्तरवक्ष्यमाणतेजःप्रभृत्यात्मना बहुभवनसङ्कल्पोपदेशात् प्राक् 'एकमेवाद्वितीयम्' (छा. ६. २. १) इति श्रवणादपि निमित्तमुपादानञ्च ब्रह्म, निमित्तस्योपादानस्य

वा ब्रह्मणोऽन्यस्य सद्भावे सृष्टेः प्रागेकत्वावधारणायोगात् इति युक्त्यन्तरसमुच्चयार्थः सूत्रे चकारः। १. ४. २४

**साक्षाच्चोभयाम्नानात् ।२५।**

न केवलं प्रतिज्ञादृष्टान्तबलादभिध्योपदेशाच्च अर्थान्निमित्तमुपादानञ्च ब्रह्म, किन्तु साक्षादेव तस्य निमित्तत्वोपादानत्वाम्नानादपि। तथा हि— निमित्तत्वं तावदीक्षापूर्वकस्रष्टृत्वरूपं 'तदैक्षत' 'तत्तेजोऽसृजत' (छा. ६. २. ३.) इत्यादिश्रुतिषु स्पष्टमाम्नातम्। उपादानत्वं 'आत्मन आकाशःसम्भूतः' (तै. २. १) 'यतो वा इमानि भूतानि जायन्ते' (तै. ३. १) इत्यादिश्रुतिषु पञ्चमीविभक्त्याऽऽम्नातम्। 'जनिकर्तुः प्रकृतिः' (पा. सू. १. ४. ३०) इति सूत्रेण प्रकृतिशब्दगोचरतया प्रसिद्धस्योपादानस्य अपादानसंज्ञाभिधानात्। न च तत्र कारणमात्रपरः प्रकृतिशब्द इति युक्तम्। तथात्वे तस्य वैयर्थ्यप्रसङ्गात्। 'ध्रुवमपायेऽपादानम्' (पा. सू. १. ४. २४) इति सूत्रात् अवधिपरस्य ध्रुवपदस्य अनुवर्तमानतया तेनैव जायमानं प्रत्यवधिभूतस्य कारणमात्रस्य लाभात्।

नन्वसति प्रकृतिग्रहणे प्रत्यासत्तेरुपादानकारणस्यैव ग्रहणं स्यान्नतु बहिरङ्गस्य निमित्तकारणस्य, अतः कारणमात्रसंग्रहार्थं प्रकृतिग्रहणं इति न्यासकृता उक्तमिति चेत्; । सत्यमुक्तम्। दुरुक्तं तु तद्। अनुवर्तमानं ध्रुवपदं हि जायमानावधिभूतं कारणसामान्यं प्रत्याययति। कारणसामान्यप्रत्यायकपदे सति च बहिरङ्गकारणसंग्रहार्थं सूत्रकृता यत्नान्तरं कृतं न दृश्यते, यथा 'हेतौ' (पा. सू. २. ३. २३) इति तृतीयाविधायके सूत्रे। अथापि यद्यत्र तत्संग्रहार्थं यत्नान्तरमकारिष्यत, तदा तत्साधारणमेव पदं प्रायोक्ष्यत। इह तु तद्व्यावर्तकं 'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' (श्वे. ४. १०) 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' (ब्र. सू. १. ४. २३) इत्यादिवेदवैदिकव्यवहारेषु 'तदर्थं विकृतेः प्रकृतौ' (पा. सू. ५. १. १२) इति पाणिनीये उपादाने एव प्रसिद्धं प्रकृतिपदं प्रयुक्तम्। ततश्च कारणसामान्यप्रत्यायकं ध्रुवपदमप्यविगणय्य अभ्यर्हितत्वादुपादाने निपतन्ती मतिः कथमुपादानमात्रासाधारणेन प्रकृतिपदेन ततो व्यावर्त्य कारणसामान्ये स्थापनीया। सा हि मतिस्तेन तथैव दृढीकृता स्यात्। यदि च कारणसामान्यपरं प्रकृतिपदं, तदा 'कारके' (पा. सू. १. ४. २३) इत्यधिकारसूत्रमनन्वितं स्यात्। तत्र हि कारकशब्दः कारणसामान्यपरः सप्तमी च निर्धारणार्थी इति व्याख्यातम्। तथा च प्रकृतिशब्दस्य कारणसामान्यार्थकत्वे कारकाणां मध्ये या प्रकृतिः तत्रापादानसंज्ञाविधानस्य कारणानां मध्ये यत् कारणं तत्रापादानसंज्ञेत्यर्थस्स्यात्। न चैतद्युज्यते। निर्धारणप्रतियोगितावच्छेदकावच्छिन्नस्यैव निर्धारणविषयत्वानुपपत्तेः।

ननु कारकं क्रियां निर्वर्तयदाश्रितव्यापारं, कारणं तु हेत्वपरपर्यायं फलसाधनत्वयोग्यमात्रं, इति भेदोऽस्ति, 'द्रव्यादिविषयो हेतुः कारकं नियतक्रियम्। अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यते' इति वचनादिति चेत्; एतदपि न युज्यते; विवक्षितक्रियानिर्वर्तनव्यापाराणां मध्ये अविवक्षितक्रियानिर्वर्तनव्यापारस्य तद्विरुद्धस्य निर्धारणायोगात्। सामान्यधर्माक्रान्तानां मध्ये कस्यचिद्विशेषस्यैव निर्द्धारणीयत्वात्। न च 'जनिकर्तुः प्रकृतिः' इति सूत्रे कारकाधिकारो माभूदिति वाच्यम्। 'प्राग्रीश्वरान्निपाताः' (पा. सू. १. ४. ५६) इत्येतत्पर्यन्तं तदधिकारसत्त्वात्, अन्यथा 'अकथितञ्च' (पा. सू. १. ४. ५१) इति सूत्रतः 'माणवकं पन्थानं पृच्छति' इत्यत्रेव 'माणवकस्य पितरं पन्थानं पृच्छति' इत्यत्रापि माणवकस्य प्रश्नक्रियायामकारकत्वेऽपि अकथितत्वाविशेषेण कर्मसंज्ञाप्रसङ्गात्। अपि च यद्येतत्सूत्रं कारणसामान्यरूपे हेतौ पञ्चमीविधायकं स्यात्, तदा 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' (पा. सू. ४. ३. ८१) इति सूत्रे अस्मादेव ज्ञापकाद्धेतुपञ्चमीसिद्धिरिति न्यासोक्तमसमञ्जसं स्यात्। तथा हि— 'तत आगतः' (पा. सू. ४. ३. ७४) इत्याधिकारे पठितस्य तस्य सूत्रस्य हेतुवाचिभ्यो मनुष्यवाचिभ्यश्च शब्देभ्योऽन्यतरस्यां रूप्यप्रत्ययो भवतीत्यर्थः। तत्र समादागतं समरूप्यम् इति वृत्तिकृता उदाहरणं लिखितम्। तस्य न्यासकृता 'समाद्धेतोरागतम्' इत्यर्थमुक्त्वा 'केन पुनरिह पञ्चमी' इति पञ्चम्यसम्भवशङ्कामुद्भाव्य 'अस्मादेव ज्ञापकात्' इति परिहृतम्।

तत्रायं शङ्कार्थः। यदि समशब्दोक्तस्य च आगतशब्दोक्तस्य च हेतुहेतुमद्भावसम्बन्धविवक्षा तदानीमस्येदम्भावे षष्ठ्यां प्राप्तायां तदपवादत्वेन 'हेतौ' (पा. सू. २. ३. २३) इति सूत्रे विहितया तृतीययैव भाव्यं, न तु पञ्चम्येति। परिहाराभिप्रायस्त्वयम्। 'तत आगतः' इति प्रकृतस्य पञ्चम्यन्तार्थस्य अस्मिन् सूत्रे हेतोरिति विशेषणेन हेतुहेतुमद्भावविवक्षायां पञ्चम्यपि भवतीति ज्ञाप्यते इति। एवं न्यासकृता हेतौ पञ्चमीसद्भावे ज्ञापकान्वेषणं न कर्त्तव्यं स्यात् यदि 'जनिकर्तुःप्रकृतिः' इति सूत्रमेव आहत्य पञ्चमीविधायकं स्यात्। ननु विवक्षितक्रियानिर्वर्तनव्यापारे निमित्तोपादानसाधारणे कारणमात्रे 'जनिकर्तुः' इति सूत्रेण पञ्चमीविधानम्, अविवक्षिततद्व्यापारे तस्मिन् पञ्चमीलाभार्थं ज्ञापकान्वेषणमिति चेत्; न। हेतुमनुष्यसूत्रे लिखितस्य 'समाज्जातम्' इत्यर्थे पर्यवसितस्य 'समादागतम्' इत्युदाहरणस्यापि विवक्षितव्यापारहेतुविषयत्वसम्भवे तस्य अविवक्षितव्यापारहेतुविषयत्वमङ्गीकृत्य तत्र पञ्चमीलाभार्थं ज्ञापकान्वेषणस्य व्यर्थत्वात्। न च हेतुमनुष्यसूत्रगतहेतुशब्दोऽनाश्रितव्यापारविषयः; 'अनाश्रिते तु व्यापारे निमित्तं हेतुरिष्यते' इति वचनादिति वाच्यम्। तथाऽपि वृत्तिकृता जनिकर्तृसूत्रे प्रकृतिशब्दस्य हेतुपदेन व्याख्याततया

तत एव अविवक्षितव्यापारे हेतौ पञ्चमी सिद्धेति तत्र ज्ञापकान्वेषणवैयर्थ्यस्य तादवस्थ्यात् ।

किञ्च प्रकृतिपदस्य कारणसामान्यपरत्वे ध्रुवानुवृत्तिमङ्गीकृत्य तत्र 'जनिकर्तुः' इत्यस्यान्वयो नाभ्युपगन्तव्यः । जायमानावधित्वस्य कारणत्वरूपतया कारणवाचिना प्रकृतिपदेन सह प्रयोगानुपपत्तेः । किन्तु तदनुवृत्तिं परित्यज्य प्रकृतिपदेनैवान्वयोऽभ्युपगन्तव्यः । तथैवचान्वयो दर्शितो वृत्तिकृता 'जन्यर्थस्य जन्मनः कर्त्ता जायमानः, तस्य या प्रकृतिः कारणं हेतुः' इति । तत्र 'जनिकर्तुः' इति व्यर्थं, अर्थात् सिद्धेः । जायमानस्यैव हि कारणं भवति । अत एव 'हेतौ' इति सूत्रे 'जनिकर्तुः' इति न विशेषितम् । ननु प्रकृतिरुपादानमिति पक्षेऽपि तुल्योऽयं दोषः । तत्रापि हि ध्रुवपदं नानुवर्तनीयम् । ततो विवक्षितव्यापारकारणलाभाश्रयणे कारकाधिकारेण पौनरुक्त्यात्, अविवक्षितव्यापारकारणलाभाश्रयणे कारकाधिकारेण विरोधात् । अतस्तत्रापि पक्षे प्रकृत्यैव जनिकर्तुरन्वय इति समानो वैयर्थ्यदोषः, जायमानस्यैव ह्युपादानं भवतीति । यथा वैयर्थ्यदोषो न प्रसरति तथा उपपादयामः । प्रकृतिशब्दः स्वभावविषययैव शक्त्या उपादाने प्रयुज्यते । क्लृप्तशक्त्या प्रयोगनिर्वाहे शक्त्यन्तरकल्पनाऽनुपपत्तेः । निर्वहति च क्लृप्तशक्त्यैव तत्र प्रयोगः । कार्याभिन्नस्योपादानस्य तत्स्वभावरूपत्वात् । अत एव 'मृत्स्वभावो घटः मृत्स्वरूपो घटः' इति व्यवह्रियते ।

यद्यप्युपादाने स्वभावशक्त्या प्रकृतिपदप्रयोगे 'कार्यस्य प्रकृतिरूपं कारणम्' इति एतावत् प्रयोक्तव्यम् । तथाऽपि लोके वेदे च निरूढ्या प्रकृतिपदमात्रस्य तत्र प्रयोगः । दृष्टो हि न्यायशास्त्रव्यवहारे कार्यं प्रति समवायिनि कारणे समवायिपदमात्रस्य प्रयोगः । पाणिनिना तु प्रकृतिरित्येतावति सूत्रे विवक्षितार्थः स्पष्टो न भवतीति जायमानस्य स्वभावरूपं यत् कारकं तस्यापादानसंज्ञा विधीयते इत्यर्थस्पष्टीकरणाय 'जनिकर्तुः' इति विशेषितम् । न च वाच्यम्—'तदर्थं विकृतेः प्रकृतौ' इति सूत्रे विनैव 'जनिकर्तुः' इति विशेषणमुपादानपरं प्रकृतिपदं प्रयुक्तमिति । तत्र विकृतिपदसन्निधानेन प्रकृतिपदस्य उपादाने व्यवस्थितिलाभात् । तदर्थमेव हि तत्र विकृतिपदमिति प्रयोजनमुक्तं वृत्त्यादिग्रन्थेषु 'अक्रियमाणे विकृतिग्रहणे या काचित् प्रकृतिर्गृह्येत नोपादानकारणमेव' इत्यादिना । तस्मादभ्यर्हितस्योपादानस्यैव ग्रहणं माभूदिति कारणसामान्यग्रहणाय प्रकृतिपदमिति न्यासोक्तमयुक्तम् ।

ननु महाभाष्ये जनिकर्तृसूत्रस्य प्रत्याख्यानमुपक्रम्य 'गोलोमाविलोमभ्यः दूर्वा जायन्ते' इति तत्रोदाहरणं प्रदर्श्य 'आपक्रामन्ति तास्तेभ्यः' इत्युक्त्वा 'ध्रुवमपायेऽपादानम्' (पा. सू. १. ४. २४)

इति सूत्रत एव अत्रापादानसंज्ञा सिध्येदिति तत् सूत्रं प्रत्याख्याय यतो यदपक्रामति तत् पुनस्तत्र न दृश्यते, इह तु लोमसु अस्ति दूर्वादर्शनमिति कथं ततोऽपक्रमणमुच्यत इत्यभिप्रायेण 'यद्यपक्रामन्ति किं नात्यन्तायापक्रामन्ति' इति शङ्कित्वा 'सन्ततत्वात्' इति परिहृतम् । कैयटेन च 'यथा बिलाद्दीर्घभोगो भोगी निष्क्रामन्नप्यविच्छेदात् तत्रोपलभ्यते एवं दूर्वा अपि' इति परिहाराभिप्रायो दर्शितः । एवञ्च गोलोमादीनां दूर्वादीन् प्रत्यवधित्वमङ्गीकृत्य सूत्रप्रत्याख्यानात् 'गोलोमाविलोमभ्यो दूर्वा जायन्ते' 'शृङ्गाच्छरो जायते' इत्याद्युदाहरणं निमित्तविषयमेवेत्यवसीयते । उपादानस्य कार्यात्मतां प्रतिपद्यमानस्य कार्यविश्लेषावधित्वा-योगात् । सम्भवति च शृङ्गगोलोमादीनां शरदूर्वाद्युपादानभूतो य एकदेशः तत्संसृष्टमेकदेशान्तरं शरदूर्वादिनिमित्तं, माषांकुरोपादानेन तुषान्तरवस्थितमाषभागेन संसृष्टो माषांकुरनिमित्तभूतस्तुषभाग इव । स एवापरिणतशृङ्गाद्येकदेशः 'शृङ्गात्' इत्यादिपञ्चम्यन्तेन उच्यते इति युक्तं कल्पयितुमिति चेत्—

उच्यते—इदं लोमादीनां दूर्वाद्यवधित्वमभ्युपगम्य सूत्रप्रत्याख्यानं लोकदृष्ट्यैव, न तु तान्त्रिक-मर्यादयेति व्याचक्षाणेन कैयटेन लोकदृष्टिप्रदर्शने अस्य सूत्रस्य सर्वकारणाविषयत्वं तान्त्रिकमर्यादाप्रदर्शने विशिष्योपादानविषयत्वञ्चाविष्कृतम्—'अपक्रामन्ति ता इति प्रसिध्याश्रयणेनैतदुच्यते । लोके हि यद्यस्माज्जायते तत् तस्मान्निर्गच्छतीत्युच्यते । तर्काश्रयास्तु प्रक्रिया भिद्यन्ते । वैशेषिकदर्शने परमाण्वादिसमवेतं कारणेभ्यो-ऽपृथग्देशं कार्यमुत्पद्यत इति नास्ति कार्यस्यापक्रमः' इति । अत्र हि जायमानं कार्यं यस्मात् कारणात् निर्गच्छतीति लोकदृष्टिरस्ति तदेवास्य सूत्रस्य विषयः, न तु दण्डचक्रादिसाधारणं सर्वं कारणमिति लोकदृष्टि-प्रदर्शकवाक्येनाविष्कृतम् । वैशेषिकमर्यादाप्रदर्शकवाक्येन तु नास्ति कार्यस्यापक्रम इत्यत्र परमाण्वादिसम-वेतस्य कार्यस्योदाहरणेन विशिष्योपादानविषयत्वमाविष्कृतम् । तेन शरांकुराद्यधस्थिताच्छृङ्गगोलोमवी-जाद्येकदेशात् शरांकुरादिकं निर्गच्छतीति लोकदृष्टिरस्ति तस्याप्युपादानत्वमेवाभिमतमिति तस्याशय उन्नीयते ।

युक्तञ्चैतत् । अस्ति हि यः कार्त्स्न्येन कार्यात्मतामापद्यते तस्येव यस्य एकदेशः कार्यात्मतामाप-द्यते तस्याप्युपादानत्वव्यवहारः । अत एव एकस्य मृत्पिण्डस्य एकदेशानां घटशरावाद्यनेककार्यात्मतापत्तौ तस्यैव घटशरावादिकं प्रत्युपादानत्वं सिद्धं कृत्वा तद्विज्ञानेन घटशरावादिसर्वतत्कार्यविज्ञानमुदाजहार श्रुतिः । सूत्रकारश्च 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' (ब्र. सू. २. १. २६) इति सूत्रे ब्रह्मण एकदेशस्य जगद्रूप-तापत्त्यङ्गीकारे निरवयवत्वश्रुतिव्याकोपमेव दूषणमुवाच, न तु ब्रह्मण उपादानत्वश्रुतिव्याकोपम् । भाष्यकारश्च

'योनिश्च हि गीयते' (ब्र. सू. १. ४. २७) इति सूत्रे योनिशब्दस्य उपादानवाचकत्वं समर्थयमानः 'स्त्रीयो-नेरपि अस्त्येवावयवद्वारेण गर्भं प्रत्युपादानत्वम्' इति ब्रुवन्नेकदेशस्य कार्यात्मतापत्तौ एकदेशिन उपादानत्व-मनुमेने। लोकश्च दीर्घैस्तन्तुभिरारब्धे खण्डपटे पटाकारबहिर्भूतस्य तन्तूनामेकदेशस्य सद्भावेऽपि तन्तून् पटोपादानत्वेन व्यवहरन्ति, न तु तेषां पटानुप्रविष्टैकदेशानेव तदुपादानत्वेन मन्यमानास्तत्र तन्तूनामु-पादानत्वं प्रतिक्षिपन्ति। वैदिकतान्त्रिकलौकिकव्यवहारानुसारेण च निमित्तोपादानव्यवस्थाऽङ्गीकरणीया। तथा च शृङ्गगोलोमादीनां शरदूर्वाद्यात्मतानापन्नैकदेशसद्भावेऽपि कृत्स्नशृङ्गगोलोमावयव्येव उपादानम्। अतः 'शृङ्गाच्छरो जायते' इत्युदाहरणं जनिकर्तृसूत्रञ्च उपादानविषयमेवेति युक्तम्।

यत्तु न्यासकृतोक्तं 'पुत्रात् प्रमोदो जायते' इत्यत्र पञ्चमीनिर्वाहाय तस्य कारणसामान्यविषयत्वं वक्तव्यमिति तदप्यसङ्गतम्। तेन 'हेतुमनुष्येभ्य' इति सूत्रे हेतुपञ्चम्यां ज्ञापकस्य उपन्यस्ततया तत एव तन्निर्वाहात्। ननु तर्हीहापि 'यतो वा इमानि भूतानि' इत्यादौ ज्ञापकलब्धा हेतुपञ्चम्यस्तु। न च वाच्यं— ज्ञापकेन विधुल्लयनाल्लभ्रेह प्रत्यक्षसूत्रविहितोपादानपञ्चमीग्रहणम्—इति। पाणिनिव्याकरणे ज्ञापकेन सिद्धस्य व्याकरणान्तरेषु प्रत्यक्षविधिविहितत्वसम्भवात्। पाणिनीयस्यैव वेदार्थनिर्णयोपजीव्यत्वा-भावादिति चेत्। स्यादेतदेवं यदि पाणिनीये हेतुपञ्चम्यां ज्ञापकं किञ्चिदुपलभ्येत। तदुपलम्भे हि तत्र प्रत्यक्षविधिरपि व्याकरणान्तरे सम्भावनीयो भवेत्, न चैतदुपलभ्यते। 'हेतुमनुष्येभ्य' इति सूत्रे हेतुग्रहणस्य 'विभाषा गुणेऽस्त्रियाम्' (पा. सू. २. ३. २५) इति सूत्रविहितगुणविषयपञ्चमीमादाय चरितार्थत्वात 'जाड्यादागतं जाड्यरूप्यम्' इति तदुदाहरणसम्भवात। न चैवमपि 'समादागतं समरूप्यम्' इति वृत्तिकार-दर्शितस्योदाहरणस्यानिर्वाहः। तत्र उपादानपञ्चमीति तन्निर्वाहोपपत्तेः। न च सूत्रे हेतुग्रहणाद्धेतुपञ्चम्यैव भाव्यमिति नियमः। वृत्तिकृतैव 'हेतुमनुष्येभ्य' इति बहुवचनं स्वरूपनिरासार्थमित्युक्तत्वात्। मनुष्यग्रहणस्य 'देवदत्तादागतं देवदत्तरूप्यम्' इति मनुष्यविशेषविषयस्य उदाहरणस्य दर्शितत्वाच्च। हेतुग्रहणस्यापि हेतुविशेषोपादानविषयमुदाहरणं दर्शितमित्युपपत्तेः।

एतेन—जनिधातोर्डप्रत्ययविधायके 'पञ्चम्यामजातौ' (पा. सू. ३. २. ९८) इति सूत्रे पञ्चम्यन्तस्योपपदस्याजातित्वविशेषणं जातिशब्देभ्यो हेतौ पञ्चम्यस्तीत्यत्र ज्ञापकमित्यपि शङ्का— निरस्ता। 'जनिकर्तुः प्रकृतिः' इति सूत्रतस्तेभ्य उपादानपञ्चमीसद्भावेन जातिशब्दपर्युदासस्य तद्विषयत्वोपपत्तेः, हेतुपञ्चम्यभावे 'पुत्रात् प्रमोदो जायते' इत्यत्र कथं निर्वाहः? निमित्तकारणे पुत्रे उपादानत्वारोपात् पञ्चमी

भविष्यति 'रामो जामदग्न्यः' 'व्यासः पाराशर्यः' इत्यत्र समनन्तरापत्ये गोत्ररूपाध्यारोपाबन्प्रत्ययवत्' 'पर्वतो वह्निमान् धूमवत्त्वात्' इत्यादौ कथं पञ्चमीनिर्वाहः ? हेतुपञ्चमीसद्भावे वा कथं निर्वाहः ? न हि दूमवत्त्वं वह्नेः कारणम् । ज्ञापकं तदिति चेत्; न हि ज्ञापकहेतौ पञ्चमीविधानमस्ति । तस्मात् 'तदशिष्यं संज्ञाप्रमाणत्वात्' (पा. सू. १. २. ५३) 'लुब्योगाप्रख्यानात्' (पा. सू. १. २. ५४) इति सूत्रकारप्रयोगाद् ज्ञापकादेव ज्ञापकहेतौ पञ्चमी । कारकहेतौ तु तृतीयैव न पञ्चमी । उक्तञ्च भामत्यां 'पञ्चमी न कारणमात्रे स्मर्यते, अपि तु प्रकृतौ इति ।

अस्तु वा हेतुपञ्चमीसद्भावः । तथाप्युपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वात् 'यतो वा इमानि' इत्यादौ उपादानविषयैव पञ्चमी ग्राह्या । न च 'ध्रुवमपाये' इति सूत्रादिहापादानसंज्ञा भवितुमर्हति । सर्वगतस्य ब्रह्मणः विश्लेषावधित्वासम्भवात् । तस्मादिह जनिकर्तृसूत्रत एवापादानसंज्ञा वक्तव्या । तच्चोपादानमात्रविषयमित्युक्तम् । यदि च न्यासोक्तरीत्या कारणसामान्यविषयं स्यात्, तदाऽप्यत्रोपादानविषयैव पञ्चमी सिध्यति । उपादानस्य प्रत्यासन्नतया निमित्तोपादानसाधारणशक्तिकस्यापि शब्दस्य उपादाने पर्यवसानमौत्सर्गिकमिति न्यासकृतैवोक्तत्वात् । यदि च उपादानप्रत्यासत्तिन्यायोऽपि नाद्रियेत, तदा विनिगमनाविरहात् 'यतो वा इमानि भूतानि जायन्ते' 'आकाशादेव समुत्पद्यन्ते' 'तस्मादेतद्ब्रह्म नाम रूपमन्नञ्च जायते' इत्यादिश्रुतिषु आनन्त्यसर्वविज्ञानप्रतिज्ञाद्यनुरोधाच्च उभयविधकारणत्वपरा पञ्चमी, न तु निमित्तमात्रपरेत्यलं प्रपञ्चेन । यत्तु भाष्ये 'साक्षाच्चोभयाम्नानात्' इति सूत्रस्य ब्रह्मैव कारणमुपादाय 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्ति' इति प्रभवप्रलयोभयाम्नानादित्यर्थं दर्शयित्वा 'यद्धि यस्मात् प्रभवति यस्मिंश्च लीयते तत्तस्य उपादानं प्रसिद्धं यथा व्रीहियवादीनां पृथवी' इति उपादानत्वमात्रे हेतुपरतया व्याख्यानं तत्पूर्वव्याख्यानं सिद्धं कृत्वा पञ्चमीविभक्तेरुपादानविषयत्वावश्यम्भावे हेत्वन्तरप्रदर्शनार्थमित्यवधेयम् । तत्र ब्रह्मणोऽनुपादानत्वेऽप्युपादानस्य ब्रह्माधीनत्वाद्ब्रह्मण उपादानत्वोपचार इत्यपि शङ्का माभूदित्येवमर्थं 'साक्षात्' इति सौत्रपदेन 'आकाशादेव' इत्यवधारणलब्ध उपादानान्तरव्यवच्छेदो दर्शितः । १. ४. २९

## आत्मकृतेः परिणामात् । २६ ।

'सोऽकामयत बहु स्यां प्रजायेय' (तै. २. ६) इति बहुभवनसङ्कल्पवत्त्वेन प्रकृतस्य ब्रह्मणः 'तदात्मानं स्वयमकुरुत' (तै. २. ७) इति अनन्तरवाक्ये 'आत्मानम्' इत्यात्मन एव सृष्टिकर्मत्वस्य 'स्वयम्' इति स्वस्यैव सृष्टिकर्तृत्वस्य च वर्णनात् ब्रह्मण एव प्रपञ्चात्मना परिणामेन प्रपञ्चात्मना कर्मत्वं

स्वरूपेण कर्तृत्वमिति एकस्य कर्मकर्तृभावे विरोधाभावादुभयविधकारणं ब्रह्म । यत्तु 'तदात्मानं सृजाम्यहम्' इत्यादिवदेतदुपपद्यत इत्युक्तम् ; तन्न । तत्रापि कर्मकर्तृभावश्रवणाविशेषात् । इयांस्तु विशेषः—तत्रावतार-शरीररूपेण स्वात्मनस्स्रष्टृत्वेन सृष्टिरुच्यते 'यदा यदा हि धर्मस्य' इति धर्मसंस्थापनार्थत्वोक्तेः, इह प्रपञ्चरूपेण प्रपञ्चसृष्टिः प्रकरणात्—इति । भाष्ये 'परिणामात्' इति सूत्रभागो विरोधाभावप्रदर्शनार्थगतत्सूत्रशेषतया व्याख्याय पुनः पृथक्सूत्रतया व्याख्यातः 'सच्च त्यच्चाभवत्' इति श्रुतौ मूर्तामूर्तात्मकप्रपञ्चरूपेण परिणामादप्युपादानं ब्रह्मेति ।

'प्रपञ्चसृष्टितःप्रवेशोत्तरभाविनस्सदादिभवनस्य सदाद्यात्मना परिणामरूपत्वमनुपपन्नम्; सृष्टस्य पुनःसृष्ट्यसम्भवात्' इति चेत्; मैवम् । 'बहु स्याम्' इति बहुभवनसङ्कल्पश्रवणानन्तरं श्रुतस्य सदादि-भवनस्य ब्रह्मणस्सदाद्यात्मना परिणामरूपत्वावश्यम्भावात् । तस्य प्रवेशोत्तरभावित्वश्रवणं तु प्रवेशस्य नित्यसिद्धत्वज्ञापनाय । अन्यथा प्रवेशस्य 'तत्सृष्ट्वा तदेवानुप्राविशत्' इति सृष्ट्युत्तरभावित्वश्रवणात् स आगन्तुक इति शङ्का स्यात् । न च तस्यागन्तुकत्वं युक्तम् । सर्वगतस्य ब्रह्मणस्सदा प्रपञ्चानुस्यूतत्वात् तद्व्यतिरेकेण प्रवेशान्तराभावात् । सृष्ट्युत्तरत्वेन श्रुतस्य तस्य पुनस्सृष्टिपूर्वभावित्वश्रवणे तु सृष्टेःप्रागपि सूक्ष्मेण कारणात्मना स्थिते प्रपञ्चेऽनुस्यूतस्यैव ब्रह्मणस्सृष्टस्थूलरूपावच्छेदमात्रं 'तत्सृष्ट्वा' इत्यादिनोच्यते, न तु प्राक् तत्रासतस्तस्य स्वरूपेण शरीरावच्छिन्नेन रूपेण वा तत्र प्रवेश उच्यत इति ज्ञापितं भवति । किञ्च 'इदं सर्वमसृजत' इत्यादिना घटादिवत् स्रष्टुः पृथग्भूतं जगत्सृष्टमुक्तमिति प्रतीयते । न च तथोक्तिर्युक्ता, बहुभवनसङ्कल्पविरोधात् । अतस्तटस्थजगत्सृष्टिरुक्तेति शङ्कानिवर्तनाय 'सच्च त्यच्चाभवत्' इत्यनेन प्रागुक्ता सृष्टिस्सदाद्यात्मना परिणामरूपतया विवृतेति सर्वं समञ्जसम् । १. ४. २६ ।

## योनिश्च हि गीयते । २७ ।

'कर्तारमीशं पुरुषं ब्रह्मयोनिम्' (मु. ३. १. ३) इत्यादिश्रुतिषु 'योनिः' इत्यपि ब्रह्म गीयते । योनिशब्दश्च उपादानविषयः प्रसिद्धो लोके । यद्यपि स्थानवचनोऽप्ययमस्ति; तथाऽपि पूर्वापरप्रतिज्ञा-दृष्टान्तावनुरोधादिहोपादानवचन एव ग्राह्यः । चकारान्निमित्तञ्चेति समुच्चीयते । तत्र हेतुः 'कर्तारमीशं' 'यस्सर्वज्ञस्सर्ववित्' इत्यादिविशेषणमित्यनुक्तसिद्धम् । ननु ब्रह्मण उपादनतया सदादिपरिणामाङ्गीकारे माया-रूपोपादानान्तरश्रुतेर्ब्रह्मणो निर्विकारत्वश्रुतेश्च विरोधःस्यादित्याशङ्कायामप्येतदेवोत्तरं योनिश्च हि गीयते' इति । 'प्रकृतिश्च' इति सूत्रात् प्रकृतिपदं मण्डूकप्लुत्याऽनुवर्तते । ततश्चायमर्थः— न केवलं ब्रह्मैव जगदुपादानं,

किन्तु 'यो योनिं योनिमधितिष्ठत्येकः' (श्वे. ४. ११) इत्यादिश्रुतिषु योनिशब्देनोक्ता मायाऽप्युपादानमित्याम्नायते 'मायां तु प्रकृतिं विद्यात्' इत्यादिश्रुतिषु। 'सन् घटः' इत्यादिप्रतीतिषु प्रपञ्चे ब्रह्मसत्ताया इव 'जडो घटः' इत्यादिप्रतीतिषु मायाजाड्यस्याप्यनुगतिदर्शनादुभयोरप्युपादानत्वं युक्तम्।

यत्तु 'कालस्स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्' (श्वे. १. २) इति श्वेताश्वतरमन्त्रे कालस्वभावनियतियदृच्छाभूतपुरुषयोनीनां जगत्कारणत्वनिरासश्रवणं तत्कालादीनामन्यतमादेव जगदुत्पत्तिसम्भवे ब्रह्म कारणमित्येतन्माभूदिति शङ्काऽपनोदनाय तन्मात्रकरणत्वनिरासपरं, न तु योनिशब्दोक्ताया मायायास्सर्वथा कारणत्वनिरासपरम्। 'मायां तु प्रकृतिं विद्यात्' इति श्वेताश्वतर एव तस्या उपादानत्वाभ्युपगमात् योनिशब्दप्रयोगेण च तस्या उपादानत्वप्रतीतेः। अत एव नास्ति निर्विकारत्वश्रुतिविरोधोऽपि। मायिकविकाराणां तात्विकनिर्विकारत्वाप्रतिक्षेपकत्वस्य गाधिवृत्तान्तलवणोपाख्यानादिषु लोके च प्रसिद्धतरत्वात्। तस्मात् सिद्धं ब्रह्म जगतो निमित्तमुपादानं चेति युक्तं ब्रह्मणो लक्षणम्। १. ४. २७।

इति प्रकृत्यधिकरणम्। ७।

---

**एतेन सर्वे व्याख्याता व्याख्याताः। २८।**

स्पष्टोऽर्थः। १. ४. २८।

इति श्रीमद्भारद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्याजि-
श्रीरङ्गराजाध्वरीन्द्रवरसूनोः चतुरधिकशतप्रबन्धनिर्माणचणस्य
श्रीमदप्पयदीक्षितस्य कृतौ शारीरकन्यायरक्षामणौ



**प्रथमस्याध्यायस्य चतुर्थः पादः**

**अध्यायश्च समाप्तः**

ओं तत्सत्

# अनुबन्धः (१)

## न्यायरक्षामणिस्थानां अधिकरणानां सूचिका

# अनुबन्धः (२)

## न्यायरक्षामणिस्थानां ब्रह्मसूत्राणां अकारादिक्रमकोशः

# न्यायरक्षामण्युदाहृतानां श्रुतिवाक्यादीनां अकारादिक्रमेण कोशः

(इ)

(ग)



(घ)



(च)

(प)

(फ)



(ब)

(य)

— ओं तत्सत् —

# OFFICE BEARERS OF THE S. A. D. G. P. SAMITHI (Regd.)

**SECUNDERABAD-26 (A. P.)**

*Hony Patrons* :

Sri Vibuthi Jyothi N thyananda.
Kavishwar, Secundrabad.
,, S. Balakrishna joshi, Madras.
,, Annam Viswanatha Rao. Hyd' bad.
,, P. S. Jagannatha Iyer, Madras.
,, K. Natesa Iyer, Madras.
,, M. Ramanatha Deekshither, Madras.
,, A. Doraiswamy Deekshither.
Adayappalam Village.

### Office bearers :

*President* :

Sri C.R· Pattabhi Raman, Barrister-at-Law.

*Vice Presidents* :

Sri K. N. Anantha Raman, I. C. S. (Retd.)
,, K. Nilakanta Iyer, Madras.
,, M. Nilakanta Iyer, Madras.
,, Dr. V. Raghavan, Madras.
,, AR. N. Ramaswamy Chettiar, Hyd'bad

*Hony Executive Secretary* :

Sri Adayappalam Ramanathan, Sec'bad.

*Hony Jt. Secretaries*:

Sri P. V. Sivarama Deekshither, Madras.
,, K. Rajagopalan, Hyderabad.
,, K. R. Subramanyam, Hyderabad.
,, M. Viswanathan, Madurai.

*Hony Treasurer* :

Sri K. K. Chandrasekar, Secunderabad.

*Hony Legal Advisor* :

Sri T. Venugopal Reddy, Secunderabad.

*Hony Auditor* :

Sri G. Vaidyanathan of M/s. G. V. N. Shankar & Co., Madras.

### Finance Committee members :

Sri T. V. Viswanatha Iyer, Madras.
,, P. Sankaranarayana Iyer, Madras.
,, M. Nilakanta Iyer, Madras.

*Executive Committee Members* :

1. Sri H. Ananthanarayana Iyer, I. C. S (Retd) Hyderabad
2 ,, P. V. Anantharama Iyer, Hyderabad
3 ,, S. Annadurai Iyengar, Kulitalai
4 ,, Dr. Aryendra Sarma, Hyderabad
5 ,, V. Babu Rao, Hyderabad
6 ,, K. Balasubramania Iyer, Madras
7 ,, V. Balasubramanian, Hyderabad
8 ,, V. Chandramouli. I. A. S., Nellore
9 ,, M. N. Chandrasekara Sastrigal, Adayappalam.
10 ,, C. R. Chari, Secunderabad
11 ,, Diwakarla Ramamoorthy, Visakhapatnam
12 ,, Dr. Diwakarla Venkata Avadhani, Hyderabad

13 Sri M. A. Ekambaram, Sirpur
14 „ S. M. B. Eswara Iyer, Madras
15 „ P. K. Gopalakrishnan, Hyderabad
16 „ P. G. Gopalan, Secundesabad
17 „ R. Gopala Iyer, Hyderabad
18 „ C. E. Gupta, Secunderabad
19 „ R. Kalyanasundaram, Madras
20 „ Kappaganthula Lakshmana Sastri, Hyderabad
21 „ E. G. Kotiswaran Madras
22 „ M. S. Kotiswaran, Secunderabad
23 „ K. Y. Krishnamoorthy, Visakhapatnam
24 „ P. G. Krishamoorthy, Secunderabad
25 „ Y. Krishnamoorthy, Madras
26 „ Dr. T. N. Kumaraswamy Iyer, Vellore
27 „ A. Lakshminarayanan, Secnnderabad
28 „ Dr. P. G. Laley, Hyderabad
29 „ Madhava Sastri, Kanchipuram
30 „ B. Madhavan, Bombay
31 „ Dr. T. M. P. Mahadevan, Madras
32 „ V. Mahalingam, Secunderabad
33 „ B. V. V. S. Mani, Madras
34 „ K. L. Manohar, Secunderabad
35 „ C. P. Meenakshisundara Sastri, Coimbatore
36 „ A. Nagaraja Iyer, Madras
37 „ L. S. P. Nagarjan, Madras
38 „ K. R. Nandagopal, Secunderabad
39 „ S. V. Narasimham, Calcutta
40 „ V. Narasimha Iyer, Secunderabad
41 „ R. Narayanaswamy, I. P. S., Warangal
42 „ B. Natarajan, Itarsi
43 „ L. S. P. Natarajan, Secunderabad
44 „ P. R. Natarajan, Madras
45 „ Neelam Raju Venkataseshaiah, Vijayawada
46 „ R. Nilakanta Iyer, Madras
47 „ M. Nilakantan, Secunderabad
48 Sri S. Nilakantan. Delhi
49 „ D.G.Padhye, Hyderabad
50 „ L. S. Parthasarathy Iyer, Tiruchirapalli
51 „ C. P. Pattabhiraman, Pondicherry
52 „ V. Pattabhirama Iyer, Arni
53 „ Dr. Pullela SriRamachandrudu, Hyderabad
54 „ T. R. Raghava Sastrigal, Madras
55 „ N. Raghunatha Iyer, Bangalore
56 „ N. Rajamani, Secunderabad
57 „ C. S. Ramachandran, I. C. S., New Delhi
58 „ R. Ramachandran, Secunderabad
59 „ Dr. K. Ramachandran, Madurai
60 „ V.G. Ramachandran, New Drlhi
61 „ K. Ramachandra Sarma, Madras
62 „ A. Ramakrishna Deekshither Madras
63 „ T. R. Ramakrishna Sastri, Madras
64 „ S. R. Ramamoorthy, I.A.S., Hyderabad
65 „ A.M: Ramanatha Deekshither, Varanasi
66 „ A. A. Ramam, Calcutta
67 „ B.V. Raman, Madras
68 „ M. Ramaswamy, Hyderabad
69 „ N. Ramesan, I.A.S., Hyderabad
70 „ M. Rangarajan, Avadi
71 „ D. Sankaraguruswamy, I.A.S., Hyderabad
72 „ S. Sankaran, Hyderabad
73 „ P. Sankaranarayanan, Madras
74 „ V. Seshadri, Hyderabad
75 „ P.A. Seshan, Madras
76 „ B. K, Seshu, Secunderabad
77 „ T. S. Shanmugasundara Mudaliar, Hyderabad

78 Sri T. V. R. Somayajulu, Secudderabad
79 ,, T. V. Srinivasan, Secunderabad
80 ,, V. Srinivasan, I.P.S., Hyderabad
81 ,, A. V. Subramaniam, Madras
82 ,, K. V. V. Subramanyam, I.P.S., Hyderabad
83 ,, K. S. Subramanya Deekshither, Pollachi
84 ,, M. A. Subramanyan, Madurai
85 ,, P. S. Subramaniam, Hyderabad
86 ,, A. V. Sugavaneswaran, Bombay
87 ,, Dr. P. K. Sundaram, Madras
88 ,, V.S. Sundararajan, Secunderabad
89 ,, M. Sunderasan, Secunderabad
90 ,, S. Sundaresan, I. A. S., New Delhi
91 Sri A. Swaminathan, New Delhi
92 ,, N. S. Swaminathan, Secunderabad
93 ,, C. R. Swaminathan, Katmandu
94 ,, T. S. Thirumalai, Madras
95 ,, R. Thyagarajan, Madras
96 ,, Vaidya Subramania Iyer, Madras
97 ,, Varanasi Ramamoorthy, ("RENU") Hyderabad
98 ,, A. J. Veeraswamy, Seeunderabad
99 ,, Dr. N. Veezhinathan, Madras
100 ,, A. G. Venkatachari, Madras
101 ,, N. S. Venkatakrishnan, Calcutta
102 ,, T. Venugopal Reddy, Secunderabad
103 ,, K. R. Viswanatha Iyer, Kanchipuram
104 ,, T. V. Viswanatha Iyer, Madras



# DEEKSHITHENDRA GRANTHAVALI SERIES

## List of books of Srimad Appayya Deekshita to be Printed in 15 Volumes :

Vol. i. Nyayarakshamani.

Vol. ii. Siddhantalesasamagraha.
Purvottara — mimmasa — vadanakshatramala.
Ratnatrayapariksha and Commentary.

Vol. iii. Parimala-with Mulam.

Vol. iv. " "

Vol. v. " "

Vol. vi. Caturmatasarasamgraha
Anandhvatalahari with Commentary
Madhvatantramukhamardana with Commentary
Taptamudradharananirasa

Vol. vii Mimamsa:
Upakramaparakrma.
Citrapata.
Vidhirasayana and Commentary.

Vol. viii. Mimamsa: Mayukhavali-Sastradiplkavyakhya.

Vol. ix. Saiva: Sivarkamanidipika with Mulam.

Vol. x. " "

Vol. xi. Other Saiva Works.
Sivadvaitanirnaya
Pancasloki and Commentary
Bhasmoddhulanavadavali
Sivadhyanapaddhati
Sivakarnamrta
Sikharinimala and Commentary
Sivapurana-tamasatva-nirakarana.
Sivapujavidhi
Sivarcanacandrika

Vol. Xii. Alamkara-Vyakarana :
Kuvalayananda
Citramimamsa
Vrttivarttika
Laksanaratnavali
Paniniyatantravadanaksatramalika.

Vol. Xiii. Stotras-Kavyas :
1. Apitakuacambastava-(Jvaraharastaka).
2. Atmarpanastuti
3. Adityastotra and Comnentary.
4. Durgacandrakalastuti
5. Nigrahastaka
6. Brahmatarkastava and Commentary.
7. Manasollasa
8. Varadarajastava and Commentary.
9. Sivamahimakalikastava.
10. Mahabharata-tatparya-nirnaya and Commentary.
11. Ramayana-tatparya-nirnaya and Commentary.

Vol. xiv. Yadavabhyudayavyakhya.

Vol. xv. Harivamsa-sara-caritavyakhyana.

# मुद्रितेऽस्मिन् न्यायरक्षामणौ मुद्रणाशुद्धिपाठाशुद्धिशोधनपट्टिका

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १२ | °मस्मर्तिपि° | °मस्मति° |
| २ | ३ | °तति प्रौढ° | °ततिप्रौढ° |
| ४ | १३ | °ब्र. सू. ४-१-३२ | ब्र. सू. ४-१-३. |
| ५ | १ | °द्धं प्रसिद्धं प्राब° | °द्धं प्राब° |
| ,, | २० | व्यवहरास्या° | व्यवहारस्या° |
| ,, | २२ | कदचित् | कदाचित् |
| ६ | २ | भेदाविरोधेनैव | अभेदाविरोधेनैव |
| ,, | ४ | भेदेऽपि | अभेदेऽपि |
| ,, | १० | द्वितयिस्य | द्वितीयस्य |
| ,, | १२ | इत्यदेर्दोहात्म° | इत्यादेर्देहात्म° |
| ,, | २० | दहेन्द्रि° | देहेन्द्रि° |
| ७ | १० | °त्तेर्निमूल° | °त्तेर्निर्मूल° |
| ,, | २० | °सम्भवन | °सम्भवेन |
| ,, | २१ | वणका° | वर्णका° |
| ८ | १० | °र्मास्ययजिन: | °र्मास्ययाजिन: |
| ,, | १४ | °नैव च लब्धम् | °नैव लब्धम् |
| १० | ५ | °षणव्रह्म° | °षणब्रह्म° |
| ,, | १८ | भूतस्रष्टत्वं | भूतस्रष्टृत्वं |
| ,, | २१ | आत्मैव दे° | आत्मैवेद° |
| ११ | ३ | पीप्मससर्गप्रताल्या | पाप्मसंसर्गप्रतील्या |
| ,, | ९ | °स्थैर्थैगि° | °स्थैर्योगि° |
| ,, | १६ | सविशेषं व्रह्म | सविशेषं ब्रह्म |
| ,, | ,, | सगुणव्रह्म | सगुणब्रह्म |
| ,, | १९ | संहरणिय | संहरणीय |
| १२ | ७ | प्राणोत्क्रन्ति° | प्राणोत्क्रान्ति° |
| ,, | १३ | उत्क्रन्ति° | उत्क्रान्ति° |
| ,, | २० | सिद्ध्यति | सिद्ध्यति |
| १३ | १५ | व्रह्मणि | ब्रह्मणि |
| १४ | ३ | व्रह्मलि° | ब्रह्मलि° |
| १५ | १ | सङ्ग्राह्इका° | सङ्ग्राहिका° |
| ,, | १४ | जगत्करण° | जगत्कारण° |
| १७ | ६ | ब्रह्मतत्त्व° | ब्रह्मगतत्व° |
| ,, | १३ | पक्षासंबन्धो | पक्षसंबन्धो |
| ,, | ,, | साध्ये विशेष | साध्यविशेष |
| १७ | १४ | दपिगत | दीपगत |
| ,, | १५ | साध्ये विशेष | साध्यविशेष |
| ,, | १८ | अन्याद्दव्या: | अन्याद्दध्या: |
| ,, | २१ | ब्रह्मयक्षप्र° | ब्रह्मपक्षकप्र° |
| १८ | १८ | इयादि | इत्यादि |
| ,, | २२ | ।जज्ञास्य | जिज्ञास्य |
| २१ | ७ | उहाहृत | उदाहृत |
| २२ | १७ | वाच्यम् । अनुव्यव° | वाच्यम् । स्वप्रकाशवादे व्यवसायस्यैव धर्मिज्ञान-त्वात् । अनुव्यव° |
| २३ | १ | निदर्शक° | निर्देशक° |
| ,, | १५ | °मन्विच्छ | मन्विच्छ |
| २४ | ३ | कार्यैमुख्य | कार्योन्मुख्य |
| ,, | १६ | व्यव्रृत्त्यर्थं | व्यावृत्त्यर्थ: |
| ,, | १७ | द्रष्टुर्द्रष्टे° | द्रष्टुर्दृष्टे° |
| ,, | १९ | तन | तेन |
| ,, | २२ | सर्वज्ञा शक्तीति | सर्वज्ञानशक्तीति |
| २६ | २ | किमन्तगर्डुना | किमन्तर्गड्डुना |
| ,, | ३ | °न्तर्गड्डुरिह | °न्तर्गड्डुरिव |
| ,, | ८ | °स्तुल्य इति | °स्तुल्य:—इति |
| ,, | ९ | स्वस्याऽपि | स्वस्यापि |
| ,, | १२ | चेतनाऽ साधारणं | चेतनासाधारणं |
| ,, | १८ | "लुब्योगाऽ प्रख्यानात् | लुब्योगाप्रख्यान त् |
| ,, | २२ | °दान्ताऽप्रति° | °दान्ताप्रति |
| ,, | २५ | व्यधिकरणाऽ सिद्धोऽपि | व्यधिकरणासि-द्धोऽपि |
| ,, | २६ | पक्षाऽवृत्ति° | पक्षावृत्ति |
| २७ | १० | ईक्षाच्चके | ईक्षाञ्चक्रे |
| ,, | २१ | °मात्राऽगम्यं | °मात्रागम्यं |
| २९ | ११ | ज्यातिष्टोम | ज्योतिष्टोम |
| ३० | १५ | °त्यन्तमेति । संयु° | °त्यन्तमेति' 'संयु° |
| ३१ | २ | °शब्दिदाज्जी वादपि | °शब्दिताज्जीवादपि |
| ,, | ३ | °कारणवाद° | °कारणत्ववाद° |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | ९ | °तापोय° | °तोपाय° |
| ,, | १७ | °वल्या | °वल्ल्या |
| ३२ | ५ | अनन्दम° | आनन्दम° |
| ,, | ६ | °नुरोधाद् | °नुरोधात् |
| ,, | ८ | स्वश देनैव | स्वशब्देनैव |
| ,, | १३ | करिष्पते | करिष्यते |
| ,, | १७ | इति । पक्षि° | इति पक्षि° |
| ३४ | २० | पर्यंतं | पर्यन्तं |
| ३५ | २ | पुच्छपदे | पुच्छपदेन |
| ,, | १९ | नित्य:' (गौड-का-३-३-इत्या° | नित्य:' इत्या° |
| ३६ | ८ | किञ्च' (बृ-१-२-५) | किञ्च' (तै-२-६) |
| ३९ | २ | वाक्यस्य | वाक्ये |
| ,, | ,, | आनन्दमय | आनन्दमयस्य |
| ,, | १० | तस्योपव्याख्यानं, | तस्योपव्याख्यानम्' (छा-१-१-१) |
| ,, | ,, | खल्वेत° | 'खल्वेत° |
| ,, | ,, | उपव्याख्यानम्' (छा-१-१-१) | उपव्याख्यानम्' (छा-१-१-१०) |
| ३९ | १२ | ब्रह्मब्रह्मगुण | ब्रह्मगुण |
| ,, | १४ | अथापि रयात् | अथापि स्यात् |
| ,, | १८ | प्रधान्ये | प्राधान्ये |
| ४० | १ | कुतश्चन | कुतश्चनेति |
| ,, | ११ | निर्द्धार्य | निर्धार्य |
| ४१ | १८ | अर्द्धपथे | अर्धपथे |
| ४२ | २२ | अनन्दस्य | आनन्दस्य |
| ४४ | ८ | क्लृप्त | क्लृप्ति |
| ,, | २३ | परास्त: | परान्त: |
| ४७ | २५ | न चैवं स | न चैवं सति |
| ४८ | ११ | न तद्युक्तम् | न तु तद्युक्तम् |
| ५१ | १ | आन्तरत्वेनात्मत्वे | आन्तरत्वेनात्मत्वेन |
| ,, | २३ | °नन्दमयेन | °नन्देन |
| ५३ | १७ | जक्षन् | जक्षत् |
| ,, | ,, | ज्ञातिभिर्वा' | ज्ञातिभिर्वा' इति |
| ५४ | १४ | ऊर्ध्वमुदेत्य | ऊर्ध्वं उदेत्य |
| ५५ | ६ | ह वै नाम | वै नाम |
| ५६ | २० | -"अत्र (अधिकरण)- | अत्र |
| ५८ | २६ | निरवग्रहवि-शिष्टमिति | निरवग्रहमिति |
| ,, | २७ | तरयो | तस्यो |
| ५९ | १८ | आधारभेदेऽपि | आधारभेदेन |
| ,, | २४ | सड्ग्रहे | सङ्ग्रहे |
| ६१ | १६ | धिष्टातृ | धिष्ठातृ |
| ,, | १८ | पाप्मास्पर्शा | पाप्मासंस्पर्शा |
| ६३ | ८ | पृथिवीकारण | पृथिवीमात्रकारण |
| ,, | १७ | पर: इति । | पर: इति। न स्यात्- |
| ,, | १८ | ह्यस्य शब्दस्य | ह्यस्यशब्दस्य |
| ,, | २२ | वाक्यास्पृष्टं | वाक्यास्पष्टं |
| ६४ | १६ | उपजीवन्ति अमुत: | उपजीवन्ति' 'अमुत: |
| ६५ | २२ | पत्तिलंभित | पत्त्युपबृंहित |
| ६६ | ३ | यष्टव्य: । | यष्टव्य: |
| ,, | १० | तिलगोधूम | तिलारण्यगोधूम |
| ,, | १९ | सिलक | शिलक |
| ,, | २५ | °छित्वदोषोद्भावना | °छितत्वदोषोद्भावन |
| ६७ | १० | वस्तुविषयत्वा | वस्तुपरत्वा |
| ६८ | ३ | वहति | वक्ष्यति |
| ,, | ५ | तात्पर्यं सत् न | तात्पर्यं न |
| ,, | १३ | द्युपब्रह्मण | द्युपबृंहण |
| ७० | ८ | वायो | वायौ |
| ,, | ९ | देवतालिंगं | देवतात्वलिङ्गं |
| ७१ | १७ | तज्ज्योतिर्यदिद | तत् यदिद° |
| ,, | २० | बहुत्व कौक्षेय | बहुत्वकौक्षेय |
| ,, | ,, | °ध्यास चक्षु-ष्यत्वविश्रुतत्व | °ध्यासचक्षुष्यत्व-श्रुतत्व |
| ,, | २३ | द्युसम्बन्धित्व | द्युसम्बन्ध |
| ७२ | २४ | द्रव्यात् | द्रव्यक |
| ७५ | १० | प्रसिद्धे:त्रिपदैव गायत्री । | प्रसिद्धे: । त्रिपदैव गायत्री |
| ,, | १७ | प्राकृतीनामृचां | न प्राकृतीनामृचां |
| ,, | १८ | प्राकृताना° | प्राकृतीना° |
| ७६ | ८-९ | ब्रह्म' इति 'इदं | ब्रह्मेति इदं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १३ | स्वधर्मत्वम् | सधर्मत्वम् |
| ७७ | १५ | ध्रवान्त° | ध्रुवान्त° |
| ७९ | ३ | 'सहस्र | 'एतेन सहस्र |
| ,, | ९ | वैलक्षण्यात् । | वैलक्षण्यात् |
| ,, | २३ | परो वा । | परो वा, |
| ,, | २४ | परो वा । | परो वा , |
| ८० | ७ | मतौ च्छ | मतौ छ |
| ,, | १३ | सफल इति | सफल इति । |
| ,, | २० | 'दिवि लोकेषु' | 'दिवि' 'लोकेषु' |
| ,, | २१ | तदुनुक्तिः | तदनुक्तिः |
| ८१ | ८ | 'प्राणोऽस्मि मामुपास्व-मामेव विजानीहि' | 'प्राणोऽस्मि, मामुपास्व, मामेव विजानीहि' |
| ,, | १३ | तमेव | त्वमेव मे |
| ,, | १४ | केनचन | केन च |
| ,, | १७ | ब्रह्मालङ्गेषु | ब्रह्मलिङ्गेषु |
| ८२ | २-३ | त्रिशीषाणं | त्रिशीर्षाणं |
| ,, | ३ | प्रह्लादीनतृणह | प्रह्लादीयानतृणमह |
| ,, | ४ | कालकक्ष्यान् | कालखाञ्जान् |
| ,, | ९ | मुपास्व | मित्युपास्व |
| ,, | १६ | यावध्यस्मिन् | यावद्ध्यस्मिन् |
| ,, | १७ | अस्तित्वे च | अस्ति त्वेव |
| ,, | २० | यावध्यस्मिन् | यावद्ध्यस्मिन् |
| ,, | २४ | इात | इति |
| ८३ | २ | लोकेश आनन्दो | लोकेशः' 'आनन्दो |
| ,, | ७ | मामवे | मामेव |
| ८४ | ५ | °मुपास्व | °मित्युपास्व |
| ,, | ,, | या बै प्रज्ञा | या वा प्रज्ञा |
| ,, | ६ | सहैवैता | सह ह्येता |
| ,, | १२ | सहैवैतौ | सह ह्येतौ |
| ,, | १५ | विजानीहि प्राणोऽस्मि | विजानीहि' 'प्राणोऽस्मि |
| ,, | १८ | °मुपास्व | °मित्युपास्व |
| ,, | २२ | प्राणो वा अमृतं | प्राण एवामृतं |
| ८५ | १० | तयथ | तयथा |
| ८६ | ३ | जाते यस्मिन् | जाते' 'यस्मिन् |
| ८७ | १६ | (ऐ. सं. २-३) | (ऋ. सं. २.३) |
| ८७ | २५ | किंत्वन्योप | किंत्वन्यानुप |
| ८९ | ४ | °काङ्क्षि | °काङ्क्षि |
| ,, | ८ | हविः प्रक्षेपं | हविःप्रक्षेपं |
| ,, | १० | सिद्धन्तितः | सिद्धान्तितः |
| ,, | १३ | फलशालिनां | फलशालिनं |
| ,, | १४ | जननाननन्तर | जननानन्तर |
| ,, | १८ | अवगम्यमानैक्यं वाक्यं | अवगम्यमानं वाक्यैक्यं |
| ९० | ७ | प्रबलम् । | प्रबलं |
| ,, | १० | गायत्री | [यथा] गायत्री |
| ,, | ११ | 'यद्वै तत् ब्रह्म' (छा-३-१२-१६ इति'इदं वावतत्' (छा-३-१३-७) | 'यद्वै तत् ब्रह्मेति इदं वाव तत्'(छा-३-१२-७) |
| ,, | ,, | इति एत° | इत्येत° |
| ,, | ,, | वायम् । | वाक्यम् । |
| ,, | १६ | श्रुत्यदि | श्रुत्यादि |
| ,, | १९ | ब्रह्मवाक्यं | ब्रह्मवाक्यं |
| ,, | २३ | ब्रह्मौक | ब्रह्मैक |
| ९१ | ५ | °नन्दरू | °नन्दरूप |
| ,, | ६ | 'विजानीयात्' | 'विजानीहि''विजानीयात्' |
| ,, | ११ | लौकिकैवदिक | लौकिकवैदिक |
| ,, | १६ | °धिकृविशेष | °धिकृतविशेष |
| ,, | १७ | या वै प्रज्ञा | या वा प्रज्ञा |
| ,, | २३ | वाक्स्य | वाक्यस्य |
| ,, | २४ | °गवमित | °गमित |
| ९२ | २ | मेपरिहाराय | मेदपरिहाराय |
| ,, | १४ | पक्षोन्यास | पक्षोपन्यास |
| ,, | १९ | मुपास्व | मित्युपास्व |
| ,, | २१ | त्वष्ट्र | त्वाष्ट्र |
| ,, | २३ | ब्रह्मो | ब्रह्मो |
| ९३ | १ | मुपास्व | मित्युपास्व |
| ,, | ७ | तद्द्विषे° | तद्द्विषे° |
| ,, | ८ | प्राणो व | प्राणो वा |
| ,, | ११ | स्वीकरणम् | स्वीकरणम्, |
| ,, | ,, | °तभूय | °तरभूय |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १८ | विधानान्तरं | विधानानन्तरं |
| ९५ | १२ | वाक्योपक्रत | वाक्योपक्रम |
| ९६ | २ | °करणभावेन | °करणोपकरणि-भावेन |
| ,, | १२ | कल्पनायां | कल्पनायाः |
| ,, | १५ | रहितः, | रहितः— |
| ,, | २२ | उपासस्यो | उपास्यो |
| ९७ | ९ | °न्यार्थब्रह्म° | °न्यार्थमिश्र-लिङ्गोपात्तब्रह्म |
| ९८ | २१ | तादात्म्यनो° | तादात्म्येनो° |
| ,, | ,, | ब्रह्मणो | ब्रह्मणो |
| ९९ | १६ | ज्ञापनेन | ज्ञानेन |
| ,, | १९ | प्रतिपद्येत | प्रतिपाद्येत |
| ,, | ,, | नाश्रीयते | नाश्रीयेत |
| ,, | २२-२३ | ब्रह्मैव तद्गुणक° | ब्रह्मैव मनोमयत्वादिगुणैरुपास्यं सिद्ध्यति। यतो मनोमयत्वादिषूपास्यगुणेषु उपदिश्यमानेषु ब्रह्मैव तद्गुणक° |
| १०० | २५ | व्रीहिण | व्रीहिणा |
| १०१ | १ | वक्यं | वाक्यं |
| ,, | ३ | शब्दालम्बनं | शब्दस्यालम्बनं |
| ,, | ९ | प्राप्तुं शक्यम्, सगुण | प्राप्तुं शक्यम्; एतेन 'सर्वगन्धः सर्वरसः' इति व्याख्यातम्। 'सर्वमिदमभ्यात्तः' इत्युक्तं सर्वव्यापित्वमपि न तेन प्राप्तुं शक्यम्; सगुण |
| १०१ | २२ | °न्यरण्या (अर्णवा) दीनि | °न्यर्णवादीनि |
| ,, | २३ | ब्रह्मलोके | ब्राह्मलौकिकाः |
| १०२ | ५ | निरतिशया° | निरतिशयसुखा° |
| ,, | १३ | करिष्ये | करिष्यते |
| ,, | १६ | प्रसिद्ध | प्रसिद्धं |
| ,, | १७ | पितृकामो | पितृलोककामो |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २१ | पुनः पाठस्य | पुनःपाठस्य |
| ,, | २२ | पुनः पाठः | पुनःपाठः |
| १०३ | ४ | तत्कतु | तत्क्रतु |
| ,, | १२ | हार्योजनस्य | हारियोजनस्य |
| ,, | २२ | इत्यनन | इत्यनेन |
| ,, | ,, | हार्योजनः | हारियोजनः |
| १०४ | १५ | कर्तृ | कर्तृत्व |
| ,, | १७ | कर्तृ | कर्तृत्व |
| १०५ | ८ | वियषयोऽयं | विषयोऽयं |
| ,, | १३ | सम्भवात्; | सम्भवात् |
| ,, | १४ | दृष्टत्वाच्च। | दृष्टत्वाच्च |
| ,, | १६ | सर्वगतत्व | स्वगतत्व |
| ,, | २४ | कृमेव | कृतमेव |
| १०६ | १० | स्वावच्छिन्नं | अर्भकमिव स्वावच्छिन्नं |
| १०७ | २ | यइमं | य इदं |
| १०९ | ८ | सर्वधा | सर्वथा |
| ,, | १२ | संहारे | संहारः |
| ,, | २२ | सामर्थ्येन तस्यत्र | सामर्थ्येन च |
| ११० | ११ | रूपतया, | रूपतया |
| ,, | १८ | संहायर्त्वे | संहार्यत्व |
| १११ | १२ | हन्तृत्वस्य, | हन्तृत्वस्य |
| ,, | २१ | इत्थावेद | इत्था वेद |
| ११२ | ५ | जीवस्पृगेव | जीवास्पृगेव |
| ,, | ७ | भविष्यतीति | भविष्यति |
| ,, | १८ | विनश्यत्व | विनाश्यत्व |
| ११३ | ३ | पराध्यें | परार्धे |
| ,, | ४ | जीवौ, | जीवौ |
| ,, | ७ | °मसंसारिपरमात्मक | °मसंसार्यात्म |
| ,, | ८ | च्छाया | छाया |
| ,, | ९ | सर्वधा | सर्वथा |
| ११४ | २० | °मसंसार्यात्मक | °मसंसार्यात्म |
| ,, | २३ | विविक्तं वदन्ति | विविक्तं जीवं वदन्ति |
| ११५ | ४ | ग्राह्यः। | ग्राह्यः |
| ,, | १८ | निश्चयात्तस्य | निश्चयः, तस्मात्तस्य |
| ,, | २० | बाधको° | बाधको° |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २१ | सिद्धये, गुहा | सिद्धये गुहा |
| ११७ | १० | पुरुष; परमात्मावेति | पुरुषः परमात्मा वेति |
| ,, | ११ | प्रतिपाद्यः, | प्रतिपाद्यः |
| ,, | १३ | ‘तद° | तद° |
| ,, | ,, | °मध्यात्मम्’ | °मध्यात्मं |
| ,, | १४ | तदसम्भवाच्च, | तदसम्भवाच्च। |
| ,, | ,, | प्रसिद्धिः। | प्रसिद्धिः |
| ११८ | २ | सत्यम्। स्यादेव एवं | सत्यं स्यादेवैवम्, |
| ,, | १२ | श्रुतेसंख्या | श्रुतसंख्या |
| ,, | १६ | °ग्निवाक्यम्’, | °ग्निवाक्यं |
| ११९ | ११ | प्रघासास्साकमेधाश्च | प्रघासस्साकमेधश्च |
| ,, | १९ | नाम हिरण्य | नाम’ ‘हिरण्य |
| ,, | २० | बुद्धिसामान्य° | बुद्धिसाम्य° |
| १२० | १४ | °कापरिच्छिन्नत्व-स्वरूप | °कापरिच्छिन्न-स्वरूपत्व |
| ,, | १९ | प्राणस्य, | प्राणस्य |
| १२१ | १ | तस्य शब्देना° | तस्य कशब्देना° |
| ,, | ३ | उभययत्रापि | उभयत्रापि |
| ,, | ६ | स्वरूपत्वात् | स्वरूपपरत्वात् |
| ,, | १४ | प्रवृत्तम्। | प्रवृत्तं |
| १२२ | ८ | आपा | आपो |
| ,, | १४ | मात्रस्य, | मात्रस्य |
| ,, | १५ | बक्तव्यत्वेनाव° | वक्तव्यत्वेनानव° |
| १२३ | २ | तत्र | तत्र |
| ,, | ६ | क्रियते | क्रियेत |
| ,, | १९ | ब्रह्मे ति | ब्रह्मैवेति |
| १२४ | १० | माहात्म्येन | माहात्म्यं |
| ,, | १४ | दहरविद्याफलत्वेन | दहरविद्यायां ब्रह्म-विद्याफलत्वेन |
| ,, | १६ | कामान् | कामान्। |
| ,, | १७ | स्वराड् भवति | ‘स्वराड्भवति’ [छा. ७-२५-२] |
| ,, | ,, | तेषां सर्वेषु कामचारो भवति’ [छा. ७-२५-२] | तेषां सर्वेषु लोकेषु कामचारो भवति [छा-८-१-६] |
| ,, | २४ | भाष्ये | भाष्ये |
| १२५ | १ | वायरति | वारयति |
| ,, | ५ | तथाऽपि | तदापि |
| ,, | १३ | विच्छेदः। | विच्छेदः |
| ,, | १७ | नास्यापर | नास्यावर |
| ,, | १९ | विद्याङ्गताया | विद्याङ्गतायां |
| ,, | २१ | प्रावृत्ति | प्रवृत्ति |
| १२६ | १ | यदु वैवा° | यदु चैवा° |
| ,, | ३ | कुर्वन्ति, | कुर्वन्ति |
| ,, | ५ | भवति। | भवति |
| ,, | ,, | सोऽयमस्यां | सोऽयमस्यां विद्यायां |
| ,, | ,, | लोकीभवन्ति | लोकीभवति |
| ,, | १० | पौत्र इति | पौत्र एवंकर्मा इति |
| ,, | १७ | सर्वधा | सर्वथा |
| १२७ | ८ | लभ्यते | लभ्येत |
| ,, | २३ | रथान | स्थान |
| १२८ | २० | शालिन। | शालिनः |
| १२९ | १२ | ‘स्थितेः | ‘अस्थितेः |
| ,, | १७ | नियन्ततृत्वं | नियन्तृत्वं |
| ,, | २४ | इत्यदौ | इत्यादौ |
| १३० | ६ | नौकादिषु | नौकादिषु च |
| ,, | ७ | शरीररयापि | शरीरस्यापि |
| ,, | ९ | इति चेत् न। | इति चेत्—न, |
| ,, | १० | °याशंक्य | माशंक्य |
| ,, | १५ | परम्। | परम्; |
| ,, | १७ | °मन्तर्यामि | °मन्तर्यामी |
| १३१ | २ | ‘दृष्टं पश्यामि’ | ‘दृष्टं’ ‘पश्यामि’ |
| ,, | ८ | °धत्नुरोधात् | °धनुरोधात् |
| ,, | १६ | इत्युपक्रान्ततया | इत्युपक्रान्तायां |
| १३२ | ३ | अमृतं | अमृतः |
| ,, | ६-७ | राज्ञः पुरोहितौ | राज्ञः पुरोहितः |
| ,, | १० | सर्वधैवा° | सर्वथैवा° |
| ,, | ,, | सर्वज्ञान | सर्वविज्ञान |
| ,, | १८ | °पधिकस्य | पाधिकस्य |
| १३३ | २ | इति; | इति। |
| ,, | १२ | काप्यं | काप्य |
| ,, | ,, | तमन्तर्यामिणम्। य इमं | तमन्तर्यामिणं य इमं |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | १६ | चान्तर्यामिण° | तं चान्तर्यामिण° |
| ,, | १७ | कश्चित् | कश्चित |
| १३४ | २ | स्वांशभेद | स्वांशजीवभेद |
| ,, | ३ | सर्व भूता° | सर्वभूता° |
| ,, | ४ | इत्युक्त्वा | इत्युक्त्वा: |
| ,, | ५ | °स्याङ्गानीति । वायुना | °स्याङ्गानीति वायुना |
| ,, | ,, | गौतम तत्सूत्रेण | गौतम सूत्रेण |
| ,, | १३-१४ | °भिस्तस्य, नियम्य | °भिस्तस्य नियम्य |
| १३५ | १० | जीवा इति; | जीवा इति पूर्वपक्षः, |
| ,, | १८ | मिथ्यात्वेन यावद् | मिथ्यात्वेन अयावद् |
| ,, | २१ | प्रमाणादिभिर्नै-यत्वत् | प्रमाणादिभिर्नैय-यत्वात् |
| १३६ | ८ | °पेक्षितात्। अत्रापि | °पेक्षितात् अत्रापि |
| ,, | १९ | तस्मादत | तस्मादेत |
| ,, | २० | कस्मिन्न | कस्मिन्नु |
| १३७ | ८ | व्योम्न्यात्मा | व्योमन्यात्मा |
| १३८ | ३ | °दयिषितम् । | °दयिषितं |
| ,, | ६ | तत्प्रतिपादने च | तत्प्रतिपादने |
| ,, | ८ | अक्षरातपत्वेन | अक्षरात् परत्वेन |
| ,, | १६ | योन्यक्षरस्य, | योन्यक्षरस्य |
| ,, | १८ | जगदुपादान | जगदुपादानत्व |
| ,, | २२ | तदक्षरा° | अक्षरा° |
| ,, | ,, | कि न | किं न |
| ,, | २३ | विवर्तमानतया, | विवर्तमानतया |
| १३९ | १३ | ज्ञाततया, | ज्ञाततया |
| १४० | १३-१४ | ब्रह्मपरत्व,° | ब्रह्मपरत्वा° |
| ,, | २२ | °लोचनोप° | °लोचनेनोप° |
| १४२ | १० | तत् एव | तत एव |
| ,, | ,, | भूतयोनि | भूतयोनिः |
| ,, | १४ | गतत्वेन, | गतत्वेन |
| १४३ | १३ | अमूर्तत्वगोत्रत्वा° | अमूर्तत्वागोत्रत्वा° |
| ,, | १९ | जीवपक्ष | जीवनिराकरणपक्ष |
| १४४ | ४ | ह्येष | ह्येष |
| ,, | १२ | हिरण्यगर्भः, | हिरण्यगर्भः |
| ,, | ,, | परत्वम् मूर्त | परत्वममूर्त |
| १४५ | १५ | हवै भगवन् | ह भगवान् |
| ,, | १६ | स सर्वेषु | स सर्वेषु लोकेषु सर्वेषु |
| ,, | २२ | मूवस्थान | मूत्रस्थान |
| १४६ | २० | मुलत्वा° | मूलत्वा° |
| १४८ | १ | दूर्व्वायो° | दूर्व्वादयो° |
| ,, | ६ | प्रतिष्ठानान्नेति | प्रतिष्ठानाच्च नेति |
| ,, | ११ | त्रेताग्नि | त्रेताग्नित्व |
| १४९ | २ | °धारण | °धारण |
| ,, | ४ | °दिशन्नुवाच एष वा | °दिशन् एष वा |
| ,, | ५ | सुतेजाः वैश्वा° | सुततेजा वैश्वा° |
| ,, | ,, | पृथग्वत्मात्मा वैश्वा° | पृथग्वर्त्मवैश्वा° |
| ,, | ७ | वैश्वानरः' | वैश्वानर इति' |
| ,, | ,, | सुतेजःशब्दा° | सुततेजश्शब्दा° |
| ,, | २२ | श्रुताः | श्रुतः |
| १५० | १३ | °मत्रोच्यते | °मुच्यते |
| ,, | १८ | त्रेताग्नि | त्रेताग्नित्व |
| १५१ | २-३ | इदं वाव तज्ज्योतिः | इदं वाव तत् |
| ,, | ६ | °मप्यधीयते | °मप्यधीयते पुरुषविधमप्यधीयते |
| ,, | ,, | 'स यो हैतमग्निं | "स एषोऽग्निर्वैश्वानरो यत् पुरुषः, स यो हैतमेवमग्निं |
| ,, | ,, | पुरुषं पुरुषविधं | (पुरुषं?) पुरुषविधं |
| ,, | ७ | °भावातत्व | °भावात् तत्व |
| १५२ | १२ | त्रेताग्नि | त्रेताग्नित्व |
| ,, | १८ | ,, | ,, |
| ,, | २३ | गार्हपत्यादि | गार्हपत्यत्वादि |
| १५३ | २ | तस्मिन्नुपपद्यते | तस्मिन्नुपपद्येते |
| ,, | २३ | त्रैलोक्योत्मना | त्रैलोक्यात्मनो |
| १५४ | ६ | एवं | एवं — |
| ,, | ,, | प्रादेशमात्रमध्यात्मं | प्रादेशमात्रं— अध्यात्मं |
| १५५ | २ | लिङ्गोन्यव | लिङ्गान्येव |
| १५६ | ३ | धटादे° | घटादे |
| ,, | ६ | षष्ठ्यन्त | षष्ठ्यन्त |
| ,, | ९ | तस्य | तस्याः |
| १५७ | २३ | तदुभय (मध्य) | तदुभयमध्य |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २४ | परतया | परताया |
| १५८ | २ | यदर्वाक् | यदवाक् |
| १५९ | १७ | द्यभ्वाद्यायतने | द्युभ्वाद्यायतने |
| १६० | ३ | द्यभ्वाद्यायतन | द्युभ्वाद्यायतन |
| ,, | १६ | सेतु | सेतुत्व |
| ,, | १८ | श्रुत्यदिकं | श्रुत्यादिकं |
| ,, | २५ | °भावादताम् | °भावादतोऽम् |
| १६१ | १३ | (बृ.२.२.१९) | (मा. १-२) |
|  | १६ | एवमेतस्मा° | एवमेवास्मा° |
|  | ,, | प्राणाः लोकाः | प्राणाः सर्वे लोकाः |
|  | ,, | वेदाः | देवाः |
|  | २६ | °करणकवत्वत् | °करणकत्ववत् |
|  | ,, | पञ्चाजनाः | पञ्चजनाः |
| १६२ | ३ | प्राणभृद् द्युभ्वाद्यायनम् | प्राणभृत् द्युभ्वाद्यायतनम् |
|  | १२ | ज्ञेयत्वं च | ज्ञेयत्वं च । |
|  | १३ | ज्ञेयः । तत्र | ज्ञेयः, तत्र |
|  | १४ | कर्मकतृभव° | कर्मकर्तृभाव° |
| १६४ | ५ | लक्षकत्वात | लक्षकत्वात् |
| १६५ | ४ | शोवति | शोचति |
|  | ७ | °ज्ञशब्दभ्यां | °ज्ञशब्दाभ्यां |
|  | ११ | °दृष्टिकरणे, | °दृष्टिकरणे |
|  | २२ | या° पा° | धा° पा° |
| १६६ | १ | °प्रतियोगिकत्व° | °प्रतियोगित्व |
|  | ८ | °मन्त्रानुरेण | °मन्त्रानुसारेण |
|  | १४ | °चेतनत्वात्, | °चेतनत्वात् |
|  | ,, | नान्तःकरणं, | नान्तःकरणं |
|  | १९ | °कक्तव्यतया | °वक्तव्यतया |
| १६७ | ४ | °तादृशः | °तादृशं |
|  | १६ | °वाक्ये च बहुत्व° | °वाक्ये बहुत्व° |
|  | १७ | साम्नो | नाम्नो |
|  | २१ | °वायात् | °वायाः |
|  | २२ | °मातन्वत | °मातन्वते |
| १६८ | १३ | °विबक्षायां | °विवक्षायां |
|  | १५ | निबध्ये° | निबद्धये° |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६९ | ३ | °वचनेन | °वदनेन |
|  | ४ | °वचनपर | °वदनपर |
|  |  | विजिज्ञसि° | विजिज्ञासि° |
|  | ७ | °वचनेऽपि | °वदनेऽपि |
|  | ९ | स सएवा° | स एवा° |
|  | १२ | °ममृतत्वं च, | °ममृतत्वं च |
|  | २२ | °दृष्टोन्ता | °दृष्टान्तो |
| १७० | १ | °सिध्यर्थ | °सिद्ध्यर्थ° |
|  | ३ | °काचिदनुपपत्तिः । | काचिदनुपपत्तिः |
|  | ६ | प्रकराणाद्° | प्रकरणाद्° |
|  | १६ | सिध्यतीति | सिद्ध्यतीति |
|  | २१ | प्राप्ते | प्राप्ते |
| १७१ | २ | °वचन° | °वदन° |
|  | २२ | तदुपाधिकर्तृ° | तदुपाधिककर्तृ° |
| १७२ | ६ | °योगत् | °योगात् |
|  | १२ | तत्सिदौ | तत्सिद्धौ |
| १७३ | १० | श्रुत्या, | श्रुत्या |
|  | १५ | स्तादेतत् | स्यादेतत् |
| १७४ | ८ | °हतुम° | °हेतुम° |
|  | ९ | °चित्यचेति | °चित्याचेति |
|  | १२ | पूर्यपक्ष | पूर्वपक्ष |
|  | १४ | सौत्रौ | सौत्रो |
|  | २२ | °विधना° | °विधाना° |
|  | २३ | °दध्युपेद° | °दध्युपदे° |
| १७५ | ३ | °मुत्कणं | °मुत्क्रमणं |
|  | ५ | शक्नवन्ति | शक्नुवन्ति |
|  | ६ | परत्मानः | परमात्मनः |
|  | ८ | एवं 'प्राणो° | एवञ्च 'प्राणो° |
|  | ९ | °मुपपदयितुं | °मुपपादयितुं |
|  | ११ | परमत्मनो | परमात्मनो |
|  | १८ | परमात्मा, | परमात्मा |
|  | २३ | °क्रान्तामो° | °क्रान्तात्मो° |
| १७६ | २ | °वादित्वम् ; | °वादित्वं |
|  | १६ | तावदस्ति, | तावदस्ति |
| १७७ | १४ | एतस्मिन् | एतस्मिन्नु |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १६ | वर्णेष्वरक्षर° | वर्णेष्वक्षर° |
| १७८ | १ | °द्रष्टृत्वा° | °द्रष्ट्रा° |
| | ५ | °भिर्गम्र्या: | °भिर्गर्ग्या: |
| | ८ | °द्याधारत्वा° | °द्याधारकत्वा° |
| | ९ | दीर्घति° | दीर्घति° |
| | १८ | °वणनस्य | °वर्णनस्य |
| | २३ | यो वा ब्रह्मिष्ठ: | यो वो ब्रह्मिष्ठ: |
| १७९ | १ | सामश्रवा | सामश्रव ३ |
| | ४ | सदुत्तराक्त्या | तदुत्तरोक्त्या |
| | ११ | जायत | जायेत |
| | १५ | द्वभ्यां | द्वाभ्यां |
| | १७ | पृछ | पृच्छ |
| १८० | १ | एतस्मिन् खल्व° | एतस्मिन्नु खल्व° |
| | १२ | विश्रान्तम् । | विश्रान्तम् , |
| | १४ | तस्यापि | तथापि |
| | १९ | °गतासार्वा° | °गतसार्वा° |
| | २१ | °शब्दाश्रयत्वात्° | °शब्दाश्रयकत्वात् |
| १८१ | १ | तादात्म्येना - | तादात्म्येनाश्रया° |
| | २ | °नामार्था° | °नामर्था° |
| | १२ | व्यवह्रत् | व्याहरत् |
| | १४ | °पादनोपादेय | °पादानोपादेय° |
| | १८ | तया सति | तथा सति |
| १८२ | १ | साधारणकृति | साधारणाकृति |
| | ९ | नियोग° | विनियोग° |
| | २३ | प्रतिपद्यतेऽ, | प्रतिपद्यते, |
| १८३ | २ | उपादान- | उपादाना- |
| | १६ | °मन्द्रादि | °मन्दादि |
| १८४ | १० | कमिकोचरण | क्रमिकोच्चारण |
| | २० | विशादतरां | विशदतरां |
| १८५ | १५ | °दातह्रस्व° | °दात्तह्रस्व° |
| १८६ | ६ | तदाद्यावयवो° | तदाद्यावयवो° |
| | १२ | पुर्वोत्तरा° | पूर्वोत्तरा |
| | ,, | 'एऔच्' | 'ऐऔच्' |
| | १४ | हस्वा° | ह्रस्वा° |
| | १६ | नुट् प्राप्नोति | नुट् न प्राप्नोति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | १९ | ऋकारादिष | ऋकारादिषु |
| | २० | पुर्वोत्तर | पूर्वोत्तर° |
| | २२ | व्यतिरिक्तखण्ड° | °व्यतिरिक्ताखण्ड° |
| १८७ | ७ | °वभासस्तत्तदु° | °वभासस्तदु° |
| | १७ | °मन्द्रत्वैक° | °मन्दत्वैक° |
| १८८ | १८ | यथार्थ्या" | याथार्थ्या° |
| | २० | शिवपुराण | शिवपुराणे |
| १८९ | ११ | ' एतस्मिन् स्वल्व | एतस्मिन्नु खल्व |
| | १२ | (भा. गी. ७. ७) | (भ. गी. ७. ७.) |
| | १४ | 'कस्मिन् खल्व° | 'कस्मिन्नु खल्व° |
| १९० | ६ | एवमन्यथा° | एवमन्यथा° |
| | ७ | °चाराश्रयेण | चाराश्रयणेन |
| | १६ | °सकालाधा° | °सकलाधा° |
| १९१ | १९ | °समेकस्य | °समेक: |
| | २० | वाश्यशेष° | वाक्यशेष° |
| १९२ | २ | स्यात | स्यात् |
| | ६ | किञ्चित्किञ्चिद्धृ° | काञ्चित्काञ्चिद्धृ° |
| | ९ | प्रशासनहतुका | प्रशासनहेतुका |
| १९३ | १७ | कदाचिद° | काचिद° |
| १९४ | २ | भाप्यका° | भाष्यका° |
| | ७ | °णार्थत्वेन योज | °णार्थत्वेन च योज° |
| | १४ | °नुपपत्ते: । अत: | °नुपपत्ते:, अत: |
| १९५ | ३ | °मित्यनेनैव | मित्येतेनैव |
| | ८ | परं चा परं च | परं चापरं च |
| | २१ | नास्ति पूर्व | नास्तिपूर्व |
| | २२ | °वास्ति पूर्व° | °वास्तिपूर्व° |
| १९७ | ७ | तात्प्राप्ति° | तत्प्राप्ति° |
| | ,, | आपरब्रह्मो | अपरब्रह्मो |
| १९८ | १९ | चा परं च | चापरं च |
| २०० | १ | प्रुरुषस्या° | पुरुषस्या° |
| | ४ | कर्मणाऽर्थात् | °कर्मणोऽर्थात् |
| | २१ | °शोपमेयनि° | शोपमेयत्वनि° |
| | २२ | वर्तकावशषेण- | °वर्तकविशेषण- |
| २०१ | १ | °योरिव' (राम° | °योरिव' इति- (रामा° |

